| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| २९ **उपनिषदां समुच्चयः**-श्रीनारायणशंकरानन्दकृतदीपिकासहितः । | ६ | १२ |
| ३० **नृसिंहपूर्वोत्तरतापनीयोपनिषत्**-भाष्याद्युपेता । ... | १ | १२ |
| ३१ **बृहदारण्यकोपनिषन्मिताक्षरा**-श्रीनित्यानन्दमुनिविरचिता । | २ | १२ |
| ३२ **ऐतरेयब्राह्मणम्**-सायणभाष्यसमेतम् । भागद्वयात्मकम् । ... | १० | १० |
| ३३ **धन्वन्तरीयनिघण्टुः**-श्रीधन्वन्तरिविरचितः । वैद्यकग्रन्थः | ६ | ४ |
| ३४ **श्रीमद्भगवद्गीता**-शांकरभाष्योपेता । ... ... | २ | ० |
| ३४ **श्रीमद्भगवद्गीता**-सटीकशांकरभाष्योपेता । ... ... | ६ | ४ |
| ३५ **संगीतरत्नाकरः**-शार्ङ्गदेवकृतः सटीको द्विभागः । गानशास्त्रम् । | १० | ४ |
| ३६ **तैत्तिरीयारण्यकम्**-सायणभाष्यसमेतं भागद्वयात्मकम् । | ९ | १ |
| ३७ **तैत्तिरीयब्राह्मणम्**-सायणभाष्यसमेतं भागत्रयात्मकम् । ... | १४ | ८ |
| ३८ **ऐतरेयारण्यकम्**-सायणभाष्यसहितम् । ... ... | ३ | ० |
| ३९ **संस्काररत्नमाला**-गोपीनाथभट्टविरचिता । भागद्वयात्मिका । | १२ | ८ |
| ४० **संध्याभाष्यसमुच्चयः**-खण्डराजश्रीकृष्णपण्डितादिप्रणीतः । | २ | ० |
| ४१ **अग्निपुराणम्**-महर्षिव्यासप्रणीतम् । महापुराणम् ... | ५ | ४ |
| ४२ **तैत्तिरीयसंहिता**-सायणभाष्यसमेता । भागनवकात्मिका । | ४८ | १० |
| ४३ **वैयाकरणसिद्धान्तकारिकाः**-भट्टोजीदीक्षितकृताः सटीकाः । | ० | १२ |
| ४४ **श्रीमद्भगवद्गीता**-पैशाचभाष्यसमेता । ... ... | १ | ८ |
| ४५ **श्रीमद्भगवद्गीता**-मधुसूदनश्रीधरकृतटीकोपेता । ... | ५ | ४ |
| ४६ **याज्ञवल्क्यस्मृतिः**-अपरार्ककृतटीकासहिता भागद्वयात्मिका । | १३ | ० |
| ४७ **पातञ्जलयोगसूत्राणि**-भाष्यवृत्तिभ्यां समेतानि । ... | ३ | ० |
| ४८ **स्मृतीनां समुच्चयः**-अङ्गिरःप्रभृतिसप्तविंशतिस्मृत्यात्मकः । | ५ | ० |
| ४९ **वायुपुराणम्**-महर्षिव्यासप्रणीतम् । महापुराणम् । ... | ४ | १२ |
| ५० **यतीन्द्रमतदीपिका**-श्रीनिवासदासकृता । प्रकाशटीकोपेता । | १ | ४ |
| ५१ **सर्वदर्शनसंग्रहः**-माधवाचार्यप्रणीतः । ... ... ... | २ | ० |
| ५२ **श्रीमद्गणेशगीता**-नीलकण्ठकृतटीकोपेता । ... ... | २ | ० |
| ५३ **सत्याषाढश्रौतसूत्रम्**-सत्याषाढविरचितं भागदशकात्मकम् । | २८ | ५ |
| ५४ **मत्स्यपुराणम्**-श्रीमद्द्वैपायनमुनिप्रणीतम् । महापुराणम् । | ६ | ० |
| ५५ **पुरुषार्थचिन्तामणिः**-आठवलेइत्युपाह्वविष्णुभट्टकृतः । | ४ | ० |
| ५६ **नित्याषोडशिकार्णवः**-भास्कररायोन्नीतटीकासहितः । | ३ | ८ |

| ग्रन्थनाम । | मूल्यम् । | |
|---|---|---|
| | रू० | आ० |
| ५७ **आचारभूषणम्**—हिरण्यकेश्याह्निकमोकोपाह्वत्र्यम्बककृतम् । | ४ | ६ |
| ५८ **आचारेन्दुः**—मोटइत्युपाह्वत्र्यम्बकविरचितः । . | ४ | ० |
| ५९ **श्राद्धमञ्जरी**—केळकरोपाह्वबापूभट्टविरचिता । . | २ | [illegible] |
| ६० **यतिधर्मसंग्रहः**—विश्वेश्वरसरस्वतीकृतः । ... . | १ | १२ |
| ६१ **गौतमप्रणीतधर्मसूत्रम्**—हरदत्तकृतटीकासमेतम् । . | २ | ८ |
| ६२ **ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः**-सटीकाः | २ | ८ |
| ६३ **छान्दोग्योपनिषत्**—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | १२ |
| ६४ **बृहदारण्यकोपनिषत्**—रङ्गरामानुजविरचितप्रकाशिकोपेता | ३ | ४ |
| ६५ **शाङ्खायनब्राह्मणम्**—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | १ | ४ |
| ६६ **काव्यप्रकाशः**—उद्द्योतयुतप्रदीपसहितः । ... | ६ | ४ |
| ६७ **ब्रह्मसूत्राणि**—दीपिकासमेतानि । ... ... | ४ | ८ |
| ६८ **बृहद्ब्रह्मसंहिता**—नारदपञ्चरात्रान्तर्गता । ... ... | १ | १२ |
| ६९ **ज्ञानार्णवतन्त्रम्**—ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । ... | १ | ४ |
| ७० **स्मृत्यर्थसारः**—श्रीधराचार्यविरचितः । ... ... | १ | १० |
| ७१ **बृहद्योगतरङ्गिणी**—त्रिमल्लभट्टविरचिता भागद्वयोपेता । | १० | १२ |
| ७२ **परिभाषेन्दुशेखरः**—वैद्यनाथकृतगदाख्यटीकायुतः । ... | २ | ६ |
| ७३ **गायत्रीपुरश्चरणपद्धतिः**—श्रीमच्छंकराचार्यविरचिता ।... | १ | ८ |
| ७४ **द्राह्यायणगृह्यसूत्रवृत्तिः**—रुद्रस्कन्दप्रणीता । ... | १ | ० |
| ७५ **ब्रह्मसूत्रभाष्यार्थरत्नमाला**—सुब्रह्मण्यविरचिता । ... | ४ | ४ |
| ७६ **ईशकेनकठोपनिषदः**—दिगम्बरानुचरकृतव्याख्यासमेताः । | १ | ० |
| ७७ **वेदान्तसूत्रमुक्तावलिः**—ब्रह्मानन्दसरस्वतीविरचिता । ... | २ | ६ |
| ७८ **त्रिस्थलीसेतुः**—नारायणभट्टविरचितः । ... ... | ३ | १२ |
| ७९ **छान्दोग्योपनिषत्**—मिताक्षराव्याख्यासमेता । ... | २ | ० |
| ८० **वाक्यवृत्तिः**—श्रीमच्छंकराचार्यकृता सटीका । ... | ० | ८ |
| ८१ **आश्वलायनश्रौतसूत्रम्**—नारायणकृतवृत्तिसमेतम् । ... | ४ | ११ |
| ८२ **ब्रह्मसूत्रवृत्तिः**—हरिदीक्षितविरचिता । ... ... | २ | ७ |
| ८३ **संक्षेपशारीरकम्**—व्याख्यासहितं भागद्वयोपेतम् । ... | ९ | १ |
| ८४ **अद्वैतामोदः**—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । ... | २ | ० |
| ८५ **ज्योतिर्निबन्धः**—शूरमहाठश्रीशिवराजविरचितः । ... | ३ | १५ |

आनन्दाश्रमसंस्कृतग्रन्थावलिः।

ग्रन्थाङ्कः ३९

भट्टगोपीनाथदीक्षितविरचिता

# संस्काररत्नमाला ।

उत्तरार्धम् ।

( गृह्यसूत्रस्य द्वितीयः प्रश्नः )

( द्वितीयो भागः )

पुस्तकमेतत्

वे० शा० रा० ' काशीनाथ शास्त्री आगाशे '
इत्येतैः, वे० शा० रा० ' बाबा शास्त्री
फडके ' इत्येतैश्च संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तन

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२१

खिस्ताब्दाः १८९९



मूल्यं रूपकचतुष्कमाणकचतुष्कं च ( रु० ४ आ० ४ )

# अथ संस्काररत्नमालान्तर्गतविषयानुक्रमणिका ।

## पूर्वार्धम् ।

# विषयानुक्रमणिका ।

# विषयानुक्रमणिका ।



## उपनेतारः .... ....१८०



## उपनयनोपयोगिपदार्थनिरूपणम् १८४



## उपनयनप्रयोगः .... ....१९७

## उत्तरार्धम् ( ८११ )

समाप्तेयं संस्काररत्नमालान्तर्गतविषयानुक्रमणिका।

# अथ संस्काररत्नमालाया उत्तरार्धम् ।



## अथात्र गृह्यसूत्रस्य द्वितीयः प्रश्न आरभ्यते ।

---

### तत्र पुंसवनम् ।

तच्च गृह्ये—" अथातः पुंसवनं तृतीये मास्यापूर्यमाणपक्षे पुण्ये नक्षत्रे " इति ।

सीमन्तोत्तरं पुंसवनकथनं तु कालानित्यत्वसूचनार्थं प्रतिगर्भमावृत्तिसिद्ध्यर्थं च ।

गर्गः—" व्यक्ते गर्भे भवेत्कार्यं सीमन्तेन सहाथ वा " इति ।

व्यक्ते गर्भेऽस्ति गर्भ इति निश्चिते । पुंसवनानुवृत्तौ नारदः—

" चतुर्थे मासि षष्ठे वाऽप्यष्टमे वा शुभे दिने " इति ।

बृहस्पतिः—" तृतीये मासि कर्तव्यं गृष्टेरन्यत्र शोभनम् ।
गृष्टेश्चतुर्थमासे तु षष्ठे वाऽप्यथ वाऽष्टमे " इति ॥

गृष्टिः सकृत्प्रसूता । याज्ञवल्क्यः—" पुंसः सवनं स्पन्दनात्पुरा " इति ।

स्पन्दनं चलनम् ।

तस्य कालः शारीरके—"तस्माच्चतुर्थे मासि चलनादावभिप्रायं करोति" इति ।

गर्भाभिव्यक्तिकालो बृहस्पतिनोक्तः—

" गर्भो व्यक्तस्तृतीये स्याच्चतुर्थे मासि वा भवेत् " इति ।

अत्र मासः सावनो ग्राह्यः । तदुक्तं वसिष्ठेन—

" चतुर्थे सावने मासि षष्ठे वाऽप्यथ वाऽष्टमे " इति ।

सावन इत्यस्य षष्ठाष्टमयोरपि संबन्धः ।

." मासि प्रोक्ताः क्रिया याः स्युस्ताः सर्वाः सौरमानतः " ।

इत्यस्यापवादः । मदनरत्ने कालविधाने—

" कुर्यात्पुंसवनं प्रसिद्धिविषये गर्भे तृतीयेऽथवा
मासि स्फीततनौ तुषारकिरणे पुष्येऽथवा वैष्णवे ॥
हित्वा कर्कटकं नृयुग्ममबलामन्येष्वरिक्तातिथौ
शुद्धे नैधनधाम्नि शुक्रशशभृद्धिन्मन्त्रिणां वासरे " इति ॥

प्रसिद्धिविषये व्यक्ते। गर्भविशेषणमेतत्। स्फीततनुः पूर्णबलः। एतादृशस्तुषारकिरणश्चन्द्रः। वैष्णवं श्रवणनक्षत्रम्। कर्कटकः कर्कः। नृयुग्मं मिथुनम्। अबला कन्या। अन्येषु मेषवृषसिंहतुलावृश्चिकधनुर्मकरकुम्भमीनलग्नेषु। यद्यपि "कन्यायां न प्रशंसन्ति शुभदृष्टियुतेऽपि च" इति बृहस्पतिवाक्ये कन्याया एव निषेधेनेतरयोः प्राप्तिर्गम्यते, तथाऽपि स सीमन्तेन सहानुष्ठानविषय एवेति पृथ्वीचन्द्रोदये। अरिक्तातिथाविति सामान्यतो निषेधेऽपि नवमी सर्वथैव वर्ज्या।

"रिक्ताश्च पर्व नवमीं त्यक्त्वा पुंसवने शुभाः"।

इति स्मृत्यन्तरे नवम्याः पुनरुपादानात्। नैधनधामाष्टमस्थानं तस्मिञ्शुद्धे ग्रहहीने। शशभृच्चन्द्रः। विद्बुधः। मन्त्री बृहस्पतिः। एतेषामन्यतमस्य वासर इत्यर्थः। पूर्णबलत्वस्य समयो लल्लेनोक्तः—

"प्रतिपत्पूर्वदशाहं मध्यबलः शीतगुः सिते पक्षे।
संपूर्णबलः पूर्णः कृष्णपक्षे पञ्चमीं यावत्" इति॥

प्रतिपत्पूर्वा यस्मिन्स प्रतिपत्पूर्वः। प्रतिपदमारभ्येत्यर्थः। स चासौ दशाहश्चेति कर्मधारयः। शुक्लप्रतिपदादि शुक्लदशमीपर्यन्तं मध्यबलः। शुक्लैकादशीमारभ्य कृष्णपञ्चमीपर्यन्तं पूर्णबलः। कृष्णषष्ठीमारभ्यामावास्यान्तमधमबल इति त्वर्थात्। पारिजाते बृहस्पतिः—

"गुरुशुक्रबुधेन्दूनां द्रेष्काणा दिवसांशकाः।
तेषामुदयहोरा च पुंसवेऽतिशुभावहा" इति॥

द्रेष्काणो राशेस्तृतीयोंऽशः। नक्षत्रान्तराण्यप्याह गर्गः—

"कुर्यात्पुंसवनाख्यं तु पुंनामर्क्षे शुभे दिने" इति।

पुंनक्षत्राणि तु तेनैवोक्तानि—

"पुंनाम श्रवणस्तिष्यो हस्तश्चैव पुनर्वसू।
अभिजित्प्रोष्ठपाच्चैव अनूराधा तथाऽश्वयुक्" इति॥

इदं च चन्द्रताराबले कार्यम्। पुंसवनं प्रकृत्य—

"बलोपपन्ने दंपत्योश्चन्द्रताराबलान्विते" इति नारदोक्तेः।

एतच्च गुरुशुक्रास्तयोरपि कार्यम्।

"मासप्रयुक्तकार्येषु मूढत्वं गुरुशुक्रयोः।
न दोषकृत्तदा मासलक्षणो बलवानिति"

इति बृहस्पतिस्मरणात् । तृतीये मासि कर्तव्यं चतुर्थे मासि कर्तव्यमित्यादिमासरूपो विहितः कालो गुरुशुक्रास्तनिषेधतो बलवानित्यर्थः ।

एतच्च मलमासेऽपि कर्तव्यम् ।

"वृद्धिर्दास्यं पुंसवाद्यं प्रेतकर्मानुमासिके ।
मलमासेऽपि कुर्वीत" इति जातूकर्ण्यस्मरणात् ॥

"गर्भे वार्धुषिके भृत्ये श्राद्धकर्मणि मासिके ।
सपिण्डीकरणे चैव नाधिमासं विवर्जयेत्" इति यमोक्तेश्च ॥

एतस्य प्रतिगर्भमावृत्तौ ज्ञापकं तु पूर्वमुक्तमेव । युक्ता चेयमावृत्तिर्गर्भसंस्कारत्वात् । सीमन्तवत्प्रथमगर्भाया इति वचनाभावाच्च । अस्मिन्कर्मणि पत्युरभावे देवरादिरपि कर्ता । तथा च सत्यव्रतः—

"मृतो देशान्तरगतो भर्ता स्त्रीसंस्कृतेः पुरा ।
देवरो वाऽथवा वंश्यो गुरुर्वाऽपि समाचरेत्" इति ॥

आश्वलायनोऽपि—"पत्यौ मृते वा संन्यस्ते पतिते वा विदेशके ।
तद्गोत्रजेन श्रेष्ठेन कार्याः पुंसवनादयः" इति ॥

## अथ प्रयोगः ।

तृतीये मासि चतुर्थादिषु वा शुक्ले पक्षे पुष्यपुनर्वसुहस्ताभिजित्प्रोष्ठपदानूराधाश्विन्याख्यान्यतमे पुंनक्षत्रे गुरुशुक्रबुधसोमान्यतमवासरे व्यतीपातादिकुयोगरहिते दिवसे चन्द्रतारानुकूल्ये कार्यम् । नात्रास्तमलमासादिनिषेधः ।

कर्ता ज्योतिर्विदादिष्टे मुहूर्ते कृतनित्यक्रियः प्राङ्मुख उपविश्य स्वस्य दक्षिणतो भार्यामुपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्यां भार्यायां विद्यमानगर्भपुंस्त्वप्रतिपादनबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुंसवनाख्यं कर्म करिष्य इति संकल्प्य गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं चोक्तरीत्या कुर्यात् । अत्र प्रजापतिः प्रीयतामिति विशेषः । देवरादिभिस्तु भार्यायामित्येतस्य स्थाने भ्रातृपत्न्यां वंश्यायां शिष्यपत्न्यामिति यथार्थमूहः कार्यः ।

ततोऽग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा पुंसवनहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा वैशेषिकप्रधानहोमे—धातारं चतसृभिराज्याहुतिभिर्यक्ष्ये । अङ्गहोमे वरुणं द्वाभ्यामित्यादि । पात्रासादने—यवं सर्षपौ धान्यमाषौ वा गोदधिद्रप्सं वटशाखाग्रं पिष्ट्वा घृतेन संमिश्रं तस्य रसं कौशेयवस्त्रार्थककोशकर्तारं कृमिं पिष्ट्वा प्रियं-

गुविकारेणौदनावस्रावितद्रव्येण मिश्रं तद्रसं वोत्तरपूर्वस्य यूपस्याग्निष्ठाश्रेः सकाशाच्छकलं गृहीत्वा चूर्णीकृत्योदकेन घृतेन वा मिश्रयित्वा तद्वाऽऽसाद्य दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानिध्मं बर्हिरवज्वलनदर्भानाज्यमित्येतान्यासादयेत् । निर्मन्थ्यस्याग्नेर्धूमस्यौष्ण्यस्य वा दक्षिणनासिकाच्छिद्रे प्रणयनपक्षे येन चार्थ इतिवचनादरण्योरप्यासादनं प्रोक्षणं च । लौकिकाग्निधूमप्रणयनपक्षे लौकिकाग्नेरासादनमात्रं कर्तव्यं न तु प्रोक्षणम् । अग्नेरुपरि जलपातने दोषदर्शनात् । उत्तरपूर्वो यूपो यूपैकादशिन्यामेव संभवति । उत्तरपूर्वत्वं चोत्तरवेद्यपेक्षया ज्ञेयम् । वचनाद्यूपस्पर्शो न दोषाय । यज्ञसमाप्तेः प्राग्वा ग्रहणम् । ततो ब्रह्मवरणादि सामान्यप्रधानान्तं कर्म समानम् ।

## अथ वैशेषिकप्रधानहोमः ।

धाता ददात्विति चतुर्णां विश्वे देवा ऋषयः । धाता देवता । प्रथमस्य गायत्री । द्वितीयस्य त्रिष्टुप् । तृतीयस्यानुष्टुप् । चतुर्थस्य त्रिष्टुप् । पुंसवनवैशेषिकप्रधानाज्यहोमे विनियोगः ।

'ॐ धाता ददातु नो रयिमी० नत्स्वाहा' धात्र इदं न मम । 'ॐ धाता प्रजाया० धेम स्वाहा' धात्र इदं न मम । 'ॐ धाता ददातु नो रयिं प्रा० धसः स्वाहा' धात्र इदं न मम । 'ॐ धाता ददातु दा० जोषाः स्वाहा' धात्र इदं न मम । इति चतस्र आहुतीर्हुत्वेमं मे वरुणेत्यङ्गहोमजयाद्युपहोमादि संस्थाजपान्तं कृत्वा त्रिवृदन्नहोमं पुण्याहादिवाचनं च विधाय प्रजापतिः प्रीयतामिति वदेत् ।

ततोऽपरेणाग्निमुपरिबद्धशुभ्रवर्तुलवितानस्याधस्तात्कर्मार्थत्वेन स्नातां शुद्धवस्त्रां गन्धभूषणादिभिरलंकृतां शिष्टाकुटिलब्राह्मणेन कृतसंभाषणां भार्यां प्राङ्मुखीमुपवेश्य 'वृषाऽसि' इति तस्या दक्षिणे हस्त आसादितं यवं वितुषं प्राश्वं निदधाति । 'आण्डौ स्थः' इति तस्याभित आसादितौ द्वौ सर्षपौ धान्यमाषौ वा स्थापयति । सकृदेव मन्त्रो द्विवचनलिङ्गात् । सूत्रे धान्यग्रहणं परिमाणमाषनिवृत्त्यर्थम् । 'श्वावृत्तत्' इति यवसर्षपोपर्यासादितं गोदधिद्रप्सं प्रक्षिपति । द्रप्सशब्देन दध्न उपरिस्थो घनीभूतोंऽश उच्यते ।

ततस्तूष्णीं प्राशयति । ततः—'ॐ अभि ष्ट्वाऽहं दशभिरभिमृशामि दशमास्याय सूतवै' इति कृतशुद्धाचमनायास्तस्या उदरं हस्ताभ्यामभिमृशति । दशभिरभिमृशामीति मन्त्रलिङ्गाद्धस्तद्वयेनाभिमर्शनम् । न्यूनाङ्गुलेरधिकाङ्गुलेर्वा कर्तुर्दशभिरितिपदस्य लोपः । ऊहो वा नवभिरेकादशभिरिति ।

ततो घृतसंमिश्रमासादितं वटाङ्कुररसं प्रियंग्वोदननिस्रावितद्रव्यमिश्रितं कौशेयवस्त्रार्थककोशकारिक्रिमिचूर्णरसं वोदकेन घृतेन वा मिश्रितमुत्तरपूर्वयूपाग्निष्टाग्निशकलसूक्ष्मचूर्णं वा कृतस्वोरुमूलोपधानाया भार्याया दक्षिणनासिकाछिद्रे प्रवेशयेत् । अथवाऽऽसादितारणीभ्यामग्निं मथित्वा तस्य धूमं वा किंचित्प्रवेशयेत् ।

ततोऽग्निं संपूज्य ब्राह्मणभोजनं भूयसीदानं च विधाय कर्मसाद्गुण्याय विष्णुं संस्मरेत् । देवरादिभिस्तु लौकिकाग्नावेव पुंसवनहोमः कार्यः ।

इति संस्काररत्नमालायां पुंसवनप्रयोगः ।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायाः सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालाया उत्तरार्धे प्रथमं प्रकरणम् ॥ १ ॥

अथ द्वितीयं प्रकरणम् ।

## अथ गर्भिणीधर्माः ।

पाद्मे गर्भिण्यधिकारेऽदितिं प्रति कश्यपः—

“ नावस्करेपूपविशेन्मुसलोलूखलादिपु ।

अवस्करेषु मार्जन्यादिषु । नोपस्करेष्विति पाठ उपस्करशब्देन शूर्पादि ज्ञेयम् ।

जलं च नावगाहेत शून्यागारं विवर्जयेत् ॥
वल्मीकं नाधितिष्ठेत न चोद्विग्नमना भवेत् ।
विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना ॥
न शयालुः सदा तिष्ठेद्व्यायामं च विवर्जयेत् ।
न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् ॥
वर्जयेत्कलहं गेहे गात्रभङ्गं तथैव च ।
न मुक्तकेशा तिष्ठेत नाशुचिः स्यात्कदाचन ॥
न शयीतोत्तरशिरा न चैवाधःशिराः क्वचित् ।
न वस्त्रहीना नोच्छिष्टा न चार्द्रचरणा तथा ॥

नामङ्गल्यं वदेद्वाक्यं न च हास्याधिका भवेत् ।
कुर्याच्छ्वशुरयोर्नित्यं पूजां माङ्गल्यतत्परा ॥
तिष्ठेत्प्रसन्नवदना सदा भर्तुर्हिते रता " इति ।

भविष्ये—" संध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि ।
स्थातव्यं न च गन्तव्यं वृक्षमूले च सर्वदा ॥
न दुर्मुखी सदा तिष्ठेत्खट्वाछायां विवर्जयेत् ।
सर्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत् ॥

ईषदुष्णं कोष्णम् ।

कृतरक्षा सुभूषा च वास्तुपूजनतत्परा ।
दानशीला तृतीयायां पार्वत्या नक्तमाचरेत् ॥
गर्भिणी कुञ्जराश्वादिशैलहर्म्यादिरोहणम् ।
व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ॥
शोकं रक्तविमोकं च साहसं कुक्कुटासनम् ।
व्यवायं च दिवास्वापं रात्रौ जागरणं त्यजेत् ॥
अतिरुक्षं तु नाश्नीयादत्यम्लमतिभोजनम् ।
अत्युष्णमतिशीतं च गुर्वाहारं परित्यजेत् ॥
इतिवृत्ता भवेन्नारी विशेषेण तु गर्भिणी ।
यश्च तस्यां भवेत्पुत्रः स्थिरायुर्वृद्धिसंयुतः ॥
अन्यथा गर्भपतनमवाप्नोति न संशयः " इति ॥

मार्कण्डेयोऽपि—" वृक्षमद्रिं च नाऽऽक्रामेन्न प्राकारं पयोनिधिम् ।
परिखां च न चाऽऽक्रामेदबला गर्भधारिणी ॥
गर्भरक्षा सदा कार्या नित्यं शौचनिषेवणात् ।
प्रशस्तमन्त्रलिखनाच्छस्तमाल्यानुलेपनात् " इति ॥

स्मृत्यन्तरे—" भूम्यां चैवोच्चनीचायामारोहश्चावरोहणम् ।
नदीप्रतरणं चैव शकटारोहणं तथा ॥
उग्रौषधं तथा क्षारं मैथुनं भारवाहनम् ।
कृते पुंसवने चैव गर्भिणी परिवर्जयेत् " [ इति ] ॥

गर्भग्रहणं च श्रमादिलिङ्गैर्वेदितव्यम् । गृहीतगर्भायाः सद्यः श्रमो ग्लानिश्च जायते । पिपासाऽऽयासः सक्थिस्पन्दनं शुक्रशोणितयोरनुसंबन्धो योन्याः स्फुरणं चेत्यादि ।

(* अन्यच्च प्रयोगार्णवे स्मृत्यन्तरे—

" दानं पक्वान्नभिक्षायाः परिवेषणमेव च ।
पचनं च न कर्तव्यं गर्भिण्या सर्वथैव तु " इति ) ॥

इति संक्षेपेण गर्भिणीधर्माः ।

## अथ गर्भिणीपतिधर्माः ।

" गर्भिणीवाञ्छितं द्रव्यं तस्यै दद्याद्यथोचितम् ।
सूते चिरायुषं पुत्रमन्यथा दोषमर्हति " इति ॥

याज्ञवल्क्यः—" दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणं वाऽपि तस्मात्कार्यं प्रियं स्त्रियाः " इति ॥

दोहदं गर्भिणीप्रियम् । स्मृतिचिन्तामणौ—

" पुंसो भार्या गर्भिणी यस्य चेत्स्यात्सूनोश्चौलं क्षौरकर्माऽऽत्मनश्च ।
गेहारम्भः स्तम्भसंस्थापनं च वार्धिस्नानं नैव कुर्याच्च यात्राम् " इति ।

वार्धिः समुद्रः ।

दक्षः—" ऋतुद्वये व्यतीते तु न कुर्यान्मौञ्जिबन्धनम् ।
अग्न्याधानं गयाश्राद्धं वपनं च विवर्जयेत् " इति ॥

कालविधाने—" क्षौरं शवानुगमनं नखकृन्तनं च
युद्धं च वास्तुकरणं त्वतिदूरयानम् ।
उद्वाहमौ(औ)पनयनं जलधेर्वगाह
आयुष्क्षयो भवति गर्भिणिकापतीनाम् " इति ॥

वगाह इत्यत्र, अवेत्युपसर्गावयवाकारस्य भागुरिमतेन लोपः । क्षौरं वपनम् । तच्चात्र कर्तनस्याप्युपलक्षणम् ।

" नोदन्वतोऽम्भसि स्नायान्न च श्मश्र्वादि कर्तयेत् ।
अन्तर्वत्न्याः पतिः कुर्वन्नप्रजो भवति ध्रुवम् " इति क्रतुस्मरणात् ।

यत्तु—" वपनस्य निषेधेऽपि कर्तनं वै विधीयते "

इति स्मृत्यन्तरवचनं तद्गर्भिणीपतिभिन्नानां जीवत्पितृकादीनां यो वपननिषेधस्तत्र कर्तनविधानपरम् ।

संग्रहे—" दहनं वपनं चैव पर्वतारोहणं तथा ।
नाव आरोहणं चैव वर्जयेद्गर्भिणीपतिः " इति ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. ख. पुस्तकयोर्नास्ति ।

---

१ ख. ङ. च. °त्मजस्य । गे° ।

स्मृत्यन्तरे—" गर्भिण्यामपि भार्यायां विवाहेऽप्यथवा व्रते ।
सपिताऽपि वपेत्केशान्गौतम्यां सिंहगे गुरौ " इति ॥

विवाह इत्यत्र निवृत्तेऽपीति शेषः । एवं व्रत इत्यत्रापि । गौतम्यामिति गौतम्यसंनिहितदेशनिवृत्त्यर्थम् । सिंहगे गुराविति तीर्थयात्रान्तरोपलक्षणम् ।

" विवाहे व्रतबन्धे च गर्भिणीपतिरेव च ।
मुण्डनं सर्वतीर्थेषु कुर्याद्देवाविचारयन् " ॥

इति स्मृतिदर्पणधृतसंग्रहवचनसंवादात् ।

स्मृत्यन्तरे—" सिन्धुस्नानं द्रुमच्छेदं वपनं प्रेतवाहनम् ।
विदेशगमनं चैव न कुर्याद्गर्भिणीपतिः " इति ॥

प्रेतवाहनमित्यनेन प्रेतविधानमप्युपलक्ष्यते । ज्योतिर्निबन्धे गालवः—

" प्रव्यक्तगर्भापतिरब्धियानं मृतस्य वाहं क्षुरकर्म सङ्गम् ।
तथैव यत्नेन गयादितीर्थं यागादिकं वास्तुविधिं न कुर्यात् " इति ॥

आदिशब्देन व्रतोद्यापनादीति शुद्धिदर्पणे ।

दक्षः—" मुण्डनं पिण्डदानं च प्रेतकर्म तथैव च ।
न जीवत्पितृकः कुर्याद्गर्भिणीपतिरेव च " इति ॥

पिण्डदानशब्देन श्राद्धमुपलक्ष्यत इति केचित् ।

वपनप्रेतविधानापवादस्तत्रैव—

" क्षौरं नैमित्तिकं कुर्यान्निषेधे सत्यपि ध्रुवम् ।
पित्रोः प्रेतविधानं च गर्भिणीपतिरेव च " इति ॥

एते च नियमाः सप्तममासादूर्ध्वं भवन्ति ।

" वपनं मैथुनं तीर्थं वर्जयेद्गर्भिणीपतिः ।
श्राद्धं च सप्तमान्मासादूर्ध्वं नैव समाचरेत् " इत्याश्वलायनोक्तेः ।

अत्र केचित्—सप्तममासोत्तरं यो वपनादिनिषेधः स दोषातिशयार्थः । तेन तत्पूर्वमपि शक्तौ सत्यां वपनादिनिषेधपरिपालनमस्त्येवेत्याहुः । (* ऊर्ध्वं नैव समाचरेदितिवचनात्सप्तममासात्पूर्वं कदाचिद्वपनादिकरणमस्तीति गम्यते ।

दक्षः—" मासषट्के व्यतीते तु न कुर्यान्मौञ्जिबन्धनम् ।
अग्न्याधानं गयाश्राद्धं वपनं च विवर्जयेत् " इति ॥

संस्कारदर्पणे सत्यव्रतः—" ऋतुत्रये व्यतीते तु न कुर्यान्मौञ्जिबन्धनम् ।
अग्न्याधानं गयाश्राद्धं वपनं च विवर्जयेत् " इति ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तक एव ।

संकटवशेन शक्ताशक्तपरतया वा व्यवस्था यथायथं बोध्या । ) तीर्थं तीर्थयात्रा । श्राद्धं श्राद्धभोजनमिति केचित् । पित्रोः क्षयाहश्राद्धादिकं तु सप्तममासादूर्ध्वमपि भवति ।

" पित्रोः क्षयाहं दर्शं च गयाश्राद्धं महालयम् ।
ग्रहणान्वष्टकाश्राद्धे कुर्याद्गर्भवतीपतिः " इति सत्यव्रतोक्तेः ।

एतच्च नित्यानां युगादिश्राद्धानामुपलक्षणम् । पिण्डयज्ञोऽपि भवत्येव । नित्यत्वात् । मुण्डनं पिण्डदानं चेत्युदाहृतदक्षवाक्ये पिण्डदानशब्देन श्राद्धमुपलक्ष्यत इति मते श्राद्धस्यैव निषेधप्राप्तौ पित्रोः क्षयाहमिति सत्यव्रतवाक्येन नित्यश्राद्धानां प्रतिप्रसवः क्रियते । पिण्डदानशब्देन पिण्डदानमेव निषिध्यत इति मते पित्रोः क्षयाहादिश्राद्धेष्वपि पिण्डदाननिषेधः ।

( * न च—" पिण्डनिर्वपणं कार्यं तस्यामपि नृसत्तम " ।

इत्यान्वष्टक्यविषय एव गर्भिणीपतित्वप्रयुक्तो यः पिण्डदाननिषेधः प्राप्तः स नास्ति , इति निबन्धकारलेखनादान्वष्टक्यव्यतिरिक्तसांवत्सरिकादिस्थले कथं पिण्डदानप्राप्तिरिति वाच्यम् । अपिशब्देन सांवत्सरिकादीनामपि संगृहीतत्वेन तत्रापि तत्प्राप्तिसंभवात् । न चापिशब्दस्य पिण्डनिर्वपणशब्देऽन्वयात्कथमेतदिति वाच्यम् । संनिहितपदान्वयसंभवे व्यवहितान्वयकल्पनस्यानुचितत्वात्सांवत्सरिकादिषु गर्भिणीपतिकर्तृकपिण्डदानाचारस्य बहुशो दृष्टत्वाच्च, इति केचित् । वस्तुतस्तु— एतन्मतेऽपि क्षयाहादिश्राद्धेष्वपि पिण्डनिषेधो नैवास्ति । )

" श्राद्धं च सप्तमान्मासादूर्ध्वं नैव समाचरेत् " ।

इत्याश्वलायनवचनस्थश्राद्धशब्दः श्राद्धभोजनपर इति मते श्राद्धकरणस्यैतस्मादेव वचनात्प्राप्तत्वात्पित्रोः क्षयाहमितिवचनं सपिण्डकत्वविधानार्थं द्रष्टव्यम् । यथाचारं व्यवस्था । इति गर्भिणीपतिधर्माः ।

## अथ गर्भवृद्ध्युपायः ।

" वरी विश्वा च गन्धा च मधुकं भृङ्गराट्समम् ।
अजादुग्धेन पानं तु नार्या गर्भस्य वृद्धिकृत् " इति ॥

वरी शतावरी । विश्वा शुण्ठी । गन्धाऽश्वगन्धा । भाषया ' आस्कन्द ' इत्युच्यते । मधुकं ज्येष्ठमधु । भृङ्गराट्, भाषया ' माका ' इति ।

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तक एव ।

# अथ गर्भरक्षणोपायः ।

**शाङ्खायनगृह्ये**—" चतुर्थे मासि गर्भरक्षणं ब्रह्मणाऽग्निः संविदान इति षट्स्थालीपाकस्य हुत्वाऽक्षीभ्यां त इति प्रत्यृचमाज्यलेपेनाङ्गान्यवमृजेत् " इति ।

ब्रह्मणाऽग्निः संविदान इति राक्षोघ्नम् । रक्षोहाऽग्निर्देवता । शाखान्तरोक्तत्वाल्लौकिकाग्नाविदं कार्यम् । इति गर्भरक्षणोपायः ।

# अथ गर्भिण्या गर्भस्रावहरोपायः ।

**तत्रेदं गृह्यम्**—" यदि गर्भः स्रवेदार्द्रेणास्याः पाणिना त्रिरूर्ध्वं नाभेरुन्मार्ष्टि पराञ्चं त्वा नार्वाञ्चं त्वष्टा बध्नातु बन्धने । स ऋतूनुपवेश्य दशमासो अवीरहेति " [ इति ] ।

यदि गर्भो गर्भिण्याः स्रवेत्तदा तस्या नाभेरूर्ध्वं यो देशो गर्भावस्थितियोग्यस्तं स्वेन पाणिना पराञ्चं त्वेति मन्त्रेण त्रिरुन्मार्ष्टि । ऊर्ध्वापवर्गं संमृजीतेत्यर्थः । सकृदेव मन्त्रः । यत्रैकस्मिन्द्रव्य इति सूत्रात् । नैमित्तिकमिदं कर्म ।

**औषधमपि**—" पीत्वा तण्डुलतोयेन तण्डुलीयजटा ऋतौ ।
पतद्गर्भा च या नारी स्थिरगर्भा प्रजायते ॥
शर्कराथच(यव)तिलैः समांशकैर्माक्षिकेण सह भक्षितैः स्त्रियाः ।
नास्ति गर्भपतनोद्भवं भयं पापभीतु(ति)रिव तीर्थसेवनम्(नात्) " इति ॥

तण्डुलीयजटा तण्डुलजामूलम् । माक्षिकं मधु ।

इति गर्भिण्या गर्भस्रावहरोपायः ।

# अथ सीमन्तोन्नयनम् ।

**तत्रेदं गृह्यम्**—" अथातः सीमन्तोन्नयनं प्रथमगर्भायाश्चतुर्थे मास्यापूर्यमाणपक्षे पुण्ये नक्षत्रे " इति ।

प्रथमगर्भो यस्याः सा प्रथमगर्भा तस्याश्चतुर्थे गर्भमासे पुण्ये नक्षत्रे स्त्रीसंस्कारत्वात्स्त्रिया अनुकूले । प्रथमगर्भ इति वाच्ये प्रथमगर्भाया इतिवचनं स्त्रीप्राधान्यख्यापनार्थम् । तस्मादयं सर्वगर्भार्थ आधारसंस्कार इति द्रष्टव्यम् ।

**बैजवापः**—" अथ सीमन्तोन्नयनं चतुर्थे मासि पञ्चमे षष्ठे वा " इति ।

**शाङ्खायनगृह्ये**—" सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनम् " इति ।

**याज्ञवल्क्यः**—" षष्ठेऽष्टमे वा सीमन्ते " इति ।

---

१ ङ. च. 'थमे ग' ।

अत्रिः—" आधानादष्टमे मासि सीमन्तोन्नयनं भवेत्।
नवमे मासि वा कुर्याद्यावद्गर्भविमोचनम् " इति ॥

शङ्खः—" गर्भस्पन्दने सीमन्तोन्नयनं यावद्वा न प्रसवः " इति।

अत्र मासः सावनो ग्राह्यः।

" सीमन्तः सावने मासि चतुर्थेऽप्यथवाऽष्टमे " इति वसिष्ठोक्तेः।

बृहस्पतिस्तु सौरं मासमाह सीमन्तं प्रकृत्य—

" सौरेणैव चतुर्थे स्यान्मासे षष्ठेऽष्टमेऽपि वा " इति।

सावनादिलक्षणमुक्तं श्रीधरीये—

" त्रिंशद्दिनं सावनमासमाहुर्नाक्षत्रमिन्दोर्भगणभ्रमेण।
दर्शावधिं मासमुशन्ति चान्द्रं सौरं तथा भास्करराशिभोगात् " इति ॥

अत्र शुक्लपक्ष एव मुख्यः। आपूर्यमाणपक्ष इति गृह्योक्तत्वात्। असंभवेऽन्त्यांशं विना कृष्णपक्षो ग्राह्यः। तथा च बृहस्पतिः—

" शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना " इति।

तिथयः कालविधाने—

" पक्षच्छिद्राश्च रिक्ताः पितृतिथिमपहायापराः स्युः प्रशस्ताः " इति।

पक्षच्छिद्रास्तद्वर्ज्या नाडिकाश्च वसिष्ठ आह—

" चतुर्दशी चतुर्थी च अष्टमी नवमी तथा।
षष्ठी च द्वादशी चैव पक्षच्छिद्राह्वया इमाः ॥
क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः।
भूताष्टमनुतत्त्वाङ्कदशशेषास्तु शोभनाः " इति ॥

भूतानि पञ्च। मनवश्चतुर्दश। तत्त्वानि पञ्चविंशतिः। अङ्का नव। कश्यपस्तु षष्ठ्यष्टमीद्वादशीनामेव पक्षच्छिद्रात्वमुक्त्वा सर्वसाधारण्येन दशैव घटिका वर्जनीया इत्याह—

" अष्टमी द्वादशी षष्ठी पक्षच्छिद्रास्तु तासु च।
मङ्गले सर्वदा त्याज्या न्यू(नू)नं हि दश नाडिकाः " इति ॥

उभयत्रापि घटिकास्तिथेराद्या एव। प्रथमातिक्रमे कारणाभावात्। अनन्तरोदाहृतकालविधानवाक्यस्य वसिष्ठोक्तपक्षच्छिद्राख्यतिथिपरत्वे पक्षच्छिद्रात्वेनैव चतुर्थ्यादीनां निषेधे सिद्धे रिक्तात्वेन पुनर्निषेधो दोषातिशयार्थः। कश्यपोक्तपक्षच्छिद्राख्यतिथिपरत्वे तु चतुर्थ्यादीनां पक्षच्छिद्रात्वाभावाद्रिक्तात्वेन निषेध आवश्यक एवेति द्रष्टव्यम्। पितृतिथिरमावास्या। अपरा अन्या

उक्तापेक्षया । शुक्लपक्षे चतुर्थीचतुर्दश्योः पक्षच्छिद्रात्वेन रिक्तात्वेन वा निषिद्धयोः पौर्णमास्याश्च केषांचिन्मतेन ग्राह्यत्वमुक्तं कालनिर्णये—

" शुभसंस्थे निशानाथे चतुर्थीं च चतुर्दशीम् ।
पौर्णमासीं प्रशंसन्ति केचित्सीमन्तकर्मणि " इति ॥

पौर्णमासीसाहचर्याच्चतुर्थीचतुर्दश्यौ शुक्लपक्षसंबन्धिन्यावेव ग्राह्ये ।

वारानाह बृहस्पतिः—

" पुरुषग्रहवाराः स्युः शुभाः सीमन्तकर्मणि ।
मध्यौ स्त्रीग्रहवारौ तु वर्जयेत्तु नपुंसकौ " इति ॥

पुरुषग्रहा रविभौमगुरवः । स्त्रीग्रहौ सोमभृगू । नपुंसकौ शनिबुधौ ।

उक्तं च ज्योतिर्निबन्धे—

" पुरुषा रविगुरुभौमा नपुंसकाख्यो बुधोऽर्कपुत्रश्च ।
नार्यौ भृगुचन्द्रमसौ ग्रहस्वभावस्थितिः कथिता " इति ॥

नक्षत्राण्याह बृहस्पतिः—

" रोहिण्यैन्दवमादित्यपुष्यहस्तोत्तरात्रयम् ।
पौष्णं वैष्णवभं चैव सीमन्ते दशकं स्मृतम् " इति ॥

ऐन्दवं मृगशिरः । आदित्यं पुनर्वसू ।

कालविधाने—"सीमन्तोन्नयनं कार्यं शुभांशे शुभलग्नके ।
कुलीरमृगकन्याश्च वर्ज्याः शेषाश्च शोभनाः " इति ॥

कुलीरः कर्कः । मृगः सिंहः ।

" कुलीरं मिथुनं कन्यां हित्वा शेषाः शुभावहाः " ।

इति बृहस्पतिनोत्तरार्धं पठितम् । लग्नादिकं तु ज्योतिःशास्त्रादितोऽवगन्तव्यम् ।

नारदः—" विप्रक्षत्रिययोः कुर्याद्दिवा सीमन्तकर्म तत् ।
वैश्यशूद्रकयोरेतद्दिवा निश्यपि केचन " इति ॥

एतच्च सकृदेव कर्तव्यं न तु प्रतिगर्भम् ।

प्रथमगर्भाधारसंस्कारकत्वस्यैव ज्ञापितत्वात् ।

" सकृच्च कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् " ॥

इति हारीतोक्तेश्च । अत्र द्विजग्रहणाच्छूद्रैः प्रतिगर्भमावर्तनीयम् ।

सीमन्तोन्नयनात्पूर्वं प्रसूताया विशेषमाह गार्ग्यः—

"यदि सीमन्ततः पूर्वं[1] प्रसूता स्यात्तु भामिनी ।
पेटिकायां तदा जातं स्थाप्य संस्कारमाचरेत्" इति ॥

अत्रापि गुरुशुक्रास्तमलमासाद्यनिषेधोऽमासंक्रान्त्यादिनिषेधः कर्त्रन्तरविधिश्च द्रष्टव्यः ।

अत्र भोजने प्रायश्चित्तमुक्तं धौम्येन—

"ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा ।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत्" इति ॥

अत्र ब्रह्मौदनाङ्गभोजनमिव सीमन्ताङ्गभोजनमेव निमित्तत्वेन विवक्षितम् । अतस्तद्दिने तद्गृहे भोक्तुः प्रायश्चित्तमिति पारिजातोक्तिरपास्ता । सोमसाहचर्याद्ब्रह्मौदनमग्न्याधानाङ्गभूतं ग्राह्यमिति केचित् । वस्तुतस्तु सोमसीमन्तोन्नयनादिषु यथा केवलभोजनार्थं प्रवृत्तं प्रति प्रायश्चित्तविधानं तत्सदृशकेवलब्रह्मौदनभोजनार्थं प्रवृत्तं प्रत्येवेदमपि प्रायश्चित्तमित्येव वक्तव्यम् । अन्यथा वैरूप्यापत्तेः । एतादृशं ब्रह्मौदनमाश्वलायनोक्तोपनयनसंबद्धमेव । अग्न्याधानाद्यङ्गभूतब्रह्मौदनं न तथा । तत्र भोजनातिरिक्तस्य प्रभूतकर्मणः सत्त्वेन केवलतदर्थप्रवृत्तेरभावात् । न च सांतपनात्मकसंस्कारभोजनप्रायश्चित्तेनैव तत्सिद्धावेतत्प्रायश्चित्तविधानं व्यर्थमिति वाच्यम् । अत्राऽऽपदि प्राणायामोपवासयोः सामान्यतः प्राप्तयोर्बाधनार्थत्वेन सार्थक्यसंभवात् । एवं च ब्रह्मौदनग्रहणेनाऽऽश्वलायनाद्युक्तस्यौपनायनिकब्रह्मौदनस्यैव ग्रहणं युक्तम् । इदं च ज्ञानतः । अज्ञानाद्भोजने तु ऋग्विधानोक्तम्—

"अरा इवेज्जपेन्मन्त्रं शतवारं शिवालये ।
सीमन्ते च यदा भुङ्क्ते मुच्यते किल्बिषात्ततः" इति ॥

## अथ प्रयोगः ।

सावने सौरे वा चतुर्थे मासि पञ्चमे षष्ठे सप्तमेऽष्टमे नवमे वा यावद्गर्भविमोचनं तावत्पर्यन्ते काले वा शुक्लपक्षेऽसंभवेऽन्त्यांशरहिते कृष्णपक्षे चतुर्थीषष्ठ्यष्टमीनवमीद्वादशीचतुर्दश्यमावास्याव्यतिरिक्ततिथावेतदसंभवे चतुर्दशीचतुर्थ्यष्टमीनवमीषष्ठीद्वादशीनां क्रमेण पञ्चाष्टौ चतुर्दश पञ्चविंशतिर्नव दशेत्याद्या घटिकाः साधारण्येन दश घटिका वा विहाय तास्वपि रविभौमगुर्वन्यतमे वासरे संकटे सोमभृग्वन्यतरेऽपि वासरे रोहिणीमृगशिरः-

[1] क. ख. च. °मिनि । पें° ।

पुनर्वसुपुष्यहस्तोत्तरात्रयरेवतीश्रवणान्यतमे नक्षत्रे कर्कसिंहमिथुनकन्याव्यतिरिक्ते लग्ने दिवैव कार्यम् । नात्र गुरुशुक्रास्तमलमासादिनिषेधः ।

कर्ता ज्योतिर्विदादिष्टे मुहूर्ते कृतनित्यक्रियः प्राङ्मुख उपविश्य स्वस्य दक्षिणतो भार्यामुपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्यां भार्यायां विद्यमानस्यास्य प्रथमगर्भस्य जनिष्यमाणसर्वगर्भाणां च बीजगर्भसमुद्भवैनोनिवर्हणक्षेत्रसंस्कारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सीमन्तोन्नयनाख्यं कर्म करिष्य इति संकल्प्य गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं चोक्तरीत्या कुर्यात् । अत्र धाता प्रीयतामिति विशेषः । देवरादिभिस्तु पूर्ववदूहेन संकल्पः कर्तव्यः ।

तत औपासनाग्निं मङ्गलनामाऽयमित्यनुसंदधन्प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा सीमन्तोन्नयनहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा, वैशेषिकप्रधानहोमे—धातारं चतसृभिराज्याहुतिभिर्यक्ष्ये । अङ्गहोमे—वरुणं द्वाभ्यामित्यादि । पात्रासादने त्रिश्वेतां शललीमुदुम्बरफलस्तबकं वटफलस्तबकं वा दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भानिध्मं बर्हिराज्यमित्येतान्यासादयेत् ।

ततो ब्रह्मवरणादि व्याहृतिहोमान्तं कृत्वा प्रधानहोमं कुर्यात् । धाता ददात्विति चतुर्णां मन्त्राणां विश्वे देवा ऋषयः । धाता देवता । प्रथमस्य गायत्री छन्दः । द्वितीयस्य त्रिष्टुप् । तृतीयस्यानुष्टुप् । चतुर्थस्य त्रिष्टुप् । सीमन्तोन्नयनवैशेषिकप्रधानाज्यहोमे विनियोगः । 'ॐ धाता ददातु नो रयिमी० नत्स्वाहा' धात्र इदं न मम । 'ॐ धाता प्र० क्षेम स्वाहा' धात्र इदं न मम । 'ॐ धाता ददातु नो रयिं प्रा० सः स्वाहा' धात्र इदं न मम । 'ॐ धाता ददातु दा० षाः स्वाहा' धात्र इदं न मम । इति चतस्र आहुतीर्हुत्वेमं मे वरुणेत्यङ्गहोमादि संस्थाजपान्तं समाप्य त्रिवृदन्नहोमं पुण्याहादिवाचनं विधाय धाता प्रीयतामिति वदेत् ।

ततः कर्मार्थत्वेन कृतस्नानां शुद्धवस्त्राङ्गभूषणादिभिरलंकृतां शिष्टाकुटिलब्राह्मणेन कृतसंभाषणां भार्यामपरेणाग्निमुपरिबद्धशुभ्रवर्तुलवितानस्याधस्तात्प्राङ्मुखीमुपवेश्य तस्याः पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्नासादितां त्रिश्वेतां शललीं गृहीत्वा तयाऽऽसादितमुदुम्बरफलस्तबकं वटस्तबकं वा गृहीत्वा, व्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । राकामहमिति द्वयोर्विश्वे देवा जगती । सीमन्तोन्नयने विनियोगः । 'ॐ भूर्भुवः सुवः, राकामह१ सुहवा१ सु० मुक्थ्यम् । यास्ते राके० रराणा' इति तया शलल्योर्ध्वं सीमन्तमुन्नयेत् । केशान्विभजेदित्यर्थः ।

"ॐ सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजा विवृत्तचक्रा आसीनास्तीरे तुभ्यं गङ्गे विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः"

इति भार्यामभिमन्त्रयते । अत्र गङ्गाऽन्यतिरिक्तनदीसमीपनिवासे तु यस्या नद्याः समीपे निवासस्तन्नाम संबुद्ध्या ग्राह्यम् । गोदाकृष्णयोः समीपे निवासे तु भागीरथीवद्गङ्ग इत्येव । एतयोरपि गङ्गापदप्रवृत्तिनिमित्तत्वस्य तन्माहात्म्ययोर्दर्शनात् ।

ततो ब्राह्मणभोजनं भूयसीदानं च । तत आशिषो गृहीत्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत् । देवरादिभिर्लौकिकाग्नावेवायं होमः कार्यः ।

इति सीमन्तोन्नयनप्रयोगः ।

# अथ पुंसवनसीमन्तोन्नयनयोस्तन्त्रेण प्रयोगः ।

तत्राऽऽद्यावालस्यादिनाऽकृतपुंसवनस्य सूत्रविहितकालातिक्रमदोषपरिहारार्थं लौकिकाग्नौ व्याहृतिहोमादिभिः सहितेन रहितेन वाऽऽघारवत्तन्त्रेणाऽऽपूर्विकतन्त्रेण वा त्वं नः स त्वं न इत्याद्याः पूर्ववत्सप्ताऽऽहुतीः समस्तव्याहृतिभिरेकामाहुतिं च हुत्वा, अशक्तौ केवलां समस्तव्याहृतिभिरेकामेव वा हुत्वा गोदानाद्यन्यतमप्रत्याम्नायेन पादकृच्छ्रमालस्येनाकरणेऽर्धकृच्छ्रं प्रायश्चित्तं चरित्वा पुंसवनं सीमन्तेन सह कुर्यात् । तस्यापि सूत्रोक्तकालातिक्रमे तस्मिन्नेवाग्नौ द्विवारं पूर्वोक्ताहुतीर्हुत्वा प्रतिसंस्कारं पादकृच्छ्रमर्धकृच्छ्रं वा प्रायश्चित्तं कुर्यात् ।

तत आचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्यां भार्यायां विद्यमानगर्भस्य पुंस्त्वप्रतिपादनबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुंसवनं ममास्यां भार्यायां विद्यमानस्यास्य प्रथमगर्भस्य जनिष्यमाणसर्वगर्भाणां च बीजगर्भसमुद्भवैनोनिबर्हणद्वारा क्षेत्रसंस्कारद्वारा च श्रीपरमेश्वरप्रीत्यर्थं सीमन्तोन्नयनं च तन्त्रेण करिष्य इति संकल्पः । पुंसवनसीमन्तोन्नयनकर्मणोः पुण्याहं भवन्तो ब्रुवन्तु । पुंसवनसीमन्तोन्नयनकर्मणोः स्वस्ति भवन्तो ब्रुवन्तु । पुंसवनसीमन्तोन्नयनकर्मणोर्ऋद्धिं भवन्तो ब्रुवन्तु । पुंसवनसीमन्तोन्नयनकर्मणोः श्रीरस्त्विति भवन्तो ब्रुवन्तु । इति पुण्याहादिवाक्यानि । द्वितीये प्रतिवचनवाक्य ऋध्येतामिति विशेषः । पुंसवनसीमन्तोन्नयनकर्मणोर्या यक्ष्यमाणा देवतास्ताः सर्वाः परिग्रहीष्यामीत्यन्वाधानवाक्ये । गणेशपूजनादिबलिकरणपुण्याहादिवाचनान्तं तन्त्रेणैव । वैशेषिकधात्रीचतुष्टयहोमस्यापि नाऽऽवृत्तिः । संप्रतिपन्नदेवतत्वात् ।

१ ङ. °वताकरवा° ।

ततो दधिद्रप्सादिप्राशनं सीमन्तोन्नयनादिकं च क्रमेण कार्यम् । आसन्ने प्रसव एतयोर्मुख्यकालातिपन्नयोरपि मलमासादौ क्रिया भवत्येवानन्यगतिकत्वात् । इति पुंसवनसीमन्तोन्नयनयोस्तन्त्रेण प्रयोगः ।

## अथ सूतिकागृहं तत्प्रवेशकालः प्रवेशविधिश्चोच्यते ।

**ज्योतिर्वसिष्ठः**—" ऐन्द्र्यां तु विक्रमस्थानमाग्नेय्यां पचनालयः ।
याम्यां तु शयनस्थानं नैर्ऋत्यां सूतिकागृहम् ॥
वारुण्यां भोजनगृहं वायव्यां पशुमन्दिरम् ।
कौबेर्यां तु धनस्थानमीशान्यां देवतागृहम् " इति ॥

**प्रवेशकालो गर्गेणोक्तः**—" रोहिण्यैन्दवपौष्णेषु स्वातीवारुणयोरपि ।
पुनर्वसौ पुष्यहस्तधनिष्ठास्युत्तरासु च ॥
मैत्रे त्वाष्ट्रे तथाऽश्विन्यां सूतिकागारवेशनम् " इति ॥

**तथा**—" ग्रहेऽनुकूले राशौ तु रिक्तापष्ठचष्टवर्जिते ।
सर्वे वाऽथ शुभाः केन्द्रे पापाश्च त्रिषडायगाः ॥
शुभांशे शुभदृष्टौ तु सूतिकागृहवेशनम् " इति ।

**आय एकादशस्थानम् । एतच्च संभवे ।**

" प्रसूतिसंभवे काले सद्य एव प्रवेशयेत् " इति तेनैवोक्तत्वात् ।

**प्रवेशविधिः पाद्मे**—" प्रविशेत्सूतिकासंज्ञं कृतरक्षं समन्ततः ।
सुभूमौ निर्मितं रम्यं वास्तुविद्याविशारदैः ॥
प्राग्द्वारमुत्तरद्वारमथवा सुदृढं शुभम् ।

**अथवोत्तरद्वारमित्यन्वयः ।**

देवानां ब्राह्मणानां च गवां कृत्वा च पूजनम् ।
विप्रपुण्याहशब्देन शङ्खवाद्यरवेण च ॥
प्रसूता बहवस्तत्र तथा क्लेशक्षमादयः ।
हृद्या विश्वसनीयाश्च प्रविशेयुर्गृहं स्त्रियः " इति ॥

## अथ सुखप्रसवोपायः ।

**तत्रैको गृह्ये**—" विजननकाले क्षिप्रप्रसवन[1] शिरस्त उदकुम्भं निधाय पत्तस्तूर्यन्तीमथास्या उदरमभिमृशति यथैव वायुः पवते यथा समुद्र एजति । एवं ते गर्भ एजतु सह जरायुणाऽवसर्पत्वित्यवाङ्वमाष्टि " इति ।

---

१ क. तत्रैव ।

विजननकाले प्रसवकाले । क्षिप्रं प्रसूयते येन कर्मणा तत्क्षिप्रप्रसवनं तद्व-क्ष्यते । शिरस्तः शिरसः समीप उदकुम्भं निदधाति । पत्तः पादयोः समीपे तूर्यन्तीमवकां* निदधाति । केचित्तु—ओषधिविशेष इत्याहुः । पत्त इत्यत्र पद्भावश्छान्दसः । उदराभिमर्शो मन्त्रेण तूष्णीमवमार्जनमिति प्रथमे व्याख्याने । उदराभिमर्शस्तूष्णीं मन्त्रेणावमार्जनमिति द्वितीयव्याख्याने । पूर्वव्याख्यानेऽपरितोषादेव व्याख्यानान्तरं कृतं वृत्तिकृता ।

यथाऽऽहुर्भट्टपादाः—" पूर्वव्याख्यानतोऽन्यस्य द्वयमिष्टं प्रयोजनम् ।
पूर्वत्रापरितोषो वा विषयाव्याप्तिरेव वा " इति ॥

अत्रापरितोषोऽवसर्पत्विवतिलिङ्गानुपपत्तिरूपदोषवशेन । सूत्रेऽथशब्दोऽनित्यत्वख्यापनार्थः । तेन काम्यमिदं न पुंसवनवन्नित्यम् ।

ऋग्विधाने—" प्रमन्दिने प्रसूयन्त्यां जपेद्गर्भप्रमोचनीम् ।
इन्द्रं च मनसा ध्यायेन्नारी गर्भं प्रमुञ्चति " इति ॥

शास्त्रान्तर उपायान्तरम्—

" हिमवत्युत्तरे पार्श्वे शबरी नाम यक्षिणी ।
तस्या नूपुरशब्देन विशल्या भवतु गर्भिणी स्वाहा " ॥

अनेनैरण्डतैलं महिषीक्षीरमिश्रितमभिमन्त्र्य पाययेदुदरे लापयेच्चेति । ग्रन्थान्तरे तु—हिमवत्युत्तरे पार्श्व इत्यमुं मन्त्रं जपन्नेकविंशतिदूर्वाङ्कुरैस्तिलतैलमेकपलं प्रदक्षिणमावर्तयन्नष्टशतं जपित्वा तत्तैलं किंचित्पाययित्वा शेषं योनौ निषेचयित्वा(च्य) दूर्वाङ्कुरान्केशेषूपगूहेदित्युक्तम् ।

" वृषस्य मूलं यदि नाभियोनिप्रलेपितं स्त्री झटिति प्रसूते ।
तथा कटिस्थः कदलीमुकन्दो वेगात्प्रसूतिं कुरुतेऽङ्गनानाम् " इति ॥

वृषः ' अडुळसा ' तस्य मूलम् । एवमन्येऽप्युपायाः शास्त्रान्तरे द्रष्टव्याः ।

यन्त्रमप्युक्तं यन्त्रप्रकाशे—

" गजाग्निवेदा उडुराट्शराङ्का रसर्षिपक्षा इति हि क्रमेण ।
लिखेत्प्रसूतेः समये गृहेऽदः सुखेन नार्यः प्रसवन्ति शीघ्रम् " इति ॥

अस्यार्थः—गर्भिण्या नार्या दृष्टिगोचरे देशे समं चतुरश्रं संसाध्य तस्य समानव कोष्ठकान्कृत्वैशानोत्तरवायुकोष्ठेष्वष्टमतृतीयचतुर्थानङ्कान्क्रमेण लिखित्वा पूर्वमध्यमपश्चिमकोष्ठेषु प्रथमपञ्चमनवमाङ्कान्क्रमेण विलिख्याऽऽग्नेयदक्षिणनैर्ऋ-

---

* अत्र क. पुस्तकटिप्पण्यां शैवालमिति वर्तते ।

---

१ ङ. च. °सूयते ।

तत्कोष्ठेषु षष्ठसप्तमद्वितीयाङ्कान्क्रमेण विलिखेत् । अदः इदं यन्त्रं प्रसूतिसमये सूतिकागृहे लेखनीयम् । एतद्दर्शनेन सुखेन शीघ्रं नार्यः प्रसवन्तीति ।

पूर्व०

| | | | | |
|---|---|---|---|---|
| उत्तर० | ८ | १ | ६ | दक्षिण० |
| | ३ | ५ | ७ | |
| | ४ | ९ | २ | |

पश्चिम०

इति सुखप्रसवोपायः ।

## अथ यमलयोः संस्कारक्रमार्थं ज्येष्ठत्वक-निष्ठत्वनिर्णयः ।

तत्र मनुः—" जन्मज्येष्ठेन चाऽऽह्वानं सुब्रह्मण्यास्वपि स्मृतम् ।
यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता मता " इति ॥

अस्यार्थः—सुब्रह्मण्याख्यो मन्त्रो ज्योतिष्टोमादाविन्द्राह्वानार्थं प्रयुज्यते । तत्र वपायागोत्तरकालीनेषु सुब्रह्मण्याह्वानेषु सनामग्रहत्वविधानात्प्रथमपुत्रेण पितरमुद्दिश्याऽऽह्वानं क्रियतेऽमुकस्य पिता यजत इति । एवमृषिभिः स्मृतम् । यथा दायविभागे मातृतो ज्यैष्ठ्यं न किं तु जन्मत एव ज्यैष्ठ्यं तथैव सुब्रह्मण्याह्वान इत्यपिशब्दार्थः । तथा यमलजातयोर्गर्भे एककालं निषिक्तयोरपि जन्मक्रमेण ज्येष्ठता स्मृतेति ।

स्मृतितत्त्वे देवलोऽपि—

" यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम् ।
संतानः पितरश्चैव तस्मिञ्ज्यैष्ठ्यं प्रतिष्ठितम् " इति ॥

अस्यार्थः—यमयोर्मध्ये यस्य जातस्य प्रथमं मुखदर्शनं स ज्येष्ठस्तस्मिन्संतानः पितरश्च प्रतिष्ठिताः । तत्र ज्यैष्ठ्यं च प्रतिष्ठितं भवतीति ।

श्रीभागवते तु—

" प्रजापतिर्नाम तयोरकार्षीद्यः प्राक्स्वदेहाद्यमयोरजायत ।
तं वै हिरण्यकशिपुं विदुः प्रजा यं तं हिरण्याक्षमसूत साऽग्रतः " ॥

इत्यनेन पश्चादुत्पन्नस्य ज्यैष्ठ्यमुक्तम् । व्याख्यातमेतच्छ्रीधरेण—यमयोर्मध्ये यः स्वदेहात्प्रथममजायत तं यथा हिरण्यकशिपुं प्रजा विदुः, सा दितिः प्रथमं यमसूत तं हिरण्याक्षं यथा विदुस्तथा नाम कृतवानित्यर्थः । यदा हि

गर्भाधानसमये योनिपुष्पं विशद्वीर्यं द्विधा विभक्तमादिपश्चाद्भावेन प्रविशति तदा यमौ भवतः। तयोश्च पितृतः प्रवेशक्रमविपर्ययेण मातृतः प्रसूतिः।

"यदा विशद्विधा बीजभूतपुष्पं परिक्षरत्।
द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्ययात्" ॥

इति पिण्डसिद्धिस्मरणात्। अतः स्वदेहात्पूर्वं यो जातस्तस्य हिरण्यकाशिपुरिति दितेः प्रथमप्रसूतस्य हिरण्याक्ष इति नाम कृतवानिति। अत्र देशाचाराद्व्यवस्था। अत्र ज्येष्ठक्रमेणैव संस्कारा उक्ता धर्मप्रकाशे यमौ प्रकृत्य—

"संस्कारास्तत्र कर्तव्यास्तत्क्रमेणैव सर्वदा" इति ॥

तत्क्रमेण ज्येष्ठक्रमेण। इति यमलयोर्ज्येष्ठत्वकनिष्ठत्वनिर्णयः।

## अथ जातकर्म।

तत्र 'जातेऽश्मनि परशुं निधाय' इत्यादिगृह्यसूत्रम्। अत्र जात इति वचनमित आरभ्य शिरःसमीप उदकुम्भं निदधातीत्यन्तस्य कर्मणो जातकर्मेतिसंज्ञां गमयति। सप्तमीनिर्देशप्रयोजनं जन्मानन्तरमेव क्रिया स्यान्न त्वाशौचनिवृत्त्यपेक्षेत्येतदर्थम्। उत्तरमधरं येषामिति बहुव्रीहिः। यथावस्थितं विपर्यस्य यथाऽधस्ताद्धिरण्यमुपरिष्टादश्मा तथा कृतेष्वित्यर्थः। उपनिर्हरन्त्यौपासनमतिहरन्ति सूतकाग्निः स एष उत्तपनीय एव। नास्मिन्किंचन कर्म क्रियतेऽन्यत्रोद्धूपनादिति। उपनिर्हरणवचनं तस्मिन्गृह्याणि कर्माणि क्रियन्त इतिवचनस्य जायापतिकर्मार्थत्वात्प्रजासंस्कारेष्वौपासनस्याप्राप्तिः स्यात्सा मा भूदित्येतदर्थम्। उक्तं च बौधायनेन—तस्मिन्प्रजासंस्कार इति। सूतकसंबद्धकर्मार्थोऽग्निः सूतकाग्निः सूतककर्तव्योद्धूपनार्थोऽग्निरिति यावत्। स एषोऽग्निरुत्तपनीय एव कपालसंतापाग्निरेव भवति। आम्बरीषोऽग्निरुत्तपनीय इत्येके। एवकारकरणं कैश्चिन्निर्मन्थ्यस्य विहितस्य निवृत्त्यर्थम्। अस्मिन्सूतकाग्नावुद्धूपनादन्यत्किमपि न कर्म क्रियत इति। जातकर्म सचैलं स्नानं कृत्वैव कर्तव्यम्।

तत्र वासिष्ठः—"जातमात्रकुमारस्य मुखमस्यावलोकयेत्।
पिता ऋणाद्विमुच्येत पुत्रस्य मुखदर्शनात्" इति ॥

जातमात्र इत्यनेन जननाव्यवहितोत्तरकाले मुखावलोकनं विधीयते।

ज्योतिर्वसिष्ठः—"श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत्।
उत्तराभिमुखो भूत्वा नद्यां वा देवखातके" इति ॥

अनेन श्रवणाव्यवहितोत्तरकाले स्नानं विधीयते। अत्रासंनिधौ श्रवणान-

न्तरं स्नानम् । संनिधौ मूलाद्यजातस्य मुखदर्शनानन्तरं स्नानमिति व्यवस्था बोध्या । उत्तराभिमुख इति विशेषणं प्रवाहाभिमुखत्वादिबाधनार्थम् ।

संवर्तः—" पुत्रे जाते पिता सद्यः सचैलं स्नानमाचरेत् ।
" स्पर्शयोग्यस्ततः पश्चादित्याह भगवान्मनुः " इति ॥

एतेषु वसिष्ठादिवचनेषु पुत्रपदगतं पुंस्त्वमविवक्षितम् । अनुवाद्यगतत्वात् । तेनात्र स्त्र्यपत्येऽपि पितुः स्नानमावश्यकम् । सूतिकावर्जं पित्रादीनां सर्वेषां सपिण्डानामस्पृश्यत्वं नास्त्येव । अतो न तेषां स्नानमपि ।

यदाहाङ्गिराः—" सूतके सूतिकावर्जं संस्पर्शो न निषिध्यते " इति ।

नद्यादिषु गमनाशक्तौ सांख्यायनः—

" दिवा यदाहृतं तोयं कृत्वा स्वर्णयुतं तु तत् ।
रात्रिस्नाने तु संप्राप्ते कुर्यादनलसंनिधौ " इति ॥

एतच्च रात्रावपि कार्यम् । तथा च वसिष्ठः—

" पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यदा निशि " इति ॥

अत्र संक्रमणनिमित्तस्नानस्य रात्रौ विधानं दिवास्नानासंभवे रात्रेर्गौणकालत्वबोधनार्थम् । बहुभिर्वचनैः सर्वसंक्रमेषु दिवैव पुण्यकालत्वोक्तेः ।

अथवा—" रात्रौ संक्रमिते भानौ दिवा कुर्यात्तु तत्क्रियाम् ।
विष्णुपद्यां धनुर्मीने " ।

इत्यादिवचनैरत्यन्तबाध आनर्थक्यप्रसङ्गात् ' आनर्थक्यप्रतिहतानां विपरीतं बलाबलम् ' इति विकल्पे सत्याचारतो व्यवस्थेति द्रष्टव्यम् । एतच्च जातकर्माऽऽशौचान्तरमध्येऽपि कार्यम् ।

यथाऽऽह प्रजापतिः—" सूतके तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन सिध्यति " इति ॥

एतच्च जाताशौचपरम् ।

" मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत् ।
आशौचापगमे कार्यं जातकर्म यथाविधि " ॥

इति वसिष्ठेन मृताशौचविषय एवोत्कर्षोक्तेः । एतेन स्मृत्यर्थसारोक्तो विकल्पोऽपि व्यवस्थितो ज्ञेयः ।

पुत्रजन्मनिमित्ताशौचस्य पूर्वावधिमाह जैमिनिः—

" यावन्न च्छिद्यते नालं तावन्नाऽऽप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते " इति ॥

हारीतः—" जातकर्म ततः कुर्यात्पुत्रे जाते यथोदितम् " इति।

ततः स्नानानन्तरम्। यथोदितं स्वगृह्योक्तविधिनेत्यर्थः। नालच्छेदात्प्राग्जातकर्म कर्तव्यम्।

तदुक्तं मनुना—" प्राङ्नालच्छेदनात्पुंसो जातकर्म विधीयते " इति।

हारीतोऽपि—" प्राङ्नाभिच्छेदनात्संस्कारः पुण्यार्थान्कुर्वन्ति च्छिन्नायामाशौचम् इति। नाभिर्नालम्।

असंभवे कालान्तरमाह जाबालिः—

" जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि।
दैवादतीतकालं चेदतीते सूतके भवेत् " इति॥

विष्णुधर्मोत्तरे—" अच्छिन्ननाले कर्तव्यं श्राद्धं वै पुत्रजन्मनि।
आशौचोपरमे कार्यमथवा नियतात्मभिः " इति॥

अत्र पुत्रशब्दः कन्योपलक्षकः।

" प्रादुर्भावे पुत्रपुत्र्योर्ग्रहणे चन्द्रसूर्ययोः।
स्नात्वाऽनन्तरमात्मीयान्पितॄञ्श्राद्धेन तर्पयेत् " इति कार्ष्णाजिनिवचनात्।

अत्र नान्दीश्राद्धमामेन हेम्ना वा कार्यम्,

" आमद्रव्येण हेम्ना वा पितॄणां श्राद्धमाचरेत्।
जातश्राद्धे न दातव्यं पक्वान्नं ब्राह्मणेष्वपि "॥

इत्यादित्यपुराणात्। बृहन्नारदीये विकल्प उक्तः—

" जाते पुत्रे पिता स्नात्वा सचैलं जातकर्म तु।
कुर्याच्च नान्दीश्राद्धं वै स्वस्तिवाचनपूर्वकम्॥
हेम्नाऽथवा तु धान्यैर्वा नान्दीश्राद्धं प्रकल्पयेत्।
अन्नेन कारयेद्यस्तु स चाण्डालसमो भवेत् " इति॥

हेमाद्रौ संवर्तस्तु हेम्नैवाऽऽह—

" पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान्।
न पक्वेन न चाऽऽमेन कल्याणान्यभिकामयन् " इति॥

पुरुषार्थे जातश्राद्ध आमहेम्नोर्विकल्पः। जातकर्माङ्गश्राद्धे(द्धं) तु हेम्नैवेत्यविरोधः। एतच्च रात्रावपि कार्यम्।

" पुत्रजन्मनि यात्रायां शर्वर्यां दत्तमक्षयम् " इति व्यासोक्तेः।

दिनान्तरे क्रियमाणे जातकर्मणि तु अन्नेनैवैतद्भवति।

अन्यथा—" जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् "।

इति धौम्येनोक्तस्य भोक्तुः प्रायश्चित्तस्य निर्विषयत्वापत्तेः। नैमित्तिकमौत्तरमपि तदहःकर्तव्यमाह हारीतः—

"जाते कुमारे पितॄणामामोदात्पुण्यं तदहस्तस्मात्तिलपूर्णानि पात्राणि सहिरण्यानि ब्राह्मणानाहूय पितृभ्यः स्वधा कुर्यात्प्रजापतये च" इति।

ब्राह्मे—"देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम्।
आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा॥
तत्र दद्यात्सुवर्णं च भूमिं गां तुरगं रथम्।
छत्रं च गन्धमाल्यं च शयनं चाऽऽसनं गृहम्" इति॥

बृहद्याज्ञवल्क्यः—"कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः।
हिरण्यभूगवाश्वादिधान्यशय्यासनादिषु॥
तत्र सर्वं प्रतिग्राह्यं पक्वान्नं तु विवर्जयेत्।
भक्षयित्वा तु तन्मोहाद्द्विजश्चान्द्रायणं चरेत्॥
सूतके तु सकुल्यानां न दोषो मनुरब्रवीत्" इति।

वसिष्ठः—"दत्त्वा गोभूहिरण्यादि ततो लग्नं निरीक्षयेत्।
लग्नमेव प्रशंसन्ति ज्योतिःशास्त्रविदो जनाः॥
अरिक्तपाणिर्दैवज्ञाच्छृणुयात्पुत्रजन्मनि" इति।

ततश्च दैवज्ञोक्तदुःस्थानस्थितग्रहप्रीत्यर्थं शक्त्योचितदानानि कुर्यात्। संकल्पपूर्वकं जपपूजादौ ब्राह्मणान्नियुञ्जीतेत्यादि शक्त्यनुसारेण कर्तव्यम्।

पितुः पातित्यादौ विशेषमाहाऽऽश्वलायनः—

"पत्यौ मृते वा पतिते संन्यस्ते वा विदेशगे।
तद्गोत्रजेन श्रेष्ठेन कार्याः पुंसवनादयः॥
दीक्षान्ते दीक्षितो भर्ता जातकृत्यादिकं चरेत्।
पुंसवनादिकर्माणि त्रीणि श्रेष्ठो न कारयेत्॥
अकृतेऽन्यकृते कर्मण्यापत्सु स्वास्थ्यमागतः।
दानैर्ब्राह्मणवाक्यैश्च पुत्रकर्मोत्तमं चरेत्" इति॥

श्रेष्ठेनेति तादृश एव प्रतिनिधिरित्येवमर्थम्। दीक्षितेन तु दीक्षाकाले स्वयमपि जातकर्म न कार्यम्। नापि तत्प्रतिनिधिनाऽन्येन। किंत्ववभृथान्ते विसृष्टदीक्षः स्वयमेव कुर्यादित्यर्थः। अत्र त्रीणीत्याश्वलायनानामनुकूलं, तेषामेवानवलोभनरूपतृतीयसंस्कारसत्त्वात्। न चाऽऽश्वलायनातिरिक्तविषयेऽपि

जातकर्मसंस्कारमादाय त्रीणि श्रेष्ठो न कारयेदित्येतस्य वचनस्य प्रवृत्तिरस्त्विति वाच्यम्।

"श्रेष्ठः कनिष्ठहस्तेन जातकर्मादि कारयेत्"।

इति वसिष्ठवचनविरोधापत्तेः। अकृत इति निषिद्धप्रतिनिधिना कृतमित्यकृततामापन्नं कर्मातिक्रान्तं केनापि निमित्तेन कंचित्कालं स्वयं कर्तुमसमर्थोऽपि नान्येन कारयेत्। स्वास्थ्योत्तरं दानसहिताभिर्ब्राह्मणाशीर्भिः सोत्कर्षं पुत्रसंस्कारं कुर्यादित्यर्थः। महारोगार्तस्तु सत्यपि सामर्थ्ये स्वयं जातकर्म न कुर्यात्।

"रोगार्दितस्तु तत्कालं स्पृशन्नन्येन कारयेत्।
यावत्स्वास्थ्यं भवेत्तावन्नाऽऽचरेज्जातकक्रियाम्" इत्याश्वलायनवचनात्।

आशौचापगमे जातकर्मानुष्ठाने नक्षत्राण्याह वसिष्ठः—

"मृदुध्रुवक्षिप्रचरेषु भेषु चारिक्तपर्वाख्यदिनेषु कार्यम्।
शुभग्रहाणां दिनवर्गलग्ने तज्जातकर्म त्वथ नामकर्म" इति॥

मृद्वादिनक्षत्राण्याह श्रीधरः—

"रोहिण्युत्तरभं स्थिरं गिरिशमूलैन्द्रोरगा दारुणं
क्षिप्रं चाश्विदिनेशपुष्यमनलैन्द्राग्नं तु साधारणम्।
उग्रं पूर्वमघान्तकं मृदुमृगत्वाष्ट्रान्त्यमैत्रं चरं
विष्णुस्वातिशतोडुवस्वदितयः कुर्युः स्वसंज्ञाफलम्" इति॥

उत्तरशब्देनोत्तरात्रयम्। गिरिशमार्द्रा। ऐन्द्रं ज्येष्ठा। उरगमाश्लेषा। अश्विनावश्विनी। दिनेशो हस्तः। अनलः कृत्तिकाः। ऐन्द्राग्नं विशाखे। पूर्वशब्देन पूर्वात्रयम्। अन्तकं भरणी। त्वाष्ट्रं चित्रा। अन्त्यं रेवती। मैत्रमनूराधाः। शतोडु शततारानक्षत्रम्। वसुशब्देन धनिष्ठाः। अदितिः पुनर्वसू। एतच्च जन्मदिवसेऽमासंक्रान्त्यादिसत्त्वे न कार्यम्।

"अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाऽऽचरेत्" इतिगर्गोक्तेः।

एतच्चाधिके मासेऽपि कार्यम्। तथा च कालादर्शेऽधिमासे कर्तव्यानि प्रकृत्य—"सीमन्ते पुंसवे श्राद्धं द्वावेतौ जातकर्म च" इति।

एतौ सीमन्तपुंसवौ। यमेनाप्युक्तम्—

"गर्भे वार्धुषिके भृत्ये श्राद्धकर्मणि मासिके।
सपिण्डीकरणे नित्ये जातनामादिकर्मसु॥
सीमन्ते पुंसवे चैव नाधिमासं विवर्जयेत्" इति।

गर्भे गर्भाधाने। वार्धुषिके द्रव्यप्रयोगप्रयुक्तद्रव्यादाने। भृत्ये सेवाप्रयुक्तधनग्रहणे। एतच्च मुख्यकालेऽनुष्ठाने। तस्यातिपाते तु शुद्धकाल एव।

"नामकर्म च दर्शेष्टिं यथाकालं समाचरेत्।
अतिपाते सति तयोः प्रशस्ते मासि पुण्यभे" इतिवचनात्।

नामकर्मेत्युपलक्षणमितरसंस्काराणाम्। नात्र गुरुशुक्रास्तनिषेधः।

"उत्सवेषु च सर्वेषु सीमन्त ऋतुजन्मनोः।
सुरासुरेज्ययोश्चैव मौढ्यदोषो न विद्यते"॥

इति ज्योतिर्निबन्धे भृगूक्तेः। चकारान्मलमासातिचारादीनां ग्रहणम्।

## अथ प्रयोगः।

जातमात्रे पुत्रे मूलज्येष्ठादावनुत्पन्नस्य तस्य मुखं कुलदेवताकुलवृद्धप्रणामपूर्वकमालोक्य नद्यादावुदङ्मुखः स्नायात्। तदसंभवे गृहे वाऽऽहृताभिः स्वर्णयुताभिरद्भिः स्नायात्। रात्रावनलसंनिधौ।

ततो द्विराचम्य प्रागकृतसंध्यावन्दनश्चेत्पूर्णसंध्योपासनं कुर्यात्। अथ श्वेतवस्त्रमाल्यादिभिरलंकृतः पवित्रपाणिरकृतनालच्छेदमपीतस्तन्यमन्यैरस्पृष्टं मात्रा क्षालितमलं मात्रशक्तौ सूतिकास्पृष्टया यया कयाऽपि कुशलया स्त्रिया क्षालितमलं कुमारं मातुरुत्सङ्गे प्राङ्मुखं संस्थापयित्वा(प्य) स्वयं प्राङ्मुखो देशकालौ संकीर्त्य ममास्य कुमारस्य गर्भाम्बुपानजनितसकलदोषनिबर्हणायुर्मेधावर्चोभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्म करिष्य इति संकल्प्य गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं तन्त्रेण पुरुषार्थकाङ्गभूते नान्दीश्राद्धे च कुर्यात्। जीवत्पितृकस्य तु श्राद्धद्वयं पृथगेव भवति। स्वरूपभेदात्। तत्र मातृकापूजनस्याङ्गत्वपक्षे तदपि पृथगेव। अनङ्गत्वपक्षे तु सकृदेवाऽऽदौ। यदि त्वङ्गभूतनान्दीश्राद्धस्यैवाङ्गं मातृकापूजनं न पुरुषार्थकनान्दीश्राद्धस्याङ्गमिति मते पुरुषार्थमादौ कृत्वा मातृकापूजनं कृत्वा द्वितीयं कार्यम्। तत्राऽऽदौ पुरुषार्थं पितुः पितृमातृमातामहवर्गकं नान्दीश्राद्धं कृत्वा पश्चात्सुतसंस्कारप्रयुक्तं स्वीयमातृमातामहवर्गकं कार्यम्। सर्वेषां जीवने संस्काराङ्गश्राद्धलोपस्यैव विहितत्वात्पुरुषार्थकमेव श्राद्धम्। अथवाऽऽदौ पुरुषार्थकमनन्तरं संस्काराङ्गकम्। उद्वाहे पुत्रजनन इत्येतद्वाक्ये पुत्रजननशब्देनाङ्गभूतनान्दीश्राद्धस्यापि ग्रहणमित्यस्मिन्मते प्रधानस्यैकत्वाद्द्वयोस्तन्त्रेणैवानुष्ठानम्। अथवा संकल्पात्पूर्वमेव पुरुषार्थं नान्दीश्राद्धं कर्तव्यम्। केचित्तु संकल्पात्पूर्वमेव तन्त्रेण नान्दीश्राद्धद्वयं कार्यमित्याहुः।

"नैकः श्राद्धद्वयं कुर्यात्समानेऽहनि कुत्रचित्"।

इति निषेधस्तु काम्यश्राद्धपरो ज्ञेयः । न सोष्यन्ती जातकर्मेतिवचनप्राप्तोऽङ्गभूतनान्दीश्राद्धनिषेधश्छन्दोगविषयः । नान्दीश्राद्धे युग्मब्राह्मणभोजनपर्याप्तमामं हिरण्यं वा स्वाहा न ममेति समर्पणवाक्ये विशेषः ।

ततोऽश्मनि परशुं निधाय तदुपरिष्टाद्धिरण्यं तानि विपरीतानि कृत्वा तदुपरि हस्ताभ्यां कुमारं प्राञ्चं धारयति—

"ॐ अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामाऽसि जीव त्वꣳ शरदः शतम् । अङ्गादङ्गात्संभवसि हृदयादधि जायसे । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम्" इति ।

गर्भे निर्गते जरायुर्नाम गर्भवेष्टनपुटकं किंचित्स्त्रीणामुदरान्तर्गतं तद्यदि केनचित्कारणेन न निर्गच्छति न पतति तदाऽञ्जलिनोदकमादाय, "ॐ तिलदेव पद्यस्व न माꣳसमसि नो दलमवपद्यस्व स्वपथात्" इति मूर्धानमस्या[अ]वसिञ्चति । नैमित्तिकमिदम् ।

तत औपासनाग्निं सूतिकागारे चेद्बहिरुद्धननादिसंस्कृते देशे संस्थाप्योत्तपनीयमाम्बरीषं वाऽग्निं सूतिकागारे नीत्वा संस्थापयेत् । एकं कपालं संतप्तं कृत्वा तस्मिञ्छुष्कगोमयचूर्णं प्रक्षिप्य[1] प्रज्वलयेदे[2]ष उत्तपनीयः । अम्बरीषं भ्राष्ट्रं तत्रत्योऽग्निराम्बरीषः ।

ततस्तमग्निं परिस्तीर्य समन्त्रं परिषिच्य—

"ॐ शण्डो मर्क उपवीरः शाण्डिकेर उलूखलः ।
च्यवनो नश्यतादितः स्वाहा" नात्र त्यागाः ।
ॐ आलिखन्विलिखन्ननिमिषन्किं वदन्त उपश्रुतिः स्वाहा ।
ॐ अर्यम्णः कुम्भी शत्रुः पात्रपाणिर्निपुणिः स्वाहा ।
ॐ आन्त्रीमुखः सर्षपारुणो नश्यतादितः स्वाहा ।
ॐ केशिनी श्वलोमिनी बजाबोजोपकाशिनी । अपेत नश्यतादितः स्वाहा ।
ॐ कौबेरका विश्ववासो रक्षोराजेन प्रेषिताः ।
ग्रामान्सजातयो यन्तीप्सन्तः परिजाकृतान्स्वाहा ।
ॐ एतान्हतैतान्बध्नीतेत्ययं ब्रह्मणो दूतस्तानग्निः पर्यसरत् ।
तानिन्द्रस्तान्बृहस्पतिस्तानहं वेद ब्राह्मणः
प्रमृशतः कूटदन्तान्विकेशाँल्लम्बस्तनान्स्वाहा ।

१ क. 'प्य ज्वाल' । २ ख. प्रज्वाल° ।

ॐ नक्तंचारिण उरस्पेशान्स्थूलहस्तान्कपालपान्स्वाहा ॥
ॐ पूर्व एषां पितेत्युच्चैः श्राव्यकर्णकः ।
माता जघन्या गच्छन्ति(न्ती) ग्रामे विधुरमिच्छन्ती स्वाहा ॥
ॐ नक्तंचारिणी स्वसा संधिना प्रेक्षते कुलम् ।
या स्वपत्सु जागर्ति यस्यै विजातायां मनः स्वाहा ॥
ॐ तासां त्वं कृष्णवर्त्मने क्लोमानꣳ हृदयं यकृत् । अग्ने यक्षीणि निर्दह स्वाहा "

इत्येकादशभिः स्वाहाकारान्तैर्मन्त्रैः प्रतिमन्त्रं हस्तेनैवाङ्गारेषु कणानावपत्युद्धूपनार्थम् । सूत्रेऽङ्गारेष्वितिवचनं ज्वालाकाष्ठवत्तानिवृत्त्यर्थम् । आवपतीतिवचनं हस्तेन प्रक्षेपार्थम् । उद्धूपनार्थमप्येतत्स्वाहाकारवत्त्वाद्धोमकर्मैव । तेन परिस्तरणपरिषेकभावः सायंप्रातःपक्षश्चोक्तो भवति । परिस्तरणपरिषेकप्रतिषेधपक्षे सकृदिहैवोद्धूपनम् । अथवा सायमेवोपक्रम्य सायंप्रातर्दशाहमुद्धूपनभूम्यालम्भने कार्ये । केचित्परिस्तरणं तूष्णीं परिषेकं चेच्छन्ति । परिस्तरणपरिषेकाभावपक्षे न त्याग इति केचित् ।

ततः पाणी प्रक्षाल्य " ॐ यत्ते सुशीमे हृदयं दिवि चन्द्रमसि श्रितम् ।
तस्यामृतत्वस्य नो धेहि माऽहं पौत्रमघꣳ रुदम् ॥
वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् ।
तथाऽमृतत्वस्येशानो माऽहं पौत्रमघꣳ रुदम् " ॥

इति द्वाभ्यां भूमिमालभते । जातकर्मोत्कर्षेऽपि कुमारमनवलोकयन्नुद्धूपनमात्रं कर्तव्यमेव, रक्षणार्थत्वात् । भाष्यादप्येवं प्रतीयते । भूम्यालम्भनमप्युद्धूपनसंबन्धित्वात्कार्यम् ।

## अथ मेधाजननम् ।

दर्भेण हिरण्यं प्रबध्य गोघृतेऽन्तर्धाय प्राक्शिरसमन्येन धार्यमाणं कुमारं घृतं प्राशयति—"ॐ भूर्ऋचस्त्वयि जुहोमि स्वाहा । ॐ भुवो यजूꣳषि त्वयि जुहोमि स्वाहा । ॐ सुवः सामानि त्वयि जुहोमि स्वाहा । ॐ भूर्भुवः सुवरथर्वाङ्गिरसस्त्वयि जुहोमि स्वाहा " इत्येतैश्चतुर्भिः प्रतिमन्त्रम् । नात्र त्याग इति मातृदत्तः । इति मेधाजननम् ।

ततः क्षेत्रियै त्वेति द्वयोर्मन्त्रयोर्विश्वे देवाः कुमारास्त्रिष्टुप् । सूर्यमृतमित्यस्य विश्वे देवाः कुमारास्त्रिष्टुप् । कुमारस्नापने विनियोगः । " ॐ क्षेत्रियै त्वा निर्ऋत्यै त्वा० इमे । शं ते अग्निः सहा० भवन्तु । सूर्यमृतं तम० पाशात् " ।

---

१ ख. इत्यपि ।

इत्येतैरुष्णशीताभिरद्भिः सर्वान्ते कुमारं स्नापयति । प्रतिमन्त्रमिति केचित् । या दैवीरित्यस्य विश्वे देवाः कुमारस्त्रिष्टुप् । मातुरुत्सङ्ग आधापने विनियोगः । "ॐ या दैवीश्चतस्रः प्र० राचैः" इति मातुरुत्सङ्गे कुमारमाधापयति ।

ततस्तूष्णीं दक्षिणं स्तनं प्रक्षाल्य "ॐ मा ते पुत्रꣳ रक्षो हिꣳसीर्मा धेनुरतिसारिणी । प्रिया धनस्य भूया एधमाना स्वे वशे" [ इति ] आधापितं कुमारमभिमन्त्रयते । उभयोर्वाऽभिमन्त्रणम् ।

"ॐ अयं कुमारो जरां धयतु सर्वमायुरेतु ।
तस्मै स्तनं प्रप्यायस्वाऽऽयुः कीर्तिर्वर्चो यशो बलम् " ॥

इति दक्षिणस्तनं पाययति ।

तत उत्तरस्तनं तूष्णीं प्रक्षाल्यैतेनैव मन्त्रेण पाययति ।

" ॐ नामयति न रुदति यत्र वयं वदामो यत्र वाऽभिमृशामसि "

इत्युभौ स्तनावनेन मन्त्रेणाभिमृशति । प्रतिस्तनं मन्त्रावृत्तिः ।

" ॐ आपो गृहेषु जाग्रत यथा देवेषु जाग्रथ । एवमस्यै सुपुत्रायै जाग्रत " ।

इति सूतिकायाः शिरसः समीप उदकपूर्णं कुम्भं पिहिताननं निदधाति । क्षिप्रप्रसवार्थकात्कुम्भाद्भिन्न एव कुम्भोऽयम् ।

ततो जन्मलग्नदुष्टस्थानस्थितग्रहपीडानिवृत्तये दानजपादि कारयेत् । ततः पितॄन्प्रजापतिं चोद्दिश्य सहिरण्यानि तिलपूर्णपात्राणि ब्राह्मणेभ्यो दद्यात् । विभवे सति सुवर्णभूमिगोरथतुरगच्छत्रशयनासनगृहादिकं दद्यात् । पक्वान्नभक्षणे चान्द्रायणं प्रायश्चित्तम् ।

ततो भूयसीं दक्षिणां दत्त्वा विप्राशिषो गृहीत्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत् ।

ततो नालच्छेदादि यथाचारं कार्यम् । एतच्च पितरि ग्रामान्तरं गते नष्टे वा पित्रपेक्षया ज्येष्ठपितृव्यादिः कनिष्ठो भ्रात्रादिर्वा स्तनाभिमर्शनवर्जं सर्वं कुर्यात् । अथवाऽभिमर्शनस्थाने समीक्षणं कर्तव्यम् । ग्रहणमूलाश्लेषाव्यतीपातादिषु जनने द्वादश्यामेव शान्तिरत्नमालोक्तरीत्या तत्तद्दोषप्रयुक्तां शान्तिं विधाय जातकर्मनामकरणे सह कर्तव्ये । यदि द्वादश्यां सावकाशः सुमुहूर्तः कालो न लभ्यते तदाऽन्येषु शास्त्रान्तरोक्तेषु कालेषु शान्तिं विधाय जातकर्मनामकरणे सहैव कर्तव्ये । जननाशौचान्तरसत्त्वेऽप्येतत्कार्यम् । मृताशौचसत्त्वे त्वाशौचापगम एव । पुत्र्या अपि जातकर्म कार्यम् । नामकरणप्रकरणे

जातकर्मादि प्रागुपनयनात्सर्वं कर्म तूष्णीं कर्तव्यमिति मातृदत्तोक्तेः । ' आवृतैव कुमार्याः ' इत्याश्वलायनोक्तेः ।

" तूष्णीमेताः क्रियाः स्त्राणां विवाहस्तु समन्त्रकः "

इति याज्ञवल्क्योक्तेश्च । एता जातकर्मादिचूडान्ताः ।

" जातस्य जातकर्मादिक्रियाकाण्डमशेषतः ।
पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकम् "

इतिवचनेऽनुवाद्यविशेषणत्वात्पुंस्त्वमविवक्षितम् । तेन कन्याया अपि संस्काराङ्गमाभ्युदयिकं समन्त्रमेव भवति । मन्त्रबाधे मानाभावात् । यत्तु पुंजातकर्मादिसंस्कारानुक्त्वा याज्ञवल्क्यवचः "तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः" इति तत्प्रधानाङ्गमन्त्रबाधपरम् । यत्र प्रथमान्तपदोपात्तत्वं तत्र प्रधान एव तूष्णींत्वविधिर्नाङ्ग इति । आथर्वणा वै काम्या इष्टयस्ता उपांशु क्रियन्त इत्यत्रोपांशुत्वमिव । एवं च वृद्धिश्राद्धं समन्त्रमेव भवतीति द्रष्टव्यम् । यमयोस्तु जातकर्म जननदिने नैव भवति । तस्य यमलजनननिमित्तकशान्तिपूर्वकस्यैवानुष्ठेयत्वादाशौचे तस्या अनुष्ठानानधिकारात् । किंतु नामकर्मदिन एव जातकर्म भवति । नामकर्मदिवसस्यैव तत्कालत्वान्न तु तत्पूर्वं, तत्कालस्याशौचावरुद्धत्वात् । न चैकादशदिवसस्याशौचानवरुद्धत्वेन तत्र जातकर्मानुष्ठानेऽधिकारोऽस्त्येवेति वाच्यम् । तत्र कर्तुरधिकारसत्त्वेऽपि सहाधिकारिण्या भार्याया अधिकाराभावेन तदनुष्ठानस्य सर्वथैवासंभवात् । न च द्वादशेऽहनि नामकर्माधिकारवदेकादशेऽहनि जातकर्मण्यधिकारोऽस्त्विति वाच्यम् । नामकर्मवदत्र तथाविधवचनाभावादेकादशेऽहन्यस्पृश्यत्वलक्षणाशौचस्यानिवृत्तत्वाच्च । तत्र जातकर्मनामकरणे तन्त्रेणैव कालैक्यात् । न चैवं जातकर्मद्वयं नामकरणद्वयं चापि तन्त्रेणैव कर्तव्यमुक्तहेतोरिति वाच्यम् । ज्येष्ठक्रमेणैव संस्कारकर्तव्यतोक्त्या तन्त्राभावस्यैवावगमात् । ज्येष्ठे कृत्स्नसाङ्गसंस्कारसंपादनं कृत्वैव कनिष्ठे साङ्गसंस्कारसंपादनस्योक्तत्वाच्च । अन्यथोपनयनादावपि तन्त्रापत्तेः । शान्तिसंस्कारयोस्तन्त्रं नैव भवति । शान्तेर्दोषनिबर्हणार्थकत्वेन संस्कारस्य दोषनिबर्हणोत्तरमेवानुष्ठेयत्वेन स्वरूपविरोधात् । अत एव गणपतिपूजनपुण्याहवाचनमातृकापूजननान्दीश्राद्धान्यपि पृथक्पृथगेव ।

" नैकः श्राद्धद्वयं कुर्यात्समानेऽहनि कुत्रचित् " ।

---

१ ङ. च. °स्योचिततन्त्रा° ।

इति निषेधस्तु काम्यश्राद्धपरः । एकस्यैव श्राद्धस्य पुनरावृत्तिनिषेधपरो वा, न तु नित्यनैमित्तिकपरः । अन्यथा सांवत्सरिकदर्शादीनां नित्यानां ग्रहणगजच्छायादिनैमित्तिकानां च संनिपातेऽन्यतराननुष्ठानापत्तेः । द्वितीयकल्पे काम्यश्राद्धद्वयमपि भवति । न च दिनभेदेनैव कर्मद्वयमनुष्ठेयं किमर्थमयं प्रयास इति वाच्यम् । विंशतिरात्रमासान्यतमकालात्पूर्वं तस्या अधिकारस्यैवाभावेन विहितनामकरणदिनव्यतिरिक्तदिने शान्त्यनुष्ठानासंभवात् । तदुत्तरं तु भवत्येव । तस्या अधिकारसत्त्वात् । इति जातकर्म ।

## अथ सूतकिनां कर्मनियमाः ।

तत्र विष्णुः—"आशौचे होमदानप्रतिग्रहस्वाध्याया निवर्तन्ते
नाशौचे कस्यचिदन्नमश्नीयात्" इति ।

भृगुरपि—"स्नानं प्रतिग्रहो[1] होमः स्वाध्यायश्च निवर्तते ।
सूतके मृतके चैवास्पर्शनं मृतकेऽधिकम्" इति ॥

अत्र होमशब्दो वैश्वदेवाख्यहोमपरः ।

"संध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वाऽपि त्यजन्गच्छेदधो द्विजः" इति पुलस्त्योक्तेः ।

इष्टिः पूर्णमासाख्या दर्शाख्या च । चरुः पार्वणस्थालीपाकश्रवणाकर्मादिः । होम औपासनहोमः । स्नाननिषेधः समन्त्रकस्नानस्यैव न तु स्नानमात्रस्य ।

"संध्यास्नाने त्यजन्विप्रः सप्ताहाच्छूद्रतां व्रजेत् ।
तस्मात्स्नानं च संध्यां च सूतकेऽपि न संत्यजेत्" इतियमस्मरणात् ॥

पिण्डपितृयज्ञपार्वणस्थालीपाकौपासनहोमा असगोत्रेण कारणीया इत्युक्तं जातूकर्ण्येन—

"सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् ।
पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत्" इति ॥

हारीतः—"कर्म वैतानिकं कार्यं स्नानोपस्पर्शनात्स्वयम् ।
जन्महान्योर्वितानस्य त्यागस्तु न विधीयते" इति ॥

गोभिलः—"अग्निहोत्रस्य होमार्थं शुद्धिस्तात्कालिकी स्मृता" इति ।

स्मृत्यन्तरेऽपि—"श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्" इति ।

पैठीनसिरपि—

"नित्यानि निवर्तेरन्वैतानवर्जं शालाग्नौ चैकेऽन्य एतानि कुर्युः" इति।

---

१ क. चैव स्प ।

**यमोऽपि**—" शिवविष्ण्वर्चनं दीक्षा यस्य चाग्निपरिग्रहः ।
श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात् " इति ॥

**मन्त्रमुक्तावल्याम्**—" जपो देवार्चनाविधिः कार्यो दीक्षान्वितैर्नरैः ।
नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम् " इति ॥

**नारदः**—" अथ सूतकिनः पूजां वक्ष्याम्यागमचोदिताम् ।
स्नात्वा नित्यं च निर्वर्त्य मानस्या क्रियया तु वै ॥
बाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत् ।
यदि कामी न चेत्कामी नित्यं पूर्ववदाचरेत् " इति ॥

**रामार्चनचन्द्रिकायाम्**—" अशुचिर्वा शुचिर्वाऽपि गच्छंस्तिष्ठन्स्वपन्नपि ।
मन्त्रैकस्मरणो विद्वान्मनसैव सदाऽभ्यसेत् " इति ॥

**मरीचिः**—" दर्शं च पूर्णमासं च कर्म वैतानिकं च यत् ।
सूतकेऽपि त्यजन्मोहात्प्रायश्चित्ती भवेद्द्विजः " इति ॥

**अपिशब्दान्मृतके ।**

**संध्योपासने विशेषमाह पुलस्त्यः**—

" सूतके मृतके चैव संध्याकर्म समाचरेत् ।
मनसोच्चारयेन्मन्त्रान्प्राणायाममृते द्विजः " इति ॥

**प्राणायाममृत इति न मानसत्वस्य पर्युदासः । मुखनासिकासंचारिवायुनिरोधेन तन्मन्त्रे तस्य सिद्धत्वात् । किंतु मन्त्रेष्वेव । तथा चामन्त्रकः प्राणायामः कार्य इत्युक्तं भवति । अत्र यद्यपि प्राणायामव्यतिरिक्तं सर्वं मानसमन्त्रैः कर्तव्यमित्युक्तं तथाऽप्यर्घ्यदाने मन्त्रोच्चारो द्रष्टव्यः ।**

" सूतके सावित्र्या त्वञ्जलिं प्रक्षिप्य प्रदक्षिणं
कृत्वा सूर्यं ध्यायन्नमस्कुर्यात् " ॥

**इति पैठीनसिस्मरणात् । सावित्र्याः प्राप्तत्वात्पुलस्त्योक्तमानसत्वनिवृत्त्यर्थमेवात्र सावित्रीग्रहणम् । सूतकग्रहणं मृतकोपलक्षणम् ।**

**भारद्वाजेनायमेवार्थः स्पष्टीकृतः**—

" सूतके मृतके कुर्यात्प्राणायाममन्त्रकम् ।
तथा मार्जनमन्त्रांस्तु मनसोच्चार्य मार्जयेत् ॥
गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् ।
मार्जनं तु न वा कार्यमुपस्थानं न चैव हि " इति ॥

दशवारं गायत्र्यपि जप्येत्युक्तमाश्वलायनसत्यतपोभ्याम्—

"आपन्नश्चाशुचिः काले तिष्ठन्नपि जपेद्दश" इति ।

आपन्न आपद्ग्रस्तः । अशुचिराशौचवान् ।

यत्तु चन्द्रिकायां जाबालिः—

"संध्यां पञ्च महायज्ञान्नैत्यकं स्मृतिकर्म च ।
तन्मध्ये हापयेत्तेषां दशाहान्ते परिक्रिया" इति ॥

तन्मध्य आशौचमध्ये ।

यच्च विष्णुपुराणे—

"सार्वकालमुपास्या तु संध्ययोः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः" इति ॥

यच्च संवर्तः—"सूतके कर्मणां त्यागः संध्यादीनां विधीयते" ।

इति तत्पूर्णसंध्यापरम् । "अर्घ्यान्ता मानसी संध्या कुशवारिविवर्जिता" इति शुद्धिप्रदीपे च्यवनोक्तेः ।

एतच्चार्घ्यान्तत्वं पूर्वेण जपान्तत्वेन विकल्पत इति केचित् । अन्ये तु स्नानाशक्तस्य शूद्रादिस्पर्शनिमित्ताशौचपरमिदं सूतकमृतकयोरर्घ्यान्तत्वविधानान्न सूतकमृतकाशौचपरमित्याहुः । वैश्वदेवस्य त्वग्निसाध्यत्वेन "प्रत्यूहेन्नाग्निषु क्रियाः" इति सामान्यतो मनुवचनात्कर्तव्यत्वप्राप्तावपि—

"विप्रो दशाहमासीत वैश्वदेवविवर्जितः" ।

इति विशेषेण संवर्तवचनेन निवृत्तिः ।

यद्यपि—"पञ्चयज्ञविधानं तु न कुर्यान्मृतिजन्मनोः" ।

इति तेनैवोक्तेः पूर्वनिषेधो व्यर्थस्तथाऽपि यस्यां शाखायां वैश्वदेवभिन्ना देवयज्ञादय उक्तास्तदर्थोऽयं निषेधो ज्ञेयः ।

स्मृत्यन्तरे—"वैश्वदेवं ब्रह्मयज्ञं तथा श्राद्धं च सूतके ।
न कुर्यात्स्वयमन्यैर्वा कारयेन्न च सर्वथा" इति ॥

स्मृतिभास्करे—"कुर्यात्पञ्च महायज्ञान्नित्यं वै सूतकं विना" इति ।

सूतकमिति मृतकोपलक्षणम् ।

स्मृत्यर्थसारे—"सूतकादौ नित्यस्नानबलिदानापोशनप्राणाहुत्यादयो भुजिनियमा अस्पृश्यस्पर्शनस्नानादिकं चेति सर्वं कर्तव्यमेव" इति ॥

आदिशब्देन मृतकमपि गृह्यते । प्राणाहुतिसाहचर्याद्बलिदानशब्देन भोज-

नाङ्गबलिदानं ग्राह्यम् । प्राणाहुत्यादय इत्यत्राऽऽदिशब्देनोत्तरापोशनादिकं ग्राह्यम् । नित्यस्नानमङ्गतर्पणसहितमेव कार्यम् ।

"अस्पृश्यस्पर्शने वान्ते अश्रुपाते *क्षुरे भगे ।
स्नानं नैमित्तिकं कार्यं दैवपित्र्यविवर्जितम् ॥
उद्धृतैरुदकैः स्नायान्न कुर्याद्वस्त्रपीडनम्" ।

इति अस्पृश्यस्पर्शादिनिमित्तकस्नान एव तर्पणाद्यङ्गपर्युदासात् । काम्यस्यापि कस्यचित्प्रतिप्रसवं पुलस्त्य आह सद्यःशौचमित्यनुवृत्तौ—

"सांनिहित्यमुपस्पृश्य राहुग्रस्ते दिवाकरे ।
सत्रधर्मप्रवृत्तस्य दानकर्मफलैषिणः" इति ॥

संनिहिततीर्थे स्नात्वा राहुग्रस्ते काम्यदानं कुर्यात् । तथाऽन्नसत्रप्रवृत्तोऽपीति व्याख्यातं पारिजाते ।

जमदग्निः—"सूतके मृतके चैव जाह्नव्याः सलिले स्थितः ।
नाभिमात्रे जले स्थित्वा कुर्याद्दानजपादिकम्" इति ।

इदमपि काम्यविषयमित्यपि तत्रैवोक्तम् ।

ग्रहणश्राद्धादावप्याशौचापवादमाह व्याघ्रः—

"स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके" इति ।

लैङ्गेऽपि—"सूतके मृतके चैव न दोषो राहुदर्शने ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते" इति ॥

वृद्धशातातपः—"यदा भोजनकाले तु अशुचिर्भवति द्विजः ।
भूमौ निक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुध्यति ॥
भक्षयेद्यदि तं ग्रासमहोरात्रेण शुध्यति ।
अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुध्यति" इति ॥

इदमविशेषात्सूतकादिपरमिति शुद्धितत्त्वे शूलपाणौ च ।

षट्त्रिंशन्मते—"उभाभ्यामपरिज्ञाते सूतकं नैव दोषकृत् ।
एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत्" इति ॥

उभाभ्यां भोक्तृभोजयितृभ्याम् ।

माधवीये मात्स्ये—"सूतकान्ते नरः स्नात्वा पूजयित्वा जनार्दनम् ।
दानं दत्त्वा विधानेन व्रतस्य फलमश्नुते" इति ॥

---

* क. पुस्तकटिप्पण्यां—'क्षुरे श्मश्रुकार्ये । भगे मैथुने" इति वर्तते ।

अन्यत्रापि—"सूतकात्प्राक्समारब्धमनेकाहं तु यद्व्रतम्।
कायिकं तत्तु कुर्वीत न तु दानार्चनं जपम्॥
सूतकाहे तु यत्किंचिद्दानाद्यन्तरितं भवेत्।
सूतकानन्तरे त्वह्नि तत्कर्तव्यमतन्द्रितैः" इति॥

त्रिंशच्छ्लोक्याम्—"तत्तत्कार्येषु सत्रिव्रतिनृपनृपवद्दीक्षितर्त्विक्स्वदेश-
भ्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशिल्पातुराणाम्।
संप्रारब्धेषु दानोपनयनयजनश्राद्धयुद्धप्रतिष्ठा-
चूडातीर्थार्थयात्राजपपरिणयनाद्युत्सवेष्वेतदर्थे" इति।

नाशौचमिति शेषः। पूर्वत्रोपक्रमात्। सत्र्यत्रसत्रवान्। मुख्यसत्रस्य दीक्षितपदात्सिद्धेः। व्रती, अनन्तव्रतादिनियमवान्। नृपा राजानः। नृपवन्तो नृपतुल्या राजभृत्याः। दीक्षितः संजातदीक्षः। तस्यावभृथात्पूर्वमेवाऽऽशौचाभावः। तदादि त्वाशौचमस्त्येव। 'वैतानोपासनाः कार्याः' इत्यनेनावभृथादेर्वैतानत्वेन कर्तव्यतायां प्राप्तायां—

"तद्वद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे।
स्नानं त्ववभृथे यावत्तावत्तस्य न सूतकम्"

इतिवचनेऽवभृथात्प्राक्सूतकाभावोक्त्या तदादौ सूतकसत्त्वस्यार्थादेव सिद्धेः। 'वैतानोपासनाः कार्याः' इत्यनेनैव सिद्धे 'ऋत्विजां दीक्षितानां च' इति पुनर्दीक्षितग्रहणं याजमाने स्वयंकर्तृ[क]त्वार्थं स्नानप्राप्त्यर्थं वेति प्राञ्चः। दीक्षणीयासंस्कृतस्य प्रागवभृथात्कर्मप्राप्त्यर्थं दीक्षितग्रहणमिति नवीनाः। यत्तु 'प्रारम्भो वरणं यज्ञे' इति तदृत्विक्परम्। ऋत्विजां मधुपर्कोत्तरमाशौचाभावः। यत्र मधुपर्को नास्ति तत्र दोषोऽस्त्येव। आधानेष्टिपशुबन्धादौ मधुपर्का वैकल्पिकाः। ज्योतिष्टोमादौ नियत इति केचित्। सर्वत्रापि नियत इत्यन्ये। यत्र समन्त्रकं वरणं तत्रैव मधुपर्कः। यत्र च विधानं तत्रापीत्यपरे। श्रौते कर्मणि यजमानस्य तत्कालं स्नानाच्छुद्धिः। त्यागातिरिक्ते श्रौते स्मार्ते वाऽन्यस्यैव कर्तृत्वम्। श्रौतो होमः शुष्कान्नेन फलेन वा कार्यः। स्मार्ते त्वकृतं व्रीह्यादिकं हावयेत्। तदभावे कृताकृतं तण्डुलादि हावयेत्। श्रौते समारोपप्रत्यवरोहयोराशौचापवादाभावादनन्यकर्तृकत्वाच्चैतावाशौचे न भवतः। अन्यथा पुनराधानमपि स्यादिति केचित्। एतन्मते पर्वणि समारूढेष्वग्निषु प्रत्यवरोहणेऽधिकाराभावात्पर्वणि प्रत्यवरोहणाकरणे पुनराधानस्यैवोक्तत्वात्पुनराधानमेवेति।

---

१ क. °नप्राप्तिः स्या°।

" नित्यं नैमित्तिकं कुर्यात्काम्यं कर्म न किंचन "।

इति मण्डनवचनात्प्रत्यवरोहणमाशौचेऽपि भवतीत्येतन्मते न पुनराधानम्। स्मार्ते तु सर्वमते पुनःसंधानमेव। स्वदेशभ्रंश आपत्सु च नाऽऽशौचं, शिल्पिवैद्यादीनां सद्यः शौचम्। एतदनन्यसाध्यकर्मण्येव न तु पञ्चयज्ञादाविति मिताक्षरायाम्। भिषजो वैद्याः। कारवः सूपकाराद्याः। शिल्पिनश्चैलनिर्णेजकाद्याः। आतुरस्य व्याधिनाशार्थे दानादौ। संप्रारब्धेष्विति दानाद्युत्सवान्तानां विशेषणम्। तुलादाने प्रारम्भो नान्दीश्राद्धं संकल्पो वा। उपनयने नान्दीश्राद्धम्। यजनं तडागोत्सर्गकोटिहोमादि। तत्र प्रारम्भ ऋत्विग्वरणम्। श्राद्धं दर्शादि। तत्र प्रारम्भः पाकप्रोक्षणम्। युद्धारम्भः प्रसिद्धः। प्रतिष्ठायामारम्भो नान्दीश्राद्धं संकल्पो वा। चूडायामारम्भो नान्दीश्राद्धम्। तीर्थार्थयात्रा तीर्थार्था यात्रा तत्र संकल्पो घृतश्राद्धं वा। जपः पुरश्चरणादिः, स्तोत्रपाठः, अविच्छेदेन संकल्पितहरिवंशश्रवणादिश्च। एवं देवपूजादि। कालनियमाभावे तु स्तोत्रपाठहरिवंशश्रवणादि देवपूजादि च हेयमेव। उत्सवो रथयात्रादिः। एषु च नाऽऽशौचमित्यर्थः। एतदर्थ एतन्निमित्तमाशौचं नास्ति। एतदन्यनिमित्तेषु त्वस्त्येवेत्यर्थः। अयं चाऽऽशौचाभावोऽनन्यगतिकत्व आर्तौ च ज्ञेयः। सर्वत्र मूलमाकरे स्पष्टम्।

द्रव्यविषय आशौचाभावमाह मरीचिः—

" लवणे मधुमांसे च पुष्पमूलफलेषु च।
शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च॥
तिलौषधाजिने चैव पक्वापक्वे स्वयंग्रहः।
पण्येषु चैव सर्वेषु नाऽऽशौचं मृतसूतके " इति॥

पक्वापक्वे स्वयंग्रहः। स्वयमेव स्वाम्यनुज्ञया ग्राह्यं नान्यद्ध(ह)स्तादिति नियम इत्यर्थः। पक्वं लड्डुकादि। अपक्वं तण्डुलादि।

एतदन्नसत्रपरम्।

" अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम्।
भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु व्रती भवेत् " इत्यङ्गिरोवचनात्।

पक्वान्नमोदनादि न तु भक्ष्यमिति निबन्धकाराः।

षडशीतौ—" संसर्गाद्यस्य चाऽऽशौचं यस्यातिक्रान्तकालता।
तदीयस्य पदार्थस्य नाऽऽशौचं विद्यते क्वचित् " इति॥

---

१ ङ. च. प्रत्यक्षसि°।

शुद्धितत्त्वे शुध्येदित्यनुवृत्तौ विष्णुः—"प्रोक्षणेन पुस्तकम्" इति।

पुत्रजनने सूतिकाया विंशतिरात्रमनधिकारः। कन्याजनने तु मासपर्यन्तम्।

तथा च पैठीनसिः—

"सूतिकां पुत्रवतीं विंशतिरात्रेण कर्म कारयेन्मासेन स्त्रीजननीम्" इति।

दशाहपर्यन्तमाशौचेनैव कर्मानधिकारप्राप्तेर्जन्मप्रभृति गणनायां विंशतिरात्रमासपदयोः प्राप्तदशाहांशेऽनुवादोऽवशिष्टदिनांशे विधिरिति विध्यनुवादवैरूप्यापत्तेर्मासाशौचवन्तं शूद्रं प्रत्यानर्थक्यप्रसङ्गाच्च यस्य यावदाशौचं प्राप्तं तदुत्तरमेव विंशतिरात्रं मासं च कर्मानधिकार इति केचिद्वदन्ति। अन्ये तु यत्र हि एकेनैव पदेन स्वार्थ एकं पदार्थं प्रत्युद्दिश्यतेऽन्यं च प्रत्युपादीयते तत्र वैरूप्यम्। यथा वाजपेयेन स्वाराज्यकामो यजेतेति यजिपदे। इह तु दशाहोत्तरदिनेष्वधिकानधिकारमात्रबोधनान्न तत्। अन्यथा द्वादशाहीनस्येत्यत्रापि प्रकृतितस्तिसृणामुपसदां प्राप्तेस्तदंशेऽनुवादोऽधिकांशे विधिरिति वैरूप्यं स्यात्। अतो जन्मप्रभृत्येव विंशतिरात्रं मासं च यावदप्राप्ताहःकर्मानधिकारो बोध्यत इत्याहुः। इति सूतकिनां कर्मनियमाः।

## अथ सूतिकाशुद्धिः।

तत्र स्मृतिः—"द्विजातेः सूतिका या स्याद्दशाहेन तु शुध्यति।

त्रयोदशेऽह्नि संप्राप्ते शूद्रा शुध्यत्यसंशयम्" इति॥

अस्पृश्यत्वनिवृत्तिरत्रोच्यते। कर्मानधिकारस्तु द्विजातिस्त्रीणां पुत्रप्रसूनां विंशतिरात्रान्ते। कन्याप्रसूनां तु मासान्त इति द्रष्टव्यम्। इयं च दशाहशुद्धिर्न सत्याषाढसूत्रानुसारिभिरादरणीया।

"द्वादश्यां मातापुत्रौ स्नातः शुच्यगारं कुर्वन्ति"।

इति सूत्रेण द्वादश्यामेवाऽऽशौचनिवृत्तेराचार्येणोक्तत्वात्। प्रसूतिदिनमारभ्य विंशतिरात्रमासौ ग्राह्याविति षडशीतौ। अस्पृश्यत्वलक्षणाशौचनिवृत्तिर्यस्मिन्दिने तदारभ्येति त्रिंशच्छ्लोक्याम्। उत्तरमताङ्गीकार आचार्येण द्वादश्यामेवाऽऽशौचनिवृत्तेरुक्तत्वात्तदारभ्यैव विंशतिरात्रमासौ ग्राह्यौ।

इति सूतिकाशुद्धिः।

## अथ जननादिषु कर्तव्यमुच्यते।

व्यासः—"सूतिकावासनिलया जन्मदा नाम देवताः।

तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तिता॥

प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ।
त्रिष्वाशौचं न कुर्वीत सूतके पुत्रजन्मनि ॥
दद्यात्तु प्रथमे हेम षष्ठे वा सप्तमेऽपि वा ।
बलिदानं तु दशमे ह्यन्नदानं प्रशस्यते " इति ॥

बलिदानशब्दस्य षष्ठसप्तमपदयोरन्वयः । तुशब्दो दशमपदोत्तरमन्वेति । अयमाशौचाभावो दानविषय एव न संध्यादिविषयः । अन्नदानं सगोत्राणाम् । अन्येषामाशौचान्नस्याप्रतिग्राह्यत्वात् । सप्तमेऽपि वेत्यत्रत्यापि वाशब्दात्पञ्चमस्यापि ग्रहणं शिष्टसमाचारात् । सूतिकाया आवासो गृहं तदेवाऽऽलयो गृहं यासां ताः । सूतिकागृह एव जन्मदानां देवतानां पूजनं कर्तव्यमिति तात्पर्यार्थः । पुत्रजन्मनि पुत्रजन्मनिमित्तम् । पुत्रजन्मनीत्यत्र पुत्रशब्देन पुत्र्यपि गृह्यते । तथा च कन्याजन्मन्यपि जन्मदानां देवतानां पूजनं कर्तव्यमिति सिध्यति । अत एव श्रीधरीये—

" विशेषात्कन्यकायाश्च कर्तव्यं मङ्गलं न वा "

इति विशेषात्कन्यकाया मङ्गलं न वा कर्तव्यमिति विकल्प उक्तः । एतेन पुत्रजन्मनि विशेषान्मङ्गलमावश्यकमिति सिध्यति । मङ्गलं जन्मोत्सवजन्मदापूजनादि ।

बालतन्त्रे—" उत्पन्नस्य तु बालस्य षष्ठे वा पञ्चमे दिने ।
विघ्नेशो जन्मदा षष्ठीदेवी जीवन्तिका तथा ॥
प्रदोषे पूजनीयाश्च गन्धपुष्पादिदानतः ।
फेणिकापूरिकाश्चैव(मिश्र) कृशरान्नैस्तथैव च ॥
प्रणवादिव्याहृतिभिर्नमोन्तैः पूजनं पृथक् ।
पित्रोर्बालस्य रक्षा स्यादन्येषां च न संशयः ॥
अपूजिताश्च या देव्यः पीडयेयुः कुमारकम् ।
कुङ्कुमेनाथ गन्धेन कुड्यसंस्थाः प्रकल्पयेत् ॥
पीठे वाऽक्षतपुञ्जादौ पुरुषाः शस्त्रपाणयः ।
स्त्रियश्च गानं कुर्वत्यो जागृयुस्तां निशां पराम् ॥
गृहं धूपाग्निदीपैश्च संयुतं कारयेत्ततः ।
सूतिकाया गृहे शस्त्रं स्थापयेन्मुशलं[1] तथा ॥
सर्षपान्सर्वतो दद्याद्बलिर्देयश्च पुष्कलः ।

---

१ च. °न्मुसलं ।

विप्रेभ्यश्चैव ताम्बूलदक्षिणादिकमर्पयेत् ॥
हिरण्यवस्त्रशय्यादि यथावित्तं प्रदापयेत् " इति ।

देवी जीवन्तिका तथेत्यत्र तथाशब्दात्स्कन्दस्य शस्त्रे भगवत्याश्च पूजनं संगृह्यते । मिताक्षरायां मार्कण्डेयोऽपि—

" रक्षणीया तथा षष्ठी निशा तत्र विशेषतः ।
रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः ॥
पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः ।
रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके " इति ॥

चशब्दात्पञ्चम्यपि गृह्यते । देशाचारतो व्यवस्थितानि चैतानि पूजादिनानि ।

## अथ प्रयोगः ।

पञ्चमे षष्ठे च दिवसे प्रदोषसमये स्नात्वा गन्धमाल्यभूषित आचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्याः सूतिकाया भार्यायाः शिशोश्च सकलारिष्टनिरसनपूर्वकायुरारोग्यैश्वर्याभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं विघ्नेशस्य जन्मदानां षष्ठीदेव्या जीवन्तिकायाः स्कन्दस्य शस्त्रे भगवत्याश्च पूजनमहं करिष्य इति संकल्पं कुर्यात् । ममास्याः सूतिकाया भ्रातृपत्न्याः, ममास्याः सूतिकायाः स्नुषायास्तच्छिशोश्चेति भ्रातृपत्न्यादावन्यकर्त्रा यथायथमूहेन संकल्पः कार्यः ।

ततः कुड्यादिलिखितप्रतिमास्वक्षतपुञ्जेषु वा क्रमेणाऽऽवाहयेत् । 'ॐ विघ्नेशाय नमः ' विघ्नेशमावाहयामि । 'ॐ जन्मदाभ्यो नमः' जन्मदा आवाहयामि । 'ॐ षष्ठीदेव्यै नमः' षष्ठीदेवीमावाहयामि । 'ॐ जीवन्तिकायै नमः' जीवन्तिकामावाहयामि । 'ॐ स्कन्दाय नमः' स्कन्दमावाहयामि । शस्त्रे 'ॐ भगवत्यै नमः' भगवतीमावाहयामि । इत्यावाह्य, 'ॐ विघ्नेशजन्मदाषष्ठीदेवीजीवन्तिकास्कन्दभगवतीभ्यो नमः ' इति षोडशोपचारैः पूजयेत् ।

ततः प्रार्थना—" सर्वविघ्नहरोऽसि त्वमेकदन्त गजानन ।
षष्ठीगृहेऽर्चितः प्रीत्या बालं दीर्घायुषं कुरु ॥
लम्बोदर महाभाग सर्वोपद्रवनाशन ।
त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः " इति विघ्नेशं प्रार्थयेत् ।

" वरदाः सायुधा यूयं जन्मदा इति विश्रुताः ।
शक्तिभिः सह बालं मे रक्षतात्राह्नि जागरे" इति जन्मदाः प्रार्थयेत् ।

“ शक्तिस्त्वं सर्वदेवानां लोकानां हितकारिणी ।
मातर्बालमिमं रक्ष महाषष्ठि नमोऽस्तु ते ॥
गौरीपुत्रो यथा स्कन्दः शिशुत्वे रक्षितः पुरा ।
तथा ममाप्ययं बालः षष्ठिके रक्ष(क्ष्य)तां नमः ”

इति षष्ठीदेवीं प्रार्थयेत् ।

“ कार्तिकेय महाबाहो गौरीहृदयनन्दन ।
कुमारं रक्ष भीतिभ्यः पाहि देव नमोऽस्तु ते” इति स्कन्दं प्रार्थयेत् ।

“ अस्मिंस्तु सूतिकागारे देवीभिः परिवारिता ।
रक्षां कुरु महाभागे सर्वोपद्रवनाशिनी ॥
अयं मम कुलोत्पन्नो रक्षार्थं पादयोस्तव ।
नीतो मातर्महाभागे चिरं जीवतु बालकः ॥
रूपं देहि जयं देहि भगं भगवति देहि मे ।
पुत्रान्देहि धनं देहि सर्वकामांश्च देहि मे ॥
शान्तिरस्तु शुभं चास्तु प्रणम्य त्वां सुखाय तत् ।
यतः समागतं पापं तत्रैव प्रतिगच्छतु ” ॥

इति भगवतीं प्रार्थयेत् । तत आवाहितदेवतानां सदीपान्दधिमाषभक्तबलीन्क्रमेण दद्यात् ।

ततो ब्राह्मणेभ्यो यथाचारं ताम्बूलदक्षिणादि दद्यात् । जन्माशौचमध्ये प्रथमपञ्चमषष्ठदशमदिनेषु पक्वान्नभिन्नदानप्रतिग्रहयोर्न दोषः । पुरुषाः शस्त्रहस्ताः स्त्रियो गीतकारिण्योऽस्यां रात्रौ जागरणं कुर्युः । सूतिकागृहं च धूपाग्निदीपशस्त्रमुशलविभूतियुतं कार्यम् । सर्षपादिविकिरणशान्तिसूक्तपाठादिकमपि यथाचारं कर्तव्यम् । इति षष्ठीपूजा ।

## अथ सूतिकास्नानम् ।

ज्योतिर्निबन्धे—“ करेन्द्रभागानिलवासवान्त्यमैत्रैन्दवाश्विध्रुवभेऽह्नि पुंसाम् ।
दिने त्वरिक्ते शुभमामनन्ति प्रसूतिकास्नानविधिं मुनीन्द्राः”इति ।

करो हस्तः । इन्द्रो ज्येष्ठा । भागं पूर्वा(र्वे)फल्गुन्यौ । अनिलः स्वाती । वासवं श्रविष्ठाः । अन्त्यं रेवती । मैत्रमनूराधाः । ऐन्दवं मृगशिरः । अश्विनावश्विनी नक्षत्रम् । ध्रुवभानि रोहिणी, उत्तरात्रयं च । अरिक्ते रिक्ताभिन्ने दिवसे । अयं च विधिर्दशाहान्तर्गतस्नानपरः । न तु सूतिकायाः शुद्ध्यर्थ-

१ ङ. भव° । २ ख. ङ. च. दत्त्वा ब्रा° ।

स्नानपरः । नामकरणस्य सूतकान्तकर्तव्यताविधानेन मध्य एतेषां नक्षत्रादीनामवकाशासंभवात् ।

## अथ नामकरणम् ।

तच्च सूतकनिवृत्तौ सत्यां कार्यम् ।

" सूतकान्ते नामकर्म विधेयं स्वकुलोचितम् " इति नारदोक्तेः ।

" आशौचे तु व्यतिक्रान्ते नामकर्म विधीयते " इति शङ्खोक्तेश्च ।

सा च सूतकनिवृत्तिर्द्वादशेऽहन्येव । ' द्वादश्यां मातापुत्रौ स्नातः शुच्यगारं कुर्वन्ति ' इतिसूत्रेण स्नानागारशुद्ध्यादिकं द्वादशेऽह्नि विदधताऽऽचार्येणैकादशेऽह्न्यप्याशौचसत्त्वबोधनात् । एतच्च मातापुत्रयोः पितुस्तत्कुलीनानां च । सूत्रे मातृग्रहणं मातुरेवाशौचपक्षमाश्रित्येति मातृदत्त आह । वैजयन्तीकारकारिकाकारादयश्चाप्येवमाहुः । वस्तुतस्तु मातापुत्रयोरेव न तु पित्रादीनाम् । सर्वस्मृत्यविरोधेन व्याख्यानसंभवे तद्विरुद्धस्यैकादशेऽह्नि पितुरप्याशौचं तत्कुलीनानां चेत्येतादृशव्याख्यानस्यायुक्तत्वात् । न चैवं मातुरप्येकादशेऽह्न्याशौचसत्त्वबोधनं सर्वस्मृतिविरुद्धमिति वाच्यम् । सर्वस्मृतिनिरुद्धस्यापि मातापुत्रयोरेकादशेऽह्न्याशौचस्य ' द्वादश्यां मातापुत्रौ स्नातः शुच्यगारं कुर्वन्ति ' इतिस्पष्टार्थकसूत्रप्रतिपादितस्नानागारशुद्धिविधानबललभ्यत्वात् । न च मातापुत्रयोरपि बहुस्मृत्यनुरोधेनैकादश्यामेवाशौचनिवृत्तिः स्नानं तु द्वादश्यां पुनरदृष्टार्थं कर्तव्यमिति वाच्यम् । शुद्धिरूपे दृष्टे संभवत्यदृष्टकल्पनायोगात् । ' स्नातायां नाम दधाति ' इत्यापस्तम्बसूत्राद्दृष्टार्थत्वस्यैव प्रतीतेश्च । न च दृष्टार्थकस्य स्नानस्य स्मृतित एव सिद्धत्वाद्विधेर्वैयर्थ्यमिति वाच्यम् । तस्य द्वादशीविधायकत्वेन वैयर्थ्याभावात् । न चैवमेकादेशेऽह्नि पितुराशौचस्य निवृत्तत्वेन कर्मण्यधिकृतत्वात्तत्रैव नामकरणानुष्ठानं युक्तमिति वाच्यम् । पितुरधिकारित्वेऽपि सहाधिकारिण्या भार्यायाः संस्कार्यस्य चाशुचित्वेन नामकरणस्यैकादशेऽहन्यनुष्ठानस्यायुक्तत्वात् । जातकर्मणस्तु तथात्वेऽपि निमित्तप्राबल्याद्नुष्ठानम् । अतः समन्त्रकस्नानसंपूर्णसंध्यावन्दनादीन्येकादशेऽह्नि पित्रादिभिः कर्तव्यान्येवेति युक्तं प्रतिभाति । स्नात इत्यत्रान्तर्भावितो णिच् । तेन स्नापयत इत्यर्थः । स्त्रियाविति शेषः । कुर्वन्तीत्यत्र परिकर्मिणः स्त्रियो वेति शेषः । ' द्वादश्यां मातापुत्रौ स्नातः शुच्यगारं कुर्वन्ति ' इति सर्ववर्णप्रसूतिकासाधारणम् । सूत्रकृता विशेषानुपदेशात् । अतः क्षत्रियादिप्रसूतिकानामपि द्वादश्यामेव शुद्धिः ।

कालान्तरमप्युक्तं पारिजाते बृहस्पतिना—

" द्वादशे दशमे वाऽपि जन्मतो दिवसे शुभे ।
षोडशे विंशतौ चैव द्वाविंशे वर्णतः क्रमात् " इति ॥

दशमेऽतीत इत्यर्थः । तेनैकादशदिनेऽनुष्ठानं सिध्यति । अयं च कल्पः सत्याषाढसूत्रानुसारिणां न भवति । मातापुत्रयोरशुचित्वेन तत्र तस्यासंभवात् ।

" षोडशैकोनविंशे वा द्वात्रिंशे वर्णतः क्रमात् " इति क्वचित्पाठः ।

एकादशद्वादशौ ब्राह्मणस्य । क्षत्रियस्य षोडशः । वैश्यस्य विंशतिः । द्वाविंशः शूद्रस्येति वर्णतः क्रमादित्यस्यार्थः ।

भविष्ये—" नामधेयं दशम्यां तु केचिदिच्छन्ति पार्थिव ।
द्वादश्यामपरे प्राहुर्मासे पूर्णे तथा परे ॥
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः " इति ।

अत्रापि दशम्यामतीतायामित्यर्थः ।

गोभिलसूत्रे—" जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामकरणम् " इति ।

व्युष्टेऽतिक्रान्ते । व्युष्ट इत्यस्य नोत्तरयोरन्वयः । अन्नप्राशनपूर्वभाविनो नामकरणस्य संवत्सरात्मकोत्तरकाले क्रियायां तदाद्युत्कर्षन्यायेनान्नप्राशनमपि संवत्सर उत्कृष्यते । संवत्सरान्त्यदिवसे नामकरणवदन्नप्राशनस्यापि क्रिया भवति । दिनस्य विहितत्वात् । अत्र सूत्रोक्तकालव्यतिरिक्ताः काला असंभवे द्रष्टव्याः ।

मनुः—" नामधेयं दशम्यां तु द्वादश्यां वाऽपि कारयेत् ।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते " इति ॥

कारयेदिति स्वार्थे णिच् ।

" ततस्तु नाम कुर्वीत पितैव दशमेऽहनि " इति विष्णुपुराणात् ।

ततश्च द्वादशदिनान्तकालेषु न पुण्यतिथिनक्षत्रचन्द्रानुकूल्यादिगुणादरः । मुख्यकालातिक्रमे पुण्यतिथ्यात्मक एकः स्वतन्त्रः कालः । नक्षत्रात्मक एकः । उभयोः स्वातन्त्र्यं ज्ञापयितुं वाशब्दद्वयोपादानम् । ब्राह्मणादेरुक्तकाले नामकरणं कुर्वतो न मलमासगुरुशुक्रमौढ्यादिनिषेधादरः ।

तदुक्तं दीपिकायाम्—

" गर्भाधानमुखं च चौलविधितः प्राग्जातयागं विना

कृच्छ्रेष्वाग्रयणं गजेन्द्रपुरतश्छायामघानङ्गयोः ।
तीर्थेन्दुक्षययोश्च पित्र्यमधिके मास्येवमाद्याचरेत् " इति ॥

तथा पारिजाते बृहस्पतिरपि—

" यस्यां क्रियायां यश्चोक्तः कालो मासदिनैरपि ।
तस्यां न दोषो मूढत्वं वक्रं वा जीवशुक्रयोः " इति ॥

दिनैरिति तृतीयेत्थंभावे । मासात्मना दिनात्मना वा यो नियतः कालस्तस्मिन्क्रियमाणायां तस्यां मूढत्वादि न दूषणमित्यर्थः । वक्रं वक्रत्वमित्यर्थः ।

एवमुक्तदिनेषु सर्वनिषेधानादरे प्राप्ते तदपवादमाह गर्गः—

" व्यतीपाते च संक्रान्तौ ग्रहणे वैधृतावपि ।
श्राद्धं विना शुभं नैव प्राप्तकालेऽपि मानवः " इति ॥

कुर्यादिति शेषः ।

तथा—" अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाऽऽचरेत् " इति ।

एतच्च सर्वसंस्कारविषयं द्रष्टव्यम् ।

नारदः—" देशकालोपघाताद्यैः कालातिक्रमणं यदि ।
अनस्तगेज्ये च सिते तत्कार्यं चोत्तरायणे " इति ॥

सर्वदिनेषु विशेषान्तरं बृहस्पतिराह—

" पूर्वाह्णः श्रेष्ठ इत्युक्तो मध्याह्नो मध्यमः स्मृतः ।
अपराह्णं च रात्रिं च वर्जयेन्नामकर्मणि " इति ॥

यथोक्तदिने त्वकृतस्य नामकर्मणः कालान्तरे क्रियमाणस्यापेक्षितस्तिथ्यादिनिर्णयः ।

पारिजाते नृसिंहः—" छिद्राख्याः पर्व नवमीं हित्वा शेषाः शुभावहाः " इति ।

चतुर्थीषष्ठ्यष्टमीद्वादशीचतुर्दश्यश्छिद्राः । द्वे पर्वणी, नवमी चेत्यष्टौ तिथीर्विहाय शेषास्तिथयो नामकर्मणि शस्ता इत्यर्थः ।

वसिष्ठः—" बुधेन्दुसितजीवानामंशके दिवसोदये ।
द्रेष्काणे कालहोरायां नामकर्म प्रशस्यते " इति ॥

षष्ठ्यन्तस्य सप्तम्यन्तेषु प्रत्येकमन्वयः । अंशको नवांशो राशेः । उदयो लग्नम् । द्रेष्काणो राशेस्तृतीयोंऽशः । कालहोरा वारप्रवृत्तिमारभ्याहोरात्रसंबन्धिनो भागभेदाः । दिवसोदय इत्येकवद्भावः । ततश्चत्वारो वासराः प्रशस्ता इत्यर्थः ।

पारिजाते—" मित्रादित्यमघोत्तराशतभिषक्स्वातीधनिष्ठाच्युत-
प्राजेशाश्विशशाङ्कपौष्णदिनकृत्पुष्येषु राशौ स्थिरे ।
छिद्रां पञ्चदशीं विहाय नवमीं शुद्धेऽष्टमे भार्गव-
ज्ञाचार्यामृतपादभागदिवसे नामानि कुर्याच्छिशोः " इति ॥

मित्रोऽनूराधाः । आदित्यं पुनर्वसू । उत्तरा उत्तरात्रयम् । शतभिषक्शततारकाः । अच्युतः श्रवणः । प्राजेशं रोहिणी । अश्विनौ अश्विनीनक्षत्रम् । शशाङ्को मृगशिरः । पौष्णं रेवती । दिनकृद्धस्तः । राशौ स्थिरे वृषसिंहवृश्चिककुम्भलग्नेषु । तेभ्य एवाष्टमस्थाने । कीदृशे, शुद्धे । अरिष्टसूचकग्रहानाक्रान्तत्वं शुद्धत्वम् । भार्गवः शुक्रः । ज्ञो बुधः । आचार्यो बृहस्पतिः । अमृतपादश्चन्द्रः । एषां भागाख्यांशे दिवसाख्यवासरे । प्रत्येकमन्वयः । भागदिवसमित्येकवद्भावः । नामानीतिबहुवचनमेकशिशोर्बहूनि नामानि कार्याणीतिज्ञापनार्थम् । तत्रैवं(कं) शङ्खलिखिताभ्यामुक्तम्—

" कुलदेवतासंबद्धं पिता नाम कुर्यात् " इति ।

कुलपूज्या या देवता तत्संबद्धमित्यर्थः । अस्यां व्याख्यायामनादिराचारो मूलम् । एकं गर्गेणोक्तम्—

" मासनाम प्रकुर्वीत बालकस्य पिता ततः ।
कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः ॥
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ।
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् " इति ॥

अत्र मार्गशीर्षादिरेव क्रमः ।

" चैत्रादिमासनामानि वैकुण्ठोऽथ जनार्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवो हरिस्तथा ॥
योगीशः पुण्डरीकाक्षः कृष्णोऽनन्तोऽच्युतस्तथा ।
चक्रीत्येतानि नामानि क्रमादाहुर्मनीषिणः " ॥

इतिमदनरत्नोदाहृतगर्गवचःसंवादात् । स्मृत्यन्तरे तु अन्यान्युक्तानि—

" केशवं मार्गशीर्षे तु पौषे नारायणं वि॒ ।
माधवं माघमासे तु गोविन्दं फाल्गुने तथा ।
चैत्रे विष्णुं तथा विद्याद्वैशाखे मधुसूदनम् ।
त्रिविक्रमं तथा ज्येष्ठ आषाढे वामनं विदुः ॥

श्रावणे श्रीधरं विद्धि हृषीकेशं तु भाद्रके ।
आश्विने पद्मनाभं तु ऊर्जे दामोदरं विदुः " इति ॥

स्त्रीणां मासनामान्याह बृहस्पतिः—

" वाग्देवी मार्गशीर्षे तु पौषे पद्मावती भवेत् ।
श्रीदेवी माघमासे स्यात्सावित्री फाल्गुने स्मृता ॥
चैत्रमासे भवेद्भूतिः कल्याणी माधवे भवेत् ।

माधवो वैशाखः ।

सत्यभामा स्मृता ज्येष्ठे शुचौ पुण्यवती भवेत् ।

शुचिराषाढः ।

नभसि स्याद्रूपवती भाद्र इन्दुमती भवेत् ।

नभाः श्रावणः । भाद्रो भाद्रपदः ।

चन्द्रवत्याश्विने प्रोक्ता लक्ष्मीः कार्तिक ईरिता ।
एतानि मासनामानि स्युः स्त्रीनामकृतौ ध्रुवम् " इति ॥

मासाश्चात्र चान्द्राः । तत्रैव चैत्रादिशब्दानां मुख्यत्वात् । ते च शुक्लादिकृष्णान्ता एव । एतादृशचान्द्रमानस्यैव मुख्यत्वाद्ब्राह्मणेन चैतदेव विशेषेणाऽऽदरणीयम् ।

" अमावस्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु " इतिवचनात् ॥

सविशेषं व्यावहारिकं नाक्षत्रं च नाम गृह्य उक्तम्—

" पुत्रस्य नाम दध्याद्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तं यत्र वा स्वित्युपसर्गस्तद्धि प्रतिष्ठितमिति विज्ञायते, पिता मातेत्यग्रेऽभिव्याहरेयातां विज्ञायते च मम नाम प्रथमं जातवेद इति द्वे नामनी कुर्याद्विज्ञायते च तस्माद्विनामा ब्राह्मणोऽर्धुक इति नक्षत्रनाम द्वितीयꣳ स्यादन्यतरद्गुह्यꣳ स्यादन्यतरेणैनमामन्त्रयीरन् " इति ।

पुत्रस्यास्य नाम संज्ञां दध्यात् । कीदृशमित्याकाङ्क्षायां व्यक्षरमित्यादि । द्वे अक्षरे परिमाणं यस्य तद्व्यक्षरम् । चत्वार्यक्षराणि परिमाणं यस्य तच्चतुरक्षरम् । अक्षरशब्दोऽत्र स्वरेषु वर्तते यथा चतुर्विꣳशत्यक्षरा गायत्रीति । घोषवत्सर्ववर्गप्रथमद्वितीयेभ्योऽन्यव्यञ्जनमादिर्यस्य तद्घोषवदादि । अन्तर्मध्येऽन्तस्था यरलवास्तेषामेको यस्य तदन्तरन्तस्थम् । दीर्घश्चाभिनिष्ठानश्च दीर्घाभिनिष्ठानौ तावन्ते यस्य तद्दीर्घाभिनिष्ठानान्तम् । अभिनिष्ठानो विसर्जनीयः । अभिनि-

ष्ठान इति तु प्रमादपाठः। यौगपद्येनासंभवाद्दीर्घान्तं विसर्जनीयान्तं वेत्यर्थः। केचिद्दीर्घात्परं विसर्गं मन्यन्ते। यस्मिन्नाम्नि सु इत्युपसर्गः स्यात्तद्वा दध्यात्। अस्मिन्पक्षे नास्ति घोषवदादिकं लक्षणम्। तन्नाम प्रतिष्ठितं लोक इति हि यस्माद्विज्ञायते श्रुतिरिति शेषः। नाम्नि प्रतिष्ठितत्वं नाम नामवतो विशेषतो दीर्घायुःप्रदातृत्वम्। उपसर्गग्रहणमप्रातिपदिकस्य केवलस्य सु इत्यक्षरस्य निवृत्त्यर्थं सुषुवादिषु प्रतिष्ठितत्वं मा भूदिति। सुशब्दोपादानमुपसर्गान्तरनिवृत्त्यर्थम्। धावा देवः, वीरयायी बलिवरः, निर्णीः, नववयाः सुदः सुश्रीः, इत्येवमादीन्युदाहरणानि। तन्नाम पिता माता च प्रथममभिव्याहरेयाताम्, उच्चारयेयाताम्। विज्ञायते हि मम नामेत्येतस्मिन्मन्त्रवर्णे पिता माता च दधतुर्यदग्र इति। तस्मादादौ ताभ्यामुच्चारयितव्यममुकोऽयमिति। ततः पुण्याहादिवाचने ब्राह्मणैरुच्चारणीयम्। द्वे नामनी कुर्यात्। नैकमेव। कुतः। विज्ञायते हि तस्माद्विनामा ब्राह्मणोऽर्धुक इति धिष्णियव्याघारणवाक्यशेषे। अर्धुको वर्धनशील इत्यर्थः। अस्यानुवादत्वाद्ब्राह्मणग्रहणं त्रैवर्णिकप्रदर्शनार्थम्। नामाधिकारे पुनर्नामग्रहणमुक्तलक्षणमिदं नामानित्यमितिज्ञापनार्थम्। तेन घोषवदाद्यनियमेन संख्याद्यनियमेन च चतुर्णां वर्णानां क्रमेण शर्मवर्मभूतिदासान्तत्वं, पूर्वपुरुषनामक्रिया, ऋष्यनूकत्वं, देवतानूकत्वं, कृदन्ततानियमो, वृद्धतद्धितप्रतिषेधः, स्त्रीणामयुगक्षरत्वमिति सिद्धानि भवन्ति। तस्माद्विनामा ब्राह्मणोऽर्धुक इति श्रुतिसिद्धयोर्नाम्नोरेकस्य नाम्नो नक्षत्रनाम द्वितीयं स्यात्। कृत्रिमयोर्नाम्नोरन्यतरन्नाम गुह्यमन्यैरविदितं स्यात्। मातापितरावेव तज्जानीतः। उपनयनप्रभृति कुमारोऽपि जानीते। अन्यतरेण गुह्यादन्येन नाम्नैनं कुमारं लौकिकेषु वैदिकेषु च कर्मस्वामन्त्रयीरन्, संबोधनादिना व्यवहरेयुः। येन व्यवहरेयुस्तस्य नक्षत्रनाम द्वितीयं स्यात्। यत्तु द्विनामा ब्राह्मणोऽर्धुक इतिश्रुतिसिद्धनामद्वयमध्य एकमेव व्यावहारिकं द्वितीयं नाक्षत्रं तयोश्चान्यतरन्नाम व्यावहारिकं नाक्षत्रनाम वा गुह्यं स्यात्। अन्यतरेण गुह्यादन्येनैनं लौकिकेषु व्यवहारेष्वामन्त्रयीरन्निति केषांचिद्व्याख्यानं तत्कौषीतक्युक्तव्यावहारिकनामद्वयविधानादर्शनमूलकत्वादुपेक्ष्यम्। तत्रैकं जातकर्मदिने नामकरणदिन एव वा प्राक्स्वस्तिवाचनात्कार्यं मातृदत्तोक्तेः।

सोमयाजीत्यपि नाम कार्यमिति गृह्य उक्तम्—

"सोमयाजीति तृतीयं नाम कुर्वीतेति विज्ञायते" इति।

यः सोमेनेष्टवान्स सोमयाजी। स एतयोर्नाम्नोस्तृतीयं नाम सोमयाजीति

त्यर्थः। एतस्य विनियोगो हौत्र एव। इतरयोस्त्वत्रान्यत्र चेति ज्ञेयम्।
व्यावहारिकनाम्नि विशेष उक्तः शङ्खलिखिताभ्याम्—

"घोषवदाद्यन्तरन्तस्थं पुंसामिकारान्तं स्त्रीणामेवं
कृते नाम्नि शुचि तत्कुलं भवति" इति।

पतञ्जलिः—"अवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितं
कृतं कुर्यान्न तद्धितम्" इति।

यत्राऽऽद्यस्याचो वृद्धिस्तद्वृद्धमिति पाणिनिपरिभाषितं वृद्धं तद्भिन्नमवृद्धम्। नामकर्तुस्त्रिपुरुषान्पितामहादीननु कायत्यभिधत्त इति त्रिपुरुषानूकम्। पितामहादित्रितयान्यतमं नाम कार्यमित्यर्थः। कृतं कृदन्तम्। तद्धितं तद्धितान्तम्।

यत्तु प्रयोगपारिजाते कपिलसंहितावचनम्—

"एकादशेऽह्नि विधिवन्नाम कुर्यात्कुलोचितम्।
देवतानां विशेषेण पित्रोर्वा नाम शस्यते॥
नैव कार्यं नृपादीनां नाम जीवनहेतुतः।
पूर्वैः परस्य वर्णस्य हीनस्यापि न धारयेत्"॥

इति, तदपि नामकर्तुः पित्रोर्नामेत्येवं व्याख्येयं पातञ्जलेनाविरोधाय। अतश्च पित्रादिः कर्ता स्वनामैव करोतीति केषांचिदनाचार एव।

वसिष्ठः—"तद्द्व्यक्षरं वा चतुरक्षरं वा विवर्जयेदन्त्यलकाररेफम्।
तन्मासनामादिकमेव चिन्त्यं स्फुटं वदेद्दक्षिणकर्णरन्ध्रे" इति॥

बालस्येति शेषः।

व्यावहारिकं नाम प्रकृत्य यमः—

"शर्म देवश्च विप्रस्य वर्म राजा च भूभुजः।
गुप्तो दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्" इति॥

भूतिर्गुप्तश्च वैश्यस्येत्यपि पाठः।

बौधायनोऽपि—"शर्मान्तं ब्राह्मणस्य वर्मान्तं क्षत्रियस्य
गुप्तान्तं वैश्यस्य दासान्तं शूद्रस्य" इति।

(* वासिष्ठसूत्रेऽपि—'शर्मान्तं ब्राह्मणस्य येन व्यवहियते' इति। अनेन नक्षत्रादिनाम्नां शर्मान्तता व्यावर्त्यते।)

---

* धनुश्चिह्नान्तर्गतं क. पुस्तक एव।

स्त्रीनाम्नि विशेष उक्तः पारस्करेण—

"अयुगक्षरमाकारान्तं स्त्रियै तद्धितम्" इति।

तद्धितं तद्धितान्तम्।

गोभिलेन दान्तत्वमप्युक्तम्—"अयुगक्षरं दान्तं नाम स्त्रीणाम्" इति।

अत्र केचित्—अत्र दान्तता नामान्तर्गतदाकारेण यशोदा शर्मदेत्यादि। अन्ये तु नामान्तर्गतदाकारेण दान्तता न, किं तु नामातिरिक्तदाकारेणैव दान्तता। यथा पार्वतीदा गङ्गादेत्येवं प्रयोग इत्याहुः। एतन्मते यशोदा शर्मदेत्यादिषु यशोदादा शर्मदादा, इति प्रयोगो ज्ञेयः।

यमेनान्योऽपि विशेष उक्तः—

"स्त्रीणां तु सुखमक्रूरं विस्पष्टार्थं मनोरमम्।
माङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्" इति॥

यशोदेत्याद्युदाहरणानि। स्त्रीणां पुरुषाणां च देवालयगजादीनां नाम न कार्यम्।

तदुक्तं स्कान्दे—"देवालयगजाश्वानां वृक्षाणां वापिकूपयोः।
सर्वापणानां पण्यानां चिह्नानां योषितां नृणाम्॥
काव्यादीनां कवीनां च पश्वादीनां विशेषतः।
गजप्रासादयज्ञानां नाम नैव प्रदीयते" इति॥

वापीशब्दस्य ह्रस्व आर्षः। नक्षत्रनाम त्रिविधं, जन्मनक्षत्रनाम जन्मनक्षत्रदेवतानाम जन्मनक्षत्रपादचतुष्टयभूताक्षराद्याक्षरकं नामेति। तत्राऽऽद्यस्वरूपं मातृदत्त आह—नक्षत्रनाम किं तत्, जन्मनक्षत्रप्रकृतिकं तत्रजातार्थतद्धितान्तम्। यथा रौहिण इत्यादि। 'असावसावित्यादिश्य नामनी' इत्याश्वलायनसूत्रव्याख्यानावसरे देवत्रातोऽपि 'तत्र जात इत्यस्मिन्नर्थे तद्धित उत्पद्यते' इति प्रकृत्य 'तस्मादेवं प्रयोगो भवति अनूराधो देवदत्तः' इति। तथा बौधायनेन 'पुत्रस्य नाम गृह्णाति' इति प्रकृत्य 'रौहिणाय तिष्याय' इति यथानुशासनं विनियोगोऽभ्यधायि। तथोपनयनप्रकरणस्थस्य—

"को नामासीति नामधेयं पृच्छति तस्याऽऽचार्योऽभिवादनीयं नामधेयं कल्पयित्वा देवताश्रयं नक्षत्राश्रयं गोत्राश्रयमप्येके"

इति च्छन्दोगसूत्र[स्य] व्याख्यानावसरे तद्भाष्यकृतोक्तं 'नक्षत्राश्रयं फल्गुननामाऽसि' इति।

तत्रोक्ततद्धितान्तानां नक्षत्रनाम्नां संग्रहार्थः श्लोकः प्रयोगवैजयन्त्यां सुदर्शनभाष्ये विद्यारण्यकृतबौधायनीयदर्शपूर्णमाससूत्रभाष्ये चोदाहृतः—

"रोरेममृज्येचिषु वृद्धिरादौ ठात्पे च वाऽन्त्यश्रवशाश्वयुक्षु।
शेषेषु नाऽऽर्म्रोः कपरः स्वरोऽन्त्यः स्वाप्वोरदीर्घः सविसर्ग इष्टः" इति।

अस्यार्थः—रोहिणी रेवती मघा मृगशीर्षं ज्येष्ठा चित्रेत्येतेषु आद्याक्षरनिर्दिष्टेषु आदावाद्याक्षरे वृद्धिर्भवति। 'नक्षत्रेभ्यो बहुलम्' इति बहुलग्रहणाज्जातार्थप्रत्ययस्य लुगभावः। रूपं च रौहिणः, रैवतः, माघः, मार्गशीर्षः, ज्यैष्ठः, चैत्र इति। ठात्पे च। प्रोष्ठपदेत्यत्र ठकारात्परे पकारे च वृद्धिर्भवति। 'जे प्रोष्ठपदानाम्' इत्युत्तरपदवृद्धिरित्यर्थः। पूर्ववच्च लुगभावः। रूपं च प्रोष्ठपाद इति। वाऽन्त्यश्रवशाश्वयुक्षु। अन्त्यमाम्नानतः। अपभरणीत्यर्थः। श्रवः श्रवणः। शः शतभिषक्। अश्वयुगित्येतेषु चतुर्षु विकल्पेन वृद्धिः। तत्र श्रवणापभरण्योर्बहुलग्रहणादेव लुको विकल्पः। अश्वयुक्शतभिषजोस्तु 'वत्सशालाभिजिदश्वयुक्छतभिषजो वा' इति सूत्रेण। रूपं च—अपभरणं आपभरणः। श्रवणः श्रावणः। शतभिषक्, शातभिषजः। अश्वयुगाश्वयुज इति। शेषेषु न। उक्तेभ्योऽन्येषु नक्षत्रेषु न वृद्धिः। यतोऽत्र 'श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्' इत्यनेन 'नक्षत्रेभ्यो बहुलम्' इत्यनेन च लुग्भवति। 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययनिवृत्तिः। अत्र बहुलशब्देन पर्यायभूतानां कृत्तिकानामपि ग्रहणम्। रूपं च कृत्तिकः, तैष्यः, फल्गुनः, आश्लेषः, हस्तः, विशाखः, अनुराधः, अषाढः, श्रविष्ठ इति। आर्म्रोः कपरः स्वरोऽन्त्यः। आर्म्रोरार्द्रामूलयोरन्त्यः स्वरः कशब्दपरो भवति। 'पूर्वाह्णापराह्णार्द्रामूल' इत्यादिसूत्रेण वुन्प्रत्यये 'युवोरनाकौ' इति वस्याकादेशे 'यस्येति च' इत्यनेनाऽऽर्द्राशब्दान्त्याकारलोपे च कृत आर्द्रको मूलक इति रूपद्वयं सिद्धं भवति। आरित्यत्र रेफग्रहणमाश्लेषाग्रहणप्रकारेण मा भूदित्येतदर्थम्। स्वाप्वोरदीर्घः सविसर्ग इष्टः। स्वाप्वोः स्वातीपुनर्वस्वोरन्त्यः स्वरो ह्रस्वः सविसर्गश्चेष्टः। 'श्रविष्ठाफल्गुन्यनुराधा' इत्यालुक् सविसर्गत्वं च। पूर्वस्त्रीप्रत्ययनिवृत्तौ हल्ङ्यादिलोपाभावात्। स्य तूकारान्तत्वादिति। रूपं च स्वातिः पुनर्वसुरिति। स्वातीति सदीर्घत्वात्पुनर्वस्वोर्द्वित्वेन च पुनर्वसू इति सदीर्घत्वप्रसक्तेरदीर्घत्वमुक्तम्। एवं विंशतिनक्षत्रसंबन्धिनाम्नां सिद्धिः। नक्षत्रेष्टिष्वभिजितः पृथगाम्नानेऽपि ानिनाऽपि 'वत्सशालाभिजिदश्वयुक्' इति तत्प्रकृतिकयोरभिजिदाभिजित नाम्नोरनुशिष्टयोरपि श्लोके योऽनादरस्त(रः स त)स्य नक्षत्रान्तरेऽन्त-

भावात्तन्नाम्नैव व्यवहारसौकर्यादिति बोध्यम् । आहृतं तु मातृदत्तेनाऽऽभिजित इति नक्षत्रनाम, तस्यापि स्वीकारः । अभिजित्स्वरूपं ब्राह्मणेऽभिहितम्—'अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामवस्ताच्छ्रोणायाः' इति ।

विवृतमेतद्वसिष्ठेन—

"अभिजिद्भागमेतद्वैश्वदेवान्त्यपादमखिलम् ।
आद्याश्चतस्रो नाड्यो विज्ञेया हरिभस्य बुधैः" इति ॥

वैश्वदेवमुत्तराषाढाः । चतस्र इति पञ्चदशांशोपलक्षणम् । द्वयोर्नक्षत्रयोर्वृद्धिक्षयालोचनेन पादपञ्चदशांशावभिजिदित्यर्थः । स्त्रीणामेतान्येव नक्षत्रनामानि स्त्रीप्रत्ययान्तानि कार्याणि मातृदत्तोक्तेः । कृत्तिका रोहिणी मार्गशीर्षी [आर्द्रिका] पुनर्वसू(सुः) तिष्याऽऽश्लेषी(षा) माघी फा(फ)ल्गुनी हस्ता चैत्री(चित्रा) स्वातिर्वैशाखी(विशाखा) अनुराधा ज्येष्ठा(ज्यैष्ठी) मूलिकाऽषाढा, [अभिजित्] आभिजिता(ती) श्रावणी श्रवणा श्रविष्ठा शतभिषक्शातभिषजी प्रोष्ठप(पा)दी रै(रे)वती, अश्वयुगाश्वयुजी, अपभरण्या(णाऽऽ)पभरणी, इत्युदाहरणानि । जन्मनक्षत्रदेवतानाम ज्यौतिषे—

"नक्षत्रदेवता एता एताभिर्यज्ञकर्मणि ।
यजमानस्य शास्त्रज्ञैर्नाम नक्षत्रजं स्मृतम्" इति ॥

एतच्छब्दपरामृष्टा नक्षत्रदेवतास्तु—

"अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः ।
सर्पाश्च पितरश्चैव भगश्चैवार्यमाऽपि च ॥
सविता त्वष्टाऽथ वायुश्चेन्द्राग्नी मित्र एव च ।
इन्द्रो निर्ऋतिरापो वै विश्वे देवास्तथैव च ॥
विष्णुर्वसवो वरुणोऽज एकपात्तथैव च ।
अहिर्बुध्न्यस्तथा पूषा अश्विनौ यम एव च" इति ।

एता देवताः कृत्तिकाप्रभृति ज्ञेयाः । अभिजिद्देवता तु ब्रह्म श्रुतितो ज्ञेयम् । अत्र कृत्तिकादावुत्पन्नस्याऽऽग्नेयः प्राजापत्य इत्येवमादीन्युदाहरणानि । एतानि यज्ञकर्मण्येव विकल्पेन प्रवर्तन्ते ।

तृतीयं तु परिशिष्टे—

"तदक्षरादिकं नाम यस्मिन्धिष्ण्ये यदक्षरम्" इति ।

अक्षरमित्येकवचनं पादाक्षराभिप्रायेण ।

तानि ज्योतिषार्के—

" चुचेचोला पदेष्वाश्वे लि लु ले लो यमस्य भे ।
अ (मे०), इ उ ए वह्निभे च ओ व वि वु तथा कभे ॥
वे वो (वृ०), क कि मृगः ख्यातः कु घ ङ च्छ शिवस्य भे ।
के को ह (मि०), हि त्वदितिभे हुहेहोडाश्च पुष्यभे ॥
डि डु डे डो (क०), इमे सार्पे म मि मू मे मघाभिधे ।
मो ट टि टु तथा भागे टे (सिं०), टो प प्यर्यमर्क्षके ॥
पुषणठास्तथा हस्ते पे पो (क०), र रि च चित्रभे ।
रुरेरोतास्तथा स्वातौ ति तु ते (तु०), तो द्विदैवभे ॥
न नि नू ने क्रमान्मैत्रे नो य यि यु (वृ०), इतीन्द्रभे ।
ये यो भ भि च मूलाख्ये *बुधफाढा जलस्य भे ॥
भे (ध०), भो ज जि च विश्वर्क्षे जु जे जो खाभिजिद्भवेत् ।
खि खु खे खो श्रुतौ ज्ञेया ग गि (म०), गू गे च वासवे ॥
गो सा सि सू जलेशर्क्षे से सो द (कु०), दि अजैकभे ।
दुथझञास्तथोपान्त्ये दे दो च ची(मी०),ति पौष्णभे ॥
इति प्रोक्ता इमे पद्ये वर्णा नामादिजाः स्फुटाः ।
ज्ञेया मेषादिराशीनां नवभिर्नवभिः पदैः " इति ॥

आद्यमश्विनीनक्षत्रम् । यमस्य नक्षत्रं भरण्यः । वह्निभं कृत्तिकाः । कः प्रजापतिस्तस्य नक्षत्रं रोहिणी । शिवस्य भमार्द्रानक्षत्रम् । अदितिभं पुनर्वसू । सार्पमाश्लेषाः । भागं भगदैवतं पूर्वा(र्व)फल्गुनीनक्षत्रम् । अर्यमर्क्षमुत्तरा(र)फल्गुनीनक्षत्रम् । द्विदैवभं विशाखानक्षत्रम् । मैत्रमनूराधाः । इन्द्रभं ज्येष्ठाः । जलस्य भं पूर्वाषाढाः । विश्वर्क्षमुत्तराषाढाः । श्रुतिः श्रवणनक्षत्रम् । वासवं श्रविष्ठाः । जलेशो वरुणस्तस्य नक्षत्रं शततारकाः । अजैकभं पूर्वा(र्व)प्रोष्ठपदाः । उपान्त्यमुत्तरा(र)प्रोष्ठपदाः । पौष्णभं रेवतीनक्षत्रम् । इतराणि प्रसिद्धार्थानि ।

" इति प्रोक्ता इमे पद्ये वर्णा नामादिजाः स्फुटाः "

इत्युपसंहारादाद्येऽश्विन्यां पदेषु चरणेषु ये चु इत्यादयो वर्णास्तदादीनि नामानि कार्याणीति प्रतीतेर्ज्योतिर्विदां नक्षत्रतच्चरणज्ञानफलानि सन्तु

---

* अत्र भधेति क. पुस्तकशोधितः पाठः ।

१ ख. ङ. च. खाः ।

तान्यपि नामानि । यदि नामकरणप्रकरणे क्वचिद्गृह्यग्रन्थे तादृशं नक्षत्रनाम कार्यमिति स्फुटो विधिर्भवेत्तदाऽपि सूक्तवाकादिसंबद्धकर्मानधिकृतजात्यन्धविषयोऽसाविति ज्ञेयम् । तदधिकृतान्प्रति व्याकरणानुसारिनक्षत्रनाम्नामेवाऽऽवश्यकताया दर्शितत्वात् । अत्र प्रसङ्गात्तान्यपि नामानि लिख्यन्ते—चुक्रभुक् १, चेतोहरः २, चोष्यप्रियः ३, लब्धविग्रः ४, लिपिकुशलः ५, लुब्धः ६, लेखनकुशलः ७, लोकप्रियः ८, अच्युतः ९, इडापतिः १०, उपेन्द्रः ११, एकनाथः १२, ओषधीपतिः १३, वसुमान् १४, विष्णुः १५, वुन्नन्तवासुदेवः १६, वेदाध्यायी १७, वोकारप्रियः १८, करुणाकरः १९, किर्मीरवर्णः २०, कुरुपतिः २१, घनश्यामः २२, ङकारप्रियः २३, छत्रपतिः २४, केशवः २५, कोमलाङ्गः २६, हरः २७, हिमाद्रिजाभक्तः २८, हुंकारकृत् २९, हेमस्रग्वी ३०, होता ३१, डमरुकस्वरप्रियः ३२, डिण्डिमस्वरप्रियः ३३, डुण्डुभवशंकरी ३४, डेकारप्रियः ३५, डोकारप्रियः ३६, महादेवः ३७, मित्रप्रियः ३८, मूर्तिसेवी ३९, मेखली ४०, मोहितारातिः ४१, टणत्कारकृत् ४२, टिप्पणकृत् ४३, टुकारादिधातुज्ञः ४४, टेकारप्रियः ४५, टोकारोच्चारी ४६, परशुरामः ४७, पितृसेवी ४८, पुरुषोत्तमः ४९, पान्तनामभक्तः ५०, णान्तक्रीडः ५१, ठन्नन्तक्षीरप्रियः ५२, पेयप्रियः ५३, पोषकः ५४, रघुनाथः ५५, रिरंसावान् ५६, रुचिमान् ५७, रेवतीरमणः ५८, रोहिणीशः ५९, तर्ककुशलः ६०, तिक्तप्रियः ६१, तुच्छीकृतारातिः ६२, तेजस्वी ६३, तोमरपाणिः ६४, नरपतिः ६५, निधिपतिः ६६, नूतनकान्तिः ६७, नेता ६८, नोशब्दार्थपालकः ६९, यज्ञेश्वरः ७०, यिकारान्तनामा ७१, युक्तिकुशलः ७२, येकारकृत् ७३, योगकुशलः ७४, भगवत्सेवी ७५, भिन्नरागः ७६, +बुधसेवी ७७, धर्मचारी ७८, फाणितप्रियः ७९, ढक्कानिनादप्रियः ८० भेदितारातिः ८१, भोगनिपुणः ८२, जनमोहनः ८३, जितामित्रः ८४, जुगुप्सावान् ८५, जेता ८६, जोषणकर्ता ८७, खलशासकः ८८, खिलवेत्ता ८९, खुरवद्धीशः ९०, खेलनशाली ९१, *खान्तकृत्वनुष्ठाता (खोकारप्रियः) ९२, गणपतिः ९३, गिरीशः ९४, गूढकर्मा ९५, गेकारकृत् ९६, गोपीनाथः ९७, सामप्रियः ९८, सिद्धिपतिभक्तः ९९, सूर्यभक्तः १००, सेवाप्रियः १, सोमानुष्ठाता २, दनुजारिः ३, से सो दा दीति पाठे तृतीयचरणस्य दामोदर इति नाम । दिवाकरः ४, दुश्च्यवनः ५, थड(था)-

+ भुजंगभूषणभक्त इति क. पुस्तकशोधितः पाठः । * क. पुस्तके खोन्तकृत्वनुष्ठातेति शोधितः पाठः ।

न्तदेवतापूजकः ६, झर्झरप्रियः ७, अनन्त(कार)प्रियः ८, देवतापूजकः ९, दोलाप्रियः १०, चरित्रवान् ११, चित्रलेखनकुशलः १२, इति । नाम्नि आद्यमक्षरं प्र, इति संयुक्तं तत्राऽऽद्यो वर्णः पकारस्तस्माद्धं ज्ञेयम् । प्रियवचा इत्यत्र पिकारः, त्रिविक्रम इत्यत्र तिकारः, द्रुपद इत्यत्र दुकार इत्यादि द्रष्टव्यम् । उक्तं च स्वरशास्त्रे—

"संयोगाक्षरजे नाम्नि ज्ञेयं तत्राऽऽदिमाक्षरम्" इति ।

नामाद्याक्षराभास्वरशास्त्रे—"खषौ शसौ बवौ चैव ज्ञेयावेतौ परस्परम्" इति ।

# अथ नामकरणप्रयोगः ।

व्यतीपातादिकुयोगरहिते जन्मतो द्वादशे दिवसे मातापुत्रयोः स्नानानन्तरं भृत्यैः सूतिकागारं खननसेचनोपलेपनैः[1] शुद्धं कारयित्वा सूतिकाग्निं बहिर्निष्काशयित्वो(श्यो)पासनाग्निमानीयोद्धननादिसंस्कृत आयतने संस्थाप्य नामकरणं कुर्यात् । द्वादशे दिवसेऽसंभवे व्यतीपातादिकुयोगसत्त्वे वाऽष्टादशेऽहनि मासे शतरात्रे संवत्सरेऽतीते वोक्तायां यस्यां कस्यांचित्पुण्यतिथौ वा केवले पुण्ये नक्षत्रे वा कार्यम् । स्नानसूतिकागारशुद्धी तु द्वादश्यामेव । स्वकाले नामकरणक्रियायां तु गुरुशुक्रास्तमलमासादिनिषेधो नास्ति । कर्ता होमसामग्रीं त्रिवृदन्नं कांस्यपात्रं सुवर्णशलाकां चोपकल्प्य ज्योतिर्विदादिष्टे मुहूर्ते प्राङ्मुख उपविश्य स्वस्य दक्षिणतो गृहीतबालकां भार्यामुपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणायुर्वर्चोभिवृद्धिव्यवहारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नामकरणाख्यं कर्म करिष्य इति संकल्प्य गणपतिपूजनं पुण्याहादिवाचनं[2] मातृकापूजनं नान्दीश्राद्धं चोक्तरीत्या कुर्यात् । तत्र सविता प्रीयतामिति विशेषः ।

तत औपासनाग्निं पार्थिवनामाऽयमिति ध्यायन्प्रज्वाल्य चत्वारि शृङ्गेति ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा नामकरणहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा प्रधानहोमे धातारं चतसृभिराज्याहुतिभिर्यक्ष्ये । अनुमतिं चतसृभिराज्याहुतिभिर्यक्ष्ये । राकां द्वाभ्यामाज्याहुतिभ्यां यक्ष्ये । सिनीवालीं द्वाभ्यामाज्याहुतिभ्यां यक्ष्ये । त्रयोदशा-

कुहूमेकयाऽऽज्याहुत्येत्यधिकम् ।

ततोऽङ्गहोमे वरुणं द्वाभ्यामित्यादि व्याहृतिहोमान्तं कृत्वा प्रधानहोमं

१ ङ. च. °योल्लेखना° । २ क. ख. च. °ण्याह्वा° ।

धाता ददातु न इति चतुर्णां विश्वे देवा ऋषयः। धाता देवता। प्रथमस्य गायत्री। द्वितीयस्य त्रिष्टुप्। तृतीयस्यानुष्टुप्। चतुर्थस्य त्रिष्टुप्। अनु न इति चतुर्णां विश्वे देवा ऋषयः। अनुमतिर्देवता। प्रथमद्वितीययोरनुष्टुप्। तृतीयचतुर्थयोस्त्रिष्टुप्। राकामहमिति द्वयोर्विश्वे देवा ऋषयः। राका देवता। जगती छन्दः। सिनीवालीति द्वयोर्विश्वे देवा ऋषयः। सिनीवाली देवता। अनुष्टुप् छन्दः। सर्वेषां नामकरणप्रधानाज्यहोमे विनियोगः। 'ॐ धाता ददातु नो रयिमी० नत्स्वाहा' धात्र इदं न मम। 'ॐ धाता प्र० म स्वाहा' धात्र इदं न मम। 'ॐ धाता ददातु नो रयिं प्रा०सः स्वाहा' धात्र इदं न मम। 'ॐ धाता ददा० जोषाः स्वाहा' धात्र इदं न मम। 'ॐ अनु नोऽद्यानुमति० यः स्वाहा' अनुमत्या इदं न मम। 'ॐ अन्विदनु० षः स्वाहा' अनुमतय इदं न मम। 'ॐ अनुम० च्छतु स्वाहा' अनुमतय इदं न मम। 'ॐ यस्यामिदं० यच्छतु स्वाहा' अनुमत्या इदं न मम। 'ॐ राकामह२० मुक्थ्य९ स्वाहा' राकाया इदं न मम। 'ॐ यास्ते राके सु० रराणा स्वाहा' राकाया इदं न मम। 'ॐ सिनीवालि पृथुष्टुके० द्धि नः स्वाहा' सिनीवाल्या इदं न मम। 'ॐ या सुपाणिः० जुहोतन स्वाहा' सिनीवाल्या इदं न मम। अन्वाधाने कुह्वा उत्कीर्तनं कृतं चेत्तदा कुहूमित्यस्य विश्वे देवाः कुहूस्त्रिष्टुप्। नामकरणप्रधानाज्यहोमे विनियोगः। 'ॐ कुहूमह९ सुभगां० विधेम स्वाहा' इति त्रयोदश्याहुतिर्होतव्या। कुह्वा इदमिति त्यागः।

ततोऽङ्गहोमजयाद्युपहोमादि त्रिवृदन्नहोमीयपुण्याहादिवाचनान्तं कृत्वा प्रजापतिः प्रीयतामित्युक्त्वा नामकरणं कुर्यात्।

तत्राऽऽदावेकं गुप्तं नामास्मिन्नेव दिने पुण्याहादिवाचनात्प्रागेव शुभे मुहूर्ते मातापितृभ्यां कार्यममुकोऽयमिति। जातकर्मदिने वा। तत्र कुयोगसत्त्वे तु नामकरणदिन एवैतन्नाम कार्यम्। एतच्च नाम मातापितरावेव मौञ्जीबन्धनपर्यन्तं जानीतः। अनन्तरं पुत्रोऽपि जानीते।

तत आचारात्तण्डुलान्कांस्याद्यन्यतमे पात्रे प्रसार्य सुवर्णशलाकया श्रीगणपतये नम इति लिखित्वा नामानि लिखेत्। तत्राऽऽदौ शास्त्रान्तरप्राप्तं कुलदेवतानाम व्याडीश्वरयोगेश्वरीभक्त इति।

ततः शास्त्रान्तरप्राप्तं जन्मकालिकमासनाम कृष्णोऽनन्त इति यथामासं ततो व्यावहारिकं द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घान्तं विसर्गान्तं वा सविसर्गदीर्घान्तं वा सु इत्युपसर्गपूर्वं वा स्वत्रिपुरुषवाचि देवतावा-

ऋषिवाचि वा कार्यम्। एतच्च ब्राह्मणस्य शर्मान्तममुकशर्मेति। दीर्घान्तत्व-विसर्गान्तत्वपक्षे शर्मान्तता नास्ति।

ततो जाताधिकारविहिताणादिप्रत्ययान्तं जन्मनक्षत्रप्रकृतिकं कृत्तिक इत्यादि। एतानि नामानि लिखित्वा श्रीगणपतये नम इति मातुरुत्सङ्गस्थस्य बालस्य दक्षिणे कर्णे उक्त्वा त्वं कुलदेवतानाम्ना व्याडीश्वरयोगेश्वरीभक्तोऽसीति कथयित्वैतन्नाम सुप्रतिष्ठितमस्त्विति भवन्तो ब्रुवन्त्विति विप्रान्वाचयेत्। नाम सुप्रतिष्ठितमस्त्विति विप्राः प्रतिब्रूयुः।

ततः कुलदेवतानाम्ना व्याडीश्वरयोगेश्वरीभक्तोऽयं भवतः सर्वान्ब्राह्मणानभिवादयत इत्युक्त्वाऽऽयुष्मान्भवतु व्याडीश्वरयोगेश्वरीभक्त इति विप्रैरुक्तेऽस्मै व्याडीश्वरयोगेश्वरीभक्ताय पुण्याहं भवन्तो ब्रुवन्त्विति त्रिर्विप्रान्वाचयेत्। ॐ अस्तु पुण्याहमिति त्रिर्विप्राः। एवमस्मै व्याडीश्वरयोगेश्वरीभक्ताय स्वस्त्ययनं भवन्तो ब्रुवन्तु। अस्मै व्याडीश्वरयोगेश्वरीभक्ताय ऋद्धिं भवन्तो ब्रुवन्तु इति स्वस्त्ययनर्द्धिवाचनम्। ॐ अस्तु स्वस्त्ययनम्। ॐ अस्त्वृद्धिरिति प्रतिवचने। मासनाम्ना कृष्णोऽसि। मासनाम्नाऽनन्तोऽसि। मासनाम्ना कृष्णोऽयं भवतः०। मासनाम्नाऽनन्तोऽयं भवतः०। अस्मै कृष्णायानन्तायेत्यादि यथायथं मासनाम्न्यूहः। व्यावहारिकेण नाम्नाऽमुकोऽयं भवत इत्यादि व्यावहारिके नाम्नि। अमुकशर्माऽयं भवत इति शर्मान्तत्वपक्षे। नाक्षत्रेण नाम्ना कृत्तिकोऽसि रौहिणोऽसीत्यादि यथानक्षत्रम्। नाक्षत्रेण नाम्ना कृत्तिकोऽयं भवतः०। रौहिणोऽयं भवतः० इति नक्षत्रनाम्नि। पुण्याहादिवाचनं त्रिष्वपि समानम्।

ततो ब्राह्मणभोजनं भूयसीदक्षिणादानं च विधाय विप्राशिषो गृहीत्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत्। इति पुंसो नामकरणम्।

## अथ स्त्रियाः।

तत्र विशेषः। अस्याः कुमार्या इति संकल्पवाक्यम्। नान्दीश्राद्धे विकल्पः। करणपक्षे समन्त्रमेव तत्। न होमः। स्वस्तिवाचनान्ते नामानि [illegible]। भक्तेत्यावन्तं कुलदेवतानाम। वाग्देवी पद्मावती श्रीदेवी सावित्री धृतिः कल्याणी सत्यभामा पुण्यवती रूपवतीन्दुमती चन्द्रवती लक्ष्मीरित्येतानि मासनामानि मार्गशीर्षादिक्रमेण। घोषवदादीत्यादिनियमरहितं तद्धितान्त-मीकारान्तं वा त्र्यक्षरं पञ्चाक्षरं सप्ताक्षरं वा नक्षत्रवृक्षपक्ष्यादिनामव्यतिरिक्तं

व्यावहारिकं नाम कार्यम् । नाक्षत्राणि तु पूर्वमेव प्रदर्शितानि । नात्र नाम । नाममन्त्रेणैव पूजादि । वैदिकमन्त्रवर्जं सर्वं पुंवत् । इति स्त्रियाः ।

द्विविधमप्येतत्पितुरसंनिधौ पितामहादिः कुलवृद्धः कुर्यात् । ‘ पिता नाम कुर्यादन्यो वा कुलवृद्धः ’ इति शङ्खस्मरणात् ।

यदाऽऽलस्याज्जातकर्म न कृतं तदा नामकर्मदिने जातकर्मकालात्ययनिमित्तं लौकिकाग्नौ व्याहृतिहोमवारुणीहोमादिभिः सहितेन रहितेन वाऽऽघारवत्तन्त्रेणाऽऽपूर्विकतन्त्रेण वा त्वं नः स त्वं न इत्याद्याः सप्ताऽऽहुतीः समस्तव्याहृतिभिरेकाहुतिं च हुत्वा गोदानाद्यन्यतमप्रत्याम्नायेनार्धकृच्छ्रं प्रायश्चित्तं चरित्वाऽनन्तरं जातकर्म नामकरणं च क्रमेण कुर्यात् । यदा तु जननकाले कुयोगस्तदा तद्दोषोपशमनाय विहितां शान्तिं कृत्वोभयं क्रमेण कुर्यात् । व्याहृतिहोमार्धकृच्छ्रे अप्यत्र कार्ये इति केचित् । तत्तद्दोषोपशमनशान्तयस्तु शान्तिरत्नमालायां वक्ष्यन्ते । गणपतिपूजनपुण्याहादिवाचनमातृकापूजननान्दीश्राद्धानां तन्त्रमेव ।

इति संस्काररत्नमालायां नामकरणविधिः ।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायाः सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालाया उत्तरार्धे द्वितीयं प्रकरणम् ॥ २ ॥

अथ तृतीयं प्रकरणम्

## अथ प्रवासादागतस्य विधिः ।

तत्रेदं गृह्यम्—‘ प्रवासादेत्याऽऽगतं वा पुत्रमभिमृशति ’ इत्यादि । प्रवासादेत्य पुत्रमभिमृशति । पुत्रं वा प्रवासादागतमभिमृशतीत्यर्थः ।

तस्य प्रयोगः—पिता प्रवासादेत्याऽऽगतोपस्थानं कृत्वा गृहा मा बिभीतेत्यादिविधिं विधाय ‘ ॐ सोमस्य त्वा द्युम्नेनाभिमृशाम्यग्नेस्तेजसा सूर्यस्य वर्चसा ’ इति पुत्रमभिमृशति । ‘ ॐ पशूनां त्वा हुंकारेणाभिजिघ्राम्यसावायुषे वर्चसे हुम् ’ इति मूर्धन्यभिजिघ्रति । असावित्यत्र तस्य संबुद्ध्या शर्मान्तं नाम ग्राह्यम् ।

ततोऽग्निरायुष्मानिति पञ्चानां सानुषङ्गाणां मन्त्राणां विश्वे देवा अग्न्यायुष्मदादयो यजूंषि । हस्तग्रहणे विनियोगः । ‘ॐ अग्निरायुष्मान्स वनस्पतिभिरायुष्मान्तेन० । सोम आयुष्मान्स० । यज्ञ आयुष्मान्स० । ब्रह्माऽऽयुष्मत्तद्ब्राह्मणै० । देवा

आयुष्मन्तस्तेऽमृ० ' एतैः पञ्चभिः पर्यायैः स्वस्य दक्षिणेन हस्तेन पुत्रस्य दक्षिणं हस्तमुत्तानं साङ्गुष्ठं गृह्णाति ।

तत आयुष्टे विश्वत इत्यस्य विश्वे देवा आयुर्दा अग्निरनुष्टुप् । अग्नौ पृथिव्यामित्यस्य वामदेवोऽग्न्यादयो यजुः । पुत्रस्य दक्षिणे कर्णे जपे विनियोगः । 'ॐ आयुष्टे विश्वतो दध० । ॐ अग्नौ पृथिव्यां प्रतितिष्ठ वायावन्तरिक्षे सूर्ये दिवि या॰ स्वस्तिमग्निर्वायुरादित्यश्चन्द्रमा आपोऽनुसंचरन्ति ता॰ स्वस्तिमनुसंचरासौ प्राणस्य ब्रह्मचार्यभूरसौ ' इति मन्त्रद्वयं पुत्रस्य दक्षिणे कर्णे जपति ।

आयुर्दा अग्न इत्यस्य विश्वे देवा आयुर्दा अग्निस्त्रिष्टुप् । अग्नौ पृथिव्यामित्यस्य वामदेवोऽग्न्यादयो यजुः । पुत्रस्योत्तरे कर्णे जपे विनियोगः । 'ॐ आयुर्दा अग्ने० । ॐ अग्नौ पृथिव्यां०' इति मन्त्रद्वयं पुत्रस्योत्तरे कर्णे । एतच्च यथा पुरस्तादित्यनेन प्राप्यते । प्रागुपनयनादेतत्कुर्यादित्येके । यावज्जीवमित्यपरे । दुहितुरपीदं स्यात्तूष्णीम् । प्रवासादेत्येत्यादिकं प्रतिप्रवासं ज्ञेयम् ।

मध्ये द्वादशाब्दपर्यन्तं परस्परमवलोकनं दैवान्न जातं तदाऽऽदावलोकनविधिं कृत्वा पुत्राभिमर्शनादिकं कार्यम् ।

स च विधिः सूर्यारुणसंवादे—

" दंपती पितृपुत्रौ च स्वसारौ भ्रातरौ तथा ।

अत्र भ्रातृशब्देन सपत्नभ्राताऽपि ।

( + पितृव्यभ्रातृपुत्रौ च तथा स्वस्रीयमातुलौ ॥
मातामहदुहितृजौ स्वसृजौ भ्रातृजौ तथा । )
पुत्रिकापितरौ चैव भगिनीभ्रातरौ तथा ॥
द्वादशाब्दे व्यतीते तु दूरदेशं गतौ यदि ।
एतेषामेकमेकोऽपि नान्योऽन्यमवलोकयेत् ॥
इच्छन्ति केचिदाचार्या अन्योन्यमवलोकनम् ।
शिवालयेऽथ वा तीर्थे स्नात्वा प्रज्वाल्य दीपकौ ॥
शिवं संपूज्य विधिवदुभौ तौ देवमध्यतः ।
धृत्वा कांस्यमयं पात्रं सवृतं रत्नपूरितम् ॥
शान्तिदैर्मन्त्रघोषैश्च सहितस्तद्विलोकयेत् ।
आननं चैकमे(ए)कस्य दृष्ट्वा सम्यक्शिवं यजेत् ॥

+ धनुश्चिह्नान्तर्गतश्लोकस्थाने ख. ङ. च. पुस्तकेषु ' पितृव्यमातुलौ चैव दौहित्रौ भागिनेयकौ " इत्यर्धं वर्तते ।

ब्राह्मणाय ततो दद्यात्तत्पात्रं दक्षिणायुतम् ।
अन्येभ्यस्त्वथ विप्रेभ्यो दद्याद्वित्तानुसारतः ॥
तेभ्योऽपि दक्षिणां दत्त्वा पूजयेच्च पुनः शिवम् ।
नत्वा देवं द्विजान्सूर्यमागत्याथ स्वमन्दिरम् ॥
ततो व्याहृतिभिर्होमं शतमष्टोत्तरं तिलैः ।
कृत्वाऽथ भोजयेद्विप्रान्यथावित्तानुसारतः ॥
बान्धवैः सह भुञ्जीत सर्वारिष्टप्रशान्तये ।
इत्थं यः कुरुते मर्त्यस्तस्यारिष्टं न विद्यते ॥
आयुष्कामो नरश्चैवमकृत्वा नावलोकयेत् ।
पूर्वावलोकितानां तु विधिरेष उदाहृतः ॥
न चैवादृष्टपूर्वाणामिति प्राहुर्मनीषिणः " इति ॥

ग्रन्थान्तरेऽपि—" दंपती पितृपुत्रौ च स्वसारौ भ्रातरौ तथा ।
सापत्नभ्रातरौ चापि भगिन्यौ वा तथाविधौ ॥

**तथाविधौ सापत्नभगिन्यौ ।**

पितृव्यभ्रातृपुत्रौ च भागिनेयकमातुलौ ।
द्वादशाब्दं व्यतीते तु दूरदेशं गतौ यदि ॥
एतेषामेकमेकोऽपि नान्योऽन्यमवलोकयेत् ।
दर्शनात्कुलनाशः स्यात्तयोरेकस्य वा मृतिः ॥
पुण्यक्षेत्रे गयादौ च दोषो नान्योन्यदर्शने ।
कांस्ये रत्नोदकैः पूर्णे शिवाग्रे मध्यतः पटे ॥
दृष्ट्वाऽन्योन्यं ततो देवदर्शने नैव दोषभाक् " इति ।

**रत्नोदकपूर्णे कांस्यपात्रे परस्परमवलोकनं कृत्वाऽनन्तरं देवदर्शने कृते सति न दोष इत्यर्थः ।**

अन्यत्रापि—" द्वादशाब्दे व्यतीते तु न कुर्याद्भ्रातृदर्शनम् ।
पित्रोः पुत्रस्य नैवाऽऽहुर्महाहानिकरं भवेत् ॥
दर्शनं यदि कुर्वीत शिवं पूज्य शिवालये ।
नारिकेलं स्फोटयित्वा अन्तःपटविधानतः ॥
मुखावलोकनं कुर्यात्कुर्यादालिङ्गनं ततः ।
एवं कृते विधाने तु दोषशान्तिर्भविष्यति " इति ॥

गणेशपुराणे चन्द्राङ्गदोपाख्यानेऽपि—

" स्वयं जगाम शिबिरमिन्दुमत्या नृपोत्तमः ।
कारयामास स विधिं द्वादशाब्ददृशैर्द्विजैः ॥
पुण्याहवाचनं कृत्वा गणेशार्चनपूर्वकम् ।
संपूज्य शंकरं सम्यग्द्विजांश्च दक्षिणादिभिः ॥
बभञ्ज श्रीफलं त्यक्त्वा ततस्तत्पुरतो ययौ ।
ददर्श तत्रेन्दुमतीमिन्दोः शेषकलामिव " इति ॥

स्वयं चन्द्राङ्गद इन्दुमत्याः शिबिरं जगामेत्यन्वयः। स राजा द्वादशाब्ददृशैर्द्वादशाब्दपर्यन्तादर्शननिमित्तकमेलनविधिदृशैर्द्विजैः शास्त्रज्ञैर्ब्राह्मणैर्विधिं मेलनविधिं कारयामासेत्यन्वयः । अथ विधिमाह—पुण्याहवाचनं कृत्वेत्यादिना । गणेशार्चनपूर्वकमिति पुण्याहवाचनविशेषणम् । गणेशार्चनं गणेशपूजनं पूर्वं यस्य तत् । ततः शंकरं साम्बं शिवं द्विजाञ्शास्त्रज्ञान्ब्राह्मणांश्च संपूज्य । कैरित्यपेक्षायां दक्षिणादिभिरिति । अत्राऽऽदिशब्दो मुख्यार्थवाची । दक्षिणा मुख्या येषां ते दक्षिणादयः पाद्यादय उपचारा इत्यर्थः । एतेन दक्षिणाया आवश्यकत्वं द्योतितं भवति । अथवा शंकरं सम्यक्षोडशोपचारैः संपूज्य द्विजान्दक्षिणादिभिरुपचारैः पूजयेदित्यर्थः । दक्षिणादिभिरित्यनेन द्विजपूजन इतरोपचाराणामनावश्यकत्वं ध्वन्यते । अत्राऽऽदिशब्देन प्रदक्षिणानमस्कारप्रार्थनारूपाः पदार्था ग्राह्याः ।

ततो देवसमीप एव श्रीफलं नारिकेलफलं बभञ्ज स्फोटितवान् । प्रकृते स्फोटयेदिति विधिरुन्नेयः । ततस्तत्स्फुटितं नारिकेलफलं त्यक्त्वा पुरतः स्वगृहं ययौ चन्द्राङ्गदः । प्रकृते गच्छेदिति विधिरुन्नेयः । ततस्तत्र गृहे, इन्दुमतीमिन्दोः शेषकलामिव कृशां ददर्श । प्रकृते पश्येदिति विधिरुन्नेयः । इन्दुमत्या दुःखेन कृशत्वात्कृशां ददर्शेत्युक्तिः । तस्यै दुःखं भर्तुर्मरणशङ्काकृतम् । इदं च कृशत्वविशेषणं सद्भावाभिप्रायेण । एवं च द्वादशाब्दपर्यन्तं भर्तरि प्रवासं गतेऽपि यस्यास्तावत्कालपर्यन्तं सुवार्तायाः श्रवणान्मरणशङ्काकृतदुःखाभावेन कृशत्वाभावेऽप्ययं विधिर्भवत्येवेति द्रष्टव्यम् ।

इति परस्परमेलनविधिः ।

## अथैतत्प्रयोगः ।

पूजाहोमादिसामग्रीसहितौ कर्तारौ ब्राह्मणैः सह शिवालयं गत्वा परस्परमीक्षणं यत्र न भवति तावति(तोः) दूरप्रदेशयोः स्वस्वसामग्रीं निधाय हस्त-

पादान्प्रक्षाल्याऽऽचम्य परस्परमनीक्षन्तौ शिवसमीप उपविश्य शिवं नमस्कृत्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य द्वादशाब्दपर्यन्तादर्शनसूचितसर्वानिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं द्वादशाब्दपर्यन्तादर्शननिमित्तकावलोकनविधिं करिष्य इति संकल्प्य गणेशं संपूज्य पुण्याहवाचनं कुरुतः । तत्र द्वादशाब्दपर्यन्तादर्शननिमित्तकावलोकनाख्यस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्त्वित्यादिप्रयोगः । साम्बशिवः प्रीयतामिति समर्पणवाक्ये विशेषः ।

तत उभौ परस्परमनवलोकयन्तावेव शिवसमीपे दीपौ प्रज्वाल्य साम्बशिवाय नम इति शिवं संपूज्यैतद्विधिज्ञान्ब्राह्मणान्पूजयेत् ।

ततः शिवाग्र उभयोर्मध्ये द्विजैरन्तःपटं धारयित्वा बिल्वफलं नारिकेलफलं वा भङ्क्त्वाऽऽत्मनोर्देवस्य च मध्ये सघृतं रत्नयुक्तं स्वस्वकांस्यपात्रं संस्थाप्य शान्तिपाठसहितौ पात्रद्वयस्थे द्रवीभूते तस्मिन्नाज्ये परस्परं मुखनिरीक्षणं कुर्याताम् । अथवोभौ स्वं स्वं कांस्यपात्रं शुद्धोदकेन पूरयित्वा रत्नं तत्र निक्षिप्य तस्मिन्परस्परं मुखनिरीक्षणं कुर्याताम् । मुखनिरीक्षणोत्तरं वा फलभङ्गः । रत्ननिक्षेपणं कृताकृतम् । ततः पटं निःसार्य परस्परमालिङ्गनं कुर्याताम् ।

ततः पुनः साम्बशिवं संपूज्य दक्षिणायुतं स्वस्वपात्रं ब्राह्मणाय दत्त्वा विभवानुसारेण ब्राह्मणेभ्यो दक्षिणां दत्त्वा पञ्चोपचारैः पुनः शिवं संपूज्य साष्टाङ्गं प्रणम्य द्विजान्सूर्यं च प्रणम्य गृहमागच्छेताम् ।

ततो हस्तपादप्रक्षालनं कृत्वाऽऽचम्य प्राणानायम्य प्राक्प्रवणाद्यन्यतमे देशे स्थण्डिलकरणादि कृत्वा वरदनामानमग्निं प्रतिष्ठापयामीति तस्मिन्स्थण्डिलेऽग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा द्वादशाब्दपर्यन्तादर्शननिमित्तकावलोकनविध्यङ्गभततिलहोमकर्मणि या यक्ष्यमाणा इत्यादि प्रसाधनीदेव्यन्तं व्याहृत्यन्तं वोक्त्वा वैशेषिकप्रधानहोमे—प्रजापतिं समस्तव्याहृतिभिरष्टोत्तरशतसंख्यघृताक्ततिलाहुतिभिर्यक्ष्य इत्युक्त्वाऽग्निं स्विष्टकृतं हुतशेषेण यक्ष्य इत्यादि अङ्गहोमे वरुणं द्वाभ्यामित्यादि वा पूर्वोन्तानुसारेणोक्त्वाऽन्वाधानसमिदभ्याधानादि । पात्रासादन आज्यासादनोत्तरं तिलानामासादनम् । आज्यपर्यग्निकरणकाले तिलानां पर्यग्निकरणम् । होमकाले स्थालीगताज्येन तिलानभ्यज्य मृगीमुद्रया होमं कुर्यात् । स्रुवेण दर्व्यामुपस्तीर्य तिलानुत्तरार्धात्सकृद्गृहीत्वा द्विरभिघार्य यदस्येति पूर्ववज्जुहुयात् । इमं मे वरुणेत्यादि वाऽन्वाधानोत्कीर्तितपक्षानुसारेण कुर्यात् । कर्मशेषसमाप्तौ तमग्निं संपूज्य भस्म धृत्वा गच्छ गच्छेत्यग्निं विसृजेत् । एवमुभौ सति संभवे होमं कृत्वा ब्राह्मणेभ्यो भूयसीं दक्षिणां दत्त्वा

विभवानुसारेण ब्राह्मणान्भोजयित्वा सुहृद्युतावुभौ सह भुञ्जीयाताम् । स्त्रिया होमो नास्त्येव । दंपत्योः परस्परावलोकनविधौ तु एकमेव कांस्यपात्रं तस्मिन्नेव सहैवावलोकनं तद्दक्षिणायुतं भर्त्रैव देयम् । तद्दानकाले पत्न्यन्वारभेत्(त) । एकत्र निवसतोः पितृपुत्रयोर्भ्रात्रोः पितृव्यभ्रातृपुत्रयोश्च ज्येष्ठेनैव वा होमः कार्यः । तत्र पितुः पुत्रमुखनिरीक्षणे मम पुत्रस्य च द्वादशाब्दपर्यन्तादर्शननिमित्तकावलोकनविध्यङ्गभूतमष्टोत्तरशतं व्याहृतिभिस्तिलैर्होमं करिष्य इति संकल्पवाक्ये विशेषः । एवं भ्रात्रादिषूह्यम् । अयं चावलोकनविधिरदृष्टपूर्वाणां नैव । पुण्यक्षेत्रे गयादौ तु परस्परदर्शने न दोषः ।

इत्यवलोकनविधिः समाप्तः ।

## अथ सूतिकायाः स्तन्यवर्धनविधानम् ।

शिशुरक्षारत्ने—" सूतिकायाः स्तनक्षीरमकस्मात्क्षीयते यदि ।
विधानमेतत्कर्तव्यं यद्वक्ष्यामि निबोध तत् ।
रेवतीग्रहनामानं पूजयेत्प्रयतः शुचिः ।
ब्रह्मवृक्षस्य पीठे च स्थापयित्वाऽर्चयेत्सुधीः ॥

ब्रह्मवृक्षः पलाशवृक्षः ।

कृष्णधत्तूरपुष्पैस्तु धूपैः कृष्णागुरोः शुभैः ।
धूपयेद्दीपदानेन ग्रहं नीराजयेत्तथा ॥
रक्ततण्डुलभक्तेन गुडयुक्तेन चैव हि ।
महिषीसर्पिषा चैव पूरिकाः पाचयेत्सुधीः ॥
सुधाफलानि नैवेद्यं पायसं च विशेषतः ।

सुधाफलानि मधुरफलानि आम्रफलादीनि ।

सकर्पूरं च ताम्बूलं सलवङ्गं प्रदापयेत् ॥

प्रदद्यादित्यर्थः ।

सुगन्धं चन्दनं तत्र ध्वजान्सप्त समाहरेत् ।
रूप्यं वा हेम वा तत्र बलिपात्रे निधापयेत् ॥
होमं च विधिवत्कृत्वा जुहुयात्तिलसर्पिषा ।

होमं पूर्वाङ्गहोमम् ।

अष्टोत्तरसहस्रं वा अथवाऽष्टाधिकं शतम् ॥
जुहुयात्प्रयतस्तत्र मन्त्रात्रक्षोनिवारणान् ।

राक्षोघ्नानित्यर्थः । ते च कृणुष्व पाज इत्यादयः ।

जपेच्छान्तिं द्विजैः सार्धं शं न इत्यादिमन्त्रवित् ॥
यत्प्रधानं हविस्तत्तु प्रोक्तं स्विष्टकृतो बुधैः ।
एवं समाप्य विधिवद्धवनं मन्त्रविद्विजः ॥
प्रार्थ्य भक्त्या ग्रहं धीमात्रेवतीनामधेयकम् ।
दद्याद्विप्राय मेधावी ग्रहं तं दक्षिणायुतम् ॥
सपीठं च सवस्त्रं च नैवेद्यं चैव सर्वशः " [ इति ] ।

दानमन्त्रः—" नमस्ते भगवन्देव रेवतीग्रह शोभन ।
ग्रहेश तव दानेन स्तन्यं वर्धय मे सदा " इति ॥

अत्रास्मच्छब्दप्रयोगाद्दानं भार्याकर्तृकम् । दद्यादित्यत्रान्तर्भावितो णिच् । तेन दापयेदित्यर्थः । भार्ययेति शेषः । अथवा म इत्यनन्तरं भार्याया इत्यनुषङ्गो बुद्धिस्थो ज्ञेयः । यथा ममाग्ने वर्च इत्यत्र ममेत्यनन्तरं यजमानस्येति तथाऽत्र द्रष्टव्यम् ।

" ततः समुद्रज्येष्ठेति अभिषेकं समाचरेत् ।
आचार्यादीन्पूजयीत पश्चाद्ब्राह्मणभोजनम् ॥
भुक्तोच्छिष्टेन तस्यास्तु स्तनावालेपयेत्ततः ।
कुमारीमूलकन्देन हरिद्रासंयुतेन च ॥
प्रक्षालितौ स्तनौ पश्चाल्लिम्पेद्दक्षक्रमेण तु ।
एवं कृते विधाने तु बहुक्षीरं प्रजायते " इति ॥

कुमारी कोरफड, इति भाषया प्रसिद्धा ।

" विदारिकाकन्दरसः सदुग्धः शतावरी वा कुरुतेऽङ्गनानाम् ।
सदुग्धभक्ताशनतत्पराणां पयोधरौ प्राज्यपयःसमुद्रौ " इति ।

विदारिकाकन्दो भोयकोहळी, इति भाषया प्रसिद्धः । प्राज्यपयःसमुद्रावित्यनन्तरं भवत इति शेषः । इति सूतिकास्तन्यवर्धनविधानम् ।

## अथ दोलारोहणम् ।

पारिजाते बृहस्पतिः—"दोलारोहस्तु कर्तव्यो बालस्य द्वादशे दिने ।
षोडशे दिवसे वाऽपि द्वात्रिंशे दिवसेऽपि वा " इति ।

द्वाविंशे दिवस इत्यपि पाठः ।

भविष्ये—" अभीष्टे पुण्यदिवसे चन्द्रताराबलान्विते ।
मृदुध्रुवक्षिप्रभेषु माता वा कुलयोषितः ॥
योगशायिहरिं स्मृत्वा प्राक्शीर्षं विन्यसेच्छिशुम् " इति ।

रेवतीचित्रानूराधा मृदूनि। रोहिण्युत्तरात्रयं च ध्रुवाणि। हस्ताश्विनी-पुष्याभिजितः क्षिप्राणि।

ज्योतिर्निबन्धे—"करत्रये वैष्णवपौष्णभे चादितिद्वये चाश्विनकध्रुवेषु।
कुर्याच्छिशूनां नृपतेश्च तद्वदान्दोलनं वै सुखिनो भवन्ति" इति॥

तत्रैव विशेषः—"आन्दोलारोहणे पुंसो द्वादशो दिवसः शुभः।
त्रयोदशस्तु कन्याया न नक्षत्रविचारणा" इति॥

द्वादशो दिवसः षोडशदिवसस्योपलक्षणम्। जन्मदिवसाद्द्वादशे षोडशे वा दिवसे पुंसः। त्रयोदशे कन्यायाः। अन्यस्मिन्वा ज्योतिःशास्त्रोक्तमृदुध्रुवक्षिप्रनक्षत्रादियुते शुभकाले यथाचारं कुलदेवतापूजां विधायालंकृतं शिशुं हरिद्राद्यलंकृतायां दोलायां मात्राद्याः सौभाग्यवत्यः कुलीनाः स्त्रियो योगशायिनं हरिं संस्मृत्य गीतवाद्यादिघोषे क्रियमाणे प्राक्शिरसं शाययेयुः।

इति दोलारोहणम्।

## अथ दुग्धपानम्।

श्रीधरीये—"एकत्रिंशे वासरे वा द्वितीये जन्मर्क्षे वा शुद्धलग्नेऽनुकूले।
शङ्खे क्षीरं संनिदध्याच्छिशूनां वक्त्रे धात्री पूज्यपूजां विधाय" इति॥

शङ्ख इति तृतीयार्थे सप्तमी। धात्री पूज्यपूजां विधाय शिशूनां वक्त्रे शङ्खेन क्षीरं संनिदध्यादित्यन्वयः। संनिदध्यात्पाययेत्।

दुग्धलक्षणं मेधातिथिनिबन्धे—

"गवां च दुग्धं प्रथमं विदध्याद्बालस्य पुष्ट्यै च तदुक्तसर्पिः।
त्यक्त्वा महिष्यादिपयश्च सर्पिस्त्यक्त्वाऽन्यकारं च विलोकनीयम्" इति॥

गवां स्वरूपं सुरेश्वरः—

"ताम्रगौस्तु विशेषेण श्वेतगौर्मध्यमा स्मृता।
कनिष्ठा कपिला गौस्तु कृष्णा(ष्णां) गौस्तु(गां तु) विवर्जयेत्" इति॥

अत्र नक्षत्रादिकमाह नृसिंहः—

"उत्तरात्रयहस्तौ च त्वाष्ट्रवैष्णववासवाः।
पौष्णाश्विनौ मघास्वातीवरुणादितिजीवनम्॥
रोहिण्यैन्दवमैत्राश्च दुग्धपाने शिशोः शुभाः।
षष्ठीरिक्ताष्टमीदर्शा वर्ज्या विष्टिः स्थिराणि च॥
जीवशुक्रेन्दुसौम्यानां वारवर्गोदयाः शुभाः" इति।

त्वाष्ट्रं चित्रा। वैष्णवं श्रवणः। वासवं धनिष्ठाः। पौष्णं रेवती। अश्वि-

नावश्विनीनक्षत्रम् । वरुणः शततारकाः । अदितिः पुनर्वसू । जीवनं पूर्वाषाढाः । अत्र मूलं चिन्त्यम् । ऐन्दवं मृगशिरः । मैत्रमनूराधाः । एकत्रिंशे दिवसे द्वितीये जन्मनक्षत्रे वाऽन्यस्मिन्वोक्ते नक्षत्रे षष्ठीरिक्ताष्टमीदर्शव्यतिरिक्ततिथौ बृहस्पतिशुक्रचन्द्रबुधान्यतमे वासरे कुलदेवतापूजनं विधाय माताऽन्या वा सौभाग्ययुता शिशुं दक्षिणशिरसं प्राक्शिरसं वा धृत्वा शङ्खेन गोक्षीरं पाययेत् । इति दुग्धपानम् ।

## अथ प्रथमकञ्चुकधारणम् ।

ज्योतिर्निबन्धे—" अश्विनीत्वाष्ट्रपौष्णेज्यमित्रोत्तरकरानिले ।
सितसौम्येज्यवारेषु जयापूर्णादिने तथा ॥
शुभे मुहूर्ते पूर्वाह्णे चन्द्रताराबलान्विते ।
शिशूनां धारयेत्तत्र कञ्चुकं चित्रवर्णकम् ।
नीलवर्णं शिशूनां च मुख्यं प्रथमकञ्चुकम् " इति ॥

इज्यस्तिष्यः । करो हस्तः । अनिलः स्वाती । सितः शुक्रः । जयास्तृतीयाष्टमीत्रयोदश्यः । पूर्णाः पञ्चमीदशमीपञ्चदश्यः । यद्यप्यविशेषात्पञ्चदशीत्वेनामावास्याया अपि प्राप्तिस्तथाऽपि तस्याः शुभकर्मसु सामान्यतो निषिद्धत्वात्त्याज्येति द्रष्टव्यम् । एवं पूर्णमास्याः पूर्वार्धमपि त्याज्यम् । तस्य भद्रात्वेन निषिद्धत्वात् ।

## अथ जलपूजनम् ।

तच्च मुहूर्तचिन्तामणौ—

" कवीज्यास्तचैत्राधिमासे न पौषे जलं पूजयेत्सूतिकामासपूर्तौ ।
बुधेन्द्विज्यवारे विरिक्तातिथौ हि श्रुतीज्यादितीन्द्वर्कनैर्ऋत्यमैत्रे " इति॥

कविः शुक्रः । इज्यो गुरुः । तयोरस्ते, चैत्रेऽधिमासे पौषे च जलं न पूजयेदित्यर्थः । अनेनावशिष्टा मासा अभ्यनुज्ञाता भवन्ति । मासपूर्तौ माससमाप्तौ सत्यां कार्यं न प्रथमे मासि । विरिक्तातिथौ रिक्ताभिन्नतिथौ । श्रुतिः श्रवणः । इज्यस्तिष्यः । अदितिः पुनर्वसू । इन्दुर्मृगशिरः । अर्को हस्तः । नैर्ऋत्यं मूलम् । मैत्रमनूराधाः । इति जलपूजनम् ।

## अथ कर्णवेधः ।

तत्र बृहस्पतिः—" जन्मतो दशमे वाऽह्नि द्वादशे वाऽथ षोडशे ।
सप्तमे मासि वा कुर्याद्दशमे मासि वा पुनः " इति ॥

मदनरत्ने—" प्रथमे सप्तमे वाऽपि अष्टमे दशमेऽथ वा ।
द्वादशे वा प्रकुर्वीत कर्णवेधं शुभावहम् " इति ॥

गर्गः—" मासेऽष्टमे सप्तमे वाऽप्यष्टमे वत्सरेऽथ वा ।
कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा ॥
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने " इति ।

व्यवहारोच्चये विशेषः—

" न जन्ममासे न च चैत्रपौषे न भाद्रसंज्ञे न हरौ प्रसुप्ते ।
दिने न रिक्ते न च विष्टिदुष्टे कर्णस्य वेधं मुनयो वदन्ति " इति ॥

अयं च जन्ममासनिषेधो द्वितीयादिवर्षगतजन्ममासविषयः । न त्वाद्यवर्षगतविषयः ।

" प्रथमे जन्ममासे तु कर्णवेधं शुभं विदुः "

इतिवचनेन तस्य विहितत्वात् । चैत्रस्य निषेधो मीनार्कविषयः । पौषस्य निषेधो धनुरर्कविषयः ।

" मीनस्थिते रवौ चैत्रे पौषे चापस्थिते तथा ।
कर्णवेधं नैव कुर्यादिति प्राहुर्मनीषिणः " ॥

इतिज्योतिःसागरवचनात् । अनन्तरोदाहृतगर्गवाक्यगतकार्तिकविधिस्तु बोधिन्युत्तरभागविषयो द्रष्टव्यः । भाद्रपदनिषेधो दोषाधिक्यबोधनार्थः । मदनरत्ने बृहस्पतिः—

" एकादश्यष्टमीपर्वरिक्ता वर्ज्याः शुभावहाः ।
शिष्टाश्च तिथयः सर्वाः कृष्णे चान्त्यत्रिकं विना " इति ॥

वारानाह स एव—" मन्दारसूर्यवाराः स्युर्वर्ज्याः कर्णप्रवेधने ।
गुरुशुक्रेन्दुजेन्दूनां पूज्या वारांशकोदयाः " इति ॥

मन्दः शनिः । आरो भौमः । इन्दुजो बुधः । नक्षत्राण्याह[1] स एव—

" सौम्यार्द्रार्योत्तरादित्यहस्तचित्राश्विविष्णुभम् ।
श्रविष्ठा रेवती चैव शुभान्येतानि वेधने " इति ॥

सौम्यं मृगशिरः । आर्यो गुरुस्तस्य नक्षत्रं पुष्यः । वेधने कर्णवेधने । चण्डेश्वरेण स्वात्यप्युक्ता—

" हस्ताश्विनीस्वातिपुनर्वसू(सौ) च तिष्येन्दुचित्राहरिरेवतीषु ।
चन्द्रेऽनुकूले गुरुशुक्रवारे कर्णौ तु वेध्यावमले च लग्ने " इति ॥

१ ख. °त्राण्यप्याह ।

अमले ग्रहदोषशून्ये । राशय उक्ता नारदेन—

"वृषभे मिथुने मीने कुलीरे कन्यकासु च ।
तुलाचापे तु कुर्वीत कर्णवेधं शुभर्द्धये ॥
मेषश्च मकरश्चैव मध्यमौ गुरुचोदितौ ।
सिंहवृश्चिककुम्भाश्च अधमाः परिकीर्तिताः" इति ॥

बृहस्पतिः—"अष्टमस्था ग्रहाः सर्वे नेष्टाः स्युः कर्णवेधने" इति ।

श्रीधरीये—"हरकरवसुचित्रासौम्यपौष्णोत्तराश्वि-
न्यदितिषु तु घटालीसिंहवर्जे सुलग्ने ॥
शशिगुरुबुधकाव्यानां दिने पर्वरिक्ता-
रहिततिथिषु शुद्धे नैधने कर्णवेधः" इति ॥

अगस्त्यः—"द्वयोश्च संध्ययोर्लग्ने न कुर्यात्कर्णवेधनम् ।
रात्रावपि तथा लग्ने नक्षत्रतिथिसंधिषु ॥
कर्णवेधं न कुर्वीत कुर्याच्चेच्छेदनं भवेत्" इति ॥

छेदनं नाशः ।

संग्रहे—"दिनच्छिद्राव्यतीपातविष्टिवैधृतिवर्जिते ।
शिशोरजातदन्तस्य मातुरुत्सङ्गगतस्य च ॥
सौचिको वेधयेत्कर्णौ सूच्या द्विगुणसूत्रया" इति ।

सुबोधे—"शातकुम्भमयी सूची वेधने तु शुभप्रदा ।
राजती वाऽऽयसी वाऽपि यथाविभवतः शुभा" इति ॥

शातकुम्भं सुवर्णम् ।

सूचीव्यवस्था(स्थां) तत्प्रमाणं चाऽऽह बृहस्पतिः—

"सौवर्णी राजपुत्रस्य राजती विप्रवैश्ययोः ।
शूद्रस्य चाऽऽयसी सूची मध्यमाष्टाङ्गुलात्मिका" इति ॥

बालस्य मध्यमाङ्गुलिमध्यपर्वमिताङ्गुलेनाष्टाङ्गुलेत्यर्थः ।

ज्योतिरर्णवे—"शुक्लसूत्रसमायुक्तताम्रसूच्याऽथ वेधयेत् ।
वेधात्तृतीयनक्षत्रे क्षालयेदुष्णवारिणा" इति ॥

यस्मिन्नक्षत्रे कर्णवेधस्तस्मान्नक्षत्रात्तृतीयनक्षत्र उष्णोदकेन क्षालनं कर्तव्यमित्युत्तरार्धार्थः । इयं च ताम्रसूची सर्वेषां वैकल्पिकी ।

विधिगृह्यपरिशिष्टे—

"अथ कर्णवेधो वर्षे तृतीये पञ्चमे वा पुष्येन्दुचित्राहरिरेवतीषु पूर्वाह्णे

प्राङ्मुख उपविश्य दक्षिणकर्णमभिमन्त्रयेत भद्रं कर्णेभिरिति सव्यमप्ये-
वम्, यदि रोदिति कुमाराय मधुरं दत्त्वा ब्राह्मणभोजनम् " इति ।

विष्णुधर्मोत्तरे—" पूर्वाह्णे पूजनं कृत्वा केशवस्य शिवस्य च ।
ब्रह्मणश्चन्द्रसूर्याभ्यां दिगीशानां तथैव च ॥
नासत्ययोः सरस्वत्या ब्राह्मणानां गवां तथा ।
गुरूणां मण्डनं कृत्वा तत्र दत्त्वा वरासनम् ॥
तत्रोपवेशयेद्धात्रीं धृतशुक्लाम्बरां तथा ।
अलंकृतं तदुत्सङ्गे बालं धृत्वा तु साऽन्विता ॥
धृतस्य निश्चलं सम्यगलक्तकरसाङ्किते ।
विध्येदनावृते देशे सकृदेवात्र लाघवात् ॥
प्राग्दक्षिणोऽथ वामोऽस्य भिषग्वामस्तु योषितः ।
शिशोर्विवर्धनं कार्यं यावदाभरणक्षमम् ॥
कर्णवेधदिने विप्राः सांवत्सरचिकित्सकौ ।
पूज्याश्चाविधवा नार्यः सुहृदश्च तथा द्विजाः " इति ॥

सूर्यचन्द्राभ्यामिति षष्ठ्यर्थे चतुर्थी । मण्डनं संमाननम् । अलंकृतं तदुत्सङ्ग इत्यनन्तरमुपवेशयेदित्यनुपज्यते । सा धात्री । अन्विता सावधाना । निश्चलं यथा स्यात्तथा सम्यक् । अलक्तकरसचिह्निते वेधस्थाने । अनावृतो देशोऽङ्गणादिस्तत्रोपविष्टो भिषग्वेधकः । लाघवेन कौशल्येन । प्राक्पूर्वं दक्षिणः । अथानन्तरं वामः । अस्य शिशोः पुंसः । योषितः स्त्रियास्तु वामः पूर्वम् । अर्थादनन्तरं दक्षिणः । एवं क्रमेण वेधयेदिति प्राग्दक्षिणोऽथ वामोऽस्येत्यादेरर्थः । शिशोरित्यनन्तरं कर्णच्छिद्रयोरिति शेषः । सांवत्सरिको(रो) दैवज्ञः । चिकित्सको वेधकः ।

देवलः—" कर्णरन्ध्रे रवेश्छाया न विशेदग्रजन्मनः ।
तं(तां) दृष्ट्वा विलयं यान्ति पुण्यौघाश्च पुरातनाः " इति ॥

एतच्च पुरुषपरं द्रष्टव्यम् ।

## अथ प्रयोगः ।

जन्मदिनाद्दशमे द्वादशे षोडशे वा दिवसे सप्तमाष्टमदशमद्वादशान्यतममासि द्वितीयाद्यष्टान्तान्यतमवत्सरे वा फाल्गुनमीनार्करहितचैत्रधनुरर्करहितपौषबोधिन्युत्तरभूतकार्तिकान्यतममासे, एतेषु मासेषु सर्वथैवासंभवे मीनार्कविशिष्टचैत्रधनुरर्कविशिष्टपौषशयन्यादिबोधिन्यन्तमासव्यतिरिक्तमासे, एकादश्यष्टमीपर्व-

रिक्ताकृष्णपक्षैकादश्यादिपर्वदिनव्यतिरिक्तायां व्यतीपातविष्ट्यादिरहितायां तिथौ गुरुशुक्रबुधसोमवारान्यतमे वारे मृगशीर्षार्द्रापुष्योत्तरा(र)फल्गुनीहस्तचित्रोत्तराषाढाश्रवणधनिष्ठोत्तरा(र)प्रोष्ठपदापुनर्वसुस्वातीरेवत्यश्विन्यन्यतमनक्षत्रे वृषभमिथुनकर्ककन्यातुलाधनुर्मीनान्यतमलग्ने, एतदसंभवे सिंहवृश्चिककुम्भव्यतिरिक्ते मेषमकरान्यतरलग्ने वाऽष्टमस्थग्रहरहिते द्वितीयादिवर्षेषु कर्णवेधक्रियायां जन्ममासव्यतिरिक्तोक्तमासे ज्योतिर्विदादिष्टे शुभे काले पूर्वाह्ण एव गणपतिपूजनं कृत्वा केशवशिवब्रह्मचन्द्रसूर्येन्द्रादिदिगीशनासत्यसरस्वतीकुलदेवतागोब्राह्मणान्गुरूंश्च यथाविभवं संपूजयेत् ।

भद्रं कर्णेभिरित्यस्य मन्त्रस्यारुणाः काण्डऋषयः । देवा देवता । त्रिष्टुप्छन्दः । शिशोः कर्णद्वयस्याभिमन्त्रणे विनियोगः । ‘ॐ भद्रं कर्णेभिः शृणु० यदायुः’ इति मातुरुत्सङ्गस्थस्यालंकृतस्य प्राङ्मुखस्योदङ्मुखस्य वा शिशोर्मन्त्रावृत्त्या दक्षिणं वामं कर्णं चाभिमन्त्रयते । स्त्रियाः कर्णवेधने नाभिमन्त्रणम् ।

ततः शिशोः कुशलेन वेधकेनाङ्गणादौ स्थित्वा सुवर्णाद्यन्यतमसूच्याऽलक्तकाङ्कितप्रदेशे दक्षिणं कर्णं वेधयेत् । एवं वामम् । कुमार्यास्तु पूर्वं वामवेधनं पश्चाद्दक्षिणवेधनम् । वेधनक्षत्रात्तृतीयनक्षत्र उष्णोदकेन क्षालनं कार्यम् । स्त्रिया यथाऽऽभरणधारणक्षमता भवति तथा वर्धनीयौ । पुंसस्तु सूर्यरश्मिप्रवेशयोग्यरन्ध्रपर्यन्तं वर्धनीयौ । लम्बकर्णता तु निषिद्धा ।

ततस्तस्मिन्नेव दिने दैवज्ञं वेधकं सौभाग्यवतीः स्त्रियः सुहृदो द्विजांश्च संपूज्य विप्राशिषो गृह्णीयात् । अष्टमे वर्षे कर्णवेधक्रियायां चूडाकर्मापि तदनन्तरमेव, तस्मिन्नेव वर्ष उपनयनेन सह पृथग्वेति द्रष्टव्यम् । स्त्रीणां तु नासिकाभरणधारणार्थं नासिकावेधनं विवाहानन्तरं क्वचिद्देशे कुर्वन्ति क्वचित्तत्पूर्वम् । अत्र सुमुहूर्तावलोकनं ज्योतिर्विद्भ्योऽवधार्य कर्तव्यम् । इति कर्णवेधनम् ।

## अथ ताम्बूलभक्षणम् ।

चण्डेश्वरः—“ सार्धमासद्वये दद्यात्ताम्बूलं प्रथमं शिशोः ।
कर्पूरादिकसंमिश्रं विलासाय हिताय च ॥
मूलार्कचित्रकरतिष्यहरीन्द्रभेषु पौष्णे तथा मृगशिरोदितिवासवेषु ।
अर्केन्दुजीवभृगुबोधनवासरेषु ताम्बूलभक्षणविधिर्मुनिभिः प्रदिष्टः ” इति ॥

चित्रशब्देन चित्रा । बोधनो बुधः । इति ताम्बूलभक्षणम् ।

# अथ नवनीतप्राशनम्।

श्रीधरः—" विधातृपुष्योत्तरवायुपौष्णहरित्रयादित्यशशाङ्कभेषु।
शुभोदये चैव तथा सुरेज्यभृग्वब्जवारेषु शुभे च पक्षे॥
मातुः शिशोश्चेन्दुबलं विचार्य पूर्वाह्णकाले च शुभे मुहूर्ते।
शिशोः प्रदेयं नवनीतमत्र मासे तृतीयेऽपि समे दिने च " इति॥

विधातृशब्देन रोहिणी। अब्जश्चन्द्रः। शुभः पक्षः शुक्लपक्षः।

# अथाऽऽयुर्वर्धापनम्।

तत्रोक्तमादित्यपुराणे—" सर्वैश्च जन्मदिवसे स्नातो मङ्गलवारिभिः।
गुरुदेवाग्निविप्रांश्च पूजयेत्तु प्रयत्नतः॥
स्वनक्षत्रं वित्तपं च तथा देवं प्रजापतिम्।
संपूज्य भानुं विघ्नेशं मार्कण्डेयं मुनिं तथा॥
सतिलं गुडसंमिश्रमञ्जल्यर्धमितं पयः।
पिबेदायुष्यवृद्ध्यर्थं ततो दद्यात्तिलान्घृतम् " इति॥

सर्वैरित्यत्र बान्धवैरिति शेषः। स्नातः स्नापितः। अथवा बान्धवैः सह स्नात इत्यर्थः। मङ्गलैर्युक्तानि वारीणि मङ्गलवारीणि तैः। पुष्पाक्षतलाजा मङ्गलानि। पुष्पयुक्तमेकं वारि। अक्षतयुक्तमेकम्। लाजयुक्तमेकम्। तत्तन्मङ्गलपदार्थयोगकृतो वारिभेदः। पुष्पाक्षतलाजमिश्रितमेकस्मिन्पात्रे संभरणीयम्। एवमेवान्यस्मिन्पात्रद्वये, इत्येवं वा मङ्गलवारिबहुत्वं संपादनीयम्। चकारोऽवधारणार्थः। स च स्नात इत्यनन्तरं योज्यः। जन्मदिवसे सर्वैर्मङ्गलवारिभिः स्नात एव गुर्वादीन्पूजयेदित्यर्थः। अथवाऽलंकारधारणकुलदेवतानमस्कारसमुच्चयार्थः। गुरुदेवाग्निविप्रांश्चेत्यत्रत्यश्चकारः कुलदेवताग्रहणार्थः।

" गुरुदेवाग्निविप्रांस्तु पूजयेत्कुलदेवताम् "।

इत्यायुर्वर्धापनं प्रकृत्य ब्राह्मोक्तेः।

मृत्युंजयपूजनमपि कर्तव्यमित्युक्तं ब्राह्म एव—

" मृत्युंजयं समभ्यर्च्य तथा नक्षत्रदेवताम्।
मार्कण्डेयं च द्रौण्यादीन्संपूज्य सगुडं पयः॥
सतिलं प्राशयेदायुरभिवृद्ध्यर्थमेव तु " इति॥

अञ्जल्यर्धमितमिति न्यूनत्वव्यावृत्त्यर्थं, तेनाधिकपाने न क्षतिरिति केचित्। नियम इत्यन्ये।

भविष्ये—" प्रतिसंवत्सरं कुर्यान्मार्कण्डेयस्य पूजनम् ।
द्रौण्यादींश्च तथाऽभ्यर्च्य पाद्यगन्धादिभिस्ततः ॥
पुष्पाञ्जलिं समर्प्याथ प्रार्थयेद्वरमुत्तमम् ।
ब्राह्मणेभ्यस्ततो दद्यात्तिलान्क्षीरं घृतं गुडम् ॥
नीराजितो ब्राह्मणांश्च तोषयेद्भोजनादिभिः " इति ॥

प्रतिसंवत्सरमितिवचनान्नित्याधिकारः । द्रौणिरश्वत्थामा । नीराजित इत्यत्र सुवासिनीभिरिति शेषः । ब्राह्मणांश्चेत्यत्र चकारः सुवासिनीग्रहणार्थः । आदिशब्देन दक्षिणानमस्कारादिग्रहणम् ।

व्यवहारनिर्णये—" नवाम्बरधरो भूत्वा पूजयेच्च चिरायुषम् ।
मार्कण्डेयं नरो भक्त्या पूजयेत्प्रयतस्तदा ॥
ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम् ।
प्रह्लादं च हनूमन्तं विभीषणमथार्चयेत् ॥
स्वनक्षत्रं[1] जन्मतिथिं प्राप्य संपूजयेन्नरः ।
षष्ठीं च दधिभक्तेन वर्षे वर्षे पुनः पुनः " इति ॥

ब्रह्मपुराण आयुर्वर्धापनं प्रकृत्य—

" पूर्वाह्णे चैव जन्मर्क्षे स्नात्वा नद्यां नरोत्तमः ।
मध्वाज्यदधिसंयुक्ता दूर्वा मृत्युंजयेन च ॥
जुहुयाद्वै सहस्रं तु शतमष्टोत्तरं तु वा " इति ।

मातृदत्तेन तु—इह केचिज्जन्मनक्षत्रे प्राक्संवत्सरात्प्रतिमासं नक्षत्रहोममिच्छन्ति तत ऊर्ध्वं संवत्सरे संवत्सर इति जन्मनक्षत्रे नक्षत्रदेवताको होम उक्तः सोऽपि कार्यः । इदं च मलमासे न कार्यम् ।

" उपाकर्म तथोत्सर्गः प्रसवाहोत्सवोऽष्टकाः ।
मासवृद्धौ परे कार्या वर्जयित्वा तु पैतृकम् " इति पराशरोक्तेः ।

प्रसवाहे वर्धापनकर्मप्रयुक्त उत्सवः प्रसवाहोत्सव इत्यर्थः । अस्मिन्दिने वर्ज्यान्युक्तानि स्कान्दे—

" खण्डनं नखकेशानां मैथुनाध्वगमौ तथा ।
आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत् " इति ॥

अध्वगमः प्रवासः । मैथुननिवृत्तौ श्रीवृद्धिरिति रुद्रधरः । आमिषत्यागे जन्मान्तरीयश्रोत्रियत्वं फलमिति निबन्धकारा इति सदानन्दकीर्तिचन्द्रोदये ।

---

[1] छ. च. 'क्षत्रज' ।

वृद्धमनुः—" मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा " इति ॥

मरीचिः—" सप्तम्यां रविवारे च गृहे जन्मदिने तथा ।
भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् " इति ॥

भृत्यपुत्रकलत्रार्थीतिश्रवणादेतत्कामस्यैव पुरुषस्य निषेधो नान्यस्येति नवीनाः । न कुर्यात्तिलतर्पणमिति तिलयुक्ततर्पणस्यैव निषेधोऽयं न तु केवलतर्पणस्येति द्रष्टव्यम् ।

दीपिकायाम्—" कृतान्तकुजयोर्वारे यस्य जन्मतिथिर्भवेत् ।
अनृक्षयोगसंप्राप्तौ विघ्नस्तस्य पदे पदे " इति ॥

कृतान्तः शनिः । कुजो भौमः । अनृक्षयोगो जन्मतिथौ जन्मर्क्षाभावः । एतद्विघ्नपरिहारार्थं वारयोगानुसारेण शनिमन्त्रजपो भौममन्त्रजपो वाऽष्टोत्तरसहस्रं कर्तव्यः ।

" यदि जन्मदिने मन्दो भौमो वा न च जन्मभम् ।
प्रोक्तं तत्र महाविघ्नं तन्नाशाय समाचरेत् ॥
शनिमन्त्रजपं भूमिपुत्रमन्त्रजपं तु वा ।
वारयोगानुसारेण ह्यष्टाधिकसहस्रकम् "

इति ज्योतिःसागरवचनात् ।

ज्योतिर्ग्रन्थे—" सौरारयोर्दिने मुक्ता देयाऽनृक्षे तु काञ्चनम् " इति ।

जपेन सहैतद्दानस्य विकल्पः समुच्चयो वा ।

जन्मतिथेर्दिनद्वयसत्त्वे निर्णयो बृहद्राजमार्तण्डे—

" घस्रद्वये जन्मतिथिर्यदा स्यात्कुर्यात्तदा जन्मभसंयुतां तु ।
असंगताऽनेन दिनद्वये चेत्पूज्या परा या भवतीह यत्नात् " इति ॥

घस्रो दिनम् । नक्षत्रं तूदयव्यापि ग्राह्यम् । तथा च सदानन्दकीर्तिचन्द्रोदये बौधायनः—

" यस्मिन्नुदेति सविता तन्नक्षत्रदिनं स्मृतम् " इति ।

तथा च नक्षत्रयुक्तपूर्वाह्णवर्तितिथिग्रहणं, तदसत्त्वे पूर्वाह्णगामिनी ग्राह्या । दिनद्वये नक्षत्रयोगेऽपि परैव ।

तदुक्तं कृत्यतत्त्वार्णवे—

" युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया ।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता " इति ॥

पूर्वाह्णोऽत्र त्रेधा[1] विभक्तस्य दिवसस्य पूर्वभागः । अत्र सौरमानेन वत्सर-मासदिनानि ग्राह्याणीति ज्योतिर्ग्रन्था इति द्योते । चान्द्रमानेनेति सदानन्द-कीर्तिचन्द्रोदये ।

"प्रतिसंवत्सरं यत्नात्कर्तव्यश्च महोत्सवः" इतिवचनात्

"प्रतिसंवत्सरं कुर्यान्मार्कण्डेयस्य पूजनम्" ।

इति पूर्वोदाहृतभविष्यवचनाच्च नित्याधिकारः । महोत्सवः स्वेष्टदेवता-मुद्दिश्य नृत्यगीतवाद्यादिपूर्वकपूजारूपः कर्तव्य इत्यर्थः । इयं च पूजा षोडशव-र्षपर्यन्तं पित्रादिभिः कार्या । ततः स्वयं कुर्यादिति सदानन्दकीर्तिचन्द्रोदये ।

## अथाऽऽदित्यपुराणभविष्यपुराणब्रह्मपुराणमातृ-दत्तोक्तविधीनेकीकृत्य प्रयोगः ।

कर्ता कृतनित्यक्रियः पुष्पाक्षतलाजात्मकमङ्गलद्रव्ययुतवारिभिः स्नातः सर्वौषधियुतजलपूरितसुभूषितकलशोदकेन च शिशुं स्नापयित्वा शुक्लाम्बरध-रोऽलंकृतः कौतुकमाबध्य प्राङ्मुख उपविश्य स्वस्य दक्षिणतो गृहीतबालकां भार्यामुपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्य शिशोरायु-रभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमायुर्वर्धापनाख्यं कर्म करिष्य इति संकल्प्य गणपतिपूजनपुण्याहवाचनमातृकापूजननान्दीश्राद्धानि कृत्वोद्धननादिविधि-[2] नाऽग्न्यायतनसंस्कारं विधाय तत्र बलवर्धननामानं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय अग्न एहीत्यादि प्राणायामान्तं कृत्वा, आयु-र्वर्धापनहोमकर्मणि या यक्ष्यमाणा देवतास्ताः परिग्रहीष्यामीत्यादि प्रसाधनी-देव्यन्तं व्याहृत्यन्तं वोक्त्वा प्रधानहोमे मृत्युंजयं मृत्युंजयमन्त्रेणाष्टोत्तरसहस्रसं-ख्याभिरष्टोत्तरशतसंख्याभिर्वा मध्वाज्यदध्यक्तदूर्वाहुतिभिर्यक्ष्ये । अमुकजन्म-नक्षत्रदेवतामेकया चर्वाहुत्या यक्ष्ये । जन्मनक्षत्रोपहोमदेवताश्चैकैकयाऽऽज्या-हुत्या यक्ष्ये । अग्निं स्विष्टकृतं हुतशेषाहुत्या[3] यक्ष्य इत्यादि । व्याहृत्यन्तत्व-पक्षे—अङ्गहोमे वरुणं द्वाभ्यामित्यादि राष्ट्रभृदन्तमुक्त्वा जन्मनक्षत्रोपहोमदेवता-श्चैकैकयाऽऽज्याहुत्या यक्ष्य इत्युक्त्वाऽग्निं स्विष्टकृतं हुतशेषाहुत्या यक्ष्य इत्यादि । पात्रासादने स्रुवं दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं चरुस्थालीं मेक्षणं शूर्पं कृष्णाजिनमुलूखलं मुसलमिध्मं बर्हिः संमार्गदर्भानवज्व-लनदर्भानाज्यं दूर्वा मधु दधि चेति युगपदेव यथासंभवमाज्यं दूर्वा मधु दधि चैवाऽऽसादयेत्[4] । मेक्षणस्य प्रहरणपक्षे मुसलासादनोत्तरमुपवेषमेक्षणयोरा-

---

१ क. द्वेधा । २ ख. ङ. च. °त्वोल्लेखना° । ३ क. °षाच्चर्वाहु° । ४ ङ. च. °धि चेत्यासा° ।

सादनम् । यद्यपि मेक्षणस्यैव स्वलोपेन विनियोजकत्वं नोपवेषस्य तथाऽपि दृद्वतार्थमुपवेषस्य मेक्षणसाहित्यम् । वार्क्षत्वसामान्यादुपवेषस्यैव मेक्षणसाहित्यं नान्यस्य चरुस्थाल्याद्यन्यतमस्य पात्रस्य ।

न च दर्वीप्रणीताप्रणयनप्रोक्षणीपात्रोलूखलमुसलेध्मानां मध्ये यस्य कस्यचित्पात्रस्यापीच्छातः साहित्यमस्तु वार्क्षत्वसामान्यस्यैतेष्वपि सत्त्वादिति वाच्यम् । दर्व्यादीनां बद्धक्रमत्वेन मेक्षणसाहित्यासंभवात् । स्रुवस्य तु दर्व्या सहैवाऽऽसादनं भवति । श्रौते स्रुचा सहाऽऽसादनस्य दृष्टत्वात् । दर्व्याः स्रुक्स्थानीयत्वात् । प्रोक्षणीपात्रस्य सर्वपात्रप्रोक्षणसाधनत्वेनाभ्यर्हितत्वात्सर्वार्थिकपात्रासादनपूर्वभावित्वं प्रोक्षणीपात्रासादने । न चैवं स्रुवासादनपूर्वभावित्वं प्रोक्षणीपात्रासादनस्य कुतो न कल्प्यत इति शङ्कनीयम् । कण्ठरवोक्तपात्रव्यतिरिक्तपात्रासादनप्रापकस्य येन चार्थ इति वचनस्य दर्वीं कूर्चमाज्यस्थालीं प्रणीताप्रणयनमिति कण्ठरवोक्तपात्रासादनानन्तरभूतत्वेनाऽऽर्थिकपात्रासादनस्य कण्ठरवोक्तपात्रासादनपूर्वभावित्वस्य वक्तुमशक्यत्वात् । शूर्पस्यैव कृष्णाजिनेन साहित्यं शम्याया अत्राभावात् । एकार्थसंबद्धत्वाच्च । एवमुलूखलमुसलयोरपि द्रष्टव्यम् । इध्मस्य बर्हिःसाहित्यं श्रौते दृष्टत्वात् । तस्मादर्थादुपवेषस्यैव मेक्षणसाहित्यं सिद्धं भवति । एवं पात्राण्यासाद्य ब्रह्मवरणादिचरुकल्पेन चरुं श्रपयित्वा स्रुवदर्व्यौ संमृज्याऽऽज्यसंस्कारं कुर्यात् । तत्र पर्यग्निकरणकाले चरुदूर्वामधुदधिभिः सहाऽऽज्यस्य पर्यग्निकरणमिति विशेषः । ततः परिधीन्परिधाय शृतं चरुमभिघार्योदगुद्वास्य बर्हिषि निधाय मधुना स्थाल्याज्येन दध्ना च दूर्वा अभ्यज्य चरोरुत्तरतो बर्हिषि निधाय परिषेकादि प्रसाधनीदेवीहोमान्तं व्याहृतिहोमान्तं वाऽन्वाधानोत्कीर्तितपक्षानुसारेण कृत्वा प्रधानहोमं कुर्यात् ।

त्र्यम्बकं यजामह इति मृत्युंजयमन्त्रस्य विश्वे देवा ऋषयः । मृत्युंजयो देवता । अनुष्टुप्छन्दः । आयुर्वर्धापनप्रधानदूर्वाहोमे विनियोगः । 'ॐ त्र्यम्बकं यजामहे० तात्स्वाहा' इति मध्वाज्यदध्यक्तदूर्वाहुतीरष्टोत्तरसहस्रमष्टोत्तरशतं वाऽन्वाधानोत्कीर्तितपक्षानुसारेण जुहुयात् । तत्र प्रत्याहुति दूर्वाणां त्रयं त्रयं होतव्यम् ।

ततः स्रुवेण दर्व्यामुपस्तीर्य चरोर्मध्यादङ्गुष्ठपर्वमात्रमवदाय तथैव पूर्वार्धादवदाय स्रुवेणाभिघार्य स्थालीगतं हविः प्रत्यनक्ति । पञ्चावत्ती चेत्पश्चार्धात्तृतीयमवदानम् ।

ततो बालकजन्मनक्षत्रदेवतायाः पुरोनुवाक्यां याज्यां चोक्त्वाऽन्ते स्वाहाकारमुक्त्वा जुहुयात् । तत्राग्निर्नः पातु कृत्तिका इत्यारभ्य नक्षत्रदेवतानां याज्यापुरोनुवाक्याः क्रमेण । तत्राग्निर्नः पात्विति वाक्यचतुष्टयं पुरोनुवाक्या । यस्य भान्तीति तदग्रिमं वाक्यचतुष्टयं याज्या । प्रजापते रोहिणीति तदग्रिमं वाक्यचतुष्टयं पुरोनुवाक्या । रोहिणी देव्युदगादिति तदग्रिमं वाक्यचतुष्टयं याज्या । एवमग्रेऽपि क्रमेण पुरोनुवाक्या याज्याश्च द्रष्टव्याः । प्रकृते पौर्णमास्यमावास्योद्देशेन होमस्याभावात्तदीयाः पूर्णा पश्चा पृथ्वी सुवर्चा निवेशनी यत्ते देवा अदधुरिति पुरोनुवाक्या याज्याश्च त्यक्तव्याः । तत्र यद्बालकजन्मनक्षत्रं तदीयपुरोनुवाक्यायाज्यासंज्ञकमन्त्राभ्यां होमः कार्यः । एतेषां सर्वेषां मन्त्राणां विश्वे देवा ऋषयः । अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः सर्पाः पितरोऽर्यमा भगः सविता त्वष्टा वायुरिन्द्राग्नी मित्र इन्द्रो निर्ऋतिरापो विश्वे देवा विष्णुर्वसवो वरुणोऽज एकपादहिर्बुध्न्यः पूषाऽश्विनौ यम इति क्रमेण सप्तविंशतियाज्यानुवाक्यामन्त्राणां सप्तविंशतिर्देवताः । आद्यायाः पुरोनुवाक्याया अनुष्टुप्छन्दः । आद्याया याज्यायास्त्रिष्टुप्छन्दः । द्वितीयादिपुरोनुवाक्यानां याज्यानां च सर्वेषां(र्वासां) त्रिष्टुप्छन्दः । आयुर्वर्धापनप्रधानचरुहोमे विनियोगः । इत्येतेषां मन्त्राणामृष्यादि । एतन्मध्ये बालकजन्मनक्षत्रमात्रसंबन्धिमन्त्रयोर्ऋषिदेवताछन्दोविनियोगान्स्मृत्वा ताभ्यां मन्त्राभ्यां होमं कृत्वा वारुणीहोमादिराष्ट्रभृदन्तानामन्वाधान उत्कीर्तनं कृतं चेत्तदा राष्ट्रभृदुपहोमान्तमुपहोमाञ्जुहुयात् । तत्र सर्वेषामुपहोममन्त्राणां विश्वे देवा लिङ्गोक्ता [वा] देवता यजूंषि । आयुर्वर्धापनोपहोमे विनियोग इत्यृष्यादि । एतेषूपहोमेषु यद्बालकजन्मनक्षत्रं तत्संबन्ध्युपहोमाञ्जुहुयात्* । तत्र केषांचिन्मते यथालिङ्गं त्यागाः । आर्द्रामघामूलनक्षत्राणां क्रमेण रुद्रपितृनिर्ऋतिदेवत्यत्वात्तद्धोमान्त उदकस्पर्शः कार्यः । एवमार्द्रामघानक्षत्रेष्ट्युपहोमान्तर्गतयो रुद्राय स्वाहा पितृभ्यः स्वाहेति द्वयोरुपहोमयोरप्युदकस्पर्शः ।

ततः स्वजन्मनक्षत्रेष्टिपठितोपहोमान्हुत्वाऽन्वाधाने प्रसाधनीदेव्यन्तमेवो-

* अत्र क. पुस्तकटिप्पण्यां—तद्यथा—ॐ अग्नये स्वाहा, अग्नय इदं न मम । ॐ कृत्तिकाभ्यः स्वाहा कृत्तिकाभ्य इदं न मम । ॐ अम्बायै स्वाहा । ॐ दुलायै स्वाहा । ॐ नितत्न्यै स्वाहा । ॐ अभ्रयन्त्यै स्वाहा । ॐ मेघयन्त्यै स्वाहा । ॐ वर्षयन्त्यै स्वाहा । ॐ चुपुणीकायै स्वाहा । एवमग्रेऽपि प्रतिस्वाहाकारं पृथक्पृथङ्मन्त्रास्तत्तदनुवाकान्ते द्रष्टव्याः । अत्र-त्यानुवाकानां वानी, इति नाम्ना व्यवह्रियते(हारः) । इति वर्तते ।

१ क. भान्त्विति । २ क. पश्चात्पृथ्वी ।

त्कीर्तितं चेत्तदा स्विष्टकृदादिहोमशेषं समापयेत् । व्याहृत्यन्तोत्कीर्तने तु—अग्निहोमादिहुतशेषेण स्विष्टकृद्धोमः । दूर्वाणां नैव स्विष्टकृतम् । न त्रिष्टुद्धोमः । ततो गुरुं देवेभ्यो नम इति देवांश्च संपूज्याग्निं विप्रांश्च पूजयेत् । ततः प्रतिमास्वक्षतपुञ्जेषु वा क्रमेण वक्ष्यमाणदेवता आवाहयेत् ।

त्र्यम्बकं यजामह इत्यस्य विश्वे देवा मृत्युंजयोऽनुष्टुप् । आवाहनादौ विनियोगः । ' ॐ त्र्यम्बकं यजामहे० मृतात् ' ' ॐ मृत्युंजयाय नमः । मृत्युंजयमावाहयामि ' इति प्रतिमायामक्षतपुञ्जे वा मृत्युंजयमावाह्य,

या दिव्या आप इति मन्त्रद्वयस्य विश्वे देवाः पूर्वाषाढानक्षत्रदेवता आपस्त्रिष्टुप् । आवाहनादौ विनियोगः । ' ॐ या दिव्या आपः० याश्च कूप्या या० भवन्तु ' ' पूर्वाषाढानक्षत्रदेवताभ्योऽद्भ्यो नमः पूर्वाषाढानक्षत्रदेवता अप आवाहयामि * ' । 'ॐ अमुककुलदेवतायै नमः, अमुककुलदेवतामावाहयामि । ॐ जन्मनक्षत्राय नमः, जन्मनक्षत्रमावाहयामि । ॐ वित्तपाय नमः, वित्तपमावाहयामि । ॐ देवाय प्रजापतये नमः, देवं प्रजापतिमावाहयामि । ॐ भानवे नमः, भानुमावाहयामि । ॐ विघ्नेशाय नमः, विघ्नेशमावाहयामि । ॐ मार्कण्डेयाय मुनये नमः, मार्कण्डेयं मुनिमावाहयामि । ॐ अश्वत्थाम्ने नमः, अश्वत्थामानमावाहयामि । ॐ बलये नमो बलिमावाहयामि । ॐ व्यासाय नमो व्यासमावाहयामि । ॐ हनूमते नमो हनूमन्तमावाहयामि । ॐ विभीषणाय नमो विभीषणमावाहयामि । ॐ कृपाय नमः कृपमावाहयामि । ॐ परशुरामाय नमः परशुराममावाहयामि । ॐ प्रह्लादाय नमः प्रह्लादमावाहयामि । ॐ षष्ठ्यै नमः षष्ठीमावाहयामि ' इति प्रतिमास्वक्षतपुञ्जेषु वाऽऽवाह्य षोडशोपचारैः संपूज्य नमस्कुर्यात् । षष्ठ्यै दधिभक्तनैवेद्यम् । ततस्तदुत्तरतः कलशमभिषेकार्थं स्थापयेत् । मही द्यौः पृथिवीत्यादि । तत्र वरुणमावाह्य पूजयेत् ।

" अस्मिञ्जन्मदिने भक्त्या पूजितोऽसि मया गुरो ।
प्रपन्नः शरणं त्वाऽहं दीर्घमायुः प्रयच्छ मे " इति गुरोः प्रार्थना ।

" अस्मिञ्जन्मदिने भक्त्या भो देवाः पूजिता मया ।
शरणं वः प्रपन्नोऽस्मि दीर्घमायुः प्रयच्छत " इति देवानां प्रार्थना ।

" अस्मिञ्जन्मदिने भक्त्या पूजितोऽसि मयाऽनल ।
प्रपन्नः शरणं त्वाऽहं दीर्घमायुः प्रयच्छ मे " इत्यग्नेः प्रार्थना ।

---

* अत्र क. पुस्तकटिप्पण्याम्—" एतदब्देवतावाहनलेखनं नक्षत्रान्तरदेवतानामप्युपलक्षणं न स्वस्वजन्मनक्षत्रदेवताया आवाहनमत्र स्थले कर्तव्यमिति ज्ञेयम् " इति वर्तते ।

ततो बालकजन्मनक्षत्रदेवतायाः पुरोनुवाक्यां याज्यां चोक्त्वाऽन्ते स्वाहाकारमुक्त्वा जुहुयात् । तत्राग्निर्नः पातु कृत्तिका इत्यारभ्य नक्षत्रदेवतानां याज्यापुरोनुवाक्याः क्रमेण । तत्राग्निर्नः पात्विति वाक्यचतुष्टयं पुरोनुवाक्या । यस्य भान्तीति तदग्रिमं वाक्यचतुष्टयं याज्या । प्रजापते रोहिणीति तदग्रिमं वाक्यचतुष्टयं पुरोनुवाक्या । रोहिणी देव्युदगादिति तदग्रिमं वाक्यचतुष्टयं याज्या । एवमग्रेऽपि क्रमेण पुरोनुवाक्या याज्याश्च द्रष्टव्याः । प्रकृते पौर्णमास्यमावास्योद्देशेन होमस्याभावात्तदीयाः पूर्णा पश्चा पृथ्वी सुवर्चा निवेशनी यत्ते देवा अदधुरिति पुरोनुवाक्या याज्याश्च त्यक्तव्याः । तत्र यद्बालकजन्मनक्षत्रं तदीयपुरोनुवाक्यायाज्यासंज्ञकमन्त्राभ्यां होमः कार्यः । एतेषां सर्वेषां मन्त्राणां विश्वे देवा ऋषयः । अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः सर्पाः पितरोऽर्यमा भगः सविता त्वष्टा वायुरिन्द्राग्नी मित्र इन्द्रो निर्ऋतिरापो विश्वे देवा विष्णुर्वसवो वरुणोऽज एकपादहिर्बुध्न्यः पूषाऽश्विनौ यम इति क्रमेण सप्तविंशतियाज्यानुवाक्यामन्त्राणां सप्तविंशतिर्देवताः । आद्यायाः पुरोनुवाक्याया अनुष्टुप्छन्दः । आद्याया याज्यायास्त्रिष्टुप्छन्दः । द्वितीयादिपुरोनुवाक्यानां याज्यानां च सर्वेषां(वासां) त्रिष्टुप्छन्दः । आयुर्वर्धापनप्रधानचरुहोमे विनियोगः । इत्येतेषां मन्त्राणामृष्यादि । एतन्मध्ये बालकजन्मनक्षत्रमात्रसंबन्धिमन्त्रयोर्ऋषिदेवताछन्दोविनियोगान्स्मृत्वा ताभ्यां मन्त्राभ्यां होमं कृत्वा वारुणीहोमादिराष्ट्रभृदन्तानामन्वाधान उत्कीर्तनं कृतं चेत्तदा राष्ट्रभृदुपहोमान्तमुपहोमाञ्जुहुयात् । तत्र सर्वेषामुपहोममन्त्राणां विश्वे देवा लिङ्गोक्ता [वा] देवता यजूंषि । आयुर्वर्धापनोपहोमे विनियोग इत्यृष्यादि । एतेषूपहोमेषु यद्बालकजन्मनक्षत्रं तत्संबन्ध्युपहोमाञ्जुहुयात्* । तत्र केषांचिन्मते यथालिङ्गं त्यागाः । आर्द्रामघामूलनक्षत्राणां क्रमेण रुद्रपितृनिर्ऋतिदेवत्यत्वात्तद्धोमान्त उदकस्पर्शः कार्यः । एवमार्द्रामघानक्षत्रेष्ट्युपहोमान्तर्गतयो रुद्राय स्वाहा पितृभ्यः स्वाहेति द्वयोरुपहोमयोरप्युदकस्पर्शः ।

ततः स्वजन्मनक्षत्रेष्टिपठितोपहोमान्हुत्वाऽन्वाधाने प्रसाधनीदेव्यन्तमेवो-

---

* अत्र क. पुस्तकटिप्पण्यां—तद्यथा—ॐ अग्नये स्वाहा, अग्नय इदं न मम । ॐ कृत्तिकाभ्यः स्वाहा कृत्तिकाभ्य इदं न मम । ॐ अम्बायै स्वाहा । ॐ दुलायै स्वाहा । ॐ नितत्न्यै स्वाहा । ॐ अभ्रयन्त्यै स्वाहा । ॐ मेघयन्त्यै स्वाहा । ॐ वर्षयन्त्यै स्वाहा । ॐ चुपुणीकायै स्वाहा । एवमग्रेऽपि प्रतिस्वाहाकारं पृथक्पृथङ्मन्त्रास्तत्तदनुवाकान्ते द्रष्टव्याः । अत्रत्यानुवाकानां वानी, इति नाम्ना व्यवह्रियते(हारः) । इति वर्तते ।

१ क भान्त्विति । २ क. पश्चात्पृथ्वी ।

त्कीर्तितं चेत्तदा स्विष्टकृदादिहोमशेषं समापयेत् । व्याहृत्यन्तोत्कीर्तने तु—अङ्गहोमादिहुतशेषेण स्विष्टकृद्धोमः । दूर्वाणां नैव स्विष्टकृतम् । न त्रिष्टुद्गम होमः । ततो गुरुं देवेभ्यो नम इति देवांश्च संपूज्याग्निं विप्रांश्च पूजयेत् । ततः प्रतिमास्वक्षतपुञ्जेषु वा क्रमेण वक्ष्यमाणदेवता आवाहयेत् ।

त्र्यम्बकं यजामह इत्यस्य विश्वे देवा मृत्युंजयोऽनुष्टुप् । आवाहनादौ विनियोगः । ' ॐ त्र्यम्बकं यजामहे० मृतात् ' ' ॐ मृत्युंजयाय नमः । मृत्युंजयमावाहयामि ' इति प्रतिमायामक्षतपुञ्जे वा मृत्युंजयमावाह्य,

या दिव्या आप इति मन्त्रद्वयस्य विश्वे देवाः पूर्वाषाढानक्षत्रदेवता आपस्त्रिष्टुप् । आवाहनादौ विनियोगः । ' ॐ या दिव्या आपः० याश्च कूप्या या० भवन्तु ' ' पूर्वाषाढानक्षत्रदेवताभ्योऽद्भ्यो नमः पूर्वाषाढानक्षत्रदेवता अप आवाहयामि * ' । 'ॐ अमुककुलदेवतायै नमः, अमुककुलदेवतामावाहयामि । ॐ जन्मनक्षत्राय नमः, जन्मनक्षत्रमावाहयामि । ॐ वित्तपाय नमः, वित्तपमावाहयामि । ॐ देवाय प्रजापतये नमः, देवं प्रजापतिमावाहयामि । ॐ भानवे नमः, भानुमावाहयामि । ॐ विघ्नेशाय नमः, विघ्नेशमावाहयामि । ॐ मार्कण्डेयाय मुनये नमः, मार्कण्डेयं मुनिमावाहयामि । ॐ अश्वत्थाम्ने नमः, अश्वत्थामानमावाहयामि । ॐ बलये नमो बलिमावाहयामि । ॐ व्यासाय नमो व्यासमावाहयामि । ॐ हनूमते नमो हनूमन्तमावाहयामि । ॐ विभीषणाय नमो विभीषणमावाहयामि । ॐ कृपाय नमः कृपमावाहयामि । ॐ परशुरामाय नमः परशुराममावाहयामि । ॐ प्रह्लादाय नमः प्रह्लादमावाहयामि । ॐ षष्ठ्यै नमः षष्ठीमावाहयामि ' इति प्रतिमास्वक्षतपुञ्जेषु वाऽऽवाह्य षोडशोपचारैः संपूज्य नमस्कुर्यात् । षष्ठ्यै दधिभक्तनैवेद्यम् । ततस्तदुत्तरतः कलशमभिषेकार्थं स्थापयेत् । मही द्यौः पृथिवीत्यादि । तत्र वरुणमावाह्य पूजयेत् ।

" अस्मिञ्जन्मदिने भक्त्या पूजितोऽसि मया गुरो ।
प्रपन्नः शरणं त्वाऽहं दीर्घमायुः प्रयच्छ मे " इति गुरोः प्रार्थना ।

" अस्मिञ्जन्मदिने भक्त्या भो देवाः पूजिता मया ।
शरणं वः प्रपन्नोऽस्मि दीर्घमायुः प्रयच्छत " इति देवानां प्रार्थना ।

" अस्मिञ्जन्मदिने भक्त्या पूजितोऽसि मयाऽनल ।
प्रपन्नः शरणं त्वाऽहं दीर्घमायुः प्रयच्छ मे " इत्यग्नेः प्रार्थना ।

* अत्र क. पुस्तकटिप्पण्याम्—" एतदन्देवतावाहनलेखनं नक्षत्रान्तरदेवतानामप्युपलक्षणं तेन स्वस्वजन्मनक्षत्रदेवताया आवाहनमत्र स्थले कर्तव्यमिति ज्ञेयम् " इति वर्तते ।

"मृत्युंजय महादेव पूजितोऽस्मिन्दिने मया ।
शरणं त्वां प्रपन्नोऽस्मि दीर्घमायुः प्रयच्छ मे" **इति मृत्युंजयस्य ।**

"अस्मिन्दिने पूजिताऽसि जन्मनक्षत्रदेवते ।
प्रपन्नः शरणं त्वाऽहं दीर्घमायुः प्रयच्छ मे" ॥

**इति जन्मनक्षत्रदेवतायाः ।**

**जन्मनक्षत्रदेवतानां बहुत्वे तु—**

"अस्मिन्दिने पूजिताः स्थ जन्मनक्षत्रदेवताः ।
प्रपन्नः शरणं वोऽहं दीर्घमायुः प्रयच्छत" इत्यूहः ।

"कुलरक्षणकर्तृत्वाद्विश्रुता कुलदेवता ।
अस्मिन्दिने पूजिता त्वं दीर्घायुष्यं प्रयच्छ मे" **इति कुलदेवतायाः ।**

"भो जन्मप्रद नक्षत्र अस्मिञ्जन्मदिने मया ।
भक्त्या संपूजितमसि दीर्घमायुः प्रयच्छ मे" **इति जन्मनक्षत्रस्य ।**

"वित्ताधिप कुबेर त्वं यक्षाधिप महामते ।
मह्यं प्रयच्छ दीर्घायुर्धनं धान्यं च वर्धय" **इति वित्तपस्य ।**

"अस्मिञ्जन्मदिने देव पूजितोऽसि प्रजापते ।
दीर्घमायुः प्रयच्छ त्वं पुत्रान्पौत्रांश्च देहि मे" **इति प्रजापतेः ।**

"अस्मिन्दिने मया भक्त्या भानो त्वं पूजितो ह्यसि ।
दीर्घमायुः प्रयच्छ त्वं मां च तेजस्विनं कुरु" **इति भानोः ।**

"त्वं पूजितोऽसि विघ्नेश दीर्घमायुः प्रयच्छ मे ।
अविघ्नेन तु कार्याणि सिद्धिं नय गजानन" **इति विघ्नेशस्य ।**

**ततो मार्कण्डेयं प्रार्थयेत् ।**

"आयुष्प्रद महाभाग सोमवंशसमुद्भव ।
तपोधन मुनिश्रेष्ठ मार्कण्डेय नमोऽस्तु ते ॥
मार्कण्डेय महाभाग प्रार्थये त्वां कृताञ्जलिः ।
चिरंजीवी यथा त्वं भोस्तथा मां कुरु वै मुने" **इति मार्कण्डेयप्रार्थना ।**

"द्रोणपुत्र महाभाग चन्द्रतेजःसमप्रभ ।
भव त्वं मम बलदो ह्यश्वत्थामन्नमोऽस्तु ते" **इत्यश्वत्थामप्रार्थना ।**

"दैत्येन्द्रकुलसंभूत बले दाता हरेः पुरा ।
प्रपन्नः शरणं त्वाऽहं दीर्घमायुः प्रयच्छ मे" **इति बलिप्रार्थना ।**

" भविष्यं सांप्रतं चैव व्यतीतं ज्ञातवान्मुने।
पराशरात्समुद्भूत त्वं व्यासाऽऽयुष्प्रदो भव " इति व्यासप्रार्थना।
" अञ्जनीगर्भसंभूत कपीन्द्रसचिवोत्तम।
रामप्रिय नमस्तुभ्यं हनूमन्रक्ष मां सदा " इति हनूमत्प्रार्थना।
" विभीषण नमस्तुभ्यं लङ्काधिप महामते।
आयुरारोग्यमैश्वर्यं देहि पौलस्त्यनन्दन " इति विभीषणप्रार्थना।
" द्विजेन्द्र भारताचार्य सर्वशास्त्रविशारद।
शरणं त्वां प्रपन्नोऽस्मि कृप त्वं करुणां कुरु " इति कृपप्रार्थना।
" रैणुकेय महावीर्य क्षत्रियान्वयनाशन।
आयुः प्रयच्छ मे राजञ्जामदग्न्य नमोऽस्तु ते " इति परशुरामप्रार्थना।
" वैष्णवेन्द्रासुरेन्द्र त्वं प्रह्लादात्रार्चितो मया।
दीर्घमायुः प्रयच्छ त्वं सदाऽऽह्लादं च देहि मे " इति प्रह्लादस्य।
" शक्तिस्त्वं सर्वदेवानां षष्ठिके पूजिता मया।
दीर्घमायुः प्रयच्छ त्वं बलं पुष्टिं च वर्धय " इति षष्ठ्याः।

ततस्तिलगुडसंमिश्रमञ्जल्यर्धमितं दुग्धं गृहीत्वा—

" सतिलं गुडसंमिश्रमञ्जल्यर्धमितं पयः।
आयुष्यस्याभिवृद्ध्यर्थं पिबामि द्विजसंनिधौ " इति प्राश्नीयात्।

ततो ब्राह्मणेभ्यस्तिलान्क्षीरं घृतं गुडं च दत्त्वा सौभाग्यवतीभिः पुत्रवतीभिः स्त्रीभिर्नीराजित आचाराद्यथाविभवं स्वजनबन्धुसुहृत्पूजां स्ववाहनपूजां च कृत्वा स्थापितकलशोदकेन ब्राह्मणैरभिषेकं कारयित्वा स्थापितदेवतानामुत्तरपूजां विधाय प्रतिमा चेत्तामाचार्याय दत्त्वा ब्राह्मणान्सुवासिनीश्च भोजयित्वा तदाशिषो गृहीत्वा स्वजनबन्ध्वादिभिः सह भुञ्जीयात्। अस्मिन्दिने हविष्याशी भवेत्। अस्मिन्दिने नखकेशनिकृन्तनप्रवासमैथुनकलहादि वर्जयेत्। एवं बालकस्यापि यथायोग्यम्। एतच्च जन्मनक्षत्रे जन्मदिने वाऽर्वाक्संवत्सरात्प्रतिमासं कार्यम्। तत ऊर्ध्वं प्रतिसंवत्सरं बाल्यावस्थायां पित्रादिनैतत्कार्यं तस्यायोग्यत्वात्। योग्यतायां तु स्वस्याऽऽयुर्वर्धापनं स्वेनैव कार्यम्। तत्र ममाऽऽयुरभिवृद्धिद्वारेति संकल्पवाक्य ऊहः। पित्रादिकर्तृके तु मह्यं प्रयच्छ दीर्घायुरित्यत्र, अस्मै प्रयच्छेत्यूहः कार्यः। तथा मामित्यत्र तथेममित्यूहो मार्कण्डेयप्रार्थने। भव त्वं ममेत्यत्र भव त्वमस्येति अश्वत्थामप्रार्थने। 'प्रपन्नः शरणं त्वाऽहं दीर्घमायुः प्रयच्छ मे' इत्यस्मिन्नर्धे 'प्रपन्नः शरणं त्वाऽयं देह्यायुर्दीर्घमस्य भोः' इत्यर्धं बलिप्रार्थने। हनूमन्रक्षेमं

सदेति हनूमत्प्रार्थने । अस्मीत्यत्र, अस्तीति कृपप्रार्थने । आयुः प्रयच्छ म इत्यत्र, आयुः प्रयच्छास्येति परशुरामप्रार्थने । व्यासविभीपणयोर्यथास्थित एव पाठः । पिबामीत्येतस्य स्थाने प्राशयामीत्यूहो दुग्धप्राशने ।

इत्यायुर्वर्धापनप्रयोगः ।

## अथ सूर्यावलोकनम् ।

श्रीधरीये—" मासे तृतीये दिवसे दिनेशं शिशुं चतुर्थे शशिनं च धेनुम् ।
विलोकयित्वा च विधिः(धि)प्रयुक्ते काले गृहान्निष्क्रमणं विदध्यात् " इति ॥

तृतीयपदं देहलीदीपन्यायेनोभयत्रान्वेति । तेन तृतीयमासवत्तृतीयमेव दिनं ग्राह्यम् । तृतीयमासे तृतीयदिवसे सुमुहूर्तेऽस्य शिशोरायुरभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं सूर्यावलोकनसंस्कारं करिष्य इति संकल्प्य गणपतीष्टदेवतापूजनपूर्वकं सोत्सवं शिशुना दिनेशदर्शनं कारयेत् ।

ततश्चतुर्थे मासि शुभे काले चन्द्रं धेनुं च दर्शयेत् । तत्र विधिः सूर्यावलोकनविधिवत् । सूर्यावलोकनसंस्कारमित्येतस्य स्थाने चन्द्रधेन्ववलोकनसंस्कारमिति संकल्पवाक्य ऊहः । अथवा सूर्याद्यवलोकनसंस्कारो निष्क्रमणेन सहैव कार्यः ।

## अथ निष्क्रमणम् ।

बृहस्पतिः—" अथ निष्क्रमणं नाम गृहात्प्रथमनिर्गमः ।
अकृतायां क्रियायां स्यादायुःश्रीनाशनं शिशोः " इति ॥

वाराहे—" द्वादशेऽहनि कर्तव्यं शिशोर्निष्क्रमणं गृहात् " इति ।

द्वादशेऽहनि निष्क्रमणक्रियापक्षे सूर्याद्यवलोकनसंस्कारोऽपकृष्यैव कर्तव्यः । मासे तृतीये दिवस इत्यनन्तरोदाहृतश्रीधरीयवाक्यस्वारस्यात् ।

यमः—" उपनिष्क्रमणं कुर्याच्चतुर्थे मासि सावने " इति ।

मुहूर्तसंग्रहे—" शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।
रिक्तापष्ठयष्टमीदर्शद्वादशीश्च विवर्जयेत् ॥
चत्वार्यर्यमतस्त्रीणि वैश्वात्त्रीणि च बुध्न्यभात् ।
मैत्रमादित्यपुष्यौ च रोहिणी च शुभावहाः ॥
वृषालिमेषा वर्ज्याः स्युस्तथैवाधोमुखानि च ।
सतां तु वारवर्गाश्च शुभदाः सदयास्तथा ॥
उपनिष्क्रमणे शस्ता मातुलो वाहयेच्छिशुम् " इति ।

अर्यमत उत्तरा(र)फल्गुनीतः । वैश्वादुत्तराषाढातः । बुध्न्यभादुत्तरा(र)·

प्रोष्ठपदर्क्षतः । आदित्यं पुनर्वसू[1] । अलिर्वृश्चिकः । अधोमुखानि मूलाश्लेषामिश्रोग्राणि । सतां शुभग्रहाणाम् ।

विधिरत्ने—" दिक्पालचन्द्रसूर्याणां दिशां चैव यथाक्रमम् ।
विधाय पूजनं विप्रान्संभोज्य तदनन्तरम् ॥
शिशोः संरक्षणार्थं तु देवान्संप्रार्थयेत्ततः ।
गृहीत्वा भूषितं बालं बाह्यदेवालयं व्रजेत् ॥
ततः संपूज्य तं देवं रक्षां कुर्याच्छिशोस्ततः ।
भूतेशानं गणेशं च पूजयित्वा प्रतर्पयेत् ॥
देवं प्रदक्षिणीकृत्य प्रणम्य गृहमाव्रजेत् " इति ।

निष्क्रमणसमये मङ्गलदर्शनं[2] कारणीयम् ।

" द्विजांश्चाऽऽदर्शपूर्वाणि मङ्गलानि पुरो नयेत् " इतिवचनात् ।

द्विजानादर्शपूर्वाणि मङ्गलानि च पुरो नयेदित्यन्वयः ।

तानि च विधिरत्न एवोक्तानि—

" दर्पणः कलशः कन्या तथा सुमनसोऽक्षताः ।
दीपमाला ध्वजो लाजाः संप्रोक्तं मङ्गलाष्टकम् ॥
विवाहे निष्क्रमे कार्ये वृद्धौ पूर्ने समागमे ।
उत्सवेषु च यात्रायां प्रशस्तं मङ्गलाष्टकम् " इति ॥

समागमे सुहृद्राजादीनां परस्परं समागमे ।

बौधायनेनात्र सहोमः प्रयोग उक्तः—

" चतुर्थे मास्युपनिष्क्रमणं ब्राह्मणानन्नेन परिविष्य पुण्याह९ स्वस्त्यृद्धिमिति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा स्वस्त्यात्रेयं जुहोति स्वस्ति नो मिमीता० स्वस्ति संबाधेष्वभयं नो अस्तु स्वस्ति न इन्द्रो० बृहस्पतिर्दधात्वित्यष्टाभिरनुच्छन्दसं स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानादथोपनिष्क्रम्य बाह्यानि चित्रियाण्यभ्यर्च्य त्रिवृताऽन्नेन ब्राह्मणान्संपूज्याऽऽशिषो वाचयित्वा प्रदक्षिणीकृत्य स्वान्गृहानानयन्ति " इति ।

ग्रामाद्बहिःस्थापितानि बाह्यानि । चित्रियाणि देवताः । त्रिवृता त्रिप्रकारेण । स्वान्गृहानानयन्तीति बहुवचनेन सर्वैः संबन्धिभिः स्वस्वगृहे शिशोर्नयनं कर्तव्यमिति बोध्यते ।

१ ख. च. °र्वसु । अ° । २ ख. ङ. च. °नं कर° ।

गृह्यपरिशिष्टेऽपि—" एवं निष्क्रमणं चतुर्थे मास्यापूर्यमाणपक्षे पुण्ये नक्षत्रे स्वस्ति वाचयित्वा सुस्नातमलंकृतं कुमारमादाय सह भार्याज्ञातिबान्धवैः पुरंध्रीभिश्च मङ्गलतूर्यघोषेण सशिशुर्गृहान्निष्क्रम्य देवतायतनमेत्य तां देवतामुपहारैरभ्यर्च्याऽऽशिषो वाचयित्वाऽऽयतनं प्रदक्षिणं परीत्य गृहमियात्संबन्धिगृहान्वा नीत्वाऽऽनयेत् " इति ।

## अथ प्रयोगः ।

कर्ता द्वादशेऽहनि सावने चतुर्थे मासि वा शुक्लपक्षे कृष्णपक्षैकादश्यादिपञ्चदिनरिक्तापष्ठ्यष्टमीदर्शद्वादशीव्यतिरिक्ततिथावुत्तरा(र)फल्गुनीहस्तचित्रास्वात्युत्तराषाढाश्रवणधनिष्ठोत्तरा(र)प्रोष्ठपदारेवत्यश्विन्यनूराधापुनर्वसुपुष्यरोहिण्यन्यतमे नक्षत्रे चन्द्रबुधगुरुशुक्रान्यतमे वारे मेषवृषभवृश्चिकव्यतिरिक्ते लग्ने विष्ट्यादिरहिते शुभे काले सभार्यः सशिशुः कृताभ्यङ्गस्नानः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्य शिशोरायुरभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं सूर्याद्यवलोकनं निष्क्रमणं च सह करिष्य इति संकल्प्य गणपतिपूजनादिनान्दीश्राद्धान्तमुक्तरीत्या कुर्यात् । तत्र सविता प्रीयतामिति विशेषः ।

ततः प्राच्याद्यष्टदिक्पालानां चन्द्रसूर्ययोर्दिशां च नाममन्त्रैर्यथाक्रमं पूजां कृत्वा ब्राह्मणान्संभोज्य शिशुमलंकृत्य सूर्यस्य चन्द्रस्य धेनोश्च दर्शनं कारयित्वा मन्त्रान्पठेत् ।

" दिक्पालानां च सूर्येन्द्वोः प्राच्यादीनां दिशां तथा ।
निक्षेपार्थमिमं दत्तं ते त्वां रक्षन्तु सर्वदा ॥
अप्रमत्तं प्रमत्तं वा दिवारात्रमथापि वा ।
रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः "

इति शिशुरक्षणार्थं देवान्संप्रार्थ्य द्विजज्ञातिबान्धवैः पुरंध्रीभिर्मङ्गलतूर्यघोषेण च सहितो दर्पणकलशकन्यापुष्पाक्षतदीपमालाध्वजलाजात्मकमङ्गलाष्टकद्रव्यपुरःसरं विष्णुशिवगणेशाद्यन्यतमालयं गत्वा तत्र देवं संपूज्य नानोपहारान्निवेद्य गोमयानुलिप्ते चतुरश्रे देशे धान्यानि निधाय तत्र शिशुमुपवेश्य मन्त्रेण रक्षां कुर्यात् ।

त्र्यम्बकमित्यस्य मृत्युंजयमन्त्रस्य विश्वे देवास्त्र्यम्बको मृत्युंजयोऽनुष्टुप् । बालकरक्षणे विनियोगः । ' ॐ ह्रौं ॐ जूं ॐ सः ॐ भूः ॐ भुवः ॐ सुवः ॐ

१ च ह्रीं ।

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् । ॐ सुवः ॐ भुवः ॐ भूः ॐ सः ॐ जूं ॐ ह्रौं ॐ ' इत्येवंरूपं मृतसंजीवनमन्त्रं पठन्विभूत्याऽक्षतैर्वा मूर्ध्नि ललाटे च रक्षां कुर्यात् ।

ततो भूतेशानगणेशयोः पूजनं कृत्वाऽपूपाद्युपहारान्समर्प्य[1] शिशुं भक्ष्यादिभिस्तोषयित्वा विप्राशिषो गृहीत्वा देवं प्रणम्य प्रदक्षिणं[2] च शिशुना सहितः कृत्वा देवतायतनं प्रदक्षिणं परीत्य स्वगृहमागच्छेत् । अथवा मातुलादिगृहं प्रत्यादौ नीत्वा स्वगृहं प्रत्यानयेत् ।

ततो ब्राह्मणेभ्यो दक्षिणां दत्त्वा संभोज्य भूयसीं दक्षिणां दत्त्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत् ।

## अथ बौधायनसूत्रोक्तहोमसहितः प्रयोगः ।

संकल्पप्रभृति नान्दीश्राद्धान्तं कृत्वोद्धननादिविधिना[3]ऽग्न्यायतनसंस्कारं विधाय तत्र बलवर्धननामानं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्धा एहीत्यादि प्राणायामान्तं कृत्वा निष्क्रमणहोमकर्मणि या यक्ष्यमाणा देवतास्ताः परिग्रहीष्यामीत्यादि प्रसाधनीदेव्यन्तं व्याहृत्यन्तं वोक्त्वा प्रधानहोमे—अश्विनौ भगं देवीमदितिं पूषणं द्यावापृथिव्यौ चाऽऽज्येन, वायुं सोमं भुवनस्य पतिं बृहस्पतिं सर्वगणमादित्यांश्चाऽऽज्येन, विश्वान्देवान्वैश्वानरं वसुमग्निमृभून्देवान्रुद्रं चाऽऽज्येन । उदकस्पर्शः । मित्रावरुणौ पथ्यां रेवतीमदितिं चाऽऽज्येन । इन्द्रं वृद्धश्रवसं पूषणं विश्ववेदसं तार्क्ष्यमरिष्टनेमिं बृहस्पतिं चाऽऽज्येन । देवानाज्येन । तार्क्ष्यमरिष्टनेमिमाज्येन । अंहोमुचमाङ्गिरसं स्वस्त्यात्रेयं तार्क्ष्यं चाऽऽज्येन यक्ष्य इत्युक्त्वा प्रसाधनीदेव्यन्तत्वपक्षे—अग्निं स्विष्टकृतं हुतशेषाहुत्या यक्ष्य इत्यादि, व्याहृत्यन्तत्वपक्षेऽङ्गहोमे वरुणं द्विरित्याद्युक्त्वाऽन्वाधानसमिद्भ्याधानादिप्रसाधनीदेवीहोमान्तं व्याहृतिहोमान्तं वाऽन्वाधानोत्कीर्तितपक्षानुसारेण कृत्वा प्रधानहोमं कुर्यात् । ' ॐ स्वस्ति नो मिमीतामश्विना० पुनेतुना स्वाहा ' अश्विभ्यां भगाय देव्या अदित्यै पूष्णे द्यावापृथिवीभ्यां चेदं न मम । ' ॐ स्वस्तये वायुमु० भवन्तु नः स्वाहा ' वायवे सोमाय भुवनस्य पतये सर्वगणायाऽऽदित्येभ्यश्चेदं न मम । ' ॐ विश्वे देवा नो० पात्वंहसः स्वाहा ' विश्वेभ्यो देवेभ्यो वैश्वानराय वसवेऽग्नय ऋभुभ्यो देवेभ्यो रुद्राय चेदं न मम । उदकस्पर्शः । ' ॐ स्वस्ति मित्रावरुणा० स्वाहा ' मित्रावरुणाभ्यां पथ्यायै रेवत्या अदितये चेदं न मम ।

१ च. हां २ ङ. च. क्षिणां च । ३ ङ. च कृत्वा गोमयोपलेपनोल्लेखना ।

'ॐ स्वस्ति न इन्द्रो वृद्ध० बृहस्पतिर्दधातु स्वाहा' इन्द्राय वृद्धश्रवसे पूष्णे विश्ववेदसे तार्क्ष्यायारिष्टनेमये बृहस्पतये चेदं न मम । 'ॐ स्वस्ति पन्था० संगमेमहि स्वाहा' देवेभ्य इदं न मम । 'ॐ स्वस्त्ययनं तार्क्ष्यं० मिवाऽऽरुहेम स्वाहा' तार्क्ष्यायारिष्टनेमय इदं न मम । 'ॐ अंहोमुच० अस्तु स्वाहा' अंहोमुच आङ्गिरसाय स्वस्त्यात्रेयाय तार्क्ष्याय चेदं न मम । इत्यष्टावाज्याहुतीर्हुत्वाऽङ्गहोमादि स्विष्टकृदादि वा +पूर्वान्तानुसारेण कर्मशेषं समापयेत् ।

ततो ब्राह्मणाय धेनुं दत्त्वाऽग्निं संपूज्य दिगीशपूजनादि पूर्ववत्कुर्यात् ।

इति निष्क्रमणम् ।

## अथ भूम्युपवेशनम् ।

पद्मपुराणे—" पञ्चमे तु तथा मासे भूमौ तमुपवेशयेत् ।
अत्र सर्वे ग्रहाः श्रेष्ठा भौमो राम विशेषतः ॥
तिथिं विवर्जयेद्रिक्तां शस्तानि शृणु भानि मे ।

रामेति श्रोतृसंबोधनम् । मे इत्यनन्तरं गदत इति शेषः । मे इत्यत्रापादानस्य शेषत्वविवक्षायां षष्ठी ।

उत्तरात्रितयं सौम्यं पुष्यर्क्षं शक्रदैवतम् ॥
प्राजापत्यं च हस्ताख्यं शस्तमाश्विनमित्रभे " इति ।

सौम्यं मृगः । शक्रदैवतं ज्येष्ठा । वह्निदैवतमिति पाठे कृत्तिकाः । प्राजापत्यं रोहिणी । आश्विनमश्विनीनक्षत्रम् । मित्रभमनूराधानक्षत्रम् ।

मुहूर्तसंग्रहे—" शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।
रिक्तास्तिथीर्वर्जयित्वा शिष्टाः स्युर्भूमिवेशने " इति ॥

तत्रैव—" वराहं पूजयेद्देवं पृथिवीं च तथा द्विजः ।
पूजनं पूर्ववत्कृत्वा गुरुदेवद्विजन्मनाम् ॥
भूभागमुपलिप्याथ कृत्वा तत्र तु मण्डलम् ।
शङ्खपुण्याहशब्देन तं तत्रैवोपवेशयेत् ॥

तं बालम् । तत्रैव मण्डल एव ।

रक्षैनं वसुधे देवि सदा सर्वगतं शुभे ।
आयुष्प्रमाणं निखिलं निक्षिपस्व हरिप्रिये ॥
अचिरादायुषस्त्वस्य ये केचित्परिपन्थिनः ।
जीवितारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ॥

+ पूर्वोक्तानुसारेणेति क पुस्तकशोधितः पाठः ।

धारिण्यशेषभूतानां मातस्त्वमधिका ह्यसि ।
अजरा चाप्रमेया च सर्वभूतनमस्कृता ॥
त्वमेवाशेषजगतां प्रतिष्ठा चाऽऽश्रया ह्यसि ।
कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम् ॥
तस्योपवेशनं कृत्वा भूमौ ब्राह्मणपूजनम् ।
ततः कृत्वा ततः कार्य उत्सवः पूर्ववद्विजैः " इति ॥

उत्सवो नीराजनमिति व्याख्यातं पारिजाते ।

कर्ता पञ्चमे मासे शुक्लपक्षे कृष्णपक्षैकादश्यादिपञ्चदिनरिक्ताव्यतिरिक्ततिथावुत्तरा(र)फल्गुनीमृगशीर्षपुष्यकृत्तिकाज्येष्ठारोहिणीहस्तोत्तराषाढानूराधोत्तरा(र)प्रोष्ठपदाश्विन्यन्यतमे नक्षत्रे यस्मिन्कस्मिंश्चिद्वारे विशेषतो भौमवारे पूर्वाह्णे चन्द्रतारानुकूले शुभे लग्ने देशकालौ संकीर्त्यास्य शिशोरायुष्याद्यभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं भूम्युपवेशनसंस्कारं करिष्य इति संकल्प्य गणेशपूजनं पुण्याहवाचनं कृत्वा वराहपृथिवीगुरुदेवद्विजान्पूजयित्वा भूमिमुपलिप्य तत्र रङ्गवल्लीमण्डलं कृत्वा शङ्खतूर्यादिमङ्गलघोषे क्रियमाणे पुण्याहशब्देन नीराजितं बालं तस्मिन्मण्डल उपवेशयेत् ।

तत्र मन्त्राः—" रक्षैनं वसुधे देवि सदा सर्वगतं शुभे ।
आयुष्प्रमाणं निखिलं निक्षिपस्व हरिप्रिये ॥
अचिरादायुषस्त्वस्य ये केचित्परिपन्थिनः ।
जीवितारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ॥
धारिण्यशेषभूतानां मातस्त्वमधिका ह्यसि ।
अजरा चाप्रमेया च सर्वभूतनमस्कृता ॥
त्वमेवाशेषजगतां प्रतिष्ठा चाऽऽश्रया ह्यसि ।
कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम् " इति ॥

एतैर्मन्त्रैर्भूमावुपवेशयित्वा(श्य) ब्राह्मणान्संपूज्य बालं पुत्रवतीभिः सुवासिनीभिर्नीराजयित्वाऽऽ(ज्याऽऽ)शिषो वाचयित्वा ब्राह्मणान्संभोज्य कर्मसाद्गुण्याय विष्णुं संस्मरेत् । कुमार्या अप्येवम् । तत्र ' रक्षैनां वसुधे देवि सदा सर्वगतां शुभे ' ' अचिरादायुषस्त्वस्याः ' ' कुमारीं पाहि मातस्त्वम् ' इत्यूहः ।

इति भूम्युपवेशनम् ।

## अथान्नप्राशनम् ।

तत्रेदं गृह्यम्—" अथ षष्ठे मास्यन्नप्राशनमापूर्यमाणपक्षे पुण्ये नक्षत्रे " इति ।

नारदः—" जन्मतो मासि षष्ठे स्यात्सौरेणोत्तममन्नदम् ।
तदभावेऽष्टमे मासे नवमे दशमेऽपि वा ॥
द्वादशे वाऽपि कुर्वीत प्रथमान्नाशनं परम् ।
संवत्सरे वा संपूर्णे केचिदिच्छन्ति पण्डिताः " इति ॥

सौरेण षष्ठेनेत्यन्वयः । न चाप्ययमेव नियमः ।

" बालान्नभोजनविधौ गुरुशुक्रमौढ्यबाल्यप्रयुक्तमशुभं त्वधिमासदोषः ।
नास्त्येव सावनविधाविह मासि षष्ठे युग्मे च मासि परतः शुभचन्द्रपक्षे "

इति विधिरत्ने सावनमानेनापि षष्ठमासस्य विधानात् । शुभ इति चन्द्रविशेषणं चन्द्रानुकूल्यापेक्षणार्थम् । चन्द्रस्य पक्षः शुक्लपक्षः । तत्रापि परतः परस्मिन्पञ्चम्याः परभाग इत्यर्थः । नवममासस्तु स्त्रीविषयः ।

" नरस्यान्नाशने युग्मं स्त्रीणामन्नाशनेऽयुजम् " इति गर्गोक्तेः ।

अयुजमिति पदच्छेदः ।

शङ्खलिखितौ—" संवत्सरेऽन्नप्राशनं दन्तेषु जातेषु वा " इति ।

देवलः—" षष्ठे मास्यष्टमे वाऽथ पुंसां स्त्रीणां च पञ्चमे ।
सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम् " इति ॥

तिथीराह नारदः—" पक्षयोरुभयोरुक्तं कृष्णे चान्त्यत्रिकं विना ।
अयुजस्तिथयः श्रेष्ठा नवमीपर्ववर्जिताः ॥
युग्मासु दशमी प्रोक्ता द्वितीया चान्नभोजने " इति ।

अयुजो विषमाः । वारानाह कश्यपोऽन्नप्राशनं प्रकृत्य—

" सूर्यार्किभौमवारांश्च त्यक्त्वाऽन्यस्मिंस्तु वासरे " इति ।

आर्किः शनिः । नक्षत्राण्याह बृहस्पतिः—

" पौष्णादितीन्दुहस्ताश्वित्वाष्ट्रवासववैष्णवाः ।
रोहिणीमैत्रतिष्याश्च वारुणं चोत्तरात्रयम् ॥
वायव्यं च शुभा ह्येतास्तारा अन्नाशने सदा " इति ॥

श्रीधरीयेऽन्या अप्युक्ताः—

" आदित्यतिष्यवसुसौम्यकरानिलाश्विचित्राजविष्णुवरुणोत्तरपौष्णमित्राः ।
बालान्नभोजनविधौ दशमे विशुद्धे छिद्रां विहाय नवमीं तिथयः शुभाः स्युः" इति ।

आदित्यं पुनर्वसू । वसवः श्रविष्ठाः । सौम्यं मृगशिरः । करो हस्तः । अनिलः स्वाती । अजो ब्रह्मा तन्नक्षत्रं रोहिणी । विष्णुः श्रवणः । वरुणः

शततारकाः । उत्तराशब्देनोत्तरात्रयम् । पौष्णं रेवती । मित्रोऽनूराधाः । अन्यत्प्रसिद्धम् । ज्योतिरर्णवे विशेषः—

"जन्मर्क्षे श्रीक्षयं विद्यात्कर्मर्क्षे चापि सौम्यदृक् ।
आधानर्क्षे च बालानां भोजनं रोगनाशनम्" इति ॥

एतानि तु संग्रहे—

"[1]जन्मर्द्धं जन्मनक्षत्रं दशमं कर्मसंज्ञितम् ।
एकोनविंशमाधानम्" इति ॥

यत्तु—"पट्टबन्धनचौलान्नप्राशने चोपनायने ।
*शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणि"

इति नारदवचनं तत्क्षत्रियविषयम् । पट्टबन्धनसाहचर्यात् । जन्मर्क्षे विकल्प इति प्रयोगपारिजाते । प्राशनविधिमाह वसिष्ठः—

"देवतापुरतस्तस्य धात्र्युत्सङ्गगतस्य च ।
अलंकृतस्य दातव्यमन्नं पात्रे स काञ्चने ॥
मध्वाज्यशर्करोपेतं प्राशयेत्पायसं तु तत्" इति ॥

धात्री माता । स कर्ता । आश्वलायनोऽपि विशेषमाह—

"घृतौदनं तेजस्कामो दध्योदनमिन्द्रियकामो मध्वोदनमायुष्कामो दधिमधुघृतमिश्रमन्नं प्राशयन्सर्वकामो भवतीति विज्ञायते" इति ।

कश्यपसंहितायाम्—

"बालकं प्राङ्मुखं कृत्वा प्राशयेच्च विधानतः ।
स्वर्णदर्व्याऽथवा रौप्यदर्व्या वा मङ्गलस्वनैः" इति ॥

इदं च कुमार्या अप्यमन्त्रकं कार्यम् ।

अत्र जीविकापरीक्षा मार्कण्डेयेनोक्ता—

"देवाग्रतोऽथ विन्यस्य शिल्पभाण्डानि सर्वशः ।
अस्त्राणि चैव शास्त्राणि ततः पश्येत्तु लक्षणम् ॥

* अत्र यद्यपि "अशुभं जन्मनक्षत्रं शुभदं त्वन्यकर्मणि" इत्येव पाठः पुस्तकेषु वर्तते तथाऽपि अयं ग्रन्थकारासंमत एवेति ज्ञेयम् । अन्यथा पूर्वोत्तरग्रन्थासंगतेः । अतः, शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणीति पुरुषार्थचिन्तामणौ पाठ इति क. पुस्तकटिप्पणीस्थ एव पाठोऽन्तः स्थापितः । सर्वपुस्तकस्थपाठस्तु लेखकभ्रान्तिमूलक इति द्रष्टव्यम् ।

१ ङ. च. जन्मभं ।

प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं स्वयं तदा
जीविका तस्य बालस्य तेनैव तु भविष्यति " इति ॥

शिल्पस्य लेखन[स्य]भाण्ड(ण्डं)वस्तु लेखनी मशीपात्रादि । अस्त्रं बाणधनुरादि । शस्त्रं खड्गादि ।

## अथ प्रयोगः ।

जन्मतः षष्ठे मासेऽसंभवेऽष्टमाद्यन्यतमे समे मासे दन्तेषु जातेषु वा पूर्णे संवत्सरे वा शुक्लपक्षेऽन्त्यत्रिकव्यतिरिक्ते कृष्णपक्षे वा नवमीपर्ववर्जितायुग्मतिथौ दशमीद्वितीयान्यतरातिथौ वा चन्द्रबुधगुरुशुक्रान्यतमे वारे रोहिणीमृगशिरःपुनर्वसुपुष्योत्तरा(र)फल्गुनीहस्तचित्रास्वात्यनूराधोत्तराषाढाश्रवणधनिष्ठाशतभिषगुत्तरा(र)प्रोष्ठपदारेवत्यश्विन्यन्यतमे नक्षत्रे ज्योतिर्विदादिष्टे मुहूर्ते कार्यम् । कुमार्यास्तु सप्तमनवमैकादशान्यतमो विषमो मासः षष्ठासंभवे ग्राह्यः । षष्ठे मासि क्रियायां गुरुशुक्रास्तमलमासादिदोषो[1] नास्ति । कर्ता प्राङ्मुख उपविश्य स्वस्य दक्षिणतो भार्यां संस्कार्यं चोपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्य शिशोर्मातृगर्भमलप्राशनेनोनिबर्हणबीजगर्भसमुद्भवैनोनिबर्हणान्नाद्यब्रह्मवर्चसतेजइन्द्रियायुरभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमन्नप्राशनाख्यं कर्म करिष्य इति संकल्प्य गणपतिपूजनपुण्याहवाचनमातृकापूजननान्दीश्राद्धान्युक्तरीत्या कुर्यात् । तत्र सविता प्रीयतामिति विशेषः ।

ततः शुचिनामाऽयमग्निरिति ध्यायन्नौपासनाग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वाऽन्नप्राशनहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा, अङ्गहोमे वरुणं द्विरित्यादि । पात्रासादने दधि मधु घृतं पायसमन्नमाज्यासादनोत्तरं सादयेत् ।

ततो ब्रह्मवरणादि त्रिवृदन्नहोमीयपुण्याहवाचनान्तं कुर्यात् । अस्मिन्पुण्याहवाचने प्रजापतिः प्रीयतामिति विशेषः । नात्र प्रधानहोमः । जयादयः कृताकृताः ।

ततः स्वदक्षिणतो मातुरुत्सङ्गस्थं प्राङ्मुखं शिशुं सुवर्णदर्व्या रौप्यदर्व्या वा मङ्गलघोषपूर्वकमासादितं दधि मधु घृतमिति त्रिवृत्प्रतिमन्त्रं प्राशयति— 'ॐ भूस्त्वयि दधामि ' इति प्रथमम् । 'ॐ भुवस्त्वयि दधामि ' इति द्वितीयम् । 'ॐ सुवस्त्वयि दधामि ' इति तृतीयम् ।'ॐ अपां त्वौषधीना९ रसं प्राशयामि शिवास्त आप ओषधयः सन्त्वनमीवास्त आप ओषधयो भवन्तु ' इत्यासादितं दधि मधु

---

१ ख. ङ. च. 'दिनिषेधो ना° ।

घृतमासादिते पायसे निक्षिप्य काञ्चनाद्यन्यतमे पात्रे तत्पायसं निक्षिप्य मङ्गलघोषपूर्वकं स्वर्णदर्व्या रौप्यदर्व्या वा किंचिदेकवारं प्राशयति । ततो यथेष्टं प्राशयति । अथ वा मधुदधिघृतमिश्रमन्नं प्राशयति ।

ततस्तन्मुखं प्रक्षाल्य तं भूमावुपवेश्य तदग्रेऽस्त्रशस्त्रपुस्तकादिशिल्पानि विन्यस्य स्वेच्छया शिशुर्यत्स्पृशेत्साऽस्य जीविकेति परीक्षां कुर्यात् । इदं च कुमार्या अप्यमन्त्रकं होमरहितं कार्यम् । इत्यन्नप्राशनम् ।

## अथ शिशुरक्षणविधिः ।

यदि बालस्य प्रमादाद्भुवि पतनादिना भीतिरुपजायते तदा पार्थिवं रजः परिगृह्य शिशुशिरः प्रदक्षिणं कुर्वन्विष्णुस्त्वां पूर्वतः पात्वित्यादिभिर्मन्त्रै रक्षां कुर्यात् । एष च रक्षाविधिः शकटभञ्जने नन्दगोपेन भीतोऽयं शिशुरिति बुद्ध्या यदुनन्दनस्य कृष्णस्य कृतः ।

तथा च शिशुरक्षारत्ने—

" नन्दोऽङ्कमेनमारोप्य भूरेणून्परिगृह्य च ।
शिरः प्रदक्षिणं कुर्वन्मन्त्रमेनं जजाप ह ॥
विष्णुस्त्वां पूर्वतः पातु रुद्रो रक्षतु दक्षिणे ।
ब्रह्मा च पश्चिमे पातु चन्द्रो रक्षत्वथोत्त्तराम्(रे) ॥
उपरिष्टात्तथा सूर्यः पायाच्चाधश्च वासुकिः ।
पायादूर्ध्वमधो वत्स(त्सं) शिष्टाः काष्ठाः समीरणः ॥
स्वस्ति करोतु भगवान्पिनाकी वृषभध्वजः ।
गावो रक्षन्तु सर्वत्र भूमौ पातु सदाशिवः ॥
एवमुच्चार्य नन्दस्तु कृष्णं पस्पर्श सर्वतः ।
एष मन्त्रो हि बालानां रक्षार्थं परिकीर्तितः " इति ॥

भागवतेऽपि—" गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसंभ्रमाः ।
यशोदारोहिणीभ्यां ताः समं बालस्य सर्वतः ॥
रक्षां विदधिरे सम्यग्गोपुच्छभ्रमणादिभिः ।
गोमूत्रेण स्नापयित्वा पुनर्गोरजसाऽर्भकम् ॥
रक्षां चक्रुः सशकृता द्वादशाङ्गेषु नामभिः ।
गोप्यः संस्पृष्टसलिला अङ्गेषु करयोः पृथक् ॥
न्यस्याऽऽत्मन्यथ बालस्य बीजन्यासमकुर्वत ।

१ च. °त्तराम् । २ क. चक्रुश्च श°

अव्यादजोऽङ्घ्रि मणिमांस्तव जान्वथोरू यज्ञोऽच्युतः कटितटं जठरं हयास्यः ॥
हृत्केशवस्त्वदुर ईश इनस्तु कण्ठं विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ।
चक्रयग्रतः सहगदो हरिरस्तु पश्चात्त्वत्पार्श्वयोर्धनुरसी मधुहाऽजनश्च ॥
कोणेषु शङ्ख उरुगाय उपर्युपेन्द्रस्तार्क्ष्यः क्षितौ हलधरः पुरुषः समन्तात् ।

इन्द्रियाणि हृषीकेशः प्राणान्नारायणोऽवतु ॥
श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ।
पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान्परः ॥
क्रीडन्तं पातु गोविन्दः शयानं पातु माधवः ।
व्रजन्तमव्याद्वैकुण्ठ आसीनं त्वां श्रियः पतिः ॥
भुञ्जानं यज्ञभुक्पातु सर्वग्रहभयंकरः ।
डाकिन्यो यातुधान्यश्च कूश्माण्डा येऽर्भकग्रहाः ॥
भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः ।
कोटरा रेवती ज्येष्ठा पूतना मातृकादयः ॥
उन्मादा ये ह्यपस्मारा देहप्राणेन्द्रियद्रुहः ।
स्वप्नदृष्टा महोत्पाता वृद्धबालग्रहाश्च ये ॥
सर्वे नश्यन्तु ते विष्णोर्नामग्रहणभीरवः
इति प्रणयबद्धाभिर्गोपीभिः कृतरक्षणम् ॥
पाययित्वा स्तनं माता संन्यवेशयदात्मजम् " इति ।

द्वादशाङ्गेषु ललाटादिषु केशवादिद्वादशनामभिः । अनाचान्ता एव प्रथममतिसंभ्रमेणैव रक्षां कृत्वा किंचिल्लब्धाश्वासाः पुनस्तात्पर्येण बीजन्यासमकुर्वतेत्याह—गोप्य इति । संस्पृष्टसलिला आचान्ता आत्मनि प्रथममङ्गेषु करयोश्च[1] पृथगजाद्येकादशबीजानां मध्ये करशुद्धौ त्रीणि करयोः संधिषु चत्वारि चत्वारि तथाऽङ्घ्र्यादावेकैकस्मिन्नङ्गेऽजाद्येकैकं बीजं न्यस्य बालस्याप्यङ्गेषु तथैवाकुर्वत । अङ्घ्रि अङ्घ्री । जानु जानुनी । भुजं भुजौ । कं शिरः । चक्रसहितो हरिस्तवाग्रतोऽस्तु । सहगदो गदासहितो हरिस्तव पश्चादस्तु । त्वत्पार्श्वयोर्धनुर्धरो मधुहाऽसिधरोऽजनश्च । शङ्खधर उरुगायश्चतुष्कोणेषु । क्षितावधस्तात् । आत्मानमहंकारम् । संन्यवेशयत्, शाययामासेति श्रीधरेण व्याख्यातम् । इति शिशुरक्षणविधिः ।

---

१ ख. च. 'रि त°।

15649

## अथ बालस्य दन्तसंघर्षदोषे तत्परिहारोपायः।

मार्कण्डेयपुराणे—" दन्ताकृष्टिः प्रसूतानां बालानां दशनस्थितः।
करोति संघर्षमति चिकीर्षुर्दुःसहागमम् ॥

बालानां दशनेषु स्थितः स दन्ताकृष्टिर्दुःसहस्याऽऽगमं कर्तुमिच्छुः पूर्वमतिसंघर्षं दन्तानां करोतीत्यर्थः। दुःसह इत्यलक्ष्म्या मृत्योश्च पुत्रस्तत्पौत्रो दन्ताकृष्टिः।

तस्योपशमनं कार्यं सुप्तस्य सितसर्षपैः।
शयनस्योपरि क्षिप्तैर्मासं च दशनोपरि ॥

मासं मासपर्यन्तम्।

सुवर्चलौषधिस्नानात्तथा सच्छास्त्रकीर्तनात्।
उष्ट्रकण्टकखड्गास्थिक्षौमवस्त्रावधारणात् " इति ॥

ब्रह्मसोचलीति भाषया वङ्गाले प्रसिद्धा। उष्ट्रकण्टकम् 'उण्टकटारिया' इति भाषया प्रसिद्धम्। खड्गः प्रसिद्धः। अस्थि गजदन्तादि शुच्यस्थि। खड्गास्थीत्येकमेव वा पदम्। तदा खड्गमृगास्थीत्यर्थः। क्षौमवस्त्रे बद्ध्वा तस्य कण्ठेऽवधारणाच्च संघर्षदोषापशमनं भवतीत्यर्थः।

इति दन्तसंघर्षदोषपरिहारोपायः।

## अथ कटिसूत्रबन्धनम्।

तच्च स्मृतौ—" गृहस्थः कुरुते कर्म वैदिकं वाऽथ तान्त्रिकम्।
कटिबन्धनसंयुक्तं तत्सर्वं निष्फलं भवेत् " इति ॥

अस्मादेव वचनादुपनयनात्प्राग्वैदिकतान्त्रिककर्मण्यनधिकारस्तावत्पर्यन्तं कटिबन्धने न दोष इति गम्यते। तच्चाऽऽश्वलायनोक्तम्—

" रौप्यं कार्पासजं हैमीं पट्टसूत्रकृतां तु वा।
वर्जयेत्कर्मकाले तु काञ्चीं विप्रः प्रयत्नतः " इति ॥

इति कटिसूत्रबन्धनम्।

## अथ चूडाकर्म।

तत्रेदं गृह्यम्—" तृतीये वर्षे चूडाकर्माऽऽपूर्यमाणपक्षे पुण्ये नक्षत्रे " इति।
अत्र मातृदत्त आह—" उदगयनमप्यत्राऽऽचाराद्ग्राह्यम् " इति।
आश्वलायनेन तु स्पष्टमेवोक्तम्—
" उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः " इति।

चैत्रमासस्यात्र वर्ज्यत्वमुक्तं देवरातेन—

"चैत्रमासं वर्जयित्वा चौलं स्यादुत्तरायणे" इति।

यमः—"ततः संवत्सरेऽपूर्णे चूडाकर्म विधीयते।
द्वितीये वा तृतीये वा चूडाकर्म विधीयते" इति॥

अपूर्ण इति च्छेदः। अयं च प्रथमद्वितीयसंवत्सरविधिः शाखान्तरपर एव। न सत्याषाढसूत्रानुसारिपरः। आचार्यविहिततृतीयवर्षात्मकचौलकालतः पूर्वतनकालग्रहणस्यायुक्तत्वात्।

बृहस्पतिः—"तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः।
पञ्चमे सप्तमे वाऽपि स्त्रियाः पुंसोऽथ वा समम्" इति॥

अत्र तृतीयादि विषमं स्त्रीपुंसयोरुभयोरपि मुख्यम्। चतुर्थादि समं त्वनुकल्पः। तत्रापि जन्मतस्तृतीयादि मुख्यं गर्भतस्त्वमुख्यं, तेन गर्भाष्टमेऽष्टमे वाऽब्द इतिवन्न तुल्यविकल्पः। अत एव नारदः—

"जन्मतस्तु तृतीये चेच्छ्रेष्ठमिच्छन्ति पण्डिताः।
पञ्चमे सप्तमे वर्षे जन्मतो मध्यमं भवेत्॥
अधमं गर्भतः स्यात्तु दशमैकादशेऽपि वा" इति॥

केनचित्प्रतिबन्धेन चौलोपनयने दशमवर्षपर्यन्तमेकादशवर्षपर्यन्तं वा न जाते तत्र दशमैकादशेऽपि[2] वेत्येतस्य संभवो ज्ञेयः। गर्भतस्तृतीये पञ्चमे सप्तमे वा वर्षे चौलमधमं भवेदित्यधमं गर्भतः स्यादित्येतस्यार्थः।

वृत्तशते—"न जन्मधिष्ण्ये न च जन्ममासे न जन्मकालीयदिने विदध्यात्।
न ज्येष्ठमासि प्रथमस्य सूनोस्तथा सुताया अपि मङ्गलानि" इति॥

चण्डेश्वरः—"मार्गे मासि तथा ज्येष्ठे क्षौरं परिणयं व्रतम्।
ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत्॥
कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठपुत्रस्य कारयेत्।
उत्सवादिषु कार्येषु दिनानि दश वर्जयेत्" इति॥

क्षौरं चौलम्। परिणयो विवाहः। व्रतमुपनयनम्। धर्मप्रकाशे नारदः—

"द्वित्रिपञ्चमसप्तम्यामेकादश्यां तथैव च।
दशम्यां च त्रयोदश्यां कार्यं चौलं विजानता॥
पक्षच्छिद्राश्च नवमीमाद्यां पञ्चदशीं तथा॥
हित्वा तु तिथयः सर्वाः प्रशस्ताश्चौलकर्मणि" इति॥

१ ङ. च. च। २ ङ. च. °पि चेले°।

पक्षच्छिद्राः सीमन्तप्रकरण उक्ताः। आद्या प्रतिपत्। पञ्चदशी पूर्णिमा। अमावास्यायास्तु सामान्यशास्त्रादेव निषेधसिद्धेः।

व्यासः—" तिथिं प्रतिपदं रिक्तां विष्टिं चैव विवर्जयेत्।
वारं शनैश्चरादित्यभौमानां रात्रिमेव च " इति॥

शन्यादीनां वारं वर्जयेत्। रात्रिं च वर्जयेत्। रात्रिशब्देन सर्वा रात्रयो ग्राह्याः। न तु शन्यादिवारसंबन्धिन्य एवेति। अन्यथा पृथगुपादानवैयर्थ्यापत्तेः। बृहस्पतिर्वारेषु वर्णविशेषेण विशेषमाह—

" पापग्रहाणां वारेषु[1] विप्राणां शुभदं रवेः।
क्षत्रियाणां क्षमासूनोर्विट्शूद्राणां शनेः[2] शुभम् " [इति]॥

बृहस्पतिः—" हस्ताश्विविष्णुपौष्णानि श्रविष्ठादित्यपुष्यभम्।
सौम्यचित्रे नवक्षौर उत्तमास्तारकाः स्मृताः॥
त्रीण्युत्तराणि वायव्यं रोहिणी वारुणं तथा।
क्षौरे षण्मध्यमाः प्रोक्ताः शेषा द्वादश गर्हिताः " इति॥

व्यासः—" नक्षत्रे तु न कुर्वीत यस्मिञ्जातो भवेन्नरः।
न प्रोष्ठपदयोः कार्यं नैवाऽऽग्नेये च भारत " इति॥

आग्नेयं कृत्तिकाः।

वसिष्ठः—" वृषभश्च कुलीरश्च यमकन्यातुलाघटाः।
मकरश्चैव मीनश्च क्षुरकर्मणि पूजिताः॥
मेषे दुःखी मृगेन्द्रे च वृश्चिके व्यसनं महत्।
राजबन्धश्च धनुषि शुभयुक्ते न दुष्यति " इति॥

कुलीरः कर्कः। यमं मिथुनम्। घटः कुम्भः। मृगेन्द्रः सिंहः। अयं च कुम्भविधिर्गत्यन्तराभावे।

" कुम्भः कुलविनाशाय कथितः क्षुरकर्मणि।
शुभैर्दृष्टोऽथवा युक्तो न कुम्भः शुभकृत्सदा "॥

इति ज्योतिर्निबन्धे तन्निषेधात्।

ज्योतिःसागरे—" वारनक्षत्रयोगेषु शुभेषु करणेषु च।
हस्तत्रयं मृगशिरः श्रवणत्रयं च पुष्याश्विनी च शुभमानि पुनर्वसौ च।
क्षौरे तु कर्मणि हितान्युदयक्षणे च युक्तानि चोडुपतिना यदि शस्ततारा " इति।

---

१ ङ. च. वारादौ। २ ख. ङ. च. शनौ।

अत्रिः—" अब्दायनर्तुमासान्ते वर्षान्ते च दिनक्षये ।
कृष्णपक्षे गते क्षौरे तस्याऽऽरोग्यं न विद्यते " इति ॥

ज्योतिर्नारदः—" सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।
पञ्चाब्दात्प्रागथोर्ध्वं तु गर्भिण्यामपि कारयेत् ॥
सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यते " इति ॥

अत एव कैश्चिदुदाहृतस्य सूनोर्मातरि गर्भिण्यां मौञ्जीचूडे न कारयेदित्यस्य वचसः समूलत्वेऽपि प्रत्येकमेव निषेधो न सहितयोरिति द्रष्टव्यम् । पञ्चाब्दानि पूर्यन्ते यस्मिन्दिने तत्पञ्चाब्दम् । अथोर्ध्वं पञ्चाब्दादूर्ध्वम् । अत्र सहशब्देन चौलोपनयनयोरव्यवधानं दर्शितं भवति ।

प्रकारान्तरेण निषेधापवादमाह वसिष्ठः—

" गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म तु ।
पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत् " इति ॥

पञ्च मासा गर्भसंबन्धिनः पूर्यन्ते यस्मिन्दिने तत्पञ्चमासम् । 'सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत्' इत्यस्मिन्विषये 'पञ्चमासादधः कुर्यात्' इत्ययं प्रतिप्रसवः । 'अत ऊर्ध्वं न कारयेत्' इति वसिष्ठवचनबोधितनिषेधविषये 'अथोर्ध्वं तु गर्भिण्यामपि कारयेत्' इति नारदवचनबोधितोऽयं प्रतिप्रसवः । सूनोर्मातरीत्यस्मिन्वाक्ये माता साक्षान्मातैव ग्राह्या । न तु सापत्नमाता ।

" गर्भिण्यामपि भार्यायां सूनोश्चौलं न कारयेत् ।
भिन्नभार्यासुतस्येह न दोषश्चौलकर्मणि " ॥

इति प्रयोगदर्पणे स्मृत्यन्तरवचनात् ।

स्मृतिरत्नाकरे स्मृत्यन्तरे—" सूनोः सापत्नमाता चेद्भवेद्गर्भवती तदा ।
चौलोपनयने कुर्यादित्याहुः पूर्वसूरयः " इति ।

मातरि रजस्वलायां वृद्धगार्ग्यः—

" विवाहव्रतचूडासु माता यदि रजस्वला ।
तस्याः शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत् " इति ॥

परमनन्तरम् । यदा चौलादिप्रारम्भोत्तरं रजःप्रारम्भात्प्रागपि रजसि सर्वथा मुहूर्तान्तराभावो वा तदा शान्तिं कृत्वा कार्यमित्युक्तं विवाहप्रकरणे तदत्रापि ज्ञेयम् ।

कात्यायनः—" कुले ऋतुत्रयादर्वाङ्मण्डनान्न तु मुण्डनम् ।
प्रवेशान्निर्गमो नेष्टो न कुर्यान्मङ्गलत्रयम् " इति ॥

ऋतुत्रयं षण्मासाः। कुलं त्रिपुरुषम्।

"पुरुषत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणाम्।
प्रवेशनिर्गमौ तद्वत्तथा मण्डनमुण्डने" इति मेधातिथ्युक्तेः।

प्रवेशादिस्वरूपमाह कात्यायनः—

"पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः।
मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मण्डनम्" इति॥

वृद्धमनुः—"एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः।
न समानक्रियां कुर्यान्मातृभेदे विधीयते" इति॥

तथाऽऽरम्भोत्तरं सूतके प्राप्ते संग्रहे—

"कूश्माण्डीभिर्घृतं हुत्वा गां च दद्यात्पयस्विनीम्।
चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत्" इति॥

चूडाकरणे पक्षद्वयमुक्तं गृह्ये—

"उप्त्वा यथोदि(चि)तं चूडाः कारयन्ति यथर्षि वा" इति॥

उप्त्वा वपनादनन्तरं यथोचितं यथाकुलधर्मं चूडाः कारयन्तीत्येकः पक्षः। यथर्षि यथाप्रवरम्। एकार्षेयस्यैका। द्व्यार्षेयस्य द्वे। त्र्यार्षेयस्य तिस्रः। पञ्चार्षेयस्य पञ्चेत्यपरः पक्षः। उप्त्वेतिवचनं छेदनमात्रं मा भूदित्येतदर्थम्। वस्तुतस्तु—उप्त्वेतिवचनं णिजन्तेन संबन्धार्थम्। तेन यश्चूडानां कारयिता पित्रादिः स एव वपनकर्तेति सिद्धं भवति। इदानीं तु तादृशशिक्षाया अभावाल्लोकविद्विष्टत्वाच्च समन्त्रकं चेष्टामात्रं कृत्वा नापितेनैव वपनं कारयन्ति शिष्टाः। क्षुरविषये विशेषमाह षड्गुरुशिष्यः—

"क्षुरस्य नित्यं लौहत्वात्ताम्रत्वाच्चेह लौहगीः।
गृह्यान्तरेषु बह्वृषु क्षुरस्ताम्रमयो यतः" इति॥

चौले भुक्तवतः प्रायश्चित्तमाह पराशरः—

"निर्वृत्ते चूडाहोमे तु प्राङ्नामकरणात्तथा।
चरेत्सांतपनं भुक्त्वा जातकर्मणि चैव हि॥
अतोऽन्येषु तु भुक्त्वाऽन्नं संस्कारेषु द्विजोत्तमः।
नियोगादुपवासेन शुध्यते निन्द्यभोजनात्" इति।

अत्र ब्रह्मौदनाङ्गभोजनमिव चूडाद्यङ्गभोजनमेव निमित्तत्वेन विवक्षितम्।

---

१ क. ख. ङ. चूडहो°।

अतस्तद्दिने तद्गृहे भोक्तुः प्रायश्चित्तमिति केषांचिदुक्तिः परास्ता। चौलोत्तरं विशेषः स्मृत्यन्तरे—

"विवाहमौञ्जीचौलोर्ध्वं वर्षमर्धं तदर्धकम्।
पिण्डान्सपिण्डा नो दद्युर्गयायां दद्युरेव ते" इति ॥

ते सपिण्डाः।

## अथ प्रयोगः।

जन्मतस्तृतीये वर्षेऽभावे जन्मतः पञ्चमे सप्तमे वा गर्भतो दशम एकादशे वोदगयने शुक्लपक्षेऽन्त्यत्रिकं विना कृष्णपक्षे वा षष्ठ्यष्टमीद्वादशीप्रतिपत्पूर्णिमाव्यतिरिक्ततिथौ शनिरविभौमव्यतिरिक्ते वासरे जन्मनक्षत्रभिन्नेऽश्विनीमृगशिरःपुनर्वसुपुष्यहस्तचित्राश्रवणधनिष्ठारेवत्यन्यतमनक्षत्रेऽसंभव उत्तरात्रयस्वातीरोहिणीशतभिषक्ष्वपि जन्ममासानन्तर्वर्तिनि व्यतीपातादिदोपरहिते दिने ज्योतिर्विदादिष्टलग्नादौ स्वमा(सूनोर्मा)तर्यगर्भिण्यां पञ्चमवर्षादूर्ध्वं गर्भिण्यामपि कार्यम्। अत्र तृतीयवर्षे क्रियायामपि गुरुशुक्रास्तमलमासादिनिषेधोऽस्त्येव। शुद्धकाललाभसंभवात्।

कर्ता प्राङ्मुख उपविश्य स्वस्य दक्षिणतो भार्यां संस्कार्यं चोपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यास्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणायुर्वर्चोभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं चूडाकर्म करिष्य इति संकल्प्य गणपतिपूजनपुण्याहवाचनमातृकापूजननान्दीश्राद्धाङ्कुरारोपणान्युक्तरीत्या कुर्यात्। अत्र केशिनः प्रीयन्तामिति विशेषः।

ततः सभ्यनामाऽयमग्निरित्यनुसंदधन्नौपासनाग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय अग्न एहीत्यादिप्राणायामान्तं कृत्वा चूडाकर्महोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तमुक्त्वाऽङ्गहोमे वरुणं द्विरित्यादि। पात्रासादने दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रं शीता अपो बहिरत्युष्णीकृता अपः साग्रकुशचतुष्टयं क्षुरमुपवेषं संमार्गदर्भानिध्मं बर्हिरवज्वलनदर्भानाज्यमिति पात्राण्यासादयेत्।

ततो ब्रह्मवरणादि त्रिवृदन्नपुण्याहवाचनान्तं कुर्यात्। अत्र प्रजापतिः प्रीयतामिति विशेषः। नात्र प्रधानहोमः। जयादयो वैकल्पिकाः।

ततोऽग्नेः पश्चात्स्वस्थाने कुमारमुपवेश्य स्वयं तद्दक्षिणत उपविश्याग्नेः कुमारस्य वोत्तरतो धृतानडुहगोमयां कुमारमातरं धृतानडुहगोमयं यं कंचन ब्रह्म-

---

१ ख. ङ. च. °लर्थसारे। २ क. ख. °र्हिश्याव°।

चारिणं वोपवेश्याऽऽसादिता अत्युष्णा अप आसादितासु शीतासु मिश्र-यित्वा ता आदाय, आप उन्दन्त्वित्यस्य सोम आपो द्विपदा गायत्री यजुर्वा। गोदानोन्दने विनियोगः। 'ॐ आप उन्दन्तु० वर्चसे' इति ताभिर्दक्षिणं गोदा-नमुनत्ति। आर्द्रीं करोतीत्यर्थः। गवि पृथिव्यां दीयते स्वापार्थमङ्गं गोदानं, तानि मनुष्ये चत्वारि। ओषध इत्यस्य सोम ओषधयो यजुः। कुशनिधाने विनियोगः। 'ॐ ओषधे त्रायस्वैनम्' [इति] आसादितेष्वेकं कुशमूर्ध्वाग्रं तत्र निदधाति। स्वधित इत्यस्य सोमः क्षुरो यजुः। क्षुरनिधाने विनियोगः। 'ॐ स्वधिते मैनꣳ हिꣳसीः' [इति] तत्राऽऽसादितं क्षुरं निदधाति। देवश्रूरि-त्यस्य सोमो देवश्रूर्यजुः। वपने विनियोगः। 'ॐ देवश्रूरेतानि प्रवपे' इत्योष-धिना सह दक्षिणप्रदेशस्थान्केशान्वपति। एवमवशिष्टगोदानत्रयेऽपि। तत्र वपनमन्त्रेषु विशेषः। येनावपदित्यस्य सोमो वप्तारस्त्रिष्टुप्। वपने विनियोगः। 'ॐ येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्। तेन ब्रह्माणो वपतेदमस्योर्जे मरय्या वर्चसा सꣳसृजाथ' इति पश्चिमप्रदेशस्थकेशवपने मन्त्रः। 'ॐ येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चाऽऽयुषेऽवपत्। तेन तेऽहं वपाम्यमुकशर्मन्' इत्युत्तरप्रदेशस्थ-केशवपने। अत्र संस्कार्यस्य नाम ग्राह्यम्। 'ॐ यथा ज्योक्च सुमना असत्। ज्योक्च सूर्यं दृशे' इति पूर्वप्रदेशस्थकेशवपने। अत्र सहायभूता अन्येऽपि वप्तारः। ब्रह्माणो वपतेति बहुवचनलिङ्गात्। एवं च कारयन्तीत्यत्रत्यप्रयोज-ककर्तृगतं बहुवचनमप्युपपद्यते।

ततो वपनानन्तरं नापितेन यथाकुलधर्मं यथाप्रवरं वा चूडाः कारयेयुर्वपन-कर्तारः। नापितस्तदनुसारेण चूडाः कुर्यात्। एका चेन्मध्ये। द्वे चेन्मध्ये पुर-स्ताच्च। तिस्रश्चेत्पश्चान्मध्ये पुरस्ताच्च दक्षिणतो मध्य उत्तर इत्येवं वा। पञ्च चेत्प्रतिदिशं मध्ये च। केचन भृगवः सशिखाः। केचन मुण्डा एव।

ततः कुमारस्य यः कश्चन बन्धुजनस्तास्मिञ्छकृत्पिण्डे तान्केशानन्तर्भूता-न्कृत्वा 'ॐ यत्र पूषा बृहस्पतिः सविता सोमो अग्निः। तेभ्यो निधानं बहुधा व्यैच्छ-न्नन्तरा द्यावापृथिवी अपः सुवः' इति गोष्ठ उदुम्बरे दर्भस्तम्बे वा निखनति। अवटं खात्वा तस्मिन्सकेशं शकृत्पिण्डं प्रक्षिप्य मृदा प्रच्छादयतीत्यर्थः।

ततः कृतशुद्धस्नानः कुमार आचार्यादीन्प्रणमेत्। तत आचार्यो ब्राह्म-णेभ्यः पुण्याहवाचकेभ्योऽन्येभ्यश्च दक्षिणां दद्यात्। सूत्र एकवचनं जातौ।

ततः सर्पिष्प्रचुरमोदनं नापिताय ददाति। ततो ब्राह्मणभोजनं भूयसीद-क्षिणादानं च कृत्वा विप्राशिषो गृहीत्वा विष्णुं संस्मरेत्। एतच्च स्त्रीणामपि।

'स्त्रीशूद्रौ तु शिखां छित्त्वा क्रोधाद्वैराग्यतोऽपि वा । प्राजापत्यं प्रकुर्वीताम्' इतिप्रायश्चित्तविधिबलात् । एतत्परिग्रहपक्षे । अत्र देशभेदाद्व्यवस्था द्रष्टव्या । स्त्रीणां केशधारणमेव शिखाधारणम् । एतच्चामन्त्रकमेव स्त्रीणां कार्यम् । 'तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः' इतिवचनात् । होमोऽपि न । 'स्त्रीणामहोमकास्तु स्युर्विवाहस्तु समन्त्रकः' इति गोभिलोक्तेः ॥

इति संस्काररत्नमालायां चूडाकरणप्रयोगः ।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिगणेशदीक्षित-
ततनूजभट्टगोपीनाथदीक्षितविरचितायाः सत्याषाढ-
हिरण्यकेशिस्मार्तसंस्काररत्नमालाया उत्तरार्धे
तृतीयं प्रकरणम् ॥ ३ ॥

अथ चतुर्थं प्रकरणम् ।

## अथाक्षरस्वीकारः ।

तत्र कालादि श्रीधरीये—

"उदग्गते भास्वति पञ्चमेऽब्दे प्राप्तेऽक्षरस्वीकरणं शिशूनाम् ।
सरस्वतीं विघ्नविनायकं च गुडौदनाद्यैरभिपूज्य कुर्यात्" इति ॥

शिशुभिः पञ्चमे वर्षे प्राप्त उदगयनेऽक्षरस्वीकरणं कर्तव्यमित्यर्थः ।

विधिरत्नेऽपि—"बालस्य पञ्चमे वर्षे प्राप्ते भानौ मृगादिगे ।
आरभेताक्षरविधिं शुभे काले यथोदि[1]ते" इति ॥

बृहस्पतिः—"द्वितीयजन्मनः पूर्वमारभेताक्षरान्सुधीः" इति ।

द्वितीयं जन्म मौञ्जीबन्धनम् ।

"मातुरग्रे विजननं द्वितीयं मौञ्जिबन्धनात् ।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः" इति याज्ञवल्क्योक्तेः ।

[2]विश्वामित्रेण विशेष उक्तः—

"प्राप्ते च पञ्चमे वर्षे त्वप्रसुप्ते जनार्दने ।
विद्यारम्भस्तु कर्तव्यो यथोक्ततिथिवासरे" इति ॥

१ ङ. च. 'दितम्' इ° । २ क. ख. विश्वामित्रीये ।

जनार्दनस्वापकालो विष्णुधर्मोत्तरे—

" आषाढशुक्लद्वादश्यां शयनं कुरुते हरिः ।
निद्रां त्यजति कार्तिक्यां तयोः संपूज्यते हरिः " इति ॥

नृसिंहः—" अक्षरस्वीकृतिः प्रोक्ता प्राप्ते पञ्चमहायने ।
उत्तरायणगे सूर्ये कुम्भमासं विवर्जयेत् ॥
शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना " इति ॥

बृहस्पतिः—" विद्यारम्भो व्रतोद्देशः क्षौरं चैव विशेषतः ।
गलग्रहे न कर्तव्यं यदीच्छेत्पुत्रजीवितम् " इति ॥

गलग्रहास्तूपनयनप्रकरण उक्ताः । गलग्रहान्तर्गतायास्त्रयोदश्याः प्रतिप्रसवमाह देवरातः—" त्रयोदश्यक्षरे श्रेष्ठा " इति ।

मार्कण्डेयः—" वारे दिनेशभृगुसूज्ञबृहस्पतीनां विद्वानसौ भवति यो हि विमूढबुद्धिः । चन्द्रे च चन्द्रतनये च कृशे च सर्वं(र्वे) विघ्नो भवेद्रवनिजे रविजे विनाशम्(शः) " इति ।

वसिष्ठश्चाऽऽह—" दिवसांशोदया वर्ज्या यत्नेन कुजसौरयोः ।
श्रेष्ठा[ः] सितज्ञजीवानां मध्यमाश्चन्द्रसूर्ययोः ॥
रविवारे तु पूर्वाह्णे विद्यारम्भो विधीयते ।
चन्द्रवारेऽपराह्णे तु विद्या गुर्वी विधीयते ॥
रात्रौ विवर्जयेन्नित्यं संध्ययोश्च विशेषतः " इति ॥

सुज्ञो बुधः ।

महेश्वरः—" हस्तादित्रितये तथा निर्ऋतिभे पूर्वान्त्यभे चाश्विभे
मित्रर्क्षे च मृगादिपञ्चसु शुभः प्रारम्भ आद्यः स्मृतः ।
विद्यानां हरिभत्रये च दिवसे सूरेर्भृगोर्वा दिनेऽ-
नध्यायाख्यतदाद्यवर्जिततिथौ केन्द्रस्थितैः सद्ग्रहैः " इति ॥

राजमार्तण्डः—" विद्यारम्भः प्रशस्तो भवति मधुरिपौ प्राप्तबोधे शशाङ्के
शस्ते तीक्ष्णद्युतौ च त्रिदशपतिगुरावुद्गते चाथ शुक्रे ।
स्वाध्याये सिंहसंस्थं खरकिरणयुतं देवपूज्यं विहाय
शुक्रादित्येज्यवारे त्रिदशपतिगुरौ केन्द्रसंस्थे न पापे " इति ॥

अक्षरारम्भप्रकारस्तु माधवीये मार्कण्डेयेनोक्तः—

" अभ्यङ्गस्नानपूर्वं तु गन्धवस्त्रादिभूषितः ।
शलाकया सुवर्णस्य पञ्चाशद्वर्णकाल्लिखेत् ॥

पूजयित्वा हरिं लक्ष्मीं देवीं चैव सरस्वतीम् ।
स्वविद्यासूत्रकारांश्च स्वविद्यां च विशेषतः ॥
एतेषामेव देवानां नाम्ना तु जुहुयाद्घृतम् ।
दक्षिणाभिर्द्विजेन्द्राणां कर्तव्यं चात्र पूजनम् ॥
प्राङ्मुखो गुरुरासीत वारुण्यभिमुखं शिशुम् ।
अध्यापयेत्तु प्रथमं द्विजातिभिः सुपूजितः " इति ॥

अनेन गुरुपूजनमपि कर्तव्यमिति सूचितम् ।

सरस्वतीपूजनादिप्रकारमाह पारिजाते गर्गः—

" स्नात्वा शुचौ समे देशे गोचर्ममात्रमुपलिप्य सैकतं स्थण्डिलं[1] कृत्वा पलाशशाखया मृदं खनित्वा तत्र सरस्वतीमावाहयेत्—भुवनमातः सर्ववाङ्मयरूपे, आगच्छाऽऽगच्छेति । ततः प्रणवेनाऽऽसनार्घ्यपाद्याचमनीयस्नानवस्त्रगन्धपुष्पाक्षतधूपदीपपायसगुडौदननैवेद्यसमर्पणनमस्कारान्कृत्वा विघ्नेशं संपूज्याऽऽचार्यं शक्तितो वस्त्रालंकारादिभिः पूजयित्वा सरस्वतीविघ्नेशाचार्यांस्त्रिः प्रदक्षिणीकृत्य प्रणवपूर्वकमक्षरमारभेत्(त) । तत आचार्यादिवन्दनं कृत्वा सरस्वत्यादीनावाहनक्रमेणोद्वासयेद्विद्यावृद्धिर्भवति " इति ।

विष्णुधर्मोत्तरे—" ब्राह्मणानां गुरूणां च देवतानामनन्तरम् ।
ततः संपूज्य वित्तेन धात्रीं राम गुरुं तथा " इति ॥

गुरूणां पित्रादीनाम् । धात्री माता । गुरुराचार्यः । रामेति श्रोतृसंबोधनम् ।

इत्यक्षरस्वीकारः ।

## अथ प्रयोगः ।

कुमारमभ्यङ्गस्नानपूर्वकं स्नापयित्वा गन्धादिभिरलंकृत्य यथोक्ते मुहूर्ते आचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्यामुकशर्मणः पुत्रस्याक्षरारम्भार्थं मार्कण्डेयगर्गाद्युक्तविधिं करिष्य इति संकल्प्य तदङ्गं गणपतिपूजनं विधाय पुनः कुमारेण सह स्नात्वा शुचौ समे देशे गोचर्ममात्रं यथापर्याप्तं वा स्थलं गोमयेनोपलिप्य सैकतं स्थण्डिलं तत्र कृत्वा पलाशशाखामूलेन स्थण्डिलमध्ये मृदं खनित्वा पलाशशाखां तत्रैव रोपयित्वा तत्र सरस्वतीमावाहयेत् 'ॐ भुवनमातः सर्ववाङ्मयरूपे, आगच्छाऽऽगच्छ ' इति मन्त्रेण । ततः प्रणवेनाऽऽसनाद्यर्घ्यादिनमस्कारान्तानुपचारान्दद्यात् । अत्र

[1] ख. °लं तत्र कृ° ।

नैवेद्यं पायसं गुडौदनश्च । ततो हरिं लक्ष्मीं विघ्नेशं च नाममन्त्रैः संपूज्य 'ॐ स्वविद्यासूत्रकारेभ्यो नमः, ॐ स्वविद्यायै नमः' इति नाममन्त्राभ्यां स्वविद्यासूत्रकारान्स्वविद्यां च संपूज्य स्थण्डिलकरणादि । बलवर्धननामाऽत्राग्निः । समिन्त्रयमादायेत्यादि प्राणायामान्तं कृत्वाऽक्षरारम्भार्थहोमकर्मणि या इत्यादि प्रसाधनीदेव्यन्तं व्याहृत्यन्तं वोक्त्वा प्रधानहोमे सरस्वतीं हरिं लक्ष्मीं विघ्नेशं स्वविद्यासूत्रकारान्स्वविद्यां चाष्टाष्टसंख्याकाभिर्घृताहुतिभिर्यक्ष्य इत्युक्त्वाऽङ्गहोमे वरुणं द्विरित्यादि अग्निं स्विष्टकृतमित्यादि वा पूर्वान्तानुसारेणोक्त्वा समिदभ्याधानादि प्रसाधनीदेवीहोमान्तं व्याहृतिहोमान्तं वाऽन्वाधानोत्कीर्तितपक्षानुसारेण कृत्वा प्रधानहोमं कुर्यात् ।

'ॐ सरस्वत्यै स्वाहा । ॐ हरये स्वाहा । ॐ लक्ष्म्यै स्वाहा । ॐ विघ्नेशाय स्वाहा । ॐ स्वविद्यासूत्रकारेभ्यः स्वाहा । ॐ स्वविद्यायै स्वाहा' इत्येतैर्नामभिस्तत्तद्देवतोद्देशेनाष्टाष्टसंख्याका घृताहुतीर्जुहुयात् । स्वविद्यासूत्रकारेभ्यः स्वविद्यायै च न वा होमः । ततोऽङ्गहोमादि स्विष्टकृदादि वा पूर्वान्तानुसारेण होमशेषं समापयेत् । न त्रिवृदन्नहोमः । आपूर्विकतन्त्रेण वा सर्वो होमः । स्वस्य कर्तुमसंभवेऽक्षरारम्भार्थहोमार्थमाचार्यं त्वामहं वृण इत्याचार्यं वृत्वा संपूज्य तेन होमं कारयेत् ।

ततोऽक्षरप्रवक्तारं प्राङ्मुखमासीनं शक्तितो वस्त्रालंकारादिभिर्यथाविभवं संपूज्य शिष्टान्ब्राह्मणान्संपूज्य तेभ्यो यथाविभवं दक्षिणां दत्त्वा कुमारेण सह सर्वा आवाहितदेवतास्त्रिः प्रदक्षिणीकृत्य कुमारेणाक्षरप्रवक्त्रभिवन्दनं कारयित्वा क्रमेणाऽऽवाहितदेवता उद्वासयेत् ।

ततः कुमारो ब्राह्मणान्पितृमात्रादीन्गुरुं च संपूज्य नमस्कृत्य प्राङ्मुखस्याक्षरप्रवक्तुः समीपे प्रत्यङ्मुख उपविश्याक्षरप्रवक्तारं नमस्कुर्यात् ।

ततोऽक्षरप्रवक्ताऽऽयुष्मान्विद्यावान्भव सौम्या३ इत्याशिषो दत्त्वा प्रणवपूर्वकं लेखयेच्च । 'ॐ नमः सिद्धम्' इति पूर्वं पाठयित्वा लेखयित्वाऽकाराद्यक्षराणि पाठयेल्लेखयेच्चेति संप्रदायः । इति प्रयोगः ।

अक्षरस्वीकृतिमारभ्यानध्यायवर्जनमुक्तं मार्कण्डेयेन—

"प्राप्ते तु पञ्चमे वर्षे विद्यारम्भं तु कारयेत् ।
ततः प्रभृत्यनध्यायान्वर्जनीयान्विवर्जयेत्" इति ॥

वर्जनीयान्नित्यानष्टमीचतुर्दश्यादीन् । विद्यारम्भश्चात्राक्षरपरिचितिः ।

## अथ बालानां वाक्शुद्धयुपायः ।

" वचा ब्राह्मी च मण्डूका घनं(नः)कुष्ठं सनागरम् ।
घृतेन परिदेयं च चूर्णं वाक्पटुकारणम् ॥
गुडूचिकाऽपामार्गश्च विडङ्गं शङ्खपुष्पिका ।
विष्णुक्रान्ता वचा पथ्या नागरं च शतावरी ॥
चूर्णं घृतेन संमिश्रं लिह्यात्प्रज्ञां विवर्धयेत् ।
त्रिभिर्दिनैः सहस्रैकं श्लोकानामवधार्यते ॥
त्रिकटु त्रिफला धन्या यवानी शतमूलिका ।
वचा ब्राह्मी तथा भार्ङ्गी चूर्णं समधु लेहितम् ॥
वाक्पटुत्वं च बालानां वीणावाद्यसमस्वरम् " इति ।

वचा वेखण्डम् । ब्राह्मी प्रसिद्धा । मण्डूकाऽस्तपर्णी । घनो नाम मुस्ता । कुष्ठं प्रसिद्धम् । नागरं शुण्ठी । गूडचिका गुळवेली । अपामार्ग आघाडा । विडङ्गं वायविडङ्गम् । शङ्खपुष्पी श्वेतपुष्पी प्रसिद्धा । विष्णुक्रान्ता प्रसिद्धा । पथ्या हरीतकी । सर्वत्र हरीतकीग्रहणे दलं ग्राह्यमिति वैद्यकपरिभाषा । त्रिकटु शुण्ठि मिरे पिप्पली । धन्या धणे । यवानी ओंवा । अन्यानि प्रसिद्धानि । हिरडा बेहडा आवळकठी त्रिफला ।

## अथ संक्षेपेणानुपनीतधर्माः ।

तत्रेदं धर्मसूत्रम्—" आऽन्नप्राशनाद्गर्भा नाप्रयता भवन्त्यापदि संवत्सरादित्येके यावता वा दिशो न प्रतिजानीयुरोपनयनादित्येकेऽत्र ह्यधिकारः शास्त्रैर्भवतीति सा निष्ठा स्मृतिश्च " इति ।

व्याख्यातमेतदुज्ज्वलाकृता—अन्नप्राशनात्प्रागगर्भा बाला अप्रयता न भवन्ति रजस्वलास्पर्शेऽपि । यावत्संवत्सरो न पूर्येत तावन्नाप्रयता गर्भा आपदीत्येके मन्यन्ते । यावद्दिग्भागज्ञानं नास्ति तावन्नाप्रयता भवन्ति । उपनयनादर्वाङ्नाप्रयता इत्येके मन्यन्ते । तत्रोपपत्तिः—अत्र ह्यधिकारः शास्त्रैर्भवतीति । यस्मादत्रोपनयने विधिनिषेधशास्त्रैरधिकारो भवति । इतिकरणं हेतौ । सा निष्ठा । उपनयनमपि परामृशतस्तच्छब्दस्य निष्ठाशब्दसामानाधिकरण्यात्स्त्रीलिङ्गता । सा निष्ठा तदुपनयनमवसानमनधिकारस्येति ।

---

१ ङ. च. 'मधि' ।

स्मृतिश्च, अस्मिन्नर्थे स्मृतिरपि भवति प्रागुपनयनात्कामचारकामवादकामभक्षा इति । (* माधवीये विष्णुपुराणे—

" भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथाऽनृते ।
अस्मिन्काले न दोषः स्यात्स यावन्नोपनीयते " इति ॥

गौतमोऽपि—" प्रागुपनयनात्कामचारकामवादकामभक्षाः " इति ।)

कामचार इच्छागतिः । कामवादोऽश्लीलादिभाषणम् । कामभक्षः पर्युषितादिभक्षणम् । एतदपवादस्तत्रैव स्मृत्यन्तरे—

" स्यात्कामचारभक्षोक्तिर्महतः पातकादृते " इति ।

महापातके तु पित्रा भ्रात्रा वा प्रायश्चित्तं कर्तव्यम् ।

तदुक्तं जातूकर्ण्येन—" अनुपेतस्तु यो विप्रो मद्यं मोहात्पिबेद्यदि ।
तस्य कृच्छ्रत्रयं कार्यं पित्रा भ्रात्राऽपि वा तथा " इति ॥

अन्यच्च—" वैश्वदेवं पुरोडाशमग्निमध्ये तु यद्धुतम् ।
प्रमादाच्छिशुराकर्षेन्नित्रा रक्ष्यः प्रयत्नतः " इति ॥

आचारविषय आह वसिष्ठः—

" न ह्यस्य विद्यते कर्म किंचिदामौञ्जिबन्धनात् ।
वृत्त्या शूद्रसमस्तावद्यावद्वेदो न जायते " इति ॥

गौतमः—" यथोपपादितमूत्रपुरीषो भवति न तस्याऽऽचमनकल्पो विद्यते
न ब्रह्माभिव्याहरे(हारये)दन्यत्र स्वधानिनयनात् " इति ।

यथोपपादितेत्यनेन दिवा संध्यासूदङ्मुखत्वं रात्रौ दक्षिणामुखत्वमित्यादिनियमाभावो ज्ञाप्यते । कल्पग्रहणादितिकर्तव्यताया एव निषेधो न त्वाचमनस्य । अन्यथा न तस्याऽऽचमनं विद्यत इत्येव ब्रूयात् । अत एव 'शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः' इतियाज्ञवल्क्यवचोव्याख्यावसरे विज्ञानेश्वरेण चकारादनुपनीतोऽपीत्युक्तम् ।

रजस्वलादिस्पर्शे तु पारिजाते स्मृतिदीपिकायां व्यवस्थोक्ता—

" शिशोरभ्युक्षणं प्रोक्तं बालस्याऽऽचमनं स्मृतम् ।
रजस्वलादिस्पर्शे तु स्नानमेव कुमारके ॥
प्राक्चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः ।
कुमारकस्तु विज्ञेयो यावन्मौञ्जीनिबन्धनम् " इति ।

विज्ञानेश्वरोक्तमनुपनीताचमनमकुमारावस्थायां बोध्यम् । रजस्वलादि-

---

* धनुश्चिह्नान्तर्गतं ङ. च. पुस्तकयोर्नास्ति ।

स्पर्शनिमित्तस्नानविधेस्तन्निमित्ताचमनविधेश्च साहचर्यदर्शनात् । अन्यत्रेत्यादिना पितृकर्मणि दाहादावनुपनीतस्यापि मन्त्रोच्चारणं भवतीति ज्ञाप्यते । तदपि कृतचूडस्य त्रिवर्षस्य च ज्ञेयम् ।

"अनुपेतोऽपि कुर्वीत मन्त्रवत्पैतृमेधिकम् ।
यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः" इतिसुमन्तूक्तेः ।

एतच्चौरसविषयम् ।

"पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः ।
और्ध्वदेहिकमन्ये तु संस्कृताः श्राद्धकारकाः" इति स्कान्दात् ॥

"नाभिव्याहारयेद्ब्रह्म यावन्मौञ्जी न बध्यते ।
मन्त्राननुपनीतोऽपि पठेदेवैक औरसः" इति सुमन्तूक्तेश्च ।

कृतशौचमपि नाग्निहोत्रादिषु नियुञ्ज्यात् ।

तदाह गौतमः—"न त्वेनमग्निहवनबलिहरणयोर्नियुञ्ज्यात्" इति । तस्य मन्त्रहीनत्वादित्यभिप्रायः ।

न च मन्त्रान्ग्राहयित्वा विनियोज्य इति शङ्कनीयम् । 'न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात्' इति गौतमेन 'नाभिव्याहारयेद्ब्रह्म *स्वधानिनयनादृते' इति सुमन्तुना च मन्त्रोच्चारणस्य निषेधाद्विशेषवचनाभावाच्च ।

उपनयनकर्मण आरम्भात्प्रागेव कुमारसंबन्धिकर्मोपयुक्तमन्त्रान्कुमारं पाठयेत् । इति (अन्यथा) कर्मकाले मन्त्राध्ययनासंभवेन तत्साध्यस्य कर्मणोऽप्यसंभवापत्तेः । न चाऽऽचार्येण तदा वाचनीय इति वाच्यम् । तादृशविधेरेवाभावात् । तदैव वाचयीत वा । इत्यनुपनीतधर्माः ।

## अथ बालपितृधर्माः ।

विष्णुधर्मोत्तरे—"अपथ्यं न च बालानां तथा भार्गव पश्यताम् ।

पश्यद्भिः पित्रादिभिरपथ्यं निवारणीयमित्यर्थः ।

बालकाश्चानुनेयाः स्युर्धर्मकामैः सदा नरैः ॥
तेषां भोज्यप्रदानेन गोदानफलमाप्नुयात् ॥
तेषां क्रीडनकं दत्त्वा मोदते नन्दते दिवि ।
तस्मात्सर्वप्रयत्नेन बालानग्रे तु भोजयेत् ॥
अभुक्तवत्सु बालेषु न चाश्नीयात्कदाचन" इति ॥

धर्मसूत्रेऽपि—"अतिथीनेवाग्रे भोजयेत्कुमारान्रोगसंयुक्तान्स्त्रीश्चान्तर्वत्नीः" इति ।

---

* पदद्वयमधिकं सुमन्तुवचने तदभावात् । तत्स्थाने यावन्मौञ्जी न बध्यत इति वा पाठ्यम् ।

रोगसंयुक्ता ये केचन । अन्तर्वत्न्यो गर्भिण्यः ।

इति संस्कारमालायां पद्धतौ बालपितृधर्माः ।

## अथ श्वग्रहप्रायश्चित्तम् ।

श्वग्रहोऽपस्मारः । उन्मत्तः सारमेय इत्येके । अथवा येन गृहीतः श्वेव वदति श्ववच्चाचष्टे स श्वग्रहः । महाव्याधिश्चायं, तस्य नाशाय प्रायश्चित्तं भेषजं वक्ष्यमाणं कर्म कर्तव्यम् । कर्ता कर्माङ्गत्वेनाधिकं यज्ञोपवीतं धृत्वाऽऽचम्य नूतनेन शरावेणोदकमाहृत्य कितवसभायां मध्येऽधिदेवनमुद्धत्यावोक्ष्य विभीतकान्यथार्थान्युप्य प्रतिदिशं विभज्य पुनस्तानेकधा कृत्वा यथा तेषु शाययितुं शक्यते तथा तान्प्रसार्य सभाया उपरिष्टात्तृणैराच्छाद्यैकत्र मार्गं कृत्वा तेन मार्गेण ग्रहगृहीतं कुमारं सभामध्ये प्रवेश्य तेषु विभीतकेषूत्तानं शाययित्वा दध्ना लवणोदकमिश्रितेन तं प्रोक्षति—

" कुर्कुरः सुकुर्कुरः कुर्कुरो नीलबन्धनः । औलब इत्तमुपाह्वयतार्जिमच्छबलो अथो राम उलुम्बरः । सारमेयो ह धावति समुद्रमिव चाकशत् । बिभ्रं निष्कं च रुक्मं च शुनामग्रं सुवीरिणः । सुवीरिणः सृज सृजैकव्रात्य सृज शुनक सृजच्छत् । टेकश्च ससरमटङ्कश्च तुलश्च वितुलश्च । अर्जुनश्च लोहितश्चोत्सृज त्वं शितिम्न त्वं पिशंकरो हतः । अमी एके सरस्यका अवधावति तृतीयस्यामितो दिवि । छदये हि सीमरम सारमेय नमस्ते अस्तु सीसर । दूत्या ह नाम वो माता मण्डाकको ह वः पिता । छदये हि सीसरम सारमेय नमस्ते अस्तु सीसर । दुला ह नाम वो माता मण्डाकको ह वः पिता । छदये हि सीसरम सारमेय नमस्ते अस्तु सीसर । समश्चा वृषणः पदो न सीसरीदतः । छदये हि सीसरम सारमेय नमस्ते अस्तु सीसर । संतक्षा हन्ति चक्रिणो न सीसरीदतः । छदये हि सीसरम सारमेय नमस्ते अस्तु सीसर " इति ।

एतैः प्रतिमन्त्रं तस्य कुमारस्य दक्षिणतः प्रोक्षणसमये यः कश्चन पुरुषः कांस्यं ताडयति । सूत्रे बहुवचनमनियतकर्तृकत्वार्थम् । प्रधानेऽभ्युक्षण एवैते मन्त्राः । न त्वङ्गभूते कांस्यताडने । अभ्युक्षणस्य प्रधानत्वं तु कुमारसंस्कारत्वात्संनिपत्योपकारकत्वाच्च ।

ततो वरं वृणीष्वेति कर्ता ब्रूयात् । ततः कुमार एवाहं वरं वृण इति वदेत् ।

१ च. 'वयजन' ।

कुमारमेवाहं वृण इति पाठेऽन्यो यः कश्चन प्रतिवक्ता। एवं वारत्रयं प्रातर्मध्यंदिने सायं च कर्तव्यम्। इति श्वग्रहप्रायश्चित्तम्।

# अथ शूलगवं कर्म।

शूल इव गवां भवतीति शूलगवो रुद्रः। स यस्य देवता तच्छौ(च्छू)लगवं कर्म। गवामुपतापशान्त्यर्थं कर्तव्यम्। तद्धिताभाव आर्षः। आपूर्यमाणपक्षे पुण्ये नक्षत्रे देशकालौ स्मृत्वा गवामुपतापशान्त्यर्थं शूलगवाख्यं कर्म करिष्य इति संकल्प्य गणेशं संपूज्योपासनाग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा शूलगवहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा प्रधानहोमे—भवं देवं शूलगवौदनेनाऽऽहुत्या, रुद्रं देवं शू०। अत्रोदकस्पर्शः। शर्वं देवं शू०, ईशानं देवं शू०, पशुपतिं देवं शू०, उग्रं देवं शू०, भीमं देवं शू०, महान्तं देवं शू०, भवस्य देवस्य पत्नीं मीढुष्योदनाहुत्या, रुद्रस्य देवस्य पत्नीं मी०, शर्वस्य देवस्य पत्नीं मी०, ईशानस्य देवस्य पत्नीं मी०, पशुपतेर्देवस्य पत्नीं मी०, उग्रस्य देवस्य पत्नीं मी०, भीमस्य देवस्य पत्नीं मी०, महतो देवस्य पत्नीं मी०, जयन्तमष्टवारं जयन्तौदनाहुत्या यक्ष्ये। अग्निं स्विष्टकृतं हुतशेषसर्वौदनैरेकदेशाहुत्या यक्ष्ये। प्रायश्चित्तहोमे। अग्निं द्वाभ्यामित्यादि। पात्रासादने स्रुवं दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रं चरुस्थालीं शूर्पं कृष्णाजिनमुलूखलं मुसलं कुट्यर्थं कुशांस्त्रीण्युद्धरणपात्राणि त्रिंशत्पत्राणि चान्दनमनुलेपनं वर्ष्यमुदकमखण्डयवानखण्डतण्डुलान्वा गोमयं दूर्वास्तम्बम्, उदुम्बरपलाशशमीविकङ्कताश्वत्थशाखागोवालानुपवेषं मेक्षणं संमार्गदर्भानवज्वलनदर्भानिध्मं बर्हिर्दुग्धमाज्यं चेति पात्राण्यासादयेत्। मेक्षणस्य प्रहरणपक्ष उपवेषेण साकं मेक्षणासादनम्। (* अप्रहरणपक्षे चरुस्थाल्या सह।) अत्रापि वोदगग्राः पश्चात्पुरस्ताच्च भवन्तीत्ययमेव पक्षो नियतः, संपरिस्तीर्येति संशब्दाज्ज्ञापकात्।

ततो ब्रह्मवरणादिप्रणीताप्रणयनान्तेऽपरेणाग्निं शूर्पे पवित्रे निधाय शूलगवाय मीढुष्यै जयन्ताय चतुरश्चतुरो मुष्टीन्व्रीहीन्निरू(रु)प्य प्रोक्षणीः संस्कृत्य व्रीहीन्प्रोक्ष्य पात्राणि प्रोक्षति।

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. च. पुस्तकेषु।

१ ख. ङ. च. 'दनेन, रु'। २ ख. ङ. च. 'दनेन, रु'। ३ ख. ङ. च. 'दनेन य'। ४ ख. ङ. च. 'तं सर्वैरोदनैर्यक्ष्ये। ५ ख. ङ. च. 'ग्निं द्विरित्या'। ६ क. प्रोक्षणीं ७ ख. ङ. च. 'लीं मेक्षणं शू'। ८ क. 'शतपात्रा'। ९ ख. ङ. च. 'पं सं'।

ततः कृष्णाजिनास्तरणादि स्वयमेवावहृत्य त्रिष्फलीकृत्य पयसि श्रपयति। न वा निर्वापादि। किं तु पर्याप्तान्व्रीहीन्गृहीत्वा पत्न्याऽवघातं कारयित्वा तन्निष्पन्नांस्तण्डुलान्सक्षीरायां स्थाल्यामोप्य श्रपयति। कृष्णाजिनासादनमत्र कृताकृतम्। पर्यग्निकरणं तु कर्तव्यमेव।

ततः स्रुवदर्व्यौ संमृज्याऽऽज्यसंस्कारं कुर्यात्। तत्राऽऽज्येन[1] सह चरोरपि पर्यग्निकरणम्।

ततः शृतं चरुं स्रुवेणाभिघार्योद्वास्य बर्हिषि निधायापरेणाग्निं द्वे कुटी दक्षिणोत्तरे प्राग्द्वारे कृत्वा,[2] ' ॐ आ त्वा वहन्तु० शर्वो३म् ' इति दक्षिणस्यां कुट्यां शूलगवं रुद्रमावाहयति।

तत उत्तरस्यां कुट्यां मीढुषीमावाहयामीति शूलगवस्य पत्नीं मीढुषीमावाह्य तयोः कुट्योरन्तराले जयन्तमावाहयामीति शूलगवस्य पुत्रं जयन्तमावाहयति।

केचित्तु—आ त्वा वहन्त्वित्यनेनैव शर्वो३मित्येतस्य स्थाने मीढुषो३म् जयन्तो३म्, इति यथायथमूहितेन मीढुषीजयन्तयोरावाहनं कार्यमिति वदन्ति।

तत आवाहनक्रमेणैताभ्यो देवताभ्यस्त्रींस्त्रीनुदकाञ्जलीन्दद्यात्। ततस्त्रिषूद्धरणपात्रेषूपस्तीर्य स्थालीपाकं त्रिषु पात्रेषु व्युद्धृत्याभिघारयति।

ततः, ' ॐ उपस्पृशतु मीढ्वान्मीढुषे स्वाहा ' इति मन्त्रमुच्चार्य शूलगवाय मीढुषेऽयमोदनो न ममेत्युक्त्वा तत्संनिधावोदनं स्थापयति। ' ॐ उपस्पृशतु मीढुषी मीढुष्यै स्वाहा ' इति मन्त्रमुच्चार्य शूलगवस्य पत्न्यै मीढुष्या अयमोदनो न ममेत्युक्त्वा द्वितीयमुद्धृतमोदनं शूलगवस्य पत्न्या मीढुष्याः +संनिधौ स्थापयति। 'ॐ जयन्तमुपस्पृशतु जयन्ताय स्वाहा ' इति मन्त्रमुच्चार्य शूलगवस्य पुत्राय जयन्तायायमोदनो न ममेत्युक्त्वा तृतीयमुद्धृतमोदनं शूलगवपुत्रस्य जयन्तस्य संनिधौ स्थापयति।

ततः परिधिपरिधानादिव्याहृतिहोमान्तं कृत्वा प्रथममोदनमानीय स्रुवेण दर्व्यामुपस्तीर्य तस्मादोदनान्मेक्षणेन द्विरवदायाभिघार्य हविः प्रत्यज्य ' ॐ भवाय देवाय स्वाहा ' इति जुहोति। भवाय देवायेदं०। एवं पुनः पुनरवदाय ' ॐ रुद्राय देवाय स्वाहा ' ' ॐ शर्वाय देवाय स्वाहा ' ' ॐ ईशानाय देवाय स्वाहा ' ' ॐ पशुपतये देवाय स्वाहा ' ' ॐ उग्राय देवाय स्वाहा '

+ सर्वपुस्तकेषु " संनिधावोदनं स्थापयति " इति पाठः।

[1] ख. ङ. च. तत्र चरुणा सहाऽऽज्यस्य। प॰। [2] च. गत्वा।

'ॐ भीमाय देवाय स्वाहा' 'ॐ महते देवाय स्वाहा' इत्येतैर्जुहोति । यथालिङ्गं त्यागः । रुद्राहुत्युत्तरमुदकस्पर्शः ।

अथ द्वितीयमोदनमानीय तथैव जुहोति । 'ॐ भवस्य देवस्य पत्न्यै स्वाहा' 'ॐ रुद्रस्य देवस्य पत्न्यै स्वाहा' 'ॐ शर्वस्य देवस्य पत्न्यै स्वाहा' 'ॐ ईशानस्य देवस्य पत्न्यै स्वाहा' 'ॐ पशुपतेर्देवस्य पत्न्यै स्वाहा' 'ॐ उग्रस्य देवस्य पत्न्यै स्वाहा' 'ॐ भीमस्य देवस्य पत्न्यै स्वाहा' 'ॐ महतो देवस्य पत्न्यै स्वाहा' इत्येतैर्जुहोति । यथालिङ्गं त्यागः ।

अथ तृतीयमोदनमानीय 'ॐ जयन्ताय स्वाहा' इत्येतेनाष्टवारमावृत्तेनाष्टाऽऽहुतीस्तथैव जुहोति । जयन्तायेदमिति त्यागः ।

ततः स्रुवेण दर्व्यामुपस्तीर्य सर्वेभ्य ओदनेभ्यः सकृत्सकृत्समवदाय सहैव दर्व्यां निधायाभिघार्य स्विष्टकृद्धर्मेण जुहोति 'ॐ अग्नये स्विष्टकृते स्वाहा' इति । अग्नये स्विष्टकृत इदमिति त्यागः । सहैव दर्व्यां निधानं समवदायेतिशब्दान्न लभ्यते ।

परिकर्मिण इध्माधानसमयेऽग्नेर्दक्षिणतश्चोत्तरतश्चाऽऽत्मीया गा यथा हूयमानस्य हविषो गन्धं घ्रातुं शक्नुयुस्तथा स्थापयेयुः ।

ततः शुल्बप्रहरणादिहोमशेषं समापयेत् ।

ततः—'ॐ स्वस्ति नः पूर्णमुखः परिक्रामतु' इति मन्त्रेण कुट्यादिसहितमग्निं प्रदक्षिणं परिक्रम्य नमस्ते रुद्रेत्यस्य प्रश्नस्याग्निर्ऋषिः । रुद्रो देवता । (*प्रथमानुवाकमन्त्राणामनुष्टुबादीनि च्छन्दांसि द्वितीयानुवाकादिनवमानुवाकान्तानां मन्त्राणां यजुः । दशमानुवाकमन्त्राणामास्तारपङ्क्त्यादीनि च्छन्दांसि । एकादशानुवाकमन्त्राणामनुष्टुप्छन्दो यजुश्च । ) शूलगवोपस्थाने विनियोगः । 'ॐ नमस्ते रुद्र मन्यवे० जम्भे दधामि' इति शूलगवमुपतिष्ठते । सानुषङ्गैर्मन्त्रैरिति केचित् । प्रथमोत्तमानुवाकाभ्यां वा ।

## अथ बौड्यविहाराख्यं शूलगवाङ्गभूतं प्रतिपत्तिकर्मोच्यते ।

प्रागासादितानि त्रिंशत्पलाशपर्णानि बौड्यानि तेषां विहारो विहरणं नानादेशेषु स्थापनम् । 'ॐ गृहपोपस्पृश गृहपाय स्वाहा' 'ॐ गृहप्युपस्पृश गृहप्यै स्वाहा' 'ॐ द्वारपोपस्पृश द्वारपाय स्वाहा' 'ॐ द्वारप्युपस्पृश द्वारप्यै

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—" महाविराट्छन्दः " इति ।

१ ख. च. °ता । शूल° ।

स्वाहा' इति चतुर्भिर्मन्त्रैश्चत्वारि, एकस्मिन्प्रदेश एव चतुर्षु देशेषु [वा] समीपे स्थापयति।

तत एवमन्यस्मिन्प्रदेश उत्तरैर्मन्त्रैः। 'ॐ घोषिण उपस्पृशत घोषिभ्यः स्वाहा' 'ॐ निषङ्गिण उपस्पृशत निषङ्गिभ्यः स्वाहा' 'ॐ अन्वासारिण उपस्पृशतान्वासारिभ्यः स्वाहा' 'ॐ प्रयुन्वन्त उपस्पृशत प्रयुन्वद्भ्यः स्वाहा' 'ॐ विचिन्वन्त उपस्पृशत विचिन्वद्भ्यः स्वाहा' 'ॐ समश्नन्त उपस्पृशत समश्नद्भ्यः स्वाहा' इति षड्भिः षट्।

ततोऽन्यस्मिन्प्रदेशे। 'ॐ देवसेना उपस्पृशत देवसेनाभ्यः स्वाहा' एतेन दश। प्रतिपर्णं मन्त्रावृत्तिः। 'ॐ या आख्याता देवसेना याश्चानाख्याता उपस्पृशत ताभ्यः स्वाहा' एतेन दश। प्रतिपर्णं मन्त्रावृत्तिः। अथैतेषामेव पर्णानां शलाकासंतर्दनेन पुटं कृत्वा तस्मिन्स्रुवेणोपस्तीर्य, ओदनशेषत एकं पिण्डं कृत्वा पुटेऽवधायाभिघार्य तमादाय क्रोशद्वयाधिकमध्वानं शत्रोर्गोः संचारभूमिं वा गत्वा 'ॐ निषङ्गिण उपस्पृशत निषङ्गिभ्यः स्वाहा' इति कस्मिंश्चिद्वृक्षे तं पुटं बध्नाति। 'ॐ निषङ्गिन्नुपस्पृश निषङ्गिणे स्वाहा' इत्येकवचनान्तं पाठं केचिदाहुः।

नमो निषङ्गिण इत्यस्याग्नी रुद्रो यजुः। पुटोपस्थाने विनियोगः—'ॐ नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः' इति बद्धं पुटमुपतिष्ठते।

ततो होमदेशं प्रत्येत्य हस्तपादप्रक्षालनं कृत्वाऽऽचम्याऽऽसादिते चान्दनानुलेपनवर्ण्योदके आसादितानखण्डयवानखण्डतण्डुलान्वाऽऽसादितगोमयदूर्वास्तम्बोदुम्बरपलाशशमीविकङ्कताश्वत्थशाखा गोवालांश्चैकीकृत्य गाः प्रोक्षति। तत्र पुंगवमेवाऽऽदौ प्रोक्षति पश्चादितराः। शिवो भवेत्येतावान्प्रोक्षणमन्त्रः। *वीप्सा प्रतिद्रव्यमावृत्तिप्राप्त्यर्थम्।

केचित्तु शिवो भव शिवो भवेत्येतावानेक एव मन्त्र इत्याहुः।

ततः कर्माङ्गत्वेन ब्राह्मणान्भोजयित्वा प्रमादादिति विष्णुं संस्मरेत्। एवं कृते शूलगवो रुद्रः प्रीतो भवति। शिवो हैव भवतीति वचनात्।

अथ तस्मिन्दिनेऽनन्तरमेव क्षेत्रपतिदेवताकः स्थालीपाकः कार्यः। स च शूलगवाङ्गभूत एव। तदर्थं प्रज्वलितमग्निं कृत्वा ध्यायेत्। नात्रान्वाधानमनग्नि-

* एतेन शिवो भवेति द्विवारमपेक्षितं पूर्वत्रेति भाति।

१ ख. ङ. च. °रि देशान्तरे स्था°। २ ख. ङ. च. °ति। एवमुत्तरत्राप्युत्तरैः। " घो°। ३ ख. ङ. च. °ट्। दे°।

साध्यत्वात्। अग्नेः परिस्तरणे विकल्पः। ततोऽग्नेरुत्तरतो दर्भानास्तीर्य तेषु दर्वीमाज्यस्थालीं[1] प्रोक्षणीपात्रं चरुस्थालीं शूर्पं कृष्णाजिनमुलूखलं मुसलं चत्वारि सप्त वा पलाशपर्णान्युपवेषं[2] मेक्षणं संमार्गदर्भानवज्वलनदर्भानाज्यं चेति पात्राण्यासाद्य पवित्रे कृत्वाऽग्नेः पश्चाच्छूर्पं निधाय तस्मिन्पवित्रे निधाय क्षेत्रस्य पतये चतुरो मुष्टीन्निरु(रु)प्य तूष्णीं किंचिदन्वोप्य प्रोक्षणीः संकृत्य हविः पात्राणि च प्रोक्षेत्।

ततः कृष्णाजिनास्तरणादिफलीकरणान्तं पत्न्येव कुर्यात्।

ततः कर्ता चरुस्थालीं सोदकामौपासनाग्नावधिश्रित्य तस्यां तण्डुलानोप्य श्रपयति। न वा निर्वापादि। किंतु पर्याप्तान्व्रीहीन्गृहीत्वा पत्न्याऽवघातं कारयित्वाऽवघातनिष्पन्नांस्तण्डुलान्सोदकायां स्थाल्यामोप्य श्रपयति। कृष्णाजिनासादनं कृताकृतम्[3]।

पर्यग्निकरणं तु कर्तव्यमेव। ततो दर्वीं मेक्षणं[4] च संमृज्याऽऽज्यं संस्कुर्यात्। तत्राऽऽज्येन सह चरोः पर्यग्निकरणम्। ततः शृतं चरुमभिघार्योदगुद्वास्य दर्वीं मेक्षणमाज्यं दर्भमुष्टिं पलाशपर्णानि चाऽऽदाय गवां मार्गे होमार्थं देशं दर्भैः परिस्तीर्य तदुत्तरतो दर्भेषु दर्व्यादीनि निधाय होमदेशस्य पश्चात्कुटीं कृत्वा तत्राऽऽसादितानि पलाशपर्णानि संस्थाप्य 'ॐ आ त्वा वहन्तु० हव्याय क्षेत्रस्य पतो३म्' इति तेषु क्षेत्रस्य पतिमावाहयति।

ततस्तूष्णीमुदकाञ्जलिं दत्त्वा 'ॐ उपस्पृशतु क्षेत्रस्य पतिः क्षेत्रस्य पतये स्वाहा' इति कृत्स्नं चरुं तत्संनिधौ स्थापयति।

ततश्चरुमभ्याहृत्य होमदेशं परिषिच्य मेक्षणेनोपहत्य, 'ॐ क्षेत्रस्य पतये स्वाहा' इति परिषिक्ते देशे जुहोति। क्षेत्रस्य पतय इदं०।

अयं च होमः संनिधौ चरुस्थापनादनन्तरं झटित्येव कार्यः। न तु मध्ये कालविलम्बः कार्यः। 'नूर्ते यजते पाको देवः' इतिवचनात्। नूर्ते शीघ्रं यजते कुतः स देवः पाकः पचनशीलस्तीक्ष्णस्तस्माद्देवेति मातृदत्तः[5]। पाको बालवद्गमनशीलाय क्षेत्रस्य पतय आवाहनोत्तरं क्षिप्रं शीघ्रं बलिं दद्यादित्यर्थ इति सुदर्शनः।

ततः पुनर्भूय उपहत्य 'ॐ अग्नये स्विष्टकृते स्वाहा' इति जुहोति। अग्नये स्विष्टकृत इदं०। दर्व्यैव वा होमः। अस्मिन्पक्षे न मेक्षणस्य संमार्गः। ततो

१ ख. ङ. च. °लीं मेक्षणं शू°। २ ख. ङ. च. °र्णानि सं°। ३ क. °म्। ततो। ४ ख. ङ. च. °क्षणमाज्यं च सं°। ५ ङ. च. °त्तः। पाको देवः पा°।

मेक्षणमनुप्रहरेत् । न वा प्रहरणम् । ततः परिस्तरणानि विसृज्योत्तरपरिषेकं कृत्वा क्षेत्रस्य पतिनेति द्वयोर्विश्वे देवा ऋषयः क्षेत्रस्य पतिर्देवता । प्रथमस्यानुष्टुप् । द्वितीयस्य त्रिष्टुप् । उपस्थाने विनियोगः । ' ॐ क्षेत्रस्य पतिना० ॐ क्षेत्रस्य पते मधुमन्त० ' इति द्वाभ्यां क्षेत्रस्य पतिमुपतिष्ठते ।

ततो हुतशिष्टमन्नं किंचित्किंचिदुपादाय ये कर्तुः सकुल्याः सपिण्डा भवन्ति ते प्राश्नन्ति +प्रत्तानां स्त्रीणां न भवति तासां कुलान्तरसंक्रान्तत्वात् ।

ततः शान्तिं पठन्गृहं प्रत्येत्य हस्तपादप्रक्षालनं कृत्वाऽऽचम्य ब्राह्मणान्भोजयित्वा विष्णुं संस्मरेत् ।

कौषीतकिनां वाजसनेयिनां च ब्राह्मणे दृष्टत्वाच्छ्रौतमेवेदं न स्मार्तम् । अत एतद्लोपे श्रौतं प्रायश्चित्तं कार्यमिति मातृदत्तः ।

इति संस्काररत्नमालाख्यायां पद्धतौ शूलगवप्रयोगः ।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायाः सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालाया उत्तरार्धे चतुर्थं प्रकरणम् ॥ ४ ॥

अथ पञ्चमं प्रकरणम् ।

## अथ[1] मासिश्राद्धं वक्तुमादौ[2] वैश्वदेवपिण्डपितृयज्ञावभिधीयेते[3] ।

" पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः "

इति लौगाक्षिणा[6]ऽन्वाधानोत्तरं मासिश्राद्धात्पूर्वं च वैश्वदेवपिण्डपितृयज्ञयोः कर्तव्यताविधानात् । न च पार्वणस्थालीपाकान्वाधानाव्यवहितोत्तरमेव कुतो नाभिहिताविति वाच्यम् । तत्रानयोरभिधाने स्थालीपाकप्रयोगसौकर्यव्याघा-

+ अत्र क. पुस्तकटिप्पण्याम् " विवाहितकन्यकानाम् " इति ।

१ ख. ङ. च. °थ " पक्षा° । २ च. °दौ पक्षा° । ३ ङ. °वैर्लेतिलौ° । ४ क. तु । ५ च. °गाक्ष्युक्तक्रमानुसारेण वैश्वदेवपिण्डपितृयज्ञावभिधीयेते । न च । ६ ङ. ° क्षिवाक्योक्तक्रमानुसारेण मासिश्राद्धात्पूर्वं वैश्वदेवपिण्डपितृयज्ञावभिधीयेते । तत्रा° । ७ ख. °नान्मासिश्राद्धं वक्तुमादौ वैश्वदेवपिण्डपितृयज्ञावभिधीयेते । न चान्वाधानोत्तर° । ८ च. °गक्रमव्या° ।

तापत्तेरतोऽत्रैवाभिधीयेते । तत्र वैश्वदेवस्य देवयज्ञादिरूपत्वात्तदर्थं पञ्च यज्ञा उच्यन्ते ।

तत्र यमः—" ब्रह्मयज्ञो देवयज्ञः पितृयज्ञस्तथैव च ।
भूतयज्ञो नृयज्ञश्च पञ्च यज्ञाः प्रकीर्तिताः " इति ॥

एतत्स्वरूपं श्रुतावप्युक्तम्—
" पञ्च वा एते महायज्ञाः सतति प्रतायन्ते सतति
सं० तद्ब्रह्म यज्ञः संतिष्ठते " इति ।

मनुः[1]—" अध्यायनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् " इति ॥

( * अयं कर्ममात्रविधिर्न क्रमस्य । एतद्यज्ञचतुष्टयं वैश्वदेवपदवाच्यमिति केचित् । देवयज्ञभूतयज्ञपितृयज्ञानां त्रयाणां तद्वाच्यत्वमिति माधवः ।

" पौरुषेण च सूक्तेन ततो विष्णुं समर्चयेत् ।
वैश्वदेवं ततः कुर्याद्बलिकर्म तथैव च " इति नारसिंहात् ॥

" सभार्यस्तु ततः स्नातो विधिनाऽऽचम्य वाग्यतः ।
प्रविश्य सुसमिद्धेऽग्नौ वैश्वदेवं समाचरेत् "

इति ब्राह्मोक्तेश्च वैश्वदेवयज्ञमात्रं वैश्वदेवपदवाच्यमित्यन्ये । विश्वे(श्व)देव-देवताकत्यागघटितसमुदायसंबन्धेन वैश्वदेवस्य देवयज्ञभूतयज्ञयोः सत्त्वाद्द्वावेव वाच्यावित्यपि परे । ) अध्यायनमध्ययनं छान्दसो दीर्घः । तर्पणं पितृतर्पणम् । पितृश्राद्धमिति यावत् ।

यतः स एवाऽऽह—
" स्वाध्यायेनार्चयीतर्षीन्होमैर्देवान्यथाविधि ।
पितॄञ्श्राद्धेन नॄनन्नैर्भूतानि बलिकर्मणा " इति ॥

पितृयज्ञे विकल्पमाह कात्यायनः—
" पितृयज्ञो भवेच्छ्राद्धं पित्र्यो बलिरथापि वा " इति ।

नित्यश्राद्धं पितृयज्ञः । अथवा वैश्वदेवमध्ये स्वधा पितृभ्य इति यो बलिर्दीयते स पितृयज्ञ इत्यर्थः ।

* अयं धनुश्चिह्नान्तर्गतो ग्रन्थः क. ख. पुस्तकयोरेवास्ति स च न च पार्वणेत्यादिग्रन्थात्पूर्वं पठितुं युक्तः । आसीच्च क. पुस्तके तत्रैव । स च केनचिच्छोधयित्राऽत्रैवापकर्षितः ।

---

1 च. मनुरपि—"अ° ।

बौधायनोऽपि—" पितॄनुद्दिश्यैकं ब्राह्मणं भोजयेदपि वा दक्षिणेनाग्निं दक्षिणाग्रान्दर्भान्संस्तीर्य तेषु पिण्डं ददाति पितृभ्यः स्वधाऽस्त्वित्यपि वाऽपस्तात्पितृयज्ञः संतिष्ठते " इति।

एतन्मते देवेभ्यः स्वाहेत्यादिमन्त्रत्रयसाध्याः क्रमेण देवयज्ञपितृयज्ञभूतयज्ञा वैश्वदेवतो भिन्नाः[1]। तत्रोपयुज्यते पितृभ्यः स्वधाऽस्त्वित्ययं मन्त्रः। सूत्रकृता तु देवयज्ञादित्रयस्य भिन्नतयाऽनुक्तत्वाद्वैश्वदेव एव यज्ञत्रयमन्तर्भवति। तत्र स्वधा पितृभ्य इति मन्त्रस्यैव पितृयज्ञसाधनत्वं द्रष्टव्यम्। न चैवं सति देवेभ्यः स्वाहेत्यादिमन्त्रत्रयस्य कुत्र विनियोग इति वाच्यम्। षडाहुत्यादिरौद्रबल्यन्तकर्मण्यशक्तौ मन्त्रत्रयेण यज्ञत्रयं कर्तव्यमित्येवंरीत्या विनियोगसंभवात्। न च शब्दस्य[2] न प्रतिनिधिर्विद्यत इत्यनेन विरोधः, मन्त्रस्यापि शब्दरूपत्वादिति वाच्यम्। यथारूपमितर इत्यनेन विनियोगस्याऽऽवश्यकत्वे सिद्धेऽन्यत्र विनियोगासंभवेनानायत्या प्रतिनिधित्वेन विनियोगस्वीकारात्। न चैतन्मन्त्रविनियोगबलाद्देवयज्ञभूतयज्ञपितृयज्ञानामेव वैश्वदेवाद्भिन्नत्वं स्वीकार्यम्, किमिति प्रतिनिधित्वेन सूत्रविरुद्धो विनियोगस्वीकार इति वाच्यम्। देवेभ्यः स्वाहाकार इत्यस्मिन्सूत्र[3] उज्ज्वलाकारेणाभेदस्यैव प्रदर्शितत्वात्, रौद्रान्तताया एव सूत्रकृता स्पष्टतयोक्तत्वाच्च[4] देवयज्ञपितृयज्ञभूतयज्ञानां वैश्वदेवभिन्नत्वस्य वक्तुमशक्यत्वात्। तत्राभेदप्रदर्शको ग्रन्थ इत्थम्—वैश्वदेवेन[5] वक्ष्यमाणेन बलिहरणप्रकारेण भूतेभ्योऽहरहर्बलिर्देय एष भूतयज्ञः। मनुष्येभ्यश्च यथाशक्ति दानं कर्तव्यमेष मनुष्ययज्ञः। देवेभ्यः स्वाहाकारेण प्रदानमा काष्ठात्। अशनीयाभावे काष्ठमपि तावद्देयं वैश्वदेवोक्तप्रकारेण। एष देवयज्ञः। केचिद्वैश्वदेवाहुतिभ्यः पृथक्भूतामिमां मन्यन्ते। देवेभ्यः स्वाहेति मन्त्रमिच्छन्ति। देवयज्ञेन यक्ष्य इति संकल्पमिच्छन्ति। वयं तु न तथेति गृह्य एवावोचाम। केचिदाहुः—आ काष्ठादितिवचनाददनीयाभावे भोजनलोपे यथाकथंचिद्वैश्वदेवं कर्म कर्तव्यं पुरुषसंस्कारत्वादिति। अपरे त्वशनीयसंस्कार इति वदन्तो भोजनलोपे वैश्वदेवं न कर्तव्यमिति स्थितास्तच्चिन्त्यम्। पितृभ्यः स्वधाकारेण प्रदानमोदपात्रात्। अन्नाद्यभाव उदपात्रमपि तावद्देयं, पात्रग्रहणात्सहपात्रेण देयमेष पितृयज्ञः। 'स्वाध्यायस्तस्य विधिः' इत्यारभ्योक्तो नित्यः स्वाध्याय एष ऋषियज्ञः। इतिशब्दः समाप्तौ। इत्येते महायज्ञा इति। न चायमुपदेशक्रमोऽनुष्ठान उपयुज्यते। अनुष्ठानं तु ब्रह्मयज्ञो

१ च. °न्नाः। अत्रो°। २ क. ख. ङ. °स्य प्र°। ३ च. इत्येतत्सूत्र°। ४ च. °तत्वेन रौ°। ५ ख. ङ. °ष वैश्वदेवेन।

देवयज्ञो भूतयज्ञः पितृयज्ञो मनुष्ययज्ञ इत्युज्ज्वलाकृदाह । वस्तुतस्तु—अकृतप्रातराश उदकान्तं गत्वा प्रयतः शुचौ देशे स्वाध्यायमधीयीतेति ब्रह्मयज्ञसूत्रस्वरसादिदमेव सिध्यति । सूर्योदयप्रभृति भोजनात्प्राग्यावान्कालस्तन्मध्ये ब्रह्मयज्ञः कर्तव्यो न तु प्रातरेवेति नियमः । तथा च प्रातरेव ब्रह्मयज्ञानुष्ठानेऽयं क्रमो नोपयुज्यत इति ज्ञेयम् ।

अग्रं च देयमित्येतत्सूत्रस्थं देवपितृभूतमनुष्येभ्यः । चकारादेते मन्त्राः । देवेभ्यः स्वाहा पितृभ्यः स्वधाऽस्तु भूतेभ्यो नमो मनुष्येभ्यो हन्तेति मनुष्ययज्ञव्यतिरिक्तं व्याख्यानं विरुद्धं केनचित्प्रक्षिप्तमित्युपेक्षणीयम् । मतान्तराभिप्रायेण वा नेयम् । आस्तां वा मतान्तराभिप्रायेण । अग्रं च देयमित्यत्रत्यचकारेण संग्रहो देवेभ्यः स्वाहेत्यादियज्ञत्रयस्य । अत्राप्यग्निः स एव द्रव्यं च तदेव प्रकरणाद्बौधायनोक्तेश्चेति द्रष्टव्यम् । देवेभ्यः स्वाहेत्येतस्या एवाऽऽहुतेः पृथक्त्वनिराकरणं पितृभ्यः स्वधाऽस्तु भूतेभ्यो नम इत्युभयोरुपलक्षणम् । एवं संकल्पप्रदर्शनमपि पितृयज्ञेन यक्ष्ये भूतयज्ञेन यक्ष्य इत्यनयोः संकल्पयोः[२] ।

(+ अथ पितृयज्ञो भवेच्छ्राद्धं पित्र्यो बलिरथापि वेति कात्यायनेन नित्यश्राद्धेनापि पक्षे पितृयज्ञसिद्धेर्दर्शितत्वात्तदर्थं नित्यश्राद्धविधिरभिधीयते[३] ।

तत्र मार्कण्डेयपुराणम्—

" कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पितॄनुद्दिश्य विप्रांस्तु भोजयेद्विप्रमेव वा " इति ॥

अत्र विशेषमाह प्रचेताः—

" नाऽऽमन्त्रणं न होमश्च(मं च) नाऽऽवाहनविसर्जने ।
न पिण्डदानं न सुरान्नित्ये कुर्याद्द्विजोत्तमः ॥
उपवेश्याऽऽसनं दद्यात्संपूज्य कुसुमादिभिः ।
निर्दिश्य भोजयित्वा तु किंचिद्दत्त्वा विसर्जयेत् " [इति] ॥

न सुरान्विश्वे(श्व)देवान् । किंचिद्दत्त्वेति दक्षिणार्थम् ।

+ धनुश्चिह्नान्तर्गतग्रन्थस्थाने च. पुस्तकेऽन्यथा ग्रन्थः स यथा—" देवयज्ञेन यज्ञेन यक्ष्य इति संकल्पप्रदर्शनमपि–पितृयज्ञो भवेच्छ्राद्धं पित्र्यो बलिरथापि वेतिकात्यायनोक्तनित्यश्राद्धविधिस्तु श्राद्धप्रकरणे वक्ष्यते " इति ।

१ ङ. च. इति । अग्रं । २ क. °योः । देवयज्ञेन यक्ष्य इति पि° । ३ क. ख. °यज्ञासि° ।

" नाऽऽवाहनं स्वधाकारः पिण्डाग्नौकरणादिकम्।
ब्रह्मचर्यादिनियमो विश्वे देवास्तथैव च ॥
तत्पाट्पौरुषिकं ज्ञेयं दक्षिणापिण्डवर्जितम् " इति।

दक्षिणादानस्य विहितप्रतिषिद्धत्वाद्विकल्पः।

मत्स्यपुराणे—" अप्येकं भोजयेद्विप्रं त्रीनुद्दिश्य पितॄंस्तथा " इति।

त्रीनिति मातामहादीनामपि प्रदर्शनार्थम्।

स्मृत्यन्तरे—" नित्यश्राद्धं प्रवक्ष्यामि अर्घ्यावाहनवर्जितम्।
अदैवं तद्विजानीयाद्दक्षिणादानवर्जितम् " इति ॥

स्मृतिसंग्रहे—" नित्यश्राद्धे त्यजेद्देवान्भोज्यमन्नं प्रकल्पयेत्।
दत्त्वा तु दक्षिणां शक्त्या नमस्कारैर्विसर्जयेत् ॥
एकमप्याशयेद्विप्रं षण्णामप्यन्वहं गृही " इति।

भोज्यमन्नं स्वस्येति शेषः।

" नित्यश्राद्धे ततो दद्याद्भुङ्क्ते यत्स्वयमेव हि "

इतिब्रह्माण्डपुराणात्। अनेन तैलाद्यनुज्ञाऽपि कृता भवति।

देवलः—" अघृतं भोजयन्विप्रं स्वगृहे सति सर्पिषि।
परत्र निरयं घोरं गृहस्थः प्रतिपद्यते ॥
मिष्टमन्नं तु यो भुक्त्वा पश्चात्कदशनं लघु।
ब्राह्मणं भोजयन्विप्रो निरये चिरमावसेत् " इति ॥

अत्र कात्यायनोऽनुकल्पमाह—

" एकमप्याशयेद्विप्रं पितृयज्ञार्थसिद्धये।
अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा ॥
अप्युद्धृत्य यथाशक्ति किंचिदन्नं यथाविधि।
पितृभ्य इदमित्युक्त्वा स्वधाकारमुदाहरेत् " इति ॥

एतदुद्धृतान्नं ब्राह्मणायैव दद्यात्। तदभावे गोभ्यः।

तथा च कूर्मपुराणे—

" उद्धृत्य वा यथाशक्ति किंचिदन्नं समाहितः।
वेदतत्त्वार्थविदुषे द्विजायैवोपपादयेत् " इति ॥

तथा—" सर्वेषामप्यभावे तु दत्तं गोभ्यो निवेदयेत् " इति।

---

१ क. नित्यं श्रा॰।

यदा गवामप्यलाभस्तदा विष्णूक्तम्—

" भिक्षुकाभावे गोभ्योऽन्नं दद्यादग्नौ वा प्रक्षिपेत् " इति ।

मनुष्ययज्ञेऽप्येवमेव प्रतिपत्तिकर्मेति मदनपारिजाते ।

अत्राप्यशक्तौ मनूक्तम्—

" दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमावहन् " इति ॥

पयः क्षीरम् । एतच्च नित्यश्राद्धं श्राद्धान्तरे कृते न नियतम् ।

तथा च मार्कण्डेयः—

" नित्यक्रिया पितृणां तु केचिदिच्छन्ति मानवाः ।
न पितृणां तथैवान्ये शेषं पूर्ववदाचरेत् " इति ॥

नित्यक्रिया नित्यश्राद्धम्[१] । पितृणां तथैव तस्मिन्दिने श्राद्धान्तरं चेत्तदा नैतच्छ्राद्धं कार्यमित्यन्य आहुः । शेषं वैश्वदेवादिकम् । अत्रैवं व्यवस्था—यत्रामावास्यानान्दीमुखश्राद्धादिषु नित्यश्राद्धदेवता इष्टा भवन्ति न तत्र नित्यश्राद्धं, यत्र च सांवत्सरिकादिषु नेष्टा नित्यश्राद्धदेवतास्तत्र कर्तव्यमिति ।

तथा च चमत्कारखण्डे—

" नित्यश्राद्धं प्रकुर्वीत प्रसङ्गाद्यत्र(न्न) सिध्यति ।
श्राद्धान्तरे कृतेऽन्यत्र नित्यत्वात्तन्न हापयेत् " इति ॥

इति प्रसङ्गान्नित्यश्राद्धविधिरुक्तः[२] । )

( *पितॄनुद्दिश्यैकं ब्राह्मणं भोजयेदपि वा दक्षिणेनाग्निं दक्षिणाग्रान्दर्भान्संस्तीर्य तेषु पिण्डं ददाति पितृभ्यः स्वधाऽस्तु " इति बौधायनोक्तेः,

" पितृयज्ञो भवेच्छ्राद्धं पित्र्यो बलिरथापि वा "

इति[३] कात्यायनोक्तेश्च श्राद्धबलिदानयोर्विकल्प इति केचित् । अन्ये तु स्वधा पितृभ्य इत्यत्र देवपितॄणामेव देवतात्वं न मनुष्यपितॄणाम् । तेन श्राद्धे मनुष्यपितॄणामेव देवतात्वाच्छ्राद्धबलिदानसमुच्चयसिद्धिरित्याहुः । बौधायनकात्यायनवचनयोः पितृशब्दोऽग्निष्वात्तादिपितृपर एव वक्तव्यः । अन्यथा विषयस्य भिन्नत्वेन विकल्पानुपपत्तेः । पित्राद्युद्देश्यकं नित्यश्राद्धं भिन्नमेव । यद्यपि श्राद्धशब्दस्य मृतपित्रुद्देश्यकत्वसत्त्व एव मुख्या प्रवृत्तिस्तथाऽपि जीव-

* धनुश्चिह्नान्तर्गतं ङ. पुस्तके नास्ति ।

१ क. 'मित्येक आ' । २ च. 'येदित्यनन्तरोदाहृतबौधायनवचनात्पितृयज्ञो । ३ च. इत्यनन्तरोदाहृतकात्यायनवचनाच्च श्रा' ।

च्छ्राद्धविष्णुश्राद्धयोस्तदभावेऽपि श्राद्धशब्दप्रवृत्तिदर्शनादत्रापि स्त्री क्रियते गौण्येव। स्वधा पितृभ्यः पितृभ्यः स्वधाऽस्त्वित्येतस्यैव स्वपित्राद्युद्देश्यताविकल्पान्यथाऽनुपपत्त्या स्वीकार्यत्वेनैवं रीत्यैव समुच्चयवादिमतनिर्वाहः। श्राद्धस्याग्निष्वात्ताद्युद्देश्यत्वे पित्राद्युद्देश्यकश्राद्धं स्मृतिविहितमपि मृतपितृकेण भिन्नमेव कार्यम्। तदपि येषां सूत्रे नोक्तं भवति तैरपि कृतं चेद्वैशिष्ट्यम्। अकरणे प्रत्यवायाभावः। बलिदानस्य पित्राद्युद्देश्यकत्वे जीवत्पितृकस्य बलिदानलोप एव। तत्र देवयज्ञभूतयज्ञाभ्यामेव तत्सिद्धिः।

अथवा "येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः"

इति वचनात्पितामहादीनुद्दिश्य वा पितृयज्ञः कार्यः। पित्रादित्रयाणामपि सत्त्वे तदा लोप एवेति तन्मते द्रष्टव्यः।) वैश्वदेवस्त्वात्मसंस्कारार्थ एव। न च 'गृहमेधिनो यदशनीयस्य होमा बलयश्च" इतिवचनादुभयार्थत्वं शङ्कनीयम्। परस्परविरोधात्। अन्नसंस्कारत्वे ह्यन्नस्य प्राधान्यं वैश्वदेवस्य गुणत्वं पुरुषार्थत्वे तु तद्विपर्ययः। तथा च सति—एकस्यैव युगपत्प्राधान्यं गुणत्वं च विरुध्यते। तर्ह्यन्नसंस्कारार्थत्वमेवास्तु मा भूदात्मसंस्कारार्थत्वमिति चेन्न।

"महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः"

इति मनुवचसाऽऽकाष्ठादिति विशेषवचसा चाऽऽत्मसंस्कारार्थत्वस्यैवावगतेः। यत्, 'यदशनीयस्य होमा बलयश्च' इत्युदाहृतं तदन्यथाऽप्युपपद्यते। तत्र होमा बलयश्चेत्युत्पत्तिविधिः। यदशनीयस्येति विनियोगः। अहरहर्भूतबलिर्मनुष्येभ्यो यथाशक्तिदानं देवेभ्यः स्वाहाकार आ काष्ठात्पितृभ्यः स्वधाकार ओदपात्रादृषिभ्यः स्वाध्याय इत्यधिकारः। गृहमेधिनो ये होमा बलयश्च तेऽशनीयस्यान्नस्येति योजना। सुपां सुलुगिति यच्छब्दोत्तरस्य जसो लुक्। किंचान्नसंस्कारपक्षे प्रतिपाकमावृत्तिः प्रसज्येत। प्रतिप्रधानं गुणावृत्तिरिति न्यायात्। तस्मात्पुरुषार्थत्वमेव न्याय्यम्।

अत एव गृह्यपरिशिष्टेऽभिहितम्—

"प्रोषितोऽप्यात्मसंस्कारं कुर्यादेवाविचारयन्" इति।

"(*सायं प्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च।
अनश्नताऽपि सततमन्यथा किल्बिषी भवेत्" ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः।

१ च. 'नात्तत्रा'। २ च. 'भ्यः स्वाहा पि'। ३ च. 'श्यकता'। ४ च. 'स्कारार्थत्वे प्र'। ५ च. 'स्मादात्मसंस्कारार्थ'।

इति कात्यायनवचनेनाशनाभावेऽपि कर्तव्यतोक्ता ।

"महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ।

इति मनुनाऽप्यात्मसंस्कारार्थत्वमेव प्रतिपादितम् । )

गोभिलोऽपि—

"यद्येकस्मिन्काले व्रीहियवौ पच्येयातामन्यतरस्य जुहुयात्कृतं मन्येताथ यद्येकस्मिन्काले पुनः पुनरन्नं पच्यते सकृदेव बलिं कुर्वीत यद्येकस्मिन्काले बहुधान्यं(ऽन्नं) पच्येत गृहपतिर्म(म)हानसादेव बलिं कुर्वीत " इति ।

अयमर्थः—नानाद्रव्यपाके पुनःपाके बहूनामविभक्तभ्रात्रादीनां पृथक्पाकेऽपि चैकस्मादेव द्रव्यात्सकृदेव गृहपतिपाकादेव होतव्यमिति । गृहपतिर्मुख्योऽधिकारी ।

मनुरपि—"वैश्वदेवे निवृत्ते तु यद्यन्योऽतिथिराव्रजेत् ।
तस्मा अन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् " इति ॥

निवृत्ते भोजनानन्तरमित्यर्थः । माधवोऽप्येवम् । पुरुषार्थत्वे वैश्वदेवाख्यं कर्म न प्रतिपाकमावर्तनीयं भवतीति विज्ञानेश्वरोऽपि ।

उज्ज्वलाकृताऽपि—आ काष्ठादिति विशेषवचनादशनीयाभावेन भोजनलोपेऽपि यथाकथंचिद्वैश्वदेवं कर्म कर्तव्यमेव पुरुषसंस्कारत्वादिति केचिदाहुः, अपरे त्वशनीयसंस्कार इति वदन्तो भोजनलोपे वैश्वदेवं कर्म न कर्तव्यमिति स्थिता इति मतद्वयं प्रदर्श्य द्वितीयमते चिन्त्यत्वोक्त्या स्वस्याभिमतमात्मसंस्कारार्थत्वमेवेति दर्शितम् ।

एवं चोदाहृतस्मृतीनां निबन्धानां चाऽऽत्मसंस्कारार्थत्वमेव मुख्यमन्नसंस्कारार्थत्वं त्वानुषङ्गिकमित्यत्र तात्पर्यं न त्वन्नसंस्कारार्थता नास्त्येवेत्यत्र तात्पर्यम् । यथा फलेच्छयाऽऽरोपितादाम्रवृक्षाच्छायागन्धावानुषङ्गिकौ तद्वदत्रेति द्रष्टव्यम् । पञ्चसूनादोषपरिहारोऽपि देवयज्ञाद्यनुष्ठानेन भवति ।

तथा च कूर्मपुराणम्—

"वैश्वदेवः प्रकर्तव्यः पञ्चसूनापनुत्तये " इति ॥

यमोऽपि—"पञ्च सूना गृहस्थस्य वर्तन्तेऽहरहः सदा ।
कण्डनी पेषणी चुल्ली जलकुम्भ उपस्करः ॥
एतानि वाहयन्विप्रो बाध्यते वै मुहुर्मुहुः ।
एतासां पावनार्थाय पञ्च यज्ञाः प्रकीर्तिताः " इति ॥

---

१ च. °य महाय° ।

सूना हिंसास्थानानि। कण्डन्युलूखलादि। पेषणी दृषदुपलादि। चुल्ली पाकस्थानम्। जलकुम्भ उदककलशः। उपस्करः शूर्पादि। अवस्कर इतिपाठे मार्जन्यादि द्रष्टव्यम्। एताः सूनाः स्वस्वकार्ये प्रापयन्बाध्यते पापेन युज्यत इत्यर्थः। न च कण्डन्यादिनिमित्तश्रवणान्नैमित्तिकत्वं महायज्ञानामिति वाच्यम्। अहरहरिति वीप्सयाऽऽकाष्ठादितिवचनेन भोजनलोपेऽपि कर्तव्यताप्रतिपादनेन च सूत्रकृता नित्यत्वस्यैव प्रतिपादनात्।

"पञ्चयज्ञविधानं तु गृही नित्यं न हापयेत्" इति शङ्खेन[1],

"ततः पञ्च महायज्ञान्कुर्यादहरहर्गृही"

इति संवर्तेन च स्पष्टतयाऽभिधानाच्च[2]। ततःपदेन विवाहोत्तरत्वमुच्यते। अत्र गृहीतिश्रवणाद्गृहस्थानामेव ब्राह्मणादीनामधिकारः। अत आत्मसंस्कारार्थमनुष्ठिते सति तेनैव पञ्चसूनादोषपरिहारोऽन्नसंस्कारश्च सिध्यति। (*तेनैकादश्यादावुपवासेऽपि वैश्वदेवानुष्ठानमत एव सिध्यति। यानि त्वेकादश्यादावन्नस्य दोषप्रतिपादकवचनानि तान्युपवासविधिस्तावकफलत्वेन चरितार्थानि न वैश्वदेवनिवृत्तिपराणि। तत्त्वेऽपि पुष्पफलजपजलकाष्ठादीनामनिषिद्धत्वं स्वीकृत्य पुष्पादिभिः श्रीशमाराधयतस्तेनैव वैश्वदेवकरणे न क्वापि हानिः। एवं चैकादश्यादौ वैश्वदेवादिनित्यकर्महानौ मनूक्तस्य सामान्यप्रायश्चित्तस्योपवासरूपस्याऽऽचरणेन नित्यनैमित्तिकसंनिपाते प्रसङ्गसिद्धिं मन्वानाः क्रियमाणोपवासं प्रायश्चित्तार्थमेवाऽऽचरन्तः प्रायो भवन्ति मुख्यस्य प्रायश्चित्तान्तरस्याविधानादिति द्रष्टव्यमिति सुस्थम्।)

अत्र केचिदात्मसंस्कारार्थं वैश्वदेवं करिष्य इति संकल्पं कुर्वन्ति। केचित्तु[3]—पञ्चसूनादोषपरिहारार्थमन्नसंस्कारार्थमात्मसंस्कारार्थं च वैश्वदेवं कर्म करिष्य इति संकल्पं वदन्ति। अन्ये तु—श्रीपरमेश्वरप्रीत्यर्थं वैश्वदेवं कर्म करिष्य इत्येव[6] संकल्पो न त्वात्मसंस्कारसिद्ध्यर्थमित्येवं संकल्प इत्याहुः।

## अथ देशः।

स च स्मृतिमञ्जर्याम्—"गृहस्य मध्यदिग्भागे वैश्वदेवं समाचरेत्।
ततस्तत्पुरतोऽगारद्वारे वैहायसं त्यजेत्" इति॥

* धनुश्चिह्नान्तर्गतं ङ. पुस्तके नास्ति।

१ क. ख. °दकल°। २ ख. ङ. °न स्प°। ३ ख. ङ. °च। अत। ४ ख. °तु श्री°। ५ क. °देवक°। ६ क. °त्येवं सं°। ७ च. °कल्प इति। युक्तस्त्वयमेव संकल्पः। अ°।

एतच्च होम एव, बलिहरणे सूत्रकृता देशविशेषाभिधानात् । एतच्च पचनाग्नौ होम एव नौपासनाग्नौ होमे, तस्य नियतस्थानत्वात् ।

## अथ कालः ।

तत्राऽऽश्वलायनः—" अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात् " इति ।

सूत्रकृताऽपि नक्तमेवोत्तमेन वैहायस इत्यनेन सूत्रेण सायं प्रातः कर्तव्यतोक्ता भवति ।

स्मृतिमञ्जर्यां नृसिंहपुराणे—

" दिवा यामद्वयेऽतीते स्नानं माध्याह्निकं चरेत् ।
पौरुषेण च सूक्तेन ततो विष्णुं समर्चयेत् ॥
वैश्वदेवं ततः कुर्याद्बलिकर्म तथैव च ।
भोजयेदतिथिं पश्चाद्भोजनं स्वयमाचरेत् " इति ॥

( * अत्र तत इतिपञ्चमीश्रुत्या वैश्वदेवस्यैव देवपूजानन्तर्यं प्रतिपाद्यते । आतिथ्यस्य वैश्वदेवानन्तर्यं तु स्पष्टमेवोक्तम् । देवपूजानन्तरमातिथ्यं ततो वैश्वदेव इति पराशरोक्तक्रमस्तु दुर्बलः पाठक्रमापेक्षयाऽर्थक्रमस्य बलीयस्त्वात् । एतच्च श्रुतिलिङ्गसूत्रव्यवस्थापितम् । तस्माद्वैश्वदेव एव प्रथमं कर्तव्यः पश्चादातिथ्यम् । आतिथ्यशब्देन मनुष्ययज्ञ उच्यते । अनया रीत्या वेदपाठोऽप्यनुगृहीतो भवति—देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति । स्मार्ताच्च पाठो बलीयानिति विरोधाधिकरणन्यायेनावगम्यते । तस्मादपि मनुष्ययज्ञाद्वैश्वदेवस्य प्राथम्यम् । देवपूजोत्तरं वैश्वदेवं इति सर्वनिबन्धा अपि ।

" + विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते " इति पद्मपुराणवचनात्

" पितृशेषं तु यो दद्याद्धुतशेषं तु विष्णवे ।
रेतोदाः पितरस्तस्य भवन्ति क्लेशभागिनः " ॥

इति पञ्चरात्राच्च पूर्वं नैवेद्यसमर्पणं ततो वैश्वदेव इति केचित् ।

अन्ये तु—" वैश्वदेवविधिं कृत्वा विष्णोर्नैवेद्यमर्पयेत् " इति व्यासोक्तेः,

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—" तेन देवपूजोत्तरं वैश्वदेव इति सर्वनिबन्धाः । तमेवं(नं) वैश्वदेवशेषेण कुर्यान्नास्य शेषेण वैश्वदेवं कुर्यादिति बह्वृचपरिशिष्टोक्तेराश्वलायनानामेवाऽऽदौ वैश्वदेवस्ततो देवपूजेत्येवं वा क्रमः " इति । + एतत्प्रभृतीदमपि साधकमित्यन्तो ग्रन्थश्च. पुस्तकेऽत्र नास्ति । किं त्वेतस्मात्पूर्ववर्तिस्वयमाचरेदिति ग्रन्थात्परतो वर्तते ।

---

१ ङ. च. सायंप्रातःकालौ सूचितौ । स्मृ° । २ ख. °वस्य प्र अपि तमेव वै° ।

"वैश्वदेवविशुद्धोऽसौ विष्णवेऽन्नं निवेदयेत्" इति मनूक्तेः,

"तमेवं(नं) वैश्वदेवशेषेण कुर्यान्नास्य शेषेण वैश्वदेवं कुर्यात्"

इति बह्वृचपरिशिष्टोक्तेः,

"वैश्वदेवं पुरा कृत्वा[१] नैवेद्यं विनिवेदयेत्।
अकृत्वा वैश्वदेवं यो नैवेद्यं विनिवेदयेत्॥
तदन्नं वै न गृह्णन्ति देवा विष्णवादयो ध्रुवम्"

इति स्मृतेश्चाऽऽदौ वैश्वदेवस्ततो नैवेद्यनिवेदनमित्येव क्रम इत्याहुः।

अत्र यथासंप्रदायं व्यवस्था। प्रथमः क्रमो रामार्चनचन्द्रिकाकारादिभिर्निष्ठावैष्णवैरादृतत्वात्तत्परः। द्वितीयस्तु स्मार्तपरः। प्रयोगपारिजातादिभिस्तदनुरोधेनैव प्रयोगस्य प्रदर्शनाद्व्यवस्थितो वा संप्रदायः।

नैवेद्यसमर्पणात्पूर्वं वैश्वदेवकरणे विशेष उक्तः प्रयोगसारे स्मृत्यन्तरे—

"देवार्थमन्नमुद्धृत्य वैश्वदेवं समाचरेत्।
नैवेद्यमर्पयेत्पश्चान्नृयज्ञं तु ततश्चरेत्" इति॥

नैवेद्यसमर्पणात्पूर्वं वैश्वदेवकरण इदमपि साधन(क)म्।)

रात्रिविषयेऽपि तत्रैव—

"रात्रौ तु[२] देवं नीराज्य वैश्वदेवं समाचरेत्" इति।

उभयत्र[३] वैश्वदेवानुष्ठानासंभवे प्रातरेव द्विरावृत्त्या सह वा कार्यः।

यथोक्तमाश्वलायनेन-

"प्रातरेव द्विरावृत्त्या कुर्याद्वा स[४]ह तौ द्विजः" इति।

(* अत्र प्रातःकालः पूर्व एव ग्राह्यः, सर्वेषां कल्प(ल्पा)नां प्रथमप्रयोगमारभ्यैव प्रवृत्तेः सर्वत्र दर्शनात्। एवं चात्रापकर्ष एव सायंवैश्वदेवस्य भवति। उत्तरः(र)प्रातःकालेऽनुष्ठानस्य तु सामान्यशास्त्रादेव सिद्धेर्न विध्यपेक्षेति द्रष्टव्यम्।) प्रातरेव द्विरावृत्तिपक्षे प्रातर्वैश्वदेवं कृत्स्नं कृत्वा पश्चात्संकल्पप्रभृतिविधिना सायं वैश्वदेवं कुर्यात्। ततो मनुष्ययज्ञादिसहत्वपक्षेऽपि संप्रतिपन्नदेवताकत्वात्सकृदेव कार्यः। तत्र प्रातःसायंवैश्वदेवाख्यं कर्मद्वयं तन्त्रेण करिष्य इति संकल्पवाक्ये विशेषः। वैहायसबलिस्तु तन्त्रपक्षेऽपि सायंवैश्वदेवान्त एव यथावस्थितपाठेन देयः। भोजनाभावेऽपि प्रातर्वैश्वदेवस्यालोपव-

---

* धनुश्चिह्नान्तर्गतो ग्रन्थश्च. पुस्तक एव।

१ ख. °त्वा नित्ये चाभ्युदये तथा। स्वाभीष्टदेवतादिभ्यो नैवेद्यं विनिवेदयेत्। तद°। २ च. रात्रौ तु त°। ३ क. ख. ङ. 'यत्रासं'। ४ क. सहितौ।

त्सायंभोजनाभावेऽपि सायंवैश्वदेवस्य न लोपः। अत्र केचित्प्रातरेव वैश्वदेवद्वये तन्त्रेण कृतेऽपि सायं भोजनकर्तव्यतायां पुनरपि सायंवैश्वदेवः कर्तव्यः।

उदाहरन्ति च वचनम्—

" प्रातरेव कृतेऽपि स्याद्वैश्वदेवद्वये बुधैः।
सायं सत्यां बुभुक्षायां वैश्वदेवं पुनश्चरेत् " इति ॥

तन्निर्मूलं विरुद्धत्वान्निबन्धेष्वदर्शनाच्चेति नवीनाः। वैश्वदेवस्यान्नसंस्कारकत्वमात्रमिति पक्षे सायंभोजनाभावनिश्चयदशायां[1] सायंवैश्वदेवस्यैवाभावात्पुनरिति विरुद्धम्। आत्मसंस्कारकत्वमात्रमितिमतेऽशक्तिवशेन प्रातरनुष्ठितेन सायंवैश्वदेवेनैवाऽऽत्मसंस्कारस्य सिद्धत्वात्पुनर्विधानमेव विरुद्धम्। उभयसंस्कारकत्वं वैश्वदेवस्येतिमतेऽप्येकेनैव सायंतनवैश्वदेवेनोभयसंस्कारकत्वसिद्धेस्तद्दोषतादवस्थ्यमित्येवं वचनस्य विरुद्धत्वं द्रष्टव्यम्।

प्रातर्वैश्वदेवकर्म दैवाद्विस्मृतमपि अस्तोत्तरं सायमग्निहोत्रहोमादौपासनहोमाद्वा पूर्वं[3] स्मृतं चेत्तदा वैश्वदेवमादौ झटिति कृत्वा सायमग्निहोत्रहोममौपासनहोमं वा कुर्यात्।

तथा च यज्ञपार्श्वे—" अकृते वैश्वदेवे चेदस्तमेति गभस्तिमान्।
वैश्वदेवं ततः कृत्वा सायंहोमं समाचरेत् " इति ॥

यदा तु होमोत्तरं स्मरणं तदाऽपि सायंवैश्वदेवात्प्राक्पृथगेव प्रातर्वैश्वदेवः कर्तव्यः। न तु तन्त्रम्।

तथा च स्मृतिभास्करे—

" अकृतो वैश्वदेवश्चेद्दिवा रात्रौ तमाचरेत्।
पृथगेव प्रकुर्वीत न तु तन्त्रमिहेष्यते " इति ॥

दिवा वैश्वदेवो न कृतश्चेत्तदा तमन्तरितं रात्रौ पृथगेव कुर्यात्। इति पूर्वार्धार्थो द्रष्टव्यः। यदि तु सायंवैश्वदेवोत्तरं स्मरणं तदा द्वितीयदिने प्रायश्चित्तमात्रम्। *सायंवैश्वदेवस्याप्यग्रिमवैश्वदेवात्प्राक्स्मरणं चेत्तदा पृथगेव कर्तव्यता। अकृतो वैश्वदेवश्चेदित्युदाहृतवाक्यात्। रात्रौ वैश्वदेवो न कृतश्चेत्तदा तमन्तरितं दिवा पृथगेव कुर्यादित्येव योजनाऽस्मिन्विषये द्रष्टव्या। यदि त्वग्रिमवैश्वदेवोत्तरं स्मरणं तदा तदग्रिमदिने प्रायश्चित्तमात्रं * कार्यम्।

* एतत्प्रभृति प्रायश्चित्तमात्रं कर्तव्यमित्यन्तो ग्रन्थः ख. ङ. पुस्तकयोर्नास्ति। क. पुस्तके तु टिप्पणीरूपेणाधो लिखितोऽस्ति। * क. पस्तकटिप्पण्यां कर्तव्यमिति पाठः।

१ च. °तिपक्षेऽप्यश°। २ च. °कत्वपक्षेऽप्ये°। ३ च. सायंहोमात्पूर्वं। ४ च. सायंहोमं कु°।

( * तच्चोपवासात्मकं कार्यम्।

" अकृत्वाऽन्यतमं यज्ञं यज्ञानामधिकारतः।
उपवासेन शुध्येत पाकसंस्थासु चैव हि " इतिवचनात् ॥

सर्वथोपवासं कर्तुमसमर्थस्य मनस्वत्येकाऽऽहुतिर्भवति।

तदुक्तं प्रायश्चित्तप्रकाशे—

" एतेभ्यः पञ्चयज्ञेभ्यो यद्येकोऽपि च लुप्यते।
मनस्वत्याहुतिस्तत्र प्रायश्चित्तं विधीयते " इति ॥)

यदा सायं समन्त्रककर्मकर्तृणामभावस्तदा पत्नी सायममन्त्रकं बलिं हरेत्।
तथा च मनुः—" सायमन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत्।
वैश्वदेवं हि नामैतत्सायं प्रातर्विधीयते " इति ॥

अत्र वैश्वदेवं हि नामैतदित्येतत्पर्यन्तमेकं वाक्यम्। सायं प्रातर्विधीयत इत्यपरं वैश्वदेवस्य कालद्वयेऽपि कर्तव्यताविधायकम्। अतः सायमेव पत्न्या बलिहरणरूपवैश्वदेवाधिकारः। बलिहरणं कृत्स्नवैश्वदेवकर्मोपलक्षणमिति केचिद्वर्णयन्ति। [ तन्न? ] न स्त्री जुहुयादित्यनेन वैश्वदेवहोमस्य स्त्रीकर्तृकत्वनिषेधाद्धोमलोपेन बलिहरणस्यापि लोपे केवलबलिहरणस्य परम्परयाऽपि विश्वे-(श्व)देवाख्यदेवतासंबन्धासंभवेन वैश्वदेवं हि नामैतदितिवचनबोधितवैश्वदेव-[शब्द]वाच्यत्वासंभवात्। अतः पत्नीव्यतिरिक्तवक्ष्यमाणकर्त्रभावे लोप एव। वैश्वदेवसिद्धिस्तु पत्नीकर्तृकप्रायश्चित्तेनैव। संबन्धोपलक्षितत्वविवक्षायां तु बलिहरणादिकं भवत्येव। केचित्तु बलिं हरेदित्येकवचनाद्वैहायसबलिदानमात्रं स्त्रिया कार्यं नान्यदिति, तन्न। स्मृत्यन्तरे 'रात्रौ पत्नी बलीन्हरेत्' इति बहुवचनेन सर्वेषामपि बलीनां रात्रौ विहितत्वेनात्रापि तथैव वक्तुमुचितत्वात्। एकवचनस्य जात्यभिप्रायेणैव स्मृत्यन्तरानुरोधेन नेतुमुचितत्वात्। यत्तु नक्तमेवोत्तमेन वैहायस इत्येतस्मिन्सूत्रे नक्तं वैहायस एवेत्येवकारं योजयित्वा पुरुषेणापि नक्तं वैहायसबलिमात्रमेव कर्तव्यमिति कैश्चिदुक्तं तदप्याश्वलायनादिसूत्रविरोधादेवकारस्य व्यवहितान्वयकल्पने प्रमाणाभावाच्चोपेक्ष्यम्। तेन कृत्स्नमपि बलिहरणं पुरुषेण स्त्रिया वाऽपि रात्रौ कर्तव्यमेवेति सिद्धम्। एतच्च

* धनुश्चिह्नान्तर्गतो ग्रन्थश्च. पुस्तके नास्ति।

१ क. °न्त्रकं क°। २ क. ख. ङ. °रः। तेन ब°। ३ क. ख. ङ. °णं वैश्वदेवस्याप्युपलक्षणार्थमि°। ४ क. °वस्य। ५ क. ख. ङ. °रणादिलोपः। के°। ६ च. °रणे प°। ७ क. ख. ङ. °देवता°। ८ क. ख. ङ. °त्वाभावा°। ९ ख. ङ. °स्तु प्रा°। १० च. °चनं तु स्मृत्यन्तरानुरोधेन जात्यभिप्रायेणैव नेयम्। य°।

वैश्वदेवाख्यं कर्म दिवा द्विस्तथा रात्रावपि द्विर्न कर्तव्यम् ।

"धर्मविन्नाऽऽचरेत्स्नानमाह्निकं च पुनः पुनः ।
तर्पणं ब्रह्मयज्ञं च वैश्वदेवं च नाऽऽचरेत्" इति विष्णुस्मरणात् ॥

( * रागतः प्राप्तस्यात्र निषेधः । )

वैश्वदेवबलिहृती सायं प्रातः, पञ्चयज्ञां(ज्ञा)स्तु दिवैव ।

यथाऽऽह जमदग्निः—

"वैश्वदेवं दिवा रात्रौ कुर्याद्बलिहृतिं तथा ।
महतः पञ्च यज्ञांस्तु दिवैवेत्याह धर्मवित्" इति ॥

येषां शाखिनां ब्रह्मयज्ञव्यतिरिक्तानां महायज्ञानां वैश्वदेवे बलिहृतौ चान्तर्भावः, तेषां दिवैव वैश्वदेवाख्यं कर्म न रात्रौ । यदि स्वशाखायां कालद्वयकर्तव्यतायां विधानं लिङ्गं वा नास्ति । अस्ति च स्वशाखायां सूत्रे नक्तमेवोत्तमेन वैहायस इति रात्रावपि वैश्वदेवकर्तव्यतायां विधानम् । ये भूताः प्रचरन्ति दिवा नक्तं बलिमितिमन्त्रे लिङ्गं च । अतो रात्रावपि भवतीति बोध्यम् । देवेभ्यः स्वाहेत्यादय एव देवयज्ञाः, वैश्वदेवस्तु भिन्न एवेति मते वैश्वदेव एव सायं भवति न तु देवेभ्यः स्वाहेत्यादियज्ञत्रयमिति ज्ञेयम् ।

## अथाधिकारिनिर्णयः ।

तत्र नारदः—"भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते ।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक्पृथक्" इति ॥

व्यासः—"होमप्रदानरहितं न भोक्तव्यं कदाचन ।
अविभक्तेषु संसृष्टेष्वेकेनापि कृतं कृतम्" इति ॥

एकेन मुख्येन ज्येष्ठेनेति यावत् । कृतमित्यनन्तरं भवेदिति शेषः ।

स्मृत्यन्तरेऽपि—"सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु तत्कृतम् ।
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्" इति ॥

शाकलः—"एकपाकेन वसतामेकं देवार्चनं गृहे ।
वैश्वदेवं तथैवैकं विभक्तानां गृहे गृहे" इति ॥

एकपाकेन वसतामविभक्तानामित्यर्थ इति कश्चित् । तन्न । अस्य वक्ष्यमा-

* एतद्वाक्यं क. पुस्तके टिप्पण्या लिखितमस्ति ।

१ क. ख. ङ. °त् । वै° । २ च. °ङ्गं न भवेत् । अ° । ३ क. ख. सूत्रं । ४ ख. ङ. °म् । अ° । ५ ङ. °तो द्विरपि । ६ च. °ण वाऽवि° । ७ च. °स्य वि° ।

णाश्वलायनवचनानुरोधेन [विभक्ता]विभक्तसाधार[1]ण्यस्यैव वक्तुमुचितत्वात्। विभक्तानामित्यस्यानुवादकत्वेन संकोचकत्वायोगात्। "अविभक्तेषु संसृष्टेष्वेकेनापि कृतं भवेत्" इति व्यासोक्तेश्च। अतः पाकैक्य [2]एवाविभक्तानां यज्ञैक्यम्। न चैवं कदाचित्पाकभेदे भेदापत्तिः। वसतामित्यनेन बहुकालिकपाकैक्योक्तेः। "यद्येकस्मिन्काले बहुधाऽन्नं पच्येत गृहपतिर्म(म)हानसादेव बलिं हरेत्(कुर्वीत)" इति पूर्वोदाहृतगोभिलवचनाच्च।

आश्वलायनः—"वसतामेकपाकेन विभक्तानामपि प्रभुः।
एकस्तु चतुरो यज्ञान्कुर्याद्वाग्यज्ञपूर्वकान्" इति॥

वाग्यज्ञो ब्रह्मयज्ञः, तत्पूर्वकानित्यतद्गुणसंविज्ञानो बहुव्रीहिः। तेन देवयज्ञादीनामेवैककर्तृकता न ब्रह्मयज्ञस्य। स तु पृथगेव कार्य[3]ः। एतत्सर्वमेक[4]ग्रामवासविषयम्।

[5]ग्रामान्तरे तु स एव विशेषमाह—

"अविभक्ता विभक्ता वा पृथक्पाका द्विजातयः।
कुर्युः पृथक्पृथग्यज्ञान्भोजनात्प्राग्दिने दिने" इति॥

(* न चैतदप्येकगृहविषयमस्त्विति वाच्यम्। 'यद्येकस्मिन्काले बहुधाऽन्नं पच्येत गृहपतिर्म(म)हानसादेव बलिं हरेत्(कुर्वीत)' इति गोभिलवचनेन विरोधापत्तेः।

आश्वलायनस्मृतिः—"एकपाकाशिनः पुत्राः संसृष्टा भ्रातरोऽपि च।
वैश्वदेवं न ते कुर्युरेकः कुर्यात्पितैव हि॥
वैश्वदेवं क्वचित्कर्तुं न शक्नोति पितैव हि।
पितुरेवाऽऽज्ञया कुर्यात्पुत्रो भ्राता परोऽपि हि॥
एकान्नाशिषु पुत्रेषु भ्रातृष्वेकत्र सत्सु च।
तत्रैको वैश्वदेवः स्यात्" इति।)

स्मृतिसमुच्चये—"वैश्वदेवः क्षयाहश्च महालयविधिस्तथा।
देशान्तरे पृथक्कार्यो दर्शश्राद्धं तथैव च" इति॥

(+ एतच्च ज्येष्ठकनिष्ठभ्रातृसाधारणं द्रष्टव्यम्। पुत्रेणापि ग्रामे ग्रामान्तरे वा पाके सति पृथक्कार्य एव।

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः। + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः।

१ च. °रणत्वा°। २ ख. एव वि°। ३ च. भवति। ४ च. °कगृहवा°। ५ ङ. ग्रामैकगृहवा°। ६ च. गृहान्तरे।

" यदि स्याद्भिन्नपाकाशी ग्रामे ग्रामान्तरेऽपि च ।
वैश्वदेवं पृथक्कुर्यात्पितर्यपि च जीवति " इति शाकलोक्तेः ॥)

यस्य तु ज्येष्ठेनाकृते वैश्वदेवेऽन्नं सिध्येत्तेन तूष्णीमग्नौ किंचित्क्षिप्त्वा भोक्तव्यम् । तथा च पृथ्वीचन्द्रोदये गोभिलः—

" यस्य त्वेषामग्रतोऽन्नं सिध्येत्स नियुक्तं वह्नौ किंचिद्धुत्वाऽश्नीयात् " इति ।

ग्रासमात्रमिति व्याख्यातारः । ( * इदं च कनिष्ठभ्रातुः कदाचित्पाकभेदे ज्ञेयमिति पृथ्वीचन्द्रः । नियुक्तं भोज्यम् । किंचिद्ग्रासमात्रम् ।

तथा च[1] ) संग्रहेऽपि—

" वैश्वदेवा[2]संभवे[3] तु कुक्कुटाण्डप्रमाणं(णकम् ।)
संप्रहृत्य ग्रासमग्नौ किल्बिषात्तु विमुच्यते " इति ।

(+ एतदपि (?) प्रथममन्नसिद्धौ ज्येष्ठेन कृते वैश्वदेवे पश्चात्कनिष्ठस्य पाकभेदे[4] तेनाहुत्वैव भोक्तव्यम् । अयं चान्नप्रक्षेपस्तूष्णीमेवेति निबन्धकाराः । पाकासाध्ये जपोपवासादावविभक्तानामप्यधिकारः ।

" पृथगप्येकपाकानां ब्रह्मयज्ञो द्विजन्मनाम् ।
अग्निहोत्रं सुरार्चा च संध्या नित्यं पृथग्भवेत् "

इतिप्रयोगपारिजात आश्वलायनोक्तेः । अत्र सुरार्चायाः पार्थक्यविधानं कुलागतप्रतिमातिरिक्तप्रतिमापरम्, तेन न शाकलवचनविरोधः । पाकभेदे तु सांऽपि प्रतिमा पृथक्पृथगेवेत्यर्थसिद्धम् ।) स्त्रीणामप्येवम् ।

" स्त्रियो ग्रासमात्रमन्नं घृतप्लुतमग्नौ प्रास्य भुञ्जीयुः " इति स्मृत्यन्तरोक्तेः[5] ।

( * यतः(त्तु) " स्त्री बालांश्च कारयेत् " इति तद्विधवापरम् । " विधवा कारयेच्छ्राद्धम् " इतिस्मृतिरत्नावल्याद्युदाहृतश्राद्धवदिहापि तस्याः प्रयोजकत्वात् । तथा—एते यज्ञा जीवत्पितृकस्याप्यावश्यकाः ।) मृतपितृकस्यैवेति-विशेषानुपलम्भात् ।

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः । * धनुश्चिह्नान्तर्गतग्रन्थस्थाने क. च. पुस्तकयोरन्यथा पाठः स यथा—" इदं च विधवापरमित्याचाररत्ने । यस्या गृहे न कोऽप्यस्ति तादृशविधवापरमित्याचारदर्पणे । नास्ति स्त्रीणां पृथग्यज्ञः , न स्त्री जुहुयादिति निषेधौ समन्त्रकवैश्वदेवपरौ द्रष्टव्यौ । स्त्री बालांश्च कारयेदिति प्रयोज्यकर्तृकं यदुक्तं तदपि समन्त्रकवैश्वदेवपरं द्रष्टव्यम् " इति ।

---

१ च. च स्मृत्यन्तरे " वै° । २ च. °वाभावे कु° । ३ क. ख. °संभावे । ४ क. °दे ना° । ५ ख. °क्तेः । मृ° ।

"यदि स्याद्भिन्नपाकाशी ग्रामे ग्रामान्तरेऽपि च ।
वैश्वदेवं पृथक्कुर्यात्पितर्यपि च जीवति" इति शाकलोक्तेश्च ।

तत्र पित्र्यबलिर्वर्ज्य इत्येके ।

केचित्तु—"येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः" ।

इति वचनात्पितृयज्ञोऽपि कर्तव्यः पितामहादीनुद्दिश्येत्येके(त्याहुः) । अन्ये तु—अग्निष्वात्तादीनुद्दिश्यैव पित्र्यबलिः कर्तव्य इति वदन्ति ।

आश्वलायनः—

"पृथगप्येकपाकानां ब्रह्मयज्ञो द्विजन्मनाम् ।
सूतकाद्यैस्त्वशुद्धात्मा न कुर्यान्न च कारयेत्" इति ॥

यत्तु हरदत्तः—"सूतकमध्येऽपि ब्रह्मयज्ञभिन्नाश्चत्वारो न त्याज्याः । 'तानेतान्यज्ञानहरहः कुर्वीत' इति । 'सूतके कर्मणां त्यागः संध्यादीनां विधीयते' इत्यादिना बाधितानां प्रतिप्रसवेनैव सार्थक्यम् । ब्रह्मयज्ञस्तु न भवति । 'तस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः' इति श्रुतेः" इत्याह,

तन्न । "पञ्चयज्ञविधानं तु न कुर्यान्मृतिजन्मनोः" इति देवेले तन्निषेधात् । "अहरहः कुर्वीत" इति तु संध्यावन्दनादिवन्नित्यतामात्रबोधकमिति ।

मुख्यस्य करणाशक्तावाहात्रिः—

"पुत्रो भ्राताऽथवा ऋत्विक्शिष्यश्वशुरमातुलाः ।
पत्नी श्रोत्रिययाज्याश्च दृष्टास्तु बलिकर्मणि" इति ।

(* दृष्टा इत्यत्र प्रतिनिधित्वेनेति शेषः । बलिकर्मणीतिवचनाद्बलावेव प्रतिनिधिरिति मदनरत्ने । बलिपदं वैश्वदेवोपलक्षणमिति पृथ्वीचन्द्रः । "न स्त्री जुहुयात्" इति निषेधाद्बलिमात्रं पत्नीकर्तृकं न होम इति सत्याषाढादिसूत्रानुसारिणाम्(णः) । आश्वलायनानां तु पत्नीकर्तृको होमोऽप्यस्ति । औपासनहोमस्याऽऽश्वलायनेन विहितत्वात् । ऋत्विक्साहचर्यात्साग्निकपरमित्याचारादर्शः । एते प्रतिनिधयः प्रवासादिविषय इति चन्द्रिका ।

वस्तुतस्तु सदा गृहेऽपि स्वयंकर्तृत्वविकल्पः । "स्वयं त्वेवैतान्यावद्गृहे वस-

---

* धनश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः ।

१ ङ. °व्यः स्वधाशब्दवर्जमित्याहुः । वस्तुतस्तु जीवत्पितृकैः पित्र्यबलिरपि कर्तव्यः । तस्याग्निष्वात्ताद्युद्देश्यत्वादिति युक्तम् । आ° । २ क. °वरातेन त° । ख. °वतेन त° । ३ क. इष्टा ।

न्बलिं ह(लीन्ह)रेदपि वाऽन्यो ब्राह्मणः" इति गोभिलोक्तेः। अपि वाऽन्यो ब्राह्मण इति, अशक्तिकार्यव्यासक्तिविषये द्रष्टव्यम्। अन्यो ब्राह्मण इत्यत्र र्त्विक्त्वेन वृतः शिष्यादिर्वेति द्रष्टव्यम्। निरग्नेस्तु स्वकर्तृकत्वमेवेत्याचारादर्शः। पुत्रादयोऽपि मुख्यानुज्ञयैव कुर्युः।) पत्नीकर्तृको होमस्तु शाखान्तरविषयः। न स्त्री जुहुयादिति निषेधात्। एतेऽपि मुख्यानुज्ञयैव कुर्युः।

तथा च कश्यपः—"पुत्रो भ्राताऽथवा शिष्यः कुर्याज्ज्येष्ठाभ्यनुज्ञया।
श्वशुरो मातुलो वाऽपि वैश्वदेवहुतिं सदा" इति॥

(* वैश्वदेवहुतिर्वैश्वदेवहोमः। ऋत्विक्कर्तृकत्वे तु तस्याऽऽदौ वरणं कृत्वा तेनर्त्विजा वैश्वदेवः कारणीयः 'नावृता याजयेयुः' इति निषेधात्। कर्मसमाप्तौ तस्मै हिरण्यं गौर्वा दक्षिणा देया। वरणभरणाधीनं हि ऋत्विक्त्वमित्यृत्विगधिकरणे मीमांसकोक्तेः। भरणं दक्षिणादानम्। असंभवे पूर्णपात्रं वा देयम्। 'पाकयज्ञेषु पूर्णपात्रं दक्षिणां दद्यात्' इति च्छन्दोगसूत्रात्।)

प्रवासविषये बौधायनः—

"प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते।
पञ्चानां महतामेषां सह यज्ञैः स गच्छति" इति॥

प्रवासं गच्छतो यस्य गृहे पञ्चानां[१] महतां यज्ञानां मध्य एषां बुद्धिस्थानां[२] देवयज्ञादिमनुष्ययज्ञान्तानां[३] चतुर्णां कर्ता यदि विद्यते तदा मुख्यः कर्ता, यज्ञैर्देवयज्ञभूतयज्ञपितृयज्ञमनुष्ययज्ञैः सह न गच्छतीत्यर्थः। न च यथाश्रुतं विद्यत इत्यनेन नञोऽन्वयं परित्यज्य किमर्थं गच्छतीत्यनेन दूरस्थेनान्वयः क्रियत इति वाच्यम्। गृहे कर्त्रभावे यज्ञैः सह गमनस्यार्थत एव सिद्धत्वेन विधिवैयर्थ्यापत्तेः। (+ अथवा कर्तृशब्देन मुख्यः कर्ता ग्राह्यः। प्रवासं गच्छतो यस्य भ्रातुर्गृहे मुख्यः कर्ता न विद्यते तदा देवयज्ञादिभिः सह गच्छति। प्रवासे पृथग्वैश्वदेवः कर्तव्य इत्यर्थः।) पञ्चानां महतामेषामित्यत्रत्यैतच्छब्दस्य विभिन्नार्थकत्वकल्पनं तु पञ्चानां महतां मध्ये ब्रह्मयज्ञस्यापि प्राप्तत्वेन तत्र चान्यकर्तृकताया एवाभावेन पञ्चानामेषां महतां यज्ञानां गृहे कर्ता[४] यदि विद्यते

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः। + धनुश्चिह्नान्तर्गतं नास्ति ख. पुस्तके।

१ क. °न्यो वा ब्रा°। २ क. °नां यज्ञानां महतां बुद्धिस्थानां मध्य एषां चतुर्णां दे°। ३ च. °ज्ञादीनां। ४ क.° नां क°। ५ क. ख. °र्ता, एतैर्दे°।

तदा पञ्चभिर्यज्ञैः सह न गच्छतीत्ये(*तादृशो[1]ऽर्थो निष्पद्येत, स चासंगतो भवेदिति कृतमिति ज्ञेयम्। पूर्वव्याख्याने यज्ञसहितगमनाभावप्रयोजिका सत्ता तु भ्रात्रतिरिक्तस्य कर्तुर्द्रष्टव्या। वैश्वदेवः क्षयाहश्चेतिस्मृतिसमुच्चयवाक्यानुरोधात्। एतद्वाक्यं चेत्समूलं तदैवै[2]तन्नान्यदेति द्रष्टव्यम्।

बौधायनः—"प्रवासं कुरुते चैतद्यदन्नमुपपैद्यते।
न चेदुत्पद्यतेऽन्नं तु अद्भिरेतान्समापयेत्" इति॥)

# अथाग्निनिर्णयः।

तत्रेदं धर्मसूत्रम्—

"औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रं हस्तेनैता आहुतीर्जुहुयात्" इति।

अत्रोज्ज्वलाकृत्—यत्र पच्यते[3] स पचनाग्निः। औपासनवतामौपासने विधुरस्य पचन इति व्यवस्थितो विकल्पः। अन्ये तु तुल्यविकल्पं मन्यन्त इत्याह। सर्वाधानिनोऽपि पचन एवेत्यैण्विलायाम्[4]। सर्वाधानिनो देवयज्ञो लुप्यत इति तु रामाण्डारः। सुदर्शनस्तु वैश्वदेवार्थं धर्मशास्त्रोक्तविधिनाऽग्निरुपसमाधातव्य इत्याह।

यत्तु माधवीयेऽङ्गिराः—

"शालाग्नौ तु पचेदन्नं लौकिके वाऽपि नित्यशः।
यस्मिन्नग्नौ पचेदन्नं तस्मिन्होमो विधीयते" इति॥

यच्च कर्मप्रदीपे—"प्रातर्होमं तु निर्वर्त्य समुद्धृत्य हुताशनात् (नम्?)।
शेषं महानसे कृत्वा तत्र पाकं समाचरेत्॥
पाकान्तेऽग्निं समाहृत्य गृह्याग्नौ तु पुनः क्षिपेत्।
ततोऽस्मिन्वैश्वदेवादि कर्म कुर्यादतन्द्रितः"॥

इति तत्कात्यायनपरम्। (+*अन्याग्निपक्कं नाश्नीयादिति तद्गृह्याम्नातनिषेधात्। एवं च कातीयानां शालाग्नौ पाकस्तत्रैव होमः। अन्याग्निपक्कं नाश्नीया-

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ख. पुस्तकेऽन्यथा ग्रन्थः स यथा—"तस्य सर्वस्यासंगत्यापत्त्या कृतमिति ज्ञेयम्। एतच्च वैश्वदेवः क्षयाहश्चेतिस्मृतिसमुच्चयवाक्यविरोधमात्रातिरिक्तपरं द्रष्टव्यम्" इति। +एतत्प्रभृत्यथाऽऽरम्भकाल इत्येतस्मात्पूर्वं विद्यमानस्य ग्रन्थस्य स्थानेऽन्यथा ग्रन्थो ङ. पुस्तके स यथा—"तेषां सूत्रे पराग्निपक्कं नाश्नीयादिति निषेधात्। सामयाचारिकधर्ममध्ये श्रौतस्य वैश्वदेवस्य पाठादप्यौपासनाग्नौ होमेऽपि लौकिकाग्नावेव पाको नौपासनाग्नावित्यवगम्यते" इति। * धनुश्चिह्नान्तर्गतं ख. पुस्तके नास्ति।

---

१ क. °शोऽन्यो नि°। २ क. °दैव त°। ३ क. °पच्यते। ४ ख. °ल्यम्विला°। ङ. °ल्यन्विला°। च. °त्यण्डविला°।

दिति निषेधोऽपि दर्शप्रकरणे पाठात्पर्वपर एव। अन्याग्निपदमपि तत्पुरुषरूपमन्यस्वामिकाग्निपाकनिषेधपरं, न तु कर्मधारयरूपं शालाग्निभिन्नाग्निपक्वनिषेधपरम्। तेन न लौकिकाग्निपक्वाशने निषेध इति।) "औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रं हस्तेनैता आहुतीर्जुहोति" इत्यस्मिन्सूत्र औपासनेन सह पचनस्य विकल्पकरणमेव ज्ञापकम्, औपासने पचनत्वधर्मो नास्तीति। यद्यौपासने(*ऽपि पचनत्वधर्म इष्टो भवेत्तदा पचन इत्येवाविशेषाद्ब्रूयात्।) + एतावतैवौपासनलौकिकरूपपचनयोः प्राप्तौ विकल्पो व्यर्थः स्यादत औपासने पचनत्वं नास्तीत्येव सूत्रस्वरसात्सिद्धं भवति। पचनग्रहणात्केवललौकिकाग्निव्यावृत्तिः। एतच्च पाकाग्निसत्त्वे, तदभावे तु लौकिकाग्नौ भवत्येव। सुदर्शनेन स्वीकृतस्य गृह्याग्निप्रतिनिधित्वस्यैव लौकिकाग्निप्रतिनिधित्वस्यापि स्वीकारे बाधकाभावात्। रामाण्डारमते तु नैतत्। शाकपत्रतण्डुलफलहोमे तु विधानबलादेव लौकिकाग्निप्राप्तिर्न तु प्रतिनिधित्वेनेति।

## अथाऽऽरम्भकालः।

(*चन्द्रिकायां संवर्तः—

"ततः पञ्च महायज्ञान्कुर्यादहरहर्द्विजः" इति।

ततो विवाहानन्तरमित्यर्थः।) स च विवाहात्पूर्वं दायविभागे जाते सति चतुर्थीहोमानन्तरमेव नान्यथा। विवाहव्रतमध्ये तदारम्भस्यायुक्तत्वात्। +पाणिग्रहणादधि गृहमेधिनोर्व्रतमिति सूत्रे पाणिर्गृह्यते यस्मिन्कर्मणि तत्पाणिग्रहणं चतुर्थीकर्मान्तो विवाह इत्यर्थः। तदादि[ः] पूर्वोऽवधिर्यस्यां क्रियायां सा तथा। क्रियाविशेषणत्वान्नपुंसक[त्व]म्। तत्प्रभृति तदुपलक्षितकालमारभ्य तस्मादूर्ध्वं गृहमेधिनोर्गृहस्थाश्रमवतोर्यन्नियतं कर्तव्यम्। जातावेकवचनम्। तदुच्यत इति, उज्ज्वलाकृद्व्याख्यानाच्च।

केचित्तु गृहप्रवेशस्थालीपाकोत्तरमेव वैश्वदेवारम्भमिच्छन्ति। तन्न। उदा-

* धनुश्चिह्नान्तर्गतं नास्ति ख. पुस्तके। + एतावतेत्यादिप्रतिनिधित्वेनेत्यन्तो ग्रन्थः क. ख. पुस्तकयोर्नास्ति। ग च क. पुस्तके टिप्पण्यामस्ति। एतत्स्थाने च क. पुस्तकेऽन्यथैव स यथा—"केवलं पचनग्रहणे। औपासने पाकस्य लोकतोऽसिद्धत्वेन तस्य पचनग्रहणेनेति। औपासनग्रहणानि यद्युच्यते तदौपासने न लौकिके वा पचन इति पचनत्वधर्मस्योभयत्राप्यविशेषेण यः (?) कृतः स्यादिति द्रष्टव्यम्। पचनग्रहणात्केवललौकिकाग्निव्यावृत्तिः" इति। ख. पुस्तकेऽपि तत्स्थोऽयमेवौपासन इत्यन्तं वर्जयित्वा। * धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. पुस्तके। + वक्ष्यमाणग्रन्थानुरोधेनात्र "पाणिग्रहणादि" इति युक्तमिति भाति।

१ च. शाकं। २ च. °नत्वं ना°। ३ च. °नत्वमिष्ट भ°। ४ च. °लप्रभृति उत्तरकालमा°।

हृतसूत्रव्याख्यानविरोधात् । पार्वणौपासनहोमयोस्तु—" अत ऊर्ध्वम् " इति वचनाद्गृहप्रवेशस्थालीपाकोत्तरभावित्वम् ।

शुभे दिने चन्द्राद्यानुकूल्येऽयमारम्भः कार्यः ।

" प्रशस्तेऽहनि कर्तव्यं शुभं कर्म सदा बुधैः ।
अनुकूले तथा चन्द्र इति गर्गादिभाषितम् "

इति ज्योतिर्निबन्धवाक्यात् ।

तत्र प्रातरेव प्रथमोपक्रमः, सूत्रकृता रौद्रबल्यन्तं वैश्वदेवं विधायानन्तरं " नक्तमेवोत्तमेन वैहायसः " इति विधानेन प्रातरुपक्रमस्यैव दर्शितत्वात् । " ये भूताः प्रचरन्ति दिवानक्तं बलिमिच्छन्तः " इतिमन्त्रे प्रातःसायंवाचकयोर्दिवानक्तपदयोर्मध्ये पूर्वं दिवाग्रहणात् ।

" वैश्वदेवं द्विजः कुर्यात्सदा कालद्वयेऽपि च ।
आरम्भो वैश्वदेवस्य दिवा चैव विधीयते " इत्याश्वलायनस्मृतेश्च ।

आश्वलायनसूत्रवृत्तिकृद्देवत्राताभ्यामपि—" अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात् " इत्यस्मिन्सूत्रे दिवाचारिभ्य इति *दिवा नक्तंचारिभ्य इति [दिवा] नक्तमितिमन्त्रलिङ्गक्रमानुसारेण प्रातरुपक्रम एव साधितोऽस्ति ।(+अत्र शूद्रस्याप्यधिकारो मन्त्रविशेषश्च " नमस्कारेण मन्त्रेण पञ्च यज्ञान्समाचरेत् " इति शूद्रं प्रकृत्य याज्ञवल्क्येनोक्तः । स्त्रीणां नास्त्यधिकारः " न स्त्रीणां पृथग्यज्ञः " इति याज्ञवल्क्योक्तेः " न स्त्री जुहुयान्नानुपेतः " इति धर्मसूत्राच्च । )

## अथ पाककर्तारः ।

तत्रेदं धर्मसूत्रम्—" आर्याः प्रयता वैश्वदेवेऽन्नꣳ संस्कर्तारः स्युर्भाषां कासं क्षवथुमित्यभिमुखोऽन्नं वर्जयेत्केशानङ्गवासश्चाऽऽलभ्याप उपस्पृशेदार्याधिष्ठिता वा शूद्राः संस्कर्तारः स्युस्तेषाꣳ स एवाऽऽचमनकल्पोऽधिकमहरहः केशश्मश्रुलोमनखवापनमुदकोपस्पर्शनं च सह वाससाऽपि वाऽष्टमीष्वेव पर्वसु वा वपेरन् " इति ।

आर्यास्त्रैवर्णिकाः । प्रयताः शुद्धाः । अन्नं भक्ष्यं भोज्यं पेयादिकं संस्कुर्युः । न स्वयं नापि स्त्रियः । भाषा शब्दोच्चारणम्, कासः कण्ठे घुरघुराशब्दः, क्षवथुः क्षुतमित्यन्नाभिमुखो न कुर्यात् । संस्कर्तारः स्युरितिबहुवचनोपक्रमाद्-

---

* अत्र दिवाशब्दोऽधिकः । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः ।

१ च. °रेवोप° । २ क. ख. ग. °णाच्च । आश्वलायनसूत्र° ।

त्रैकवचनं प्रत्येककर्त्रभिप्रायेण। केशादीनात्मीयानन्यदीयान्वाऽऽलभ्य स्पृष्ट्वाऽप उपस्पृशेत्। नेदं स्नानं किं तर्हि स्पर्शनम्। केशालम्भे पूर्वमप्युपस्पर्शनं विहितम्। इदं तु वचनं तत्रोक्तं वैकल्पिकं सकृदाद्युपस्पर्शनं मा भूदिति। आर्यास्त्रैवर्णिकास्तैरधिष्ठिताः शूद्रा वा संस्कर्तारः स्युः प्रकृतत्वादन्नस्येति गम्यते। तेषां शूद्राणामन्नसंस्कारेऽधिकृतानां स एवाऽऽचमनकल्पो वेदितव्यः। यस्यान्नं पचति, यदि ब्राह्मणस्य हृदयंगमाभिरद्भिः। यदि क्षत्रियस्य कण्ठगताभिरद्भिः, यदि वैश्यस्य तालुगताभिरद्भिः। इन्द्रियोपस्पर्शनं च भवति। शूद्राः पचन्तः प्रत्यहं केशादि वपेयुः। इदमेषामधिकमार्येभ्यः सहैव वाससा स्नानं कर्तव्यम्। आर्याणां तु परिहितं वासो निधाय कौपीनाच्छादनमात्रेणापि स्नानं भवति। शूद्राणामपि पाकादन्यत्र। अपि वाऽष्टमीष्वेव वपेरन्केशादीन्पर्वस्वेव वा प्रत्यहं वा वपेरन्। अन्तर्भावितण्यर्थाद्वापयेदित्यर्थ इति व्याख्यातमुज्ज्वलाकृता। आर्याभावे स्वयं स्त्रिया वाऽपि पाकः कार्यः।

तदुक्तं स्मृतिसारे—

"आर्याः स्युः पाककर्तारः स्वयं पत्न्यथ वा पचेत्" इति।

( * स्वयंपाकशब्दस्य पारिभाषिकत्वं स्मृतिरत्नाकरे—

"स्वहस्तेन स्वयंपाकः पत्न्या वा पच्यते यदि।
पुत्रेण पच्यते वाऽपि स्वयंपाकः प्रकीर्तितः॥
परपाकनिवृत्तोऽपि गुरुश्वशुरमातुलाः।
पितृव्यः श्रोत्रियो भ्राता एषामन्नं न हि त्यजेत्॥
उपाध्यायस्यर्त्विजश्च आचार्यस्य गुरोस्तथा।
शिष्यस्य चैव यच्चान्नमपरान्नं प्रकीर्तितम्" इति॥

नापि स्त्रिय इतीयमुज्ज्वलाकृदुक्तिस्त्वार्यसंभवे ज्ञेया। अन्यथा रेखालेखनसूत्रे पाके तु स्त्रिया न भवतीतिपूर्वोक्तविरोधपरिहारो न स्यात्)।

अयं च शूद्रकर्तृकः पाको युगान्तरविषयो द्रष्टव्यः।

"ब्राह्मणादिषु शूद्रस्य पचनादिक्रियाऽपि च"।

इति कलिवर्ज्यपाठात्।

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने क. ख. ङ. पुस्तकेष्वन्यथा ग्रन्थः स यथा—"उज्ज्वलाकृता रेखालेखनसूत्रे पाके तु स्त्रिया न भवतीत्युक्तत्वान्नापि स्त्रिय इत्ययं ग्रन्थ आर्यासंभवे ज्ञेयः। अन्यथा पूर्वापरग्रन्थविरोधापत्तेः" इति।

---

१ च. पयः। त्रा॑।

अग्न्यायतनं स्मृतिसंग्रहे—

"वैश्वदेवं प्रकुर्वीत कुण्डे वा स्थण्डिलेऽपि वा ।
अरत्निमात्रं तत्कार्यं विंशत्यङ्गुलमेव वा ॥
प्रादेशमात्रमथवा चतुरश्रं समन्ततः" इति ॥

स्मृतिसारे—"वैश्वदेवे प्रकुर्वीत कुण्डमष्टादशाङ्गुलम् ।
मेखलात्रयसंयुक्तं द्विमेखलमथापि वा ॥
स्यादेकमेखलं वाऽपि चतुरश्रं समन्ततः ।
अपि ताम्रमयं प्रोक्तं कुण्डमत्र मनीषिभिः" इ[1]ति ॥

तत्रैव—"न चुल्ल्यां नाऽऽयसे पात्रे न भूमौ न च खर्परे ।
वैश्वदेवं प्रकुर्वीत कुण्डे वा स्थण्डिलेऽपि वा" इति ॥

अपि वेत्यनन्तरं[2] कुर्यादिति शेषः । कुर्यात्स्थण्डिलकुण्डयोरित्यपि पाठः कुत्रचित् । चुल्ल्यामायसे पात्रे भूमौ खर्परे वा न वैश्वदेवं प्रकुर्वीत किंतु कुण्डे वा स्थण्डिले वा कुर्यादित्यर्थः । अत्र चुल्ल्यायसपात्रखर्परनिषेधात्कुण्डस्थण्डिलासंभवेऽपक्वमृन्मयपात्रकुण्डाकृतिरहितताम्रादिपात्रपक्वमृन्मयपात्राणामभ्यनुज्ञा गम्यते ।

"( *वैश्वदेवं प्रकुर्वीत स्वशाखाविहितं ततः ।
संस्कृतान्नैश्च विविधैर्हविष्यव्यञ्जनान्वितैः ॥
तैरेवान्नैर्बलिं दद्याच्छेषमाप्लाव्य वारिणा ।
कृतापसव्यः स्वधया सर्वं दक्षिणतो हरेत्"

इति व्यासोक्तेश्च । संस्कृतानि पक्वानि । चस्त्वर्थे । हविष्यव्यञ्जनान्वितैः । हविष्यरूपाणि व्यञ्जनानि तैरित्यर्थः । वैश्वदेवं प्रकुर्वीतेत्यनेन होमात्मकं कर्मोच्यते । तैरेवान्नैर्बलिं दद्यादिति पृथगुपादानात् । हविष्यव्यञ्जनान्वितैरित्युभयत्रान्वेति । तेन हविष्यरू[3]पपत्राद्यन्वितेनान्नेन होमः सिध्यति । यत्तु बलावेव सूपसंसर्जनविधानं तदहविष्यव्यञ्जनाभिप्रायम् । तस्यापि हविष्यत्वे होमो[4] भवति तेनेति द्रष्टव्यम् । अथवा बलावेव सूपसंसर्जनविधानान्नैव होमे हविष्यस्यापि सूपस्य संसर्ग इति द्रष्टव्यम् । सूपग्रहणं पत्रशाखा(का)द्युपलक्षणम् । बौधायनेन तेषामपि संसर्गविधानात् । पत्रादीनामपि हविष्यत्वे तेषामपि होमे

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः । अयं च न पूर्वापरसंगतः ।

१ च. °ति । प्रायश्चित्तहेमाद्रौ—"न । २ ङ. °रं चरेदि° । ३ च. 'पपात्रा' । ४ च. °मोऽपि भविष्यति ।

विनियोगो बलावेव विनियोगो वेति विकल्पः सूपन्यायेन पत्रादिष्वपि द्रष्टव्यः। अत एवाऽऽश्वलायनेन मुख्यव्यञ्जनसाधारण्येन सिद्धशब्दः प्रयुक्तः। अत एव मुख्यान्नाभावे हविष्यरूपव्यञ्जनहोमः स्मृत्युक्तः संगच्छते । यदि हविष्यरूपव्यञ्जनसत्त्वे[1] तस्य होमो न स्यात्स्मृत्युक्तः । मुख्यान्नाभावे केवलहविष्यरूपव्यञ्जनहोमो विप्लवेन । हविष्यव्यञ्जनान्वितैरिति विशेषणं सपत्नीकत्वविशेषणवत्सद्भावाभिप्रायं ज्ञेयम् । तेन हविष्यव्यञ्जनान्विततताया न नियमः । यदि तु पत्रशाकादेर्व्यञ्जनस्यैव लाभो न त्वन्नस्य तत्र नागृहीतविशेषणन्यायेन स्मृतिभिश्च विशेष्यस्यालाभवशेन बाधेऽपि विशेषणीभूतकेवलव्यञ्जनेनैव होमः । एवमेकादश्यादावपि द्रष्टव्यम् । )

यत्तु वैश्वदेवं प्रकृत्य—

" उपरिष्टात्स्थिते पात्रे क्रिया चुल्ल्यामपि स्मृता " ।

इति संग्रहनाम्ना पठन्ति केचिद्वचनं तन्निर्मूलमापद्विषयं वा बोध्यम् । वैश्वदेवः शृतान्नेन हविष्येणैव कार्यः ।

" अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयात् "

* इत्याश्वलायनोक्तेः । ( + आश्वलायनसूत्रे सिद्धशब्दः पक्वतापरः । तेन दध्यादिव्यावृत्तिः । व्यासवचने ' हविष्यव्यञ्जनान्वितैः ' इत्यनेन सामुद्रसैन्धवलवणान्वितेन होमः प्राप्नोति । ' न क्षारलवणहोमो विद्यते तथा वरान्नसंसृष्टस्य ' इति सत्यापाढापस्तम्बोक्ती अपि निरपेक्षलवणनिषेधेन यद्यपि व्याख्यातुं शक्येते तथाऽपि—

" जुहुयात्सर्पिषाऽभ्यक्तं तैलक्षारविवर्जितम् ।
दध्यक्तं पयसाऽभ्यक्तं तदभावेऽम्भसाऽपि वा "

इति व्यासोक्तो लवणसंसृष्टस्यापि निषेधः प्राप्नोत्येव ।

* जुहुयादित्येतस्मात्परं स्मृत्यन्तरे हविष्याण्युक्तानीत्येतस्मात्पूर्वं विद्यमानस्य ग्रन्थस्य स्थाने ङ. पुस्तके विद्यमानो ग्रन्थो यथा—" इत्याश्वलायनोक्तेश्च । यद्युपवासवशेन कन्दमूलफलाहारस्तदा तेनैव वैश्वदेवः कार्यः । शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम् । संकल्पयेद्यदाहारस्तेनैव जुहुयादपीति गृह्यपरिशिष्टात् । गृहमेधिनो यदशनीयस्य होमा बलयश्चेति सूत्राच्च । गृहमेधिनो यदशनीयं पक्वमपक्वं वोपस्थितं तस्यैकदेशेन होमा बलयश्च वक्ष्यमाणाः कर्तव्याः । स्वर्गः पुष्टिश्च तेषां फलमिति व्याख्यातमुज्ज्वलाकृता । पक्वमग्निसंयोगाज्जातपाकमोदनादि । एतद्भिन्नमपक्वं फलादीति द्रष्टव्यम् । एतदपि हविष्यं ज्ञेयम् । न क्षारलवणहोमो विद्यते तथाऽयज्ञसंसृष्टस्येत्यहविष्यहोमनिषेधात् । " इति । + धनुश्चिह्नान्तर्गतं नास्ति ख. पुस्तके ।

१ ख. सत्वस्य ।

" जुहुयाद्व्यञ्जनक्षारवर्जमन्नं हुताशने "

इति तु केवलव्यञ्जनपरमिति केचित् । तन्न । व्यञ्जनशब्दस्य क्षारपदसाहचर्यादहविष्यव्यञ्जनपरतासंभवेन केवलव्यञ्जनपरत्वोपवर्णनस्य स्मृत्यसिद्धस्यानुचितत्वात् । अथवा मुख्यान्नसत्त्वे केवलव्यञ्जनहोमनिषेधपरमिदं वचनं द्रष्टव्यम् ।

हविष्याणि स्मृतौ—" हैमन्तिकं सितास्विन्नं धान्यं मुद्गा यवास्तिलाः ।
कलायकङ्गुनीवारा वास्तूकं हिलमोचिका ॥
षष्टिकाः कालशाकं च मूलकं केमुकेतरत् ।
कन्दः सैन्धवसामुद्रे गव्ये च दधिसर्पिषी ॥
पयोऽनुद्धृतसारं च पनसाम्रौ हरीतकी ।
पिप्पली जीरकं चैव नागरं चैव तिन्तिणी ॥
कदली लवली धात्री फलान्यगुडमैक्षवम् ।
अतैलपक्वं मुनयो हविष्याणि प्रचक्षते " इति ॥

' हैमन्तिकमित्यनेन वार्षिकव्यावृत्तिः । सितमित्यनेन श्यामव्यावृत्तिः । अस्विन्नमित्यनेन स्विन्नव्यावृत्तिः, ' इत्याचाररत्ने । ' सितास्विन्नं गौडेषु प्रसिद्धो धान्यविशेषः । स च हेमन्तोत्पन्न एव हविष्यः ' इति स्मृतिकौस्तुभे । ' हैमन्तिकं धान्यं कलमास्तदपि सितं श्वेतमस्विन्नं हविष्यम् ' इति व्रतार्के । ' अहविष्यमपि सितास्विन्नं सद्धविष्यं भवति ' इति भोजनकुतूहले । धान्यं व्रीहयः । कलायाः सतीनापरपर्यायाः, मठर, इति प्रसिद्धाः । कुलित्था इति केचित् । कङ्गुः ' काङ्ग ' इति भाषया प्रसिद्धः । नीवारा देवधान्यम् । वास्तूकम्, ' चाकवत ' इति प्रसिद्धः पत्रशाकः । हिलमोचिका गौडेषु ' हिलासा ' इति प्रसिद्धः पत्रशाकः । षष्टिकाः षष्टिदिनैर्यदुत्पद्यते धान्यं तत् । *कालशाकः ( +पर्वतदेशे प्रसिद्धः शाकः । ) केमुकं गौडेषु ' केम्बु ' इति प्रसिद्धम् । मूलकं [ प्रसिद्धम् ] । कन्दः सूरणः । नागरं शुण्ठी । नागरङ्गं च तिन्तिणीत्ययमपि पाठः । अस्मिन्पाठे नागरङ्गशब्देन नारिङ्गं ज्ञेयम् । तिन्तिणी चिञ्चा । लवली ' राय आवळी ' इति महाराष्ट्रे प्रसिद्धा । ' हरफारेवडी ' इति मध्यदेशे प्रसिद्धा । अतैलपक्वमित्युक्तानां हविष्याणां विशेषणम् । हविष्यमपि तैलपक्वं चेदहविष्यं भवतीत्यर्थः । )

* भाषया " कढीनिम्ब " इति वैद्यके प्रसिद्ध इति क. पुस्तकटिप्पण्याम् । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. पुस्तके ।

सूत्रकृताऽपि शृतान्नेन होम उक्तो धर्मसूत्रे—

" गृहमेधिनो यदशनीयस्य होमा बलयश्च " इति ।

गृहमेधिनो यदशनीयं पक्वमपक्वं वोपस्थितं तस्यैकदेशेन होमा बलयश्च वक्ष्यमाणाः कर्तव्याः, स्वर्गः पुष्टिश्च तेषां फलमिति व्याख्यातमुज्ज्वलाकृता । पक्वमग्निसंयोगाज्जातपाकमोदनादि । एतद्भिन्नमपक्वं फलादीति द्रष्टव्यम् । तच्च शृता[शृता]न्नं हविष्यमेव होमसाधनमित्यपि दर्शितं सूत्रकृता निषेधमुखेन ' न क्षारलवणहोमो विद्यते तथाऽयज्ञसंसृष्टस्य ' इति ।

यद्युपवासवशेन शाकपत्रमूलफलाहारस्तदा तेनैव वैश्वदेवः कार्यः—

" शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम् ।
संकल्पयेद्यदाहारस्तेनैव जुहुयादपि " इति गृह्यपरिशिष्टात् ॥

विश्वप्रकाशे—" अन्नेन तण्डुलैर्वाऽपि फलेनाद्भिरथापि वा ।
वैश्वदेवं प्रकुर्वीत जपेन्मन्त्रानथापि वा " इति ॥

मन्त्रान्वैश्वदेवमन्त्रान् । ( * अत्रैवं व्यवस्था । शाकाद्याहारे शाकादिभिः । भोजनेऽन्नेन शृतेन । भर्जितान्नभक्षणे तण्डुलैरपक्वैरेव । सर्वथाऽशनाकरणेऽद्भिः । अतिसंकटेन जलस्याप्यभावे वैश्वदेवमन्त्रजप इति । उदकेन वैश्वदेवक्रियायामुदक एव कार्यो नाग्नौ ।

" अन्नेन तण्डुलैर्वाऽग्नौ जलेनाप्स्वपि वा चरेत् ।
वैश्वदेवं फलैर्वाऽपि मन्त्रा जप्या असंभवे " इतिसंग्रहवचनात् ॥

" अद्भिरञ्जलिना जले " इतिवक्ष्यमाणचतुर्विंशतिमताच्च । पक्वान्नप्रतिग्रहेऽपि तेनैव वैश्वदेवस्तस्य पाकप्रयोजकत्वात् । शूद्रलब्धेन वैश्वदेवादि न कार्यम् ।

" आमं शूद्रस्य यत्किंचिच्छ्राद्धिकं प्रतिगृह्य च ।
तत्सर्वं भोजनायालं नित्ये नैमित्तिके न च " इतिषट्त्रिंशन्मतात् ॥)

स्मृत्यन्तरे हविष्याण्युक्तानि—

" गोधूमा व्रीहयश्चैव तिला मुद्गा यवास्तथा ।
हविष्या इति विज्ञेया वैश्वदेवादिकर्मसु " इति ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तके । तत्स्थाने च ख. पुस्तके " अयं च मन्त्रजपोऽतिसंकटे " इति ग्रन्थोऽस्तीति द्रष्टव्यम् ।

१ क. ख. °न कन्दम्°

एवमन्यान्यपि स्मृतिभ्यो ज्ञेयानि । अहविष्याणि स्मृत्यन्तरे—

" कोद्रवं चणकं माषं मसूरं च कुलित्थकम् ।
क्षारं च लवणं सर्वं वैश्वदेवे विवर्जयेत् " इति ॥

( * " कन्दः सैन्धवसामुद्रे " इत्यनेन सैन्धवसामुद्रयोर्हविष्यत्वेन प्राप्तिर्य-द्यपि तथाऽपि ' न क्षारलवणहोमो विद्यते ' इति धर्मसूत्रे ' क्षारं च लवणं सर्वं वैश्वदेवे विवर्जयेत् ' इति स्मृत्यन्तरे च तयोर्निषेधान्निवृत्तिरेव । अत एव सर्व-ग्रहणं स्मृत्यन्तरे कृतमिति द्रष्टव्यम् । ) एवमन्यान्यप्यहविष्याणि स्मृतिभ्योऽ-वगन्तव्यानि । विस्तरभयान्नोच्यते(न्ते) । ( + निषिद्धं वर्जयित्वा हविष्याभावे यावनालादयो ग्राह्याः । ' यदन्नः पुरुषो लोके तदन्नास्तस्य देवताः ' इतिवचनात् । इत्याचारप्रदीपे । ) अहविष्यद्रव्येण तत्संसृष्टेन वा होमो न कार्यः, किंतु तूष्णीं भस्माग्न्यायतनादुत्तरतोऽपोह्य तस्मिन्होतव्यम् । तदुक्तं धर्मसूत्रे—

" न क्षारलवणहोमो विद्यते तथाऽयज्ञसंसृष्टस्याहविष्यस्य होम उदी-चीनं भस्मापोह्य तस्मिञ्जुहुयात्तद्धुतमहुतं चाग्नौ भवति " इति ।

यद्भक्ष्यमाणं पश्यतो लालोत्पद्यते तत्क्षारं गुडादि । लवणं प्रसिद्धम् । तत्संसृष्टं न होतव्यम् । तथा—अयज्ञं कुलित्थमाषाद्यन्नं तत्संसृष्टस्यान्नस्य होमो न विद्यते । वरान्नमित्यापस्तम्बः । अथ यस्यैवंविधमेव भोजनमुपस्थितं तस्य कथं भोजनं तत्राऽऽह—अहविष्यस्य होम उदीचीनमित्यादि । औपासा-त्पचनाद्वाऽग्नेरुदीचीनं भस्मापोह्योष्णं तस्मिन्भस्मनि जुहुयाद्वैश्वदेवहोममन्त्र-मिति व्याख्यातमुज्ज्वलाकृता । ( * एकामाहुतिं तूष्णीं जुहुयादित्यन्ये निब-न्धकाराः । ) उष्णं भस्मेत्यस्याङ्गारमिश्रितमुष्णं भस्मेत्यर्थः ।

तथा च बोधायनः—" अङ्गारान्भस्ममिश्रांस्तु उद्धृत्योत्तरतोऽनलात् ।
जुहुयाद्वैश्वदेवं तु यदि क्षारादिमिश्रितम् " इति ॥

(+ यत्तु—' हविष्याणामभावे तु क्षारादिभिरपीष्यते ' इत्याचारप्रदीपे स्मृत्यन्त-रवचनं तदपि शब्दस्वरसात्क्षारादिभिरपीष्यते किमु वक्तव्यं कन्दमूलादिभि-रित्यन्नाभावे मूलादिहोमकर्तव्यताबोधकम् । उदीचीनमुष्णं भस्मापोह्येत्येतेन विधिना क्षारादिभिरपि होमः कर्तव्यः । तेनैव वैश्वदेवसिद्धिरित्येवंपरं वा । )

* ख. ङ. पुस्तकयोर्नास्ति धनुश्चिह्नान्तर्गतो ग्रन्थः । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः । * धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तके नास्ति ङ. पुस्तके तु तत्स्थानेऽन्यथैव वर्तते स यथा—"एतेन निषेधेन वैश्वदेवहोमे हविष्यविधिः सिद्धो भवति" इति । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः ।

१ च. निषिद्धानि । २ च. 'न्यपि निषिद्धानि स्मृ' । ३ क. ख. ङ. तारास्तु हो' ।

क्षार[1]गण उक्तः संग्रहे—

"तिलमुद्गादृते शैब्यं सस्ये गोधूमकोद्रवौ ।
शू(शु)क्तं च देवधान्यं चेत्येष क्षार[2]गणः स्मृतः" इति ॥

यद्भक्ष्यमाणं पश्यतो लालोत्पद्यते तत्क्षारं गुडादीत्युज्ज्वलाकृत् । अयं च क्षारहोमनि[3]षेधो गोधूमव्यतिरिक्तपरः । गोधूमा व्रीहयश्चेति पूर्वोदाहृतस्मृत्यन्तरवाक्ये तेषां वैश्वदेवे होमसाधनत्वेन ग्रहणात् । शू(शु)क्तं पर्युषितम् । ( *अग्निपुरा[4]णेऽपि—"तिलमुद्गादृते शैब्यं सस्ये गोधूमको[5]द्रवौ ।
चीनकं देवधान्यं च शमीधान्यं तथैक्षव[म्] ।
स्विन्नधान्यं तथोखर्यं मूलं क्षारगणः स्मृतः ।
जुहुयाद्व्यञ्जनक्षारवर्जमन्नं हुताशने" इति ॥

चीनकाः कलायाः । उखर्यमुखरभूमिभवं मूलम् ।

वैश्वदेवे निषिद्धद्रव्याण्युक्तानि काशीखण्डे—

"निष्पावान्कोद्रवान्माषान्कलायांश्चणकांस्त्यजेत् ।
तैलपक्वं च पक्वान्नं सर्वं लवणयुक्त्यजेत् ॥
आढकीश्च मसूराश्च वर्तुलान्वरटांस्तथा
भुक्तशेषं पर्युषितं वैश्वदेवे विवर्जयेत्" इति ॥

निष्पावा वल्लाः । कलायाः 'मठर' इति प्रसिद्धाः । आढक्यस्तुवर्यः । वरटा धान्यविशेषः ) । हविष्याहविष्यसत्त्वे तु—एकद्रव्यकृतेन वैश्वदेवेनेतरहविष्यान्नसंस्कारसिद्धिवदहविष्यान्नस्यापि संस्कारसिद्धेर्नैतत् । किं तु सर्वमप्यन्नमहविष्यं तदेति द्रष्टव्यम् । ( + एतेन फलादिना वैश्वदेवं कृत्वाऽन्नमसंस्कृतमेव तद्भोज्यमिति, गृहमेधिनो यदशनीयस्य होमा बलयश्चेत्यापस्तम्बेनोक्तेस्तेनैव कार्यं इति मतद्वयं निरस्तं द्रष्टव्यम् । ) अत एव प्रकरणं परित्यज्य पृथगुक्तं सूत्रकृता । अत्र व्रतविशेष उक्तो धर्मसूत्रे—

"तेषामुपयो[7]गे द्वादशाहं ब्रह्मचर्यमधःशय्या क्षारलवणमधुमांसवर्जनं चोत्तमस्यैकरात्रमुपवासः" इति ।

तेषां होमानां बलीनां च ये मन्त्रास्तेषामुपयोगे नियमपूर्वके ग्रहणे द्वादशाहं

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः ।

---

१ क. ख. ङ. °रगुण । २ क. ख. ङ. °रगुणः । ३ क. ख. ङ. °षेधः स गो° । ४ क. °राणेति° । ५ क. °थैव च । स्वि° । ६ च. °भ्रसं° । ७ च. °योगो द्वा° ।

ब्रह्मचर्यं मैथुनवर्जनमधःशय्या स्थण्डिलशायित्वं क्षारलवणादिवर्जनं च भवति । उपयोक्तुरेव व्रतम् । अन्ये तु पत्न्या अपीच्छन्ति, उपयोगः प्रथमप्रयोगस्तत्र च पत्न्या अपि सहाधिकार इति वदन्तः । उत्तमस्योत्तमेन वैहायसमिति वक्ष्यमाणस्य ये भूताः प्रचरन्तीत्यस्यैकरात्रमुपवासः कर्तव्य इति व्याख्यातमुज्ज्वलाकृता । नियमपूर्वकं ग्रहणं गुरोः सकाशाद्विद्याग्रहणं तदर्थमित्यर्थः ।

तथा च बौधायनः—

"तेषां ग्रहणे द्वादशरात्रं ब्रह्मचर्यमधःशय्या क्षारलवणमधु-
मांसवर्जनं त्रयोदशेऽहन्युत्तमस्यैकाहमुपवासः" इति ।

उज्ज्वलाकृन्मते त्वध्ययनाङ्गता । अन्येषां मते कर्माङ्गतेति मतद्वयं ज्ञेयम् । नियमं विनाऽधीतवैश्वदेवमन्त्रस्य वैश्वदेवानुष्ठानकाले वैश्वदेवमन्त्राध्ययनाङ्गभूतव्रतानाचरणनिमित्तप्रायश्चित्तानुष्ठानपूर्वकं वैश्वदेवारम्भः ।

प्रायश्चित्तं तु—"प्रत्येकं कृच्छ्रमेकैकं चरित्वाऽऽज्याहुतीः शतम् ।
हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनकः"

इति स्मृत्युक्तं वेदव्रतलोपप्रायश्चित्तमेवात्र समानन्यायात्[२] । स्नानपदं तु तत्तन्मन्त्रसाध्यकर्मोपलक्षणमिति । एवं चाग्नये स्वाहेत्यादिमन्त्राध्ययनार्थं व्रतमेकं ये भूता इतिमन्त्राध्ययनार्थमपरमिति व्रतद्वयलोपनिमित्तं प्राजापत्यद्वयं गायत्र्याऽऽज्येन शतद्वयहोमश्चेति प्रायश्चित्तं चरित्वा दायविभागे जाते सति प्रशस्तेऽहनि वैश्वदेवं समारभेत[न] ।

व्रतस्य कर्माङ्गत्वपक्षेऽधीतमन्त्रोऽपि वैश्वदेवारम्भकाले व्रतद्वयं कुर्यादेवेति । धर्मसूत्रे—"सिद्धेऽन्ने तिष्ठन्भूतमिति स्वामिने प्रब्रूयात्तत्सुभूतमिति प्रतिवचनः" इति ।

सिद्धे पक्केऽन्ने तिष्ठन्पाचको भूतमिति प्रब्रूयात् । कस्मै यस्य तदन्नं तस्मै स्वामिने । भूतमिति निष्पन्नमित्यर्थः । तत्सुभूतमित्यादि[ः] प्रतिवचनो मन्त्रः । तदन्नं सुभूतं सुष्ठु निष्पन्नमिति व्याख्यातमुज्ज्वलाकृता । तत्सुभूतमित्यादिपदोपादानात्तत्सुभूतं विराडन्नमित्येतस्य मन्त्रस्य प्रतीकग्रहणमेतदिति केचित् । स्वयंकर्तृके पाके प्रश्नप्रतिवचनयोर्लोपः ।

(* पत्न्याः पाककरणोत्तरं भूतप्रतिवचनात्पूर्वं रजोदोषे विशेषश्छन्दोगपरिशिष्टे—

"भूतप्रवाचने पत्नी यद्यः संनिहिता भवेत् ।
रजोरा(रो)गादिना तत्र कथं कुर्वन्ति याज्ञिकाः ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ख. ङ. पुस्तकेषु ।

१ ख. 'वानुष्ठानार' । २ च. साजात्यात् ।

महानसेऽन्नमाकुर्यात्सवर्णा(?) तत्र वाचयेत् ।
प्रणवाद्यपि वा कुर्यात्कात्यायनवचो यथा ” इति ॥

आकुर्यात्स्थापयीतेत्यर्थः । प्रणवाद्यपि वा कुर्यात् । प्रणवं प्रतिवचनसिद्ध्यर्थं पठेत् । आदिशब्देन व्याहृत्यादि ।)

हौ(हो)म्यद्रव्यस्याधिश्रयणादिकमुक्तं धर्मसूत्रे—

“ परोक्षमन्नं संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत्तद्देवपवित्रमित्याचक्षते ” इति ।

यदि शूद्राः परोक्षमन्नं संस्कुर्युः, तदा तत्परोक्षमन्नं संस्कृतमाहृतं स्वयमग्नावधिश्रयेत् । अधिश्रित्याद्भिः प्रोक्षेत् । प्रोक्षितमन्नं देवपवित्रमित्याचक्षते । देवानामपि तत्पवित्रं किं पुनर्मनुष्याणामिति व्याख्यातमुज्ज्वलाकृता । शृतमन्नमग्नौ स्वयमधिश्रयेत् । अधिश्रयेणं पुनरग्नेरुपरि स्थापनमात्रमन्नसहितस्य पात्रस्य । अधिश्रित्येत्येतदनन्तरं संस्कृतमित्येतत्पदमनुषज्यते । अग्नावधिश्रित्य संस्कृतं तत्प्रोक्षेदित्यन्वयः । संस्कृतमित्यत्राभिघारेणेति शेषः ।

तथा च कात्यायनः—“ उद्धृत्य हविरासिच्य हविष्येण घृतादिना ।
स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेत् ” इति ।

हविष्येण घृतादिना घृताद्यन्यतमद्रव्येणोद्धृतं हविरासिच्याभिघार्य तेन हविषा जुहुयादित्यर्थः । आदिशब्दग्राह्यद्रव्याण्याह व्यासः—

“ जुहुयात्सर्पिषाऽभ्यक्तं तैलक्षारविवर्जितम् ।
दध्यक्तं पयसाऽभ्यक्तं तदभावेऽम्भसाऽपि वा ” इति ॥

( * यस्तु—“ जुहुयात्सर्पिषाऽभ्यक्तं गव्येन पयसाऽपि वा ।
क्षीरेन गोविकारेण तिलतैलेन वा पुनः ॥
संप्रोक्ष्य पयसा वाऽपि नानक्तं जुहुयादपि ।
अस्नेहा यवगोधूमशालयो हवनीयकाः ” ॥

इति बृहत्पराशरोक्तस्तैलविधिः स आज्यप्रतिनिधित्वेन तैलोपादानपरः । तच्च तिलतैलमेव । तेन सर्पिरभावे तिलतैलमात्रस्य ग्राह्यता नान्यस्येति द्रष्टव्यम् ।) अयं च देवपवित्रसंस्कारो यदि शूद्रा इत्युक्त्या शूद्रकर्तृकपाकपक्ष एवेत्युज्ज्वलाकृन्मतं गम्यते । परोक्षसंस्कृतत्वेनाग्नावन्नत्रयमधिश्रित्येति त्रिवृदन्नहोमे केवलं परोक्षसंस्कृतत्वस्यैव देवपवित्रसंस्कारहेतुत्वप्रदर्शनादशूद्रपकेऽ-

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ख. ङ. पुस्तकेषु ।

१ ङ. च. 'त्याद्भिरवोक्षे' । २ च. 'यणमग्ने' । ३ क. ख ङ. 'मे प' । ४ क. 'त्वमस्यै' ।

प्यन्नेऽयं संस्कारो भवतीति मातृदत्तमतं गम्यते। तत्र युक्तं ग्राह्यम्। (*परोक्षमित्यत्र स्वस्येति शेषः। स्वस्य परोक्षमप्रत्यक्षं संस्कृतम्। अन्यैः संस्कृतमिति यावत्। तथा च स्वव्यतिरिक्तैः संस्कृतमन्नमग्नावधिश्रित्येत्यर्थो निष्पन्नो भवति। स्वयमेव संस्कृतं चेत्तदा नायं संस्कार इत्यर्थत एव सिद्धम्। न च स्वस्य पश्यत एव यदि पाककर्त्रा संस्कृतं तदा नायं संस्कारः कर्तव्यो भवेत्, संस्कारस्य तदा प्रत्यक्षत्वादिति वाच्यम्। इष्टापत्तेरिति मातृदत्तमतानुगुणोऽर्थः। यदि शूद्राः परोक्षमन्नं संस्कुर्युरित्युज्ज्वलाकृद्ग्रन्थस्वरसतस्तु शूद्रकर्तृकपाको देवपवित्रसंस्कारे न केवलं निमित्तं किं तु शूद्रकर्तृकपाकेऽपि यदि तेन पाककर्त्रा शूद्रेणापश्यता पाचितं चेत्तदेव पवित्रसंस्कारो नान्यथा। स चापश्यता पाचितस्यान्नस्यैवेति विशेषोऽवगम्यते। पाकेऽपश्यत्तायां हेतुर्व्यग्रचित्तत्वादिर्ज्ञेयः। यदि शूद्रा इत्यनन्तरं स्वस्येति पदं यदि योज्यते तदाऽयमर्थो भवति। यदि शूद्राः स्वस्याप्रत्यक्षमन्नं संस्कुर्युस्तदाऽयं संस्कार इति। एवं च स्वस्य प्रत्यक्षं शूद्रैः कृतेऽपि पाके नायं संस्कार इत्यर्थात्सिध्यति। उज्ज्वलाकृन्मते यथा पाककर्त्राऽपश्यता पाककरणेऽयं देवपवित्रसंस्कारस्तथा परोक्षमित्यत्र स्वस्येत्यस्यान्वयवत्स्वेनेत्यस्याप्यन्वयसंभवात्स्वकर्तृके पाकेऽपि स्वेनापश्यता पाचितान्नस्यैव संस्कारो न सामान्यतः सर्वस्यान्नस्येति। एवमार्यकर्तृकेऽपि पाके। अपश्यत्कर्तृक इति यद्युच्यते तदा तु स्वकर्तृकेऽपि पाक एतादृशेऽपि विषये देवपवित्रसंस्कार इति परोक्षमित्येतत्क्रियायामेवान्वेति न त्वन्ने तस्य प्रत्यक्षत्वेन तत्रान्वयासंभवात्। अत एव मातृदत्तेन परोक्षसंस्कृतत्वेनाग्नावन्नत्रयमधिश्रित्येति संस्कार एव परोक्षशब्दस्यान्वयः कृतः। एतेष्वर्थेषु युक्तायुक्तत्वं सद्भिर्विचार्य यद्युक्तं तद्ग्राह्यम्।) देवपवित्रसंस्काराभावेऽपि घृतसंस्कारार्थं हविष्यान्नेन सह तत्संसर्गस्याऽऽवश्यकत्वाद्घृताभ्यक्तताऽन्नस्याऽऽवश्यकी यदशनीयस्येत्यनेनैतल्लभ्यते।

होमप्रकारो धर्मसूत्रे—

"औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रꣳ हस्तेनैता आहुतीर्जुहुयात्" इति।

षड्भिराद्यैः, ॐ अग्नये स्वाहा, ॐ विश्वेभ्यो देवेभ्यः स्वाहा 'ॐ ध्रुवाय भूमाय स्वाहा, ॐ ध्रुवक्षितये स्वाहा, ॐ अच्युतक्षितये स्वाहा, ॐ अग्नये स्विष्टकृते स्वाहा, इत्येतैः। एते मन्त्रा उपनिषद्भागे पठिताः।

यद्यपि सोमाय स्वाहेति पाठे न पठितं तथाऽपि हविष्केषु सर्वत्र तस्य

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः।

प्रवृत्तिरिति वदन्तः सोमाय स्वाहेति द्वितीयां जुह्वति। स्विष्टकृत्त्वात्तमपि सप्तमं जुह्वति, अग्नये स्विष्टकृते स्वाहेति। आचार्यस्तु—अग्नये स्वाहेत्यादिस्विष्टकृदन्ताः षडाहुतीर्मन्यते। हस्तग्रहणं दर्व्यादिनिवृत्त्यर्थम्। केचित्तु—सूर्याय स्वाहा प्रजापतये स्वाहेति द्वे आहुती जुह्वति। औपासनदेवताभ्यश्चेत्याश्वलायनस्मरणादिति व्याख्यातमुज्ज्वलाकृता।

वदन्त इत्यत्र केचिदाचार्या इति शेषः। षड्भिराद्यैरित्यनेन पठितमन्त्रातिरिक्तमन्त्रसाध्याऽन्याहुतिर्नास्तीति स्वमतं प्रदर्शितं भवतीत्याचार्यस्तु षडाहुतीर्मन्यत इत्यस्य व्याख्यानस्य तात्पर्यार्थः। षड्भिराद्यैरिति संख्यया प्रधानतुल्यत्वं स्विष्टकृतोऽवगम्यते। तेन स्विष्टकृदाहुतिविस्मरणेऽपि तदुत्तरं भोजनात्प्राक्स्मरणे सर्वप्रायश्चित्तं हुत्वाऽग्न्युपसमाधानादिविधिना विस्मृता स्विष्टकृदाहुतिर्होतव्येति सिद्धं भवति। भोजनानन्तरं स्मरणे परेद्युः सर्वप्रायश्चित्तं हुत्वोपोषणं कुर्यात्। उपोषणाशक्तौ मनस्वत्याहुतिः। एवं बलिविस्मरणेऽपि।

एवं पञ्चमहायज्ञलोपेऽपि।

"अकृत्वाऽन्यतमं यज्ञं यज्ञानामधिकारतः।
उपवासेन शुध्येत पाकसंस्थासु चैव हि" इति वचनात्॥

सूर्याय स्वाहा प्रजापतये स्वाहेति केचिज्जुह्वतीत्यत्र सूत्रविरोधोऽस्वरसो द्रष्टव्यः। धर्मसूत्रे—'उभयतः परिषेचनम्' इति, यथापुरस्तादन्वमंस्थाः प्रासावीरिति मन्त्रान्तान्संनमतीतिगृह्योक्तविधिना, अत्रानुक्तत्वादिति व्याख्यातमुज्ज्वलाकृता। सर्वदर्विहोमाणामेष कल्प इतिप्राप्तस्य कृत्स्नतन्त्रस्य परिसंख्यार्थमिदं वचनम्। उभयतःपरिषेकमात्रं कर्तव्यं नेतरद्गृह्योक्तोद्धननादिकं तन्त्रमिति। एतच्च दर्विहोमशब्दस्य रूढत्वपक्षे। अन्यथा त्वपूर्वविधिरिति द्रष्टव्यम्। रेखालेखनावोक्षणोत्सेचनविधानान्यप्यत्र न भवन्ति यथोपदेशं कुरुत इति वक्ष्यमाणविशेषवचनेन तेषां बाधात्+।

---

+ एतस्मादनन्तरं ङ. पुस्तकेऽधिको ग्रन्थः स यथा—" एतदर्थमेव गृह्य एतेषां विधानं परित्यज्य धर्मसूत्रे कृतमिति द्रष्टव्यम्। ताम्रमयकुण्डादौ रेखालेखनासंभवादवोक्षणादिकमेव " इति। एवं च. पुस्तकेऽप्यधिकं किंचित्तद्यथा—" उदककार्यं तु येन केनापि शुद्धोदकेन " इति।

---

१ क. ख. ङ. °स्तु इत्यारभ्य ष°। २ क. ख. ङ. °नस्यार्थः। ३ च. °श्चित्तमौपासनाग्नौ हु°। ४ ख. °वतीति। ५ ख. ङ. °त्। एवं प°। ६ च. °पि। सू°। ७ ख. °ति। रे°। ८ क. ख. ङ. °न बा°।

चतुर्विंशतिमते हविषोऽभावे द्रव्याणि, अवदानसाधनानि चोक्तानि—

" अलाभे येन केनापि फलशाकोदकादिभिः ।
पयोदधिघृतैः कुर्याद्वैश्वदेवं स्रुवेण तु ॥
हस्तेनान्नादिभिः कुर्यादद्भिरञ्जलिना जले " इति ।

हस्तेन होमे विशेषः परिशिष्टे—

" उत्तानेन तु हस्तेन अङ्गुल्यग्रेण पीडितम् ।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः " इति ॥

+ होमकाले सव्यपाणेर्हृदि निधानमुक्तं स्मृतिमञ्जर्याम्—

" संकल्पयेद्यदाहारस्तेनैव जुहुयादपि ।
पाणिना जुहुयाद्धोम्यं हृदि सव्यं निधाय वै " इति ॥

गोभिलीये—" न मुक्तकेशो जुहुयान्नानिपातितजानुकः ।
अनिपातितजानोस्तु राक्षसैर्ह्रियते हविः " इति ॥

## अथ बलिहरणम् ।

तत्र विशेषो धर्मसूत्रे—

" बलीनां तस्य तस्य देशसंस्कारो हस्तेन परिमृ-
ज्यावोक्ष्य न्युप्य पश्चात्परिषेचनम् " इति ।

बलीनां तस्य तस्य बलेर्देशस्य संस्कारः कर्तव्यः । कः पुनरसौ । हस्तेन परिमार्जनमवोक्षणं च । तत्कृत्वा बलीनां निवपनं न्युप्य पश्चात्परिषेचनं कर्तव्यम् । उपदेशादेव सिद्धे पश्चाद्ग्रहणं मध्ये गन्धमाल्यादिदानार्थमित्याहुः । तस्य तस्येति वचनं सत्यपि संभवे सकृदेव परिमार्जनमवोक्षणं च मा भूत्, एकस्मिन्देशे समवेतानामपि पृथक्पृथग्यथा स्यादिति व्याख्यातमुज्ज्वलाकृता ।

अन्यच्च धर्मसूत्रे—

" एवं बलीनां देशे देशे समवेतानाᳲ सकृत्सकृदन्ते परिषेचनम् " इति ।

यथा षण्णामाहुतीनां परिषेचनं तन्त्रविभवात्, एवं बलयोऽप्येकदेशसमवेता उत्तरैर्ब्रह्मसदन इत्यादयस्तेषां तदन्ते परिषेचनं प्राप्तं पश्चात्परिषेचनमित्यनेन विहितं सकृत्सर्वान्ते सकृत्सकृत्कर्तव्यं न प्रत्येकं पृथगिति । असत्यस्मिन्सूत्रे पूर्वस्य तस्येतिवचनाद्यथा परिमार्जनमवोक्षणं च प्रत्येकं पृथग्भवति तथा परि-

+ एतदादिहविरितीत्यन्तो ग्रन्थो नास्ति ङ. पुस्तके

१ च. °ङ्गुष्ठाग्रे° । २ च. °नां तन्त्रं परिषेचवि° । ३ ङ. च. यदन्ते ।

षेचनमिति स्यात् । अत्र वोपदेशवशादेव य एकदेशबलयस्तेषामेव सकृदन्ते परिषेचनं न याहच्छिक्य(क)समवाये, तेन यद्यपीच्छयाऽगारस्योत्तरदेशः शय्यादेशः कृतस्तथाऽपि कामलिङ्गस्य पृथक्परिषेचनं भवत्येवेति व्याख्यातमुज्ज्वलाकृता । शय्यादेशस्तु गृहस्य दक्षिणतो नियतः ।

तथाऽऽह ज्योतिर्निबन्धे लल्लः—

" स्नानं च पाकः शयनं च भोज्यं गजालयो वाजिगृहं धनस्य ।
देवस्य[1] पूर्वादिदिशि क्रमेण मध्ये सभा भूपनिवेशनाय " इति ॥

अन्यत्रापि—" विक्रमस्थानं पचनं शयनं सूतिकागृहम् ।
भोजनं पशुभाण्डारमीशान्यां देवतागृहम् " इति ॥

ज्योतिर्वसिष्ठोऽपि—" ऐन्द्र्यां तु विक्रमस्थानमाग्नेय्यां पचनालयः ।
याम्यां तु शयनस्थानं नैर्ऋत्यां सूतिकागृहम् ॥
वारुण्यां भोजनगृहं वायव्यां पशुमन्दिरम् ।
कौबेर्यां तु धनस्थानमीशान्यां देवतागृहम् " इति ॥

शिल्पशास्त्रे चैवम् ।

अवदानबल्योः प्रमाणं स्मृत्यर्थसारे—

" अङ्गुष्ठपर्वमात्रं स्यादवदानं तनोऽपि च ।
ज्यायः स्विष्टकृदाज्यं तु चतुरङ्गुलसंमितम् ॥
कुक्कुटाण्डकमात्रं तु बलिरित्यभिधीयते " इति ।

बलीनामार्द्रामलकप्रमाणत्वमुक्तं छन्दोगपरिशिष्टटीकायाम्—

" प्राणाहुतिं बलिं चैव आर्द्रामलकमानतः " इति ।

कुर्यादिति शेषः ।

बलयः सति सूपे तत्संसृष्टेनान्नेन कार्याः ।

तदुक्तं धर्मसूत्रे—' सति सूप(पे)संसृष्टेन कार्याः ' इति । सति सूपे तत्संसृष्टा बलयः कार्याः । अन्ये त्वन्यैरपि व्यञ्जनैः संसर्गमिच्छन्ति ।

तथा च बौधायनः—' काममितरेषु ' इति । एष एव व्यञ्जनसंस्कारः । व्यञ्जनसंसृष्टेनान्नेन बलयः कार्याः सति संभव इत्थमिति व्याख्यातमुज्ज्वलाकृता ।

बलिदानप्रकारो[2] धर्मसूत्रे—

" अपरेणाग्निं सप्तमाष्टमाभ्यामुदगपवर्गमुदधानसंनिधौ नवमेन मध्येऽगा-

---

१ च. गृहस्य । २ क. ख. ङ. तत्प्रकारो ।

रस्य दशमैकादशाभ्यां प्रागपवर्गमुत्तरपूर्वार्धेऽगारस्योत्तरैश्चतुर्भिः शय्यादेशे कामलिङ्गेन देहल्यामन्तरिक्षलिङ्गेनोत्तरेणापिधान्यामुत्तरैर्ब्रह्मसदने दक्षिणतः पितृलिङ्गेन प्राचीनावीत्यवाचीनपाणिर्दद्याद्रौद्र उत्तरो यथादेवतं तयोर्नाना परिषेचनं धर्मभेदान्नक्तमेवोत्तमेन वैहायसः" इति।

अपरेणाग्निमग्नेः पश्चात्सप्तमाष्टमाभ्यां धर्माय स्वाहाऽधर्माय स्वाहेत्येताभ्यां बलिहरणं कर्तव्यम्। उदगपवर्गं न प्रागपवर्गम्। उदकं यत्र धीयते तदुदधानं मणिकाख्यं तस्य संनिधौ नवमेनाद्भ्यः स्वाहेत्यनेन मध्येऽगारस्य। दशमैकादशाभ्यामोषधिवनस्पतिभ्यः स्वाहा रक्षोदेवजनेभ्यः स्वाहेत्येताभ्यां प्रागपवर्गम्। अगारस्योत्तरपूर्वार्धे गृह्याभ्यः स्वाहाऽवसानेभ्यः स्वाहाऽवसानपतिभ्यः स्वाहा सर्वभूतेभ्यः स्वाहेत्येतैः, प्रागपवर्गमित्येव। कामाय स्वाहेति शय्यादेशे। देहली द्वारस्याधस्तात्। तस्याधोवेदिकेत्येके। अन्ये त्वन्तर्द्वारस्य ग्रहणमिति। तत्रान्तरिक्षाय स्वाहेति। येना(यया)ऽपिधीयते द्वारं साऽपिधानी कपाटं तदर्गलमित्यन्ये। तत्र—यदेजति जगति यच्च० यन्नाम्ने स्वाहेति। उत्तरैर्ब्रह्मसदने। अगारस्येत्यनुवृत्तेस्तस्य यो ब्रह्मसदनाख्यो देशो वास्तुविद्याप्रसिद्धः, अगारस्य मध्ये(ध्यं), तत्रोत्तरैः पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यः स्वाहेन्द्राय स्वाहा बृहस्पतये स्वाहा प्रजापतये स्वाहा ब्रह्मणे स्वाहेत्येतैः, प्रागपवर्गमेव।

अपर आह—मध्येऽगारस्येत्यत्र देशस्योपयुक्तत्वाद्ब्रह्मा यत्र सीदति गार्ह्येषु कर्मसु अग्नेर्दक्षिणतः स ब्रह्मसदनस्तत्रेति।

अनन्तराणां बलीनां दक्षिणतः स्वधा पितृभ्य इत्यनेन बलिं कुर्यात्। प्राचीनावीत्यवाचीनपाणिश्च भूत्वा दक्षिणपाणिमुत्तानं कृत्वाऽङ्गुष्ठतर्जन्योरन्तरालेन पितृबलेरुत्तरतो रौद्रो बलिः। यथादेवतं प्राचीनावीत्यवाचीनपाणिरिति नानुवर्तत इत्यर्थः। नमो रुद्राय पशुपतये स्वाहेति मन्त्रः।

अत्र यद्यपि पशुपतिलिङ्गमप्यस्ति तथाऽपि रुद्रस्यैव विशेषणमिति रौद्र इति व्यपदेश्यत्वेनोपपन्नं देवतास्मरणमपि रुद्रायेत्येव कुर्वन्ति। रुद्राय पशुपतय इत्येके। केचित्तूत्तरो मन्त्रो रौद्रः स पशुपतिदेवत्य इति व्याचक्षते। तेषां देयः प्राग्वोदग्वा पित्र्यात्। तयोरनन्तरयोरन्त्ययोरेकस्मिन्देशे समवेतयोरपि नाना पृथक्परिषेचनं कर्तव्यं कुतो धर्मभेदात्। पित्र्यं स्यादप्रदक्षिणं परिषेचनमितरस्य दैवत्वात्प्रदक्षिणमिति। उत्तमेन 'ये भूताः प्रचरन्ति नक्तं बलिमि-

१ ख. ङ. च. °स्य। ओष°। २ क. ख. °पन्नदे°। ३ क. ख. ङ. °णमिति रु°।

च्छन्तो०र्दधातु स्वाहा " इत्यनेन नक्तम् । 'ये भूताः प्रचरन्ति दिवा बलिम्' इति दिवा । एवं पदत्यागेन मन्त्रपाठः । आश्वलायनोऽपि—'दिवाचारिभ्य इति दिवा नक्तंचारिभ्य इति नक्तम्' इति ।

(*बलिहरणे त्यागो न, हरणमात्रोक्तेः । यजतिजुहोतिचोदितत्वाभावाच्च । अन्यथा तर्पणेऽपि त्यागापत्तेरिति केचिदाहुः । अन्ये तु सूक्तवाककरणत्वान्यथानुपपत्त्या प्रहरतेर्यागकल्पकत्ववदत्रापि चतुर्थीनिर्देशान्यथानुपपत्त्या हरतेर्यागार्थत्वौचित्यादिति प्राहुः । अपर आहुः—एवकारो भिन्नक्रमः । नक्तमुत्तमेन बलिरि(रेवे)ति तदन्यतराणां रात्रौ निवृत्तिरिति व्याख्यातमुज्ज्वलाकृता । अदित इत्यादिमन्त्रसाध्यपरिषेकत्वरूपधर्मस्य गार्ह्यकर्मस्वेव सत्त्वोक्तिरेतच्चोभयतः परिषेचनमित्यस्यापूर्वविधित्वकल्पे । परिसंख्याकल्पे तु गार्ह्यकर्मणामेवैतत्कर्मप्रकृतित्वाद्गार्ह्यकर्मस्वित्युक्तिरिति द्रष्टव्यम् । शय्यादेश उत्तरेण देहल्या उत्तरेणोत्तरेणापिधान्यामित्येवं वक्तव्ये कामलिङ्गेनान्तरिक्षलिङ्गेनेत्येवं वचनं ज्ञापयति स्वाहान्तेन चतुर्थ्यन्तेन कामपर्यायशब्देन तथाभूतेनान्तरिक्षशब्देनापि पक्षे दानमस्तीति । स्मराय स्वाहाऽनङ्गाय स्वाहेति । आकाशाय स्वाहा नभसे स्वाहेति । स्वधा पितृभ्य इत्येतावानेव मन्त्रः । न तु स्वाहान्तः । उज्ज्वलाकृताऽपि स्वधा पितृभ्य इत्येतावानेव मन्त्रः प्रदर्शितोऽस्ति । एतेन ज्ञायते स्वाहाकारपाठो नास्तीति । यद्यस्ति तदा पितृभ्यः स्वाहेतिमन्त्रान्तराभिप्रायेणैव स योज्यः । अस्मिन्कल्पे यज्ञोपवीतिताऽपि द्रष्टव्या । अयं च कल्पो जीवत्पितृकविषयकः । स्वधा पितृभ्य इतिमन्त्रान्त एव पित्र्यबलिर्देयः, न तु स्वधाशब्दान्ते । अन्यथा मन्त्रस्य करणत्वव्याघातापत्तेः । ननु स्वधाशब्दस्य दानार्थत्वात्तदन्त एव बलिदानमस्त्विति चेत्सत्यम् । मन्त्रान्त्य(न्त)स्थस्वधाशब्दान्त एव दानं न मध्यस्थान्त इत्यनायत्या(पत्त्या?)स्वीकारात्, स्वधाशब्दोच्चारणोत्तरत्वमादायापि दानार्थकत्वस्य यथाकथंचिन्निर्वाहसंभवाच्च । स्वधाशब्दान्ते दाने तु करणत्वं नैव निर्वहति । अतो मन्त्रान्त एव दानमिति सिद्धम् । द्वितीयवैश्वदेवे पुनस्तस्य तस्यैव देशस्य बल्यधिकरणत्वात्तस्य पूर्वकृतवैश्वदेवबलिव्यापृतत्वेन तत्र द्वितीयवैश्वदेवसंबन्धिपरिमार्जनादिधर्मविशिष्टबलिदानासंभवात्पूर्वबलिनिष्काशनमर्थसिद्धम् । देवयज्ञादिषु यज्ञशब्दप्रयोगेऽपि विवृद्धृष्टी नैव भवतः । तयोः श्रौतयज्ञविषयत्वात् । शेषाङ्गत्वबलि

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः ।

१ च. ततो । २ क. 'योगेवृ त्रि' ।

हरेदिति मनुवचने शेषान्नेनबलिहरणविधानाच्छेषनाशे लोप इति न भ्रमितव्यं, प्रतिनिधित्वेन द्रव्यान्तरोपादानासिद्धेः । आश्रयिकर्मणः स्विष्टकृत आज्येनेव । अन्यथा शेषस्य द्रव्यत्वसिद्धये देवयज्ञावृत्तिप्रसङ्गादिति उच्छृङ्खलाः । शेषं दक्षिणा निनयेदित्याश्वलायनसूत्रे द्वितीयाशेषपदश्रुतिभ्यां भूतयज्ञशेषप्रतिपत्तितया भूतयज्ञाङ्गत्वप्रतीतेः शेषनाशे लोप एवेति यद्यपि प्रतीयते तथाऽपि पितृयज्ञसिद्ध्यर्थं प्रतिनिधिमुपादाय पितृयज्ञः कर्तव्य एव सत्याषाढसूत्रानुसारिभिः सूत्रकृता प्रतिपत्तित्वस्यानुक्तेः । ब्राह्मणभोजनं वा पितृयज्ञत्वेन कर्तव्यम् ) । नक्तमेव वैहायसः । रात्रावेव वैहायसः कर्तव्यः । रात्रावाकाश एव देयः । दिवा भूमौ ।

तथा च बौधायनः—" अथाऽऽकाश उत्क्षिपन्ति ये भूताः प्रचरन्ति नक्तम् "

( * स्मृतिरत्नाकरे जातूकर्ण्यस्तु—

" वायसेभ्यो बलिं रात्रौ नैव दद्यान्महीतले ।
ये भूताः प्रचरन्तीति पात्रे दद्याद्बलिं सुधीः " ॥

इति पात्रे बलिदानमाह ।

स्मृत्यन्तरे—" द्विजो गृहबलीन्दत्त्वा नैव पश्येत्कदाचन ।
स्वयं नैवोद्धरेन्मोहादुद्धारे श्रीर्विनश्यति " इति ॥

पृथ्वीचन्द्रोदये—" अनुद्धृत्य बलीनश्नन्प्राणायामान्षडाचरेत् ।
स्वयमुद्धरणे चैव प्राजापत्यं समाचरेत् ॥

बलीन्वैश्वदेवबलीन् । दर्शने तु प्रायश्चित्तानुक्तेः[1]

गायत्र्यष्टशतं चैव प्राणायामत्रयं तथा ।
प्रायश्चित्तमिदं प्रोक्तं नियमातिक्रमे सति " ॥

इति सामान्यप्रायश्चित्तमेव ।

" विष्णुस्मरणमेव स्यात्सर्वदोषनिवर्हकम् " ।

इति वचनाद्विष्णुस्मरणमात्रं वा ।)

धर्मसूत्रे—" एतानव्यग्रो यथोपदेशं कुरुते नित्यः स्वर्गः पुष्टिश्च " इति ।

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ख पुस्तकेऽयं ग्रन्थः स यथा—" अपर आह । एवकारो भिन्नक्रमः । नक्तमुत्तमेन बलिरिति तदन्यनराणां रात्रौ निवृत्तिरिति व्याख्यातमुज्ज्वलाकृता " इति । क. पुस्तके त्वयं ग्रन्थोऽपि लिखितोऽस्ति तदुपरि धनुश्चिह्नान्तर्गतोऽपि ग्रन्थोऽस्ति ।

१ क. ज्येनेव । २ च. श्चित्तविशेषानु ।

य एताननन्तरोक्तान्होमान्बलींश्चाव्यग्रः समाहितमना भूत्वा यथोपदे-[शमुपदे]शानतिक्रमेण कुरुते तस्य नित्यः स्वर्गः पुष्टिश्च । नित्याः स्वर्ग-पुष्टिसंयुक्ता इति यत्पूर्वमुक्तं तस्यार्थवादता मा भूदिति पुनर्वचनम् । पुष्टि-स्वर्गौ नित्यावेव भवतः, न प्रबलैरपि कर्मान्तरैर्बाधनमिति व्याख्यातमुज्ज्व-लाकृता । एतानव्यग्रः कुरुते नित्यः स्वर्गः पुष्टिश्चेत्येतावतैव सूत्रोक्तकर्मा-नतिक्रमेणानुष्ठानकर्तुरेव नित्यस्वर्गपुष्टिसिद्धिरित्येतादृशार्थसिद्धौ यथोपदे-शवचनं यावदत्र विहितं तावदेव कर्तव्यम्, नान्यत्परिस्तरणादि, नाप्यन्य-च्छास्त्रान्तरोक्तमाकाङ्क्षितमविरुद्धमपि ध्यानसमिदभ्याधानादीतिज्ञापनार्थम् । एतेन ज्ञायते सति संभवेऽन्यत्र शास्त्रान्तरप्रोक्तमाकाङ्क्षितमविरुद्धं चेत्तदपि कदाचिदुपसंहर्तव्यमिति । ( *एतदन्तो वैश्वदेवः । अयं च जीवत्पितृकस्या-प्यावश्यकः । मृतपितृकस्यैवेतिविशेषानुपलम्भात् ।

" यदि स्याद्भिन्नपाकाशी ग्रामे ग्रामान्तरेऽपि च ।
वैश्वदेवं पृथक्कुर्यात्पितर्यपि च जीवति " इति शाकलोक्तेश्च ।

वैश्वदेवस्य पितृयज्ञसाध्यत्वाज्जीवत्पितृकस्य तल्लोपे तद्घटितस्य कर्मणोऽपि लोपप्रसक्ताविदं वचनम् । तत्र पित्र्यबलिं वर्जयित्वा कृत्स्नमवशिष्टं कर्म कर्तव्यमित्येके ।

अन्ये तु—" येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः " ।
इति वचनात्पितामहादीनुद्दिश्य पितृयज्ञोऽपि कर्तव्य इत्याहुः ।
परे तु—अग्निष्वात्तादीन्देवपितॄनुद्दिश्यैव पित्र्यबलिः कर्तव्य इति वदन्ति ।)
अनग्निकस्य विशेषमाह वसिष्ठः—

" अनग्निकस्तु यो विप्रः सोऽन्नं व्याहृतिभिः स्वयम् ।
हुत्वा शाकलमन्त्रैश्च शिष्टाद्भूतबलिं हरेत् " इति ॥

अनग्निको भार्याभावेन श्रौतस्मार्ताग्निपरिग्रहाधिकारशून्यः[1] । शकलप्रहरण-साधनमन्त्रा देवकृतस्यैनसोऽवयजनमसि स्वाहेत्यारभ्य—एनस एनसोऽवय-जनमसि स्वाहेत्यन्ताः[3] । एतच्च शकलप्रहरणं ज्योतिष्टोमे विहितम् ।
कर्मप्रदीपे—" अग्न्यादिर्गौतमेनोक्तो होमः शाकल एव च ।
अनग्निकस्य त्वप्येष युज्यते बलिभिः सह " इति ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. च. पुस्तकयोरेव । अयं च नातीव संगतः ।

१ ख. °न्यः । शाकलम° । २ क. °नशाकलम° । ३ ख. °त्यन्ता नारायणोपनिषद्गता एका-दश मन्त्राः । कर्म° ।

अग्न्यादिरग्निवाय्वादिदेवत्यः, भूरादिव्याहृतिकरणक इत्यर्थः । अपिरेव-कारार्थः। अनग्निकस्य त्वेष एव युज्यत इत्यन्वयः।

विष्णुरपि—"अन्नं व्याहृतिभिर्हुत्वा ततो मन्त्रैश्च शाकलैः।
प्राजापत्यं हविर्हुत्वा पूजयेदतिथिं ततः" इति ॥

प्राजापत्यं हविरिति प्रजापतये स्वाहेत्येकामाहुतिं हुत्वेत्यर्थः। पूजयेद-तिथिं तत इति तु स्वकालीनमनुष्ययज्ञानुवादमात्रं न तु होमानन्तरमेव तद्विधिः।

[१]स्मृतिसारे—"अनग्निकस्य विप्रस्य होमः शाकलमन्त्रकैः।
भूतपित्र्यबली पश्चादतिथिं पूजयेत्ततः" इति ॥

भूतपित्र्यबली स्वस्वगृह्योक्तप्रकारे[३]ण। प्रत्येकजात्यभिप्रायेण द्विवचनं, तेन सर्वेऽपि बलयः कार्याः। नातो युज्यते बलिभिः सहेत्यनन्तरोदाहृतकर्मप्रदी-पवचनेन सह विरोधः।

केचित्तु भूतेभ्यो नमः पितृभ्यः स्वधा नम इत्येवं भूतपित्र्यबलिहर[४]णं द्विवचनस्वारस्या[५]दिति वदन्ति।

स्मृ[६]त्यर्थसारे—"स्नातको ब्रह्मचारी वा पृथक्पाको वैश्वदेवं कुर्यात्" इत्युक्त-त्वात्तयोरप्यनेनैव प्रकारेण वैश्वदेवो ज्ञेयः। (+नियमं विनाऽधीतबलिहरण-मन्त्रश्चेद्बलिहरणमन्त्राध्ययनाङ्गभूतव्रतानाचरणनिमित्तप्रायश्चित्तानुष्ठानपूर्वकमयं वैश्वदेवः कार्यः । प्रायश्चित्तं तु प्रागुक्तमेव । सूत्रोक्तवैश्वदेवानुष्ठानकाले पुनः षडाहुतिमन्त्राध्ययनाङ्गभूतव्रतानाचरणनिमित्तं प्रायश्चित्तं कृत्वा सूत्रोक्तो वैश्वदेवः कार्यः । सहैव वैतत्प्रायश्चित्तद्वयं कार्यम् । वस्तुतस्तु ब्रह्मचारिणो वैश्वदेवो न भवति। "भैक्षेण वर्तयेन्नित्यम्" इति ब्रह्मचारिप्रकरणे मनूक्तेः "यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ" इति पराशरोक्तेश्च तस्य पाका-भावात्। पञ्चयज्ञाधिकारे गृहीतिशङ्खस्मरणाच्च। न च स्नातकस्यापि गृही-(हि)त्वाभावान्नाधिकार इति वाच्यम्। "स्नातकेनापि तत्कार्यं पृथक्पाको भवे-

+ धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः।

१ ख. ङ. अन°। २ च. स्मृत्यन्तरे। ३ ख. ङ. °रेणेति केचित्। भूते°। ४ ङ. °रणमि-त्यन्ये। स्मृ°। ५ ख. °दित्यनेन(न्ये) । स्मृत्यर्थसारे प्रयोगपारिजाते शौनकः—"वैश्वदेव(वे) गृह-स्थस्य प्रातरारम्भणं भवेत्। स्नातकेनापि तत्कार्यं पृथक्पाको भवेद्यदि" इति। स्मृ°। ६ ख. °त्यन्तरे—स्ना°।

द्यदि ” इति शौनकेन स्पष्टतया तस्याधिकारप्रतिपादनात् । यत्तु स्मृत्यर्थ-सारे—“ स्नातको ब्रह्मचारी च पृथक्पाकी वैश्वदेवं कुर्यात् ’ इत्युक्तं तदापत्का-लिकं बोध्यम् । इति वैश्वदेवविधिः । )

## अथ वैश्वदेवकालनिर्णयः ।

तत्र साग्नेर्वैश्वदेवकालमाह लौगाक्षिः—

“ पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं तु साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ” इति ॥

पक्षान्तं कर्मान्वाधानम् । अन्वाहार्यकं दर्शश्राद्धम् ।

पक्षान्तपिण्डपितृयज्ञयोर्मध्ये विधानादेव वैश्वदेवस्य साग्निककर्तृकत्वावगतेः पुनः साग्निकशब्दोपादानस्य वैयर्थ्यापातात्साग्निकशब्दोपादानमन्वाधानपि-ण्डपितृयज्ञकर्तुरौपासनाग्निमतो निवृत्त्यर्थमिति हेमाद्रिमदनपारिजातादयः ।

नवीनास्तूक्तरीत्यैवाविशेषेण श्रौतस्मार्ताग्निमतोरुभयोरपि वैश्वदेवकर्तृकत्वा-वगमात्साग्निकपदस्यानुवादकत्वमेव न तु स्मार्ताग्निमन्निवर्तकत्वं श्रौताग्निमत एव निवर्तकत्वेन वैपरीत्यस्यापि सुवचनादतोऽनुवादकत्वमेव युक्तमित्याहुः ।

देवलोऽपि वैश्वदेवानन्तरमेव पिण्डपितृयज्ञादिकर्तव्यतामाह—

“ अकृते वैश्वदेवे तु स्थालीपाकः प्रकीर्तितः ।
अन्यत्र पिण्डयज्ञात्तु सोऽपराह्णे विधीयते ” इति ॥

अत्र स्थालीपाकशब्देन स्थालीपाककर्माण्युच्यन्ते । एतानि कर्माणि वैश्व-देवात्पूर्वमेव कर्तव्यानि । पिण्डपितृयज्ञस्यापि स्थालीपाकसाध्यत्वेन तस्यापि पूर्वत्र कर्तव्यतायां प्राप्तायामपवादोऽयमत्रेति, पिण्डपितृयज्ञादन्यत्रेत्यर्थः ।

दर्शश्राद्धस्य पिण्डपितृयज्ञानन्तर्यमाह मनुः—

“ पिण्डयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ” इति ॥

इमानि लौगाक्ष्यादिवचनानि एकदिनप्रसक्तानामन्वाधानादीनां क्रमा-काङ्क्षायां तन्मात्रमेव विदधते न कमपि पदार्थं तेन कदाचित्पिण्डपितृयज्ञस्यो-त्तरदिनकर्तव्यत्वेऽपि न क्षतिः । यानि श्राद्धात्पूर्वं वैश्वदेवकर्तव्यताप्रतिपाद-कानि वचनानि तानि सर्वाणि लौगाक्ष्यादिवचनानुसारेण साग्निकविषयाणि व्यवस्थापनीयानि । तस्या(त्रा(?))प्येकादशाहश्राद्धे पश्चादेव ।

---

१ च. 'गतेः साग्नि' । २ क. ख. ङ. 'ति । स्था' ।

"संप्राप्ते पार्वणश्राद्ध एकोद्दिष्टे तथैव च।
अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनि" इति परिशिष्टात्।
"श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः।
ऐकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते" इतिशालङ्कायनवचनाच्च।

एवं साग्निकस्य श्राद्धात्प्रागेव नियमाद्यानि श्राद्धमध्ये विकिरान्ते ब्राह्मणविसर्जनान्ते च वैश्वदेवविधायकानि तान्यनग्निविषये व्यवतिष्ठन्ते। न चाग्निमदनग्निमद्विषयं पक्षत्रयमविशेषादिति वाच्यम्।

"वैश्वदेवमकृत्वैव श्राद्धं कुर्यादनग्निकः।
लौकिकेऽग्नौ हुते शेषः पितॄणां नोपतिष्ठति"॥

इति वसिष्ठेन विशेषाभिधानात्।

अनग्निकस्य त्रयः काला वैश्वदेवे—एकः श्राद्धमध्येऽपरो बलिदानान्तेऽन्यो ब्राह्मणविसर्जनान्ते।

तत्र मध्यकर्तव्यता [1]ब्रह्माण्डपुराणे—

"वैश्वदेवाहुतीरग्नावर्वाग्ब्राह्मणभोजनात्
जुहुयाद्भूतयज्ञादि श्राद्धं कृत्वा तु तत्स्मृतम्" इति॥

अर्वाग्ब्राह्मणभोजनादित्यनेनाग्नौकरणानन्तरं वैश्वदेवाहुतीर्जुहुयादित्यु[2]क्तं भवतीति हेमाद्रिः। अत्र भूतयज्ञादेः श्राद्धानन्तरकर्तव्यताविधानादस्मिन्प्रयोगे यानि भूतयज्ञोत्तरभावीनि कर्माणि संबन्धक्रमाणि तानि तदाद्युत्कर्षन्यायेनोत्कृष्टानि श्राद्धान्ते कर्तव्यानि न तु भूतयज्ञात्पूर्वभावीन्युत्क्रष्टव्यानि। स च न्याय इत्थं जैमिनिनोक्तः—"अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षः स्यात्" इति। अग्नीषोमीये पशौ हविरासादनोत्तरं प्राप्तानां प्रयाजानां निष्ठन्तं पशुं प्रयजन्तीत्यपकर्षः श्रुतः। तथा सवनीयेऽनूयाजानामाग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीत्युत्कर्षः। स तावन्मात्रस्यैवेति प्राप्ते प्रयाजमात्रापकर्ष आघारानन्तर्यस्य प्रकृतिप्राप्तस्य बाधापत्तेर्बद्धक्रमस्य प्रयाजान्तकाण्डस्यापकर्षः। एवमनूयाजमात्रस्योत्कर्षे सूक्तवाकप्राग्भावित्वस्य प्रकृतिप्राप्तस्य बाधापत्तेर्बद्धक्रमस्यानूयाजादिकाण्डस्योत्कर्ष इति सिद्धान्त इति न्यायः। यच्छाखायां बलिहरणादिकमेव भूतयज्ञादिकं तेषां बलिहरणादिकस्यैवोत्कर्षः।

येषां तु बलिहरणादिव्यतिरिक्ता भूतयज्ञादयस्तेषां वहिर्बलिव्यतिरिक्तभूतयज्ञाद्यधिकानां बलिहरणादीनामपि श्राद्धमध्ये कर्तव्यता भवतीति विवेकः।

१ क. ब्रह्मपु॰। २ क. ख. ङ. ॰त्युक्तमिति।

दृश्यते च पूर्वेद्युर्निमन्त्रितेषु ब्राह्मणेषु श्राद्धापरिसमाप्तावेव सायंप्रातर्होमकरणमिति मदनपारिजाते ।

द्वितीयः कालो भविष्यपुराणे—

" पितॄन्संतर्प्य विधिवद्बलिं दत्त्वा विधानतः ।
वैश्वदेवं ततः कुर्यात्पश्चाद्ब्राह्मणभोजनम् " इति ॥

बलिशब्दार्थस्तत्रैवोक्तः—

" ये अग्निदग्धामन्त्रेण भूमौ यन्निक्षिपेद्बुधः ।
जानीहि तं बलिं वीर श्राद्धकर्मणि सर्वदा " इति ॥

तृतीयो मत्स्यपुराणे—" उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ।
वैश्वदेवं ततः कुर्यान्निवृत्ते पितृकर्मणि " इति ॥

भविष्येऽपि—" कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य तु ।
वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिप " इति ॥

मनुरपि—" उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः " इति ॥

अत्र बलिशब्दो वैश्वदेवप्रदर्शनार्थ इति मेधातिथिः(थि)(*कर्कौ ( ? ) । काकबलिपर इति दिवोदासः । यत्तु गोविन्दार्णवे वचनम्—

" याजुषाः सामगाः पूर्वं मध्ये जुह्वति बह्वृचाः ।
अथर्वाङ्गिरसस्त्वन्ते वैश्वदेवे त्वयं विधिः " ॥

इति तद्धेमाद्र्यादिग्रन्थेष्वदर्शनान्निर्मूलम् ।

तैत्तिरीयाणां साग्निकानां सर्वत्राऽऽदौ वैश्वदेवः पञ्च यज्ञाश्च । अन्ते वेति सुदर्शनभाष्ये ।)

वृद्धिश्राद्धादिषु वैश्वदेवकालविशेषः स्मृत्यन्तरे—

" वृद्धावादौ क्षये चान्ते दर्शे मध्ये महालये ।
एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयते " इति ॥

क्षये चेत्यत्र चकार आदिपदानुकर्षणार्थः । इदं निरग्निकविषयम्, दर्शेऽप्यन्त एवेति प्रयोगवैजयन्तीकारादयः । ( + एतद्वचनानुक्तेषु श्राद्धेषु त्वनग्निकस्य पूर्वोक्तास्त्रयः सामान्यतः काला ज्ञेयाः । )

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख ङ. पुस्तकयोः ।

१ क. ॰र्यादथ ध॰ । २ क. ख. ङ. कर्कौ । ३ ख. ॰ति । इ॰ । ४ क. ॰द्धेष्वन॰ ।

# अथ वैश्वदेवपाकनिर्णयः ।

तत्र नित्यश्राद्धस्य वैश्वदेवस्य चैक एव पाकः । नित्यश्राद्धे नियमविशेषाभावात् । नवश्राद्धेष्वेकपाकशङ्कैव नास्ति, आशौचमध्ये वैश्वदेवनिषेधात् । एकादशाहादिकश्राद्धे तु पृथक्पाकः श्राद्धशिष्टान्नस्य ब्राह्मणेभ्यो देयत्वात् ।

तथा च देवलः—एकोद्दिष्टे तु शेषं तु ब्राह्मणेभ्यः समुत्सृजेत्" इति ।

दर्शादौ तु लौगाक्षिः—" वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकम् " इति । इतरदितरार्थं न भवतीति पृथक्पाकः कर्तव्य इत्यर्थः । (* एतेन दार्शवैश्वदेविकयोरेकः पाक इति कर्कहरिहरयोर्मतमपास्तम् ।) न दार्शमित्यत्र दार्शशब्देन तद्विकृतिभूतानि नित्यनैमित्तिककाम्यश्राद्धानि लक्ष्यन्ते । वैश्वदेविकमित्यत्र वैश्वदेवशब्देन भूतयज्ञादयः । अयं च पृथक्पाको वैश्वदेवस्य श्राद्धात्पूर्वं मध्ये वा वैश्वदेवानुष्ठाने न तूत्तरत्रानुष्ठाने ।

तथा च पैठीनसिः—" पितृपाकात्समुद्धृत्य वैश्वदेवं करोति यः ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति " इति ॥

नन्वेतद्वचनमुत्तरकालेऽपि निषेधकं तदाऽपि तस्य पितृपाकत्वात् । मैवम् । उत्तरकाले पितृसंबन्धस्य निवृत्तत्वात् । यदुद्देशेन परिकल्पितं यद्धविस्तस्य तदुद्देशेन त्यागे कृते तदुपभोगसमनन्तरमेव तत्संबन्धनिवृत्तेर्न्याय्यत्वात् । एवमेव शिष्टाचारोऽपि दृश्यते । अनेनाभिप्रायेण पैठीनसिरेवाऽऽह—

" श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः ।
कुर्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथा " इति ॥

अत्र प्रथमस्ततःशब्दो हेतुपरः । द्वितीयस्तु श्राद्धावशिष्टान्नपरः । एवं चायमर्थः संपद्यते—

" पितृपाकात्समुद्धृत्य वैश्वदेवं करोति यः ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति " ॥

इति यतः श्राद्धात्पूर्वं मध्ये वा निषेधस्ततस्तस्माद्धेतोः श्राद्धं निर्वर्त्य ततस्तच्छिष्टान्नाद्वैश्वदेवादिकं कर्तव्यमिति ।

चतुर्विंशतिमते स्पष्टमेवोक्तम्—

" श्राद्धान्ते श्राद्धशेषेण वैश्वदेवं समाचरेत् " इति ॥

---

* धनुश्चिह्नान्तर्गतं ख. ङ. पुस्तकयोर्नास्ति ।

---

१ च. °द्धेषु त्वेक° । २ च. °वस्य नि° । ३ च. °त् । एकादशाहिक° । ४ क. ङ. च. दर्श । ५ क. °त्र दर्श° । ६ च. °येणैव पै° ।

पैठीनसिवचनस्थादिशब्देन नित्यश्राद्धमपि गृह्यते । तेन नित्यश्राद्धस्य पञ्चयज्ञानन्तःपातित्वे श्राद्धपाकशेषेण पृथक्पाकेन वा नित्यश्राद्धं वैश्वदेवात्प्रागेव ।

अत्रोभयत्रापि मार्कण्डेयः—'ततो नित्यक्रियां कुर्यात्' इति । ततः श्राद्धशेषात् । नित्यक्रिया नित्यश्राद्धादि । तथा 'पृथक्पाकेन नैत्यः स्यात्' इति । यदि ब्राह्मणविसर्जनान्ते वैश्वदेवस्तत्पाकशेषेण । इतरत्र तु पृथगिति निर्णयः । इति वैश्वदेवपाकनिर्णयः ।

## अथ मनुष्ययज्ञः ।

तत्रेदं धर्मसूत्रम्—'अग्रं च देयम्' इति । चकारोऽप्यर्थे । ब्राह्मणेभ्यो भोजनदानामसमर्थस्त्वग्रपरिमितमप्यन्नं दद्यादिति । 'मनुष्येभ्यो हन्त' इति मन्त्रे बहुवचनात्त्रिप्रभृतयः । अशक्तावेकोऽपि । अभावे गोभ्यो दद्यात् । 'अतिथिभ्यो देयमन्नं गोभ्यो वा तदलाभतः' इति स्मृतिदर्पणे स्मृत्यन्तरोक्तेः । अस्मिन्कल्पे मन्त्रलोप एव । एकश्चेद्विप्रो लभ्यते तदाऽपि मन्त्रलोप एव । पूजार्थं वा बहुवचनम् । अस्मिन्पक्षे न मन्त्रलोपः । अतिथीनामेवाऽऽदौ भोजनं पश्चात्कुमारादीनाम् ।

तथा च धर्मसूत्रम्—

"अतिथीनेवाग्रे भोजयेत्कुमारान्रोगसंयुक्तान्स्त्रीश्चान्तर्वत्नीः" इति ।

अतिथीन्वक्ष्यति तानेवाग्रे भोजयेत्, न स्वयं सहसा भुञ्जीत प्राक् । एवमतिथिव्यतिरिक्तानन्यानपि भोजयितव्यान्पश्चाद्भोजयेत् । कुमारान्रोगसंयुक्तान्स्त्रीश्चान्तर्वत्नीः । ये च गृहवर्तिनः कुमारादयस्तानप्यग्रे भोजयेत् । आपस्तम्बस्तु—'बालान्वृद्धान्रोगसंयुक्तान्स्त्रीश्चान्तर्वत्नीः' इत्याह । अत्रान्तर्वत्नीग्रहणादेव स्त्रीग्रहणे सिद्धे पुनर्ग्रहणं स्वस्रादीनामपि ग्रहणार्थमिति व्याख्यातमुज्ज्वलाकृता । स्वस्रादीनामपि ग्रहणार्थमित्यत्र गृहवर्तिनामपीति शेषः ।

मनुष्ययज्ञस्वरूपं तु श्रुतावुक्तम्—

"यद्ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञः संतिष्ठते" इति ।

कात्यायनोऽप्याह—"नृयज्ञोऽतिथिपूजनम्" इति ।

न च वक्ष्यमाणलक्षणस्यातिथेरनित्यतया मनुष्ययज्ञस्य कथं नित्यतेति वाच्यम् । पूज्यमानब्राह्मणनिष्ठातिथित्वस्य फलाधिक्यार्थतया तत्कालसमाग-

१ क. ख. ङ. °त्र पृ° । २ च. एतदभावे । ३ क. ङ. °त् । अस्मि° । ४ च. °स्मिन्कल्पे न । ५ क. °थीनामेवा° । ६ क. °यित्वा पश्चा° । ७ क. °धिक्यत° ।

तद्ब्राह्मणभोजनस्यैव मनुष्ययज्ञत्वात् । 'यद्ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञः संतिष्ठते' इति श्रुतिरपि सामान्यतो ब्राह्मणसंप्रदानकान्नदानस्यैव मनुष्ययज्ञत्वमाह ।

सुमन्तुर्वैश्वदेवान्त उपस्थितस्याभ्यागतत्वं त्य(स्य त्य)क्तप्रतिग्रहस्यातिथित्व-[मन्यस्याभ्यागतत्व]माह—

" त्यक्ताः प्रतिग्रहाः सर्वे येन विप्रेण धीमता ।
उपस्थितं वैश्वदेवमतिथिं तं प्रचक्षते ॥
एतदन्यत्र संप्राप्तं विप्रमभ्यागतं विदुः " इति ।

वैश्वदेवातिरिक्तकाले तस्मिन्नेव दिने संप्राप्तं विप्रमभ्यागतं विदुः[1] । तमेव वैश्वदेवकाल उपस्थितमतिथिं विदुरित्यर्थः । तथा च वैश्वदेवकाल[2] उक्तलक्षणलक्षिताभ्यागतातिथ्योरन्यतरस्य वा[3] भोजनं मनुष्ययज्ञः । तदभावे[4] ब्राह्मणभोजनमात्रं मनुष्ययज्ञ इति तात्पर्यार्थः ।

बौधायनोऽपि—" अहरहर्ब्राह्मणेभ्योऽन्नं दद्यान्मूलफलशाकानि
वेत्यथैनं मनुष्ययज्ञं समाप्नोति " इति ।

कार्ष्णाजिनिरपि—" भिक्षां वा पुष्कलं वाऽपि हन्तकारमथापि वा ।
असंभवे न वै दद्यादुदपात्रमथापि वा " इति ॥

पुष्कलमग्रमिति पर्यायौ ।

कूर्मपुराणे—" हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ।
दद्यादतिथये नित्यं बुध्येत परमेश्वरम् " इति ॥

भिक्षादिलक्षणं मनुराह—

" ग्रासमात्रा भवेद्भिक्षा अग्रं ग्रासचतुष्टयम् ।
अग्रं चतुर्गुणीकृत्य हन्तकारोऽभिधीयते " इति ॥

ग्रासपरिमाणं स्मृत्यर्थसारे ।

" अङ्गुष्ठपर्वमात्रा तु आहुतिः परिकीर्तिता ।
आहुतिद्वितयं ग्रासो मयूराण्डाकृतिस्तथा " इति ॥

अतिथिनिरीक्षणाय गृहाङ्गणे कंचित्कालं तिष्ठेदित्युक्तं मार्कण्डेयपुराणे—

" आचम्य च ततः कुर्यात्प्राज्ञो द्वारावलोकनम् ।
मुहूर्तस्याष्टमं भागमुदीक्ष्यो ह्यतिथिर्भवेत् " इति ॥

१ क. विदुरित्यर्थः । त° । ख. ङ. विदुरित्यर्थः । तथा° । २ ख. °कालेऽभ्यागतोक्तलक्षणलक्षितातिथिभो° । ३ च. °नं वा म° । ४ च. °वे केवलब्रा° ।

विष्णुपुराणेऽपि—" ततो गोदोहमात्रं तु तिष्ठेत्कालं गृहाङ्गणे ।
अतिथिग्रहणार्थाय तदूर्ध्वं च यथेच्छया " इति ॥

तत्र कीदृशोऽतिथिरित्याकाङ्क्षायामाह वैयाघ्रपद्यः[1]—

" क्षुधार्तस्तृषितश्चैव स्नातो गृहमुपागतः ।
प्रयत्नेन तु संपूज्यः सोऽतिथिः स्वर्गसंक्रमः " इति[2] ॥

पराशरोऽपि—" इष्टो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।
संप्राप्तो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः " इति ॥

इष्टः सख्यादिः ।

तस्य च भोजनीयत्वं याज्ञवल्क्येनोक्तम्—

" भोजयेच्चाऽऽगतान्काले सखिसंबन्धिबान्धवान् " इति ।

द्वेष्यस्य भोजनीयत्वं मनुना निन्दितम्—

" काममभ्यर्चयेन्नित्यं नातिरूपमपि त्वरिम् ।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम् " इति ॥

एवं सत्यरिमित्रविवेकः श्राद्धादौ यथा क्रियते तथैवातिथावपि तत्प्रसक्तौ तन्निराकरणायेष्टो वा यदि वा द्वेष्य इत्युक्तम् ।

मूर्खे भोजनीयत्वं स्मृत्यन्तरे निषिद्धम्—

" नष्टशौचे व्रतभ्रष्टे वेदशास्त्रविवर्जिते ।
दीयमानं रुदत्यन्नं किं मया दुष्कृतं कृतम् " इति ॥

पण्डितस्य भोजनीयत्वं मनुना प्रशंसितम्—

" श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः ।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् " इति ॥

एवं सति श्राद्धादाविव वैश्वदेवान्तिके पण्डितमूर्खविवेकप्रसक्तौ तन्निराकरणायोक्तं मूर्खः पण्डित एव वेति । वैश्वदेवान्तिकशब्देन देवयज्ञभूतयज्ञपितृयज्ञानामुपरि मुहूर्ताष्टमभागपरिमितः काल उच्यते ।

तथा च मार्कण्डेयपुराणम्—" मुहूर्तस्याष्टमं भागम् " इति ।

अत एव तस्मिन्काले समागमनमेवातिथिलक्षणं नेतरद्विद्यादि । संक्रम्यतेऽनेनेति संक्रमः । स्वर्गस्य संक्रमः स्वर्गसंक्रमः । स्वर्गप्राप्तिरिति यावत् ।

तथा चाऽऽश्वमेधिके—" क्षुत्पिपासाश्रमार्ताय देशकालगताय च ।
सत्कृत्यान्नं प्रदातव्यं यज्ञस्य फलमिच्छता " इति ॥

---

१ क. °प्रपादः—क्षु° । २ च. °ति । पारा° ।

पराशरः—" दूराद्ध(ध्वो)पगतं श्रान्तं वैश्वदेवमुपस्थितम् ।
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः " इति ॥

दूराध्वोपगतं ग्रामान्तरागतम् । श्रान्तं क्षुधापरिपीडितम् ।

अत एव व्यासः—" दूराद्दाश्रमसंप्राप्तः क्षुत्तृ¹ष्णाश्र²मपीडितः ।
यः पूज्यतेऽतिथिः सम्यगपूर्वः क्रतुरेव सः " इति ॥

नातिथिः पूर्वमागत इति तस्मिन्नेवातिथिर्नोत्तरेद्युरित्यर्थः ।

तथा च मनुः—" एकरात्रं हि निवसन्नतिथिर्ब्राह्मणः स्मृतः " इति ।

वैश्वदेवमुपस्थितमिति दिवसाभिप्रायम् । सायं तु वैश्वदेवकाले कालान्तरे वा प्राप्तोऽतिथिरेव ।

तथा च मनुः—" अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना ।
काले प्राप्तोऽप्यकाले वा नास्यानश्नन्गृहे वसेत् " इति ॥

सूर्योढोऽस्तं गच्छता सूर्येण देशान्तरमागमनाशक्तिमुत्पाद्य गृहं प्रापित इत्यर्थः । अस्य गृहस्थस्य, अतिथिरित्यध्याहारः ।

याज्ञवल्क्योऽपि—" अप्रणोद्योऽतिथिः सायमपि वा भूतृणोदकैः " इति ।

प्रचेता अपि—" यः सायंवैश्वदेवान्ते सायं वा गृहमागतः ।
देववत्पूजनीयोऽसौ सूर्योढः सोऽतिथिः स्मृतः " इति ॥

सायं वेत्यत्र वैश्वदेवात्पूर्वमित्यध्याहारः ।

दूराध्वपदव्यावर्त्यमाह वैयाघ्र³पद्यः—

" अचिन्तितमनाहूतं वैश्वदेवे व्यवस्थितम् ।
अतिथिं तं विजानीयान्नैकग्रामनिवासिनम् " इति ॥

पराशरः—" अतिथिं तत्र संप्राप्तं पूजयेत्स्वागतादिना ।
तथाऽऽसनप्रदानेन पादप्रक्षालनेन च ॥
श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च ।
गच्छतश्चानुयानेन प्रीतिमुत्पादयेद्गृही " इति ॥

स्वगृहे राज्ञ आगमने तस्याप्यातिथ्यं कार्यम् । तथा च मार्कण्डेयपुराणे—

" यस्य च्छत्रं हयश्चैव कुञ्ज⁴रारोहमृद्धितम् ।
ऐन्द्रस्थानमुपासीत तस्मात्तन्न विचारयेत् " इति ॥

१ च. °तृषाश्र° । २ क. °मकारिभिः । यः । ३ क. °घ्रपादः । अ° । ४ क. ख. °ञ्जरोरो° ।

तत्क्षत्रियत्वं न विचारयेत्, क्षत्रियत्वशङ्कां न कुर्यात् । सोऽप्यतिथिवदेव पूजनीय इत्यर्थः ।

अतिथिसत्काराकरणे प्रत्यवाय[1]माह पराशरः—

" अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
पितरस्तस्य नाश्नन्ति दश वर्षाणि पञ्च च ॥
काष्ठभारसहस्रेण घृतकुम्भशतेन च ।
अतिथिर्यस्य भग्नाशस्तस्य होमो निरर्थकः " इ[2]ति ॥

आश्वमेधिके—" साङ्गोपाङ्गांस्तथा वेदान्पठतीह दिने दिने ।
न चाऽऽतिथ्यं(चातिथिं) पूजयति वृथा स पठति द्विजः ॥
पाकयज्ञैर्महायज्ञैः सोमसंस्थाभिरेव च ।
ये यजन्ति न चार्चन्ति गृहेष्वतिथिमागतम् ॥
तेषां [3]यशोभिकामानां दत्तमिष्टं च यद्भवेत् ।
वृथा भवति तत्सर्वमाशया हतया हतः " इति ॥

अतिथिसत्कारं प्रशंसति स एव—

" सुक्षेत्रे वापयेद्बीजं सुपात्रे निक्षिपेद्धनम् ।
सुक्षेत्रे च सुपात्रे च प्रदत्तं न विनश्यति " इति ॥

शातातपः—" स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा ।
न चाऽऽप्नोति तथा लोकान्यथा त्वतिथिपूजनात् " इति ॥

तथा—" न पृच्छेद्गोत्रचरणे न स्वाध्यायं व्रतं कुलम् ।
चित्ते विभावयेत्तं वै व्यासं स्वयमुपागतम् " इति ॥

अतिथिलक्षणादिकमेतत्सर्वं धर्मसूत्रेऽप्युक्तमस्ति, तस्य बहुतरव्याख्यानसापेक्षत्वात्तेन सहैव प्रदर्शनेऽतिविस्तरः स्यादतो न प्रदर्श्यते ।

भिक्षुकयोर्यतिब्रह्मचारिणोः सदा पूज्यत्वमाह पराशरः—

" अपूर्वं सुव्रती विप्रो ह्यपूर्वश्चातिथिस्तथा ।
वेदाभ्यासरतो नित्यं त्रयोऽपूर्वा दिने दिने " इति ॥

सुष्ठु व्रतं सुव्रतं मोक्षहेतुर्यतिधर्मः सोऽस्यास्तीति सुव्रती । वेदाभ्यासरतो ब्रह्मचारी । यथाऽतिथिः पूज्यस्तथैतावप्यतिथिवत्प्रत्यहं पूज्यावित्यर्थः ।

याज्ञवल्क्यः—" सत्कृत्य भिक्षवे भिक्षां यः प्रयच्छति मानवः ।
गोप्रदानसमं पुण्यं तस्याऽऽह भगवान्यमः " इति ॥

१ ख. ङ. °यमप्याह स एव—अ° । २ ङ. °ति । अति° । ३ क. यशोऽभि° ।

भिक्षुर्यतिर्ब्रह्मचारी च ।

यदि वैश्वदेवात्पूर्वं भिक्षुरागच्छति तदा कथमित्याकाङ्क्षायां नृसिंहपुराणे—

"अकृते वैश्वदेवे तु भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विसर्जयेत्" इति ॥

(+ पुराणान्तरेऽपि—"अकृते वैश्वदेवे तु भिक्षुके गृहमागते ।
नैवेद्यार्थं च होमार्थमुद्धृत्यातिथिमर्चयेत्" इति ॥)

यावद्वैश्वदेवपर्याप्तमन्नं भवति तावत्पृथक्कृत्वा नैवेद्यार्थं च पृथगुद्धृत्यावशिष्टादन्नाद्भिक्षां दत्त्वा भिक्षुकं विसर्जयेदित्यर्थः ।

भिक्षुकशब्दोऽतिथ्यादीनामुपलक्षकः—

"यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः" इति* ॥

अकरणे प्रत्यवायमाह पराशरः—

"यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेत्" इति ॥

यतिब्रह्मचारिग्रहणं विद्यार्थ्यादीनामुपलक्षणमिति केचित् ।

बहुषु भिक्षुकेष्वागतेष्वशक्तेन किं कर्तव्यमित्याकाङ्क्षायामाह पराशरः—

"दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणाम् ।
इच्छया वा ततो दद्याद्विभवे सति चान्यतः" इति ॥

अन्यतोऽन्येषामपीत्यर्थः ।

यतिभिक्षाप्रदानप्रकारमाह स एव—

"यतिहस्ते जलं दद्याद्भैक्षं दद्यात्पुनर्जलम् ।
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम्" इति ॥

एतच्च भैक्षं सति संभवे बहुलं दातव्यम् । तदुक्तं ब्रह्मपुराणे—

"यः पात्रपूरणीं भिक्षां यतये संप्रयच्छति ।
विमुक्तः सर्वपापेभ्यो नासौ दुर्गतिमाप्नुयात्" इति ॥

+ धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ख. ङ. पुस्तकेषु । * एतदनन्तरं च. पुस्तकेऽधिको ग्रन्थः स यथा—"विद्यार्थी(?) ब्रह्मचारी(?) भिन्नोऽपि व्रतकादिः । अध्वगो यस्य पाकसामग्रीवैकल्यं तादृशो ग्राह्यः । क्षीरा(ण)वृत्तिः, अनध्वगोऽपि सामग्रीविकलः । एते भिक्षायां पक्वान्नेऽधिकारिणः" इति ।

---

१ क. ख. ङ. 'क्षुश' ।

**सर्वथाऽन्नाभावे धर्मसूत्रे—**

" काले स्वामिनमन्नार्थिनं न प्रत्याचक्षीयातामभावे तृणानि भूमिरुदकं कल्याणी वागित्येतानि वै सतोऽगारे न क्षीयन्ते कदाचन " इति ।

**एतत्फलमपि तत्रैव—**" एवं वृत्तावनन्तलोकौ भवतः " इति ।

( * **वैश्वदेवावसान उपस्थितानां चण्डालादीनामपि भोज्यत्वमुक्तं पराशरेण—**

" पापो वा यदि चण्डालो विप्रघ्नः पितृघातकः[1] ।
वैश्वदेवे हि संप्राप्तः संभोज्यः सोऽप्यसंशयम् " इ[2]ति ॥

**बृहन्नारदीये—**" अन्नस्य क्षुधितं पात्रं पानीयस्य पिपासितम् ।
द्रव्यदाने प्रकर्तव्यं विशेषात्पात्रवीक्षणम् " इति ॥ )

**गोभ्यो ग्रासप्रदानमुक्तमृष्यशृङ्गेण—**

" गवां ग्रासं च कुर्वीत नित्यमेव समाहितः ।
गवां कण्डूयनं स्पर्शं ग्रासमाह्निकमेव च " इ[3]ति ॥

( + **पाकभाण्डस्थले[4]पप्रतिपत्तिर्धर्मसूत्रे—**' यत्र भुज्यते तत्समुह्य निर्हृत्यावोक्ष्य तं देशमम[5]त्रेभ्यो लेपान्संगृह्याद्भिः सं[6]मृज्य शुचौ देशे रुद्राय निनयेदेवं वास्तु शिवं भवति ' इति ।

**पञ्चयज्ञाकरणप्रायश्चित्तमुक्तं सु[7]मन्तुना—**

" अकृत्वाऽन्यतमं यज्ञं यज्ञानामधिकारतः ।
उपवासेन शुध्येत पाकसंस्थासु चैव हि " इति ॥

* **अकृत्वाऽन्यतमं यज्ञमित्येकत्वश्रवणादेकयज्ञलोपविषयमिति केचित् । अत्रैकत्वस्याविवक्षितत्वाद्द्वित्र्या(त्रा)दियज्ञलोपेऽप्येतत्प्रायश्चित्तं भवत्येवेत्यन्ये ।**

**व्यासः—**" अकृत्वा तु महायज्ञान्भुक्त्वा चान्द्रायणं चरेत् " इति ।

**अत्र बहुत्वमप्यविवक्षितं ज्ञेयम् ।**

**मिताक्षरायां बृहस्पतिः—**" अनिर्वर्त्य महायज्ञान्यो भुङ्क्ते प्रत्यहं गृही ।
अनातुरः सति धने कृच्छ्रार्धेन विशुध्यति " इति ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. पुस्तके । * एतदादिनिष्कर्ष इत्यन्तग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—" एतद्बु(दबु)द्धिपूर्वकाकरणविषयम् । बुद्धिपूर्वे तु—अकृत्वा पञ्च यज्ञांस्तु भुक्त्वा चान्द्रायणं चरेदिति द्रष्टव्यम् " इति ।

---

१ च. °घातुकः । २ च. °ति गो° । ३ ङ. °ति । पञ्च° । ४ क. °ले प्र° । ५ क. °मत्रेभ्यो । ६ च. संसृज्य । ७ ङ. स्मृतौ ।

उपवासाद्यसामर्थ्ये मनस्वत्येकाऽऽहुतिर्होतव्या। तदुक्तं प्रायश्चित्तप्रकाशे—

"एतेभ्यः पञ्चयज्ञेभ्यो यद्येकोऽपि च हीयते ।
मनस्वत्याहुतिस्तत्र प्रायश्चित्तं विधीयते" इति ॥

मनस्वती घृतपदान्ता तस्या एव प्रायश्चित्तार्थत्वस्य सर्वत्र दर्शनात् ।

द्व्यहं त्र्यहं लोपे तु बौधायनः—

"द्व्यहं वाऽपि त्र्यहं वाऽपि प्रमादादकृतेषु तु ।
तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्जपेत्" इति ॥

अव ते हेड उदुत्तममिमं मे वरुण तत्त्वा यामीति चतस्रो वारुण्यः ।

दशाहद्वादशाहलोपे तु स एवाऽऽह—

"दशाहं द्वादशाहं वा निवृत्तेषु तु सर्वतः ।
चतस्रो वारुणीर्हुत्वा कार्यस्तन्तुमते चरुः" इति ॥

अत्रैवं व्यवस्था मनस्वत्याहुतिरेकाहाहुतिविच्छेदे ।

"द्व्यहं वाऽपि त्र्यहं वाऽपि प्रमादादकृतेषु तु ।
तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्जपेत्" ॥

इति तु नवदिनपर्यन्तम् । तदूर्ध्वं तु दशाहं द्वादशाहं वेति वचनसिद्धो वारुणीचतुष्टयजपः, तन्तुमते चरुश्च । इदं चाधानिना स्मार्ताग्निमता च तत्र कर्तव्यम् । एकादशीप्रयुक्तभ्रान्तिमता तु नित्यहोमलोपप्रयुक्तवक्ष्यमाणप्रायश्चित्तं विधाय कार्यम् । सर्वाधानिनाऽनग्निमता च लौकिकाग्निं प्रतिष्ठाप्य कार्यम् । एतच्चाभोजने सति । भोजने तु—अकृत्वा तु महायज्ञानितिव्यासवचनसिद्धं चान्द्रायणम् । द्व्यहादौ द्वैगुण्यादि ज्ञेयम् । अबुद्धिपूर्वे उपवासः । बुद्धिपूर्वे शक्तौ सत्यामेकैकलोपेऽनिर्वर्त्य महायज्ञानिति कृच्छ्रार्धम् ।

"पिण्डयज्ञात्यये चैव वैश्वदेवात्ययेऽपि च ।
अदने पतितान्नस्य चरुर्वैश्वानरो भवेत्" ॥

इति कात्यायनोक्तः स्थालीपाको वा । अस्याप्यशक्तौ पूर्णाहुतिरिति द्रष्टव्यम् ।

ब्राह्मे—"शुनां च पतितानां च श्वपचां पापरोगिणाम् ।
वायसानां क्रिमीणां च शनकैर्निक्षिपेद्भुवि" इति ॥

शनकैः शनैः । अत्रोत्सर्गमन्त्रो विष्णुपुराणोक्तोऽग्रे प्रदर्श्यते ।

गीतायाम्—"यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्" ॥

इति करणे फलातिशयोऽकरणे प्रत्यवायश्च स्मर्यते ।

अत्र यज्ञो वैश्वदेव इति श्रीधरस्वामिना व्याख्यातम् । तेन साग्निकैर्निरग्निकैश्च भोजनलोपेऽपि येन केनापि द्रव्येण यथाकथंचित्पञ्च महायज्ञाः कर्तव्या एवेति निष्कर्षः ।)

# अथ वैश्वदेवप्रयोगः ।

तत्र[1] दायविभागे सति वैश्वदेवाधिकारः । दायविभागो विवाहात्पूर्वं[2] चेच्चतुर्थीहोमानन्तरमेव[3] गुरुशुक्रास्तमलमासादि[4]रहिते चन्द्रानुकूले[5] शुभे[6] काले प्रथमारम्भः[7] । तावत्पर्यन्तं तूष्णीं ग्रासमात्रमन्नमग्नौ प्रक्षिप्य भोक्तव्यम् । यदि चतुर्थीहोमोत्तरं केनचित्प्रतिबन्धेन देवकोत्थापनं न जायते तदा देवकोत्थापनानन्तरमेवाऽऽरम्भो भवति ।

"वैश्वदेवः स्वधाकृत्यं ब्रह्मयज्ञमुपोषणम् ।
सीमातिक्रमणं नैव देवकोत्थापनावधि" ॥

इति[8] धर्मप्रदीपे देवकोत्थापनात्पूर्वं तन्निषेधात् ।

अत्र प्रथमे प्रयोगे गणपतिपूजनपुण्याहवाचनमातृकापूजननान्दीश्राद्धान्यपि प्रधानसंकल्पात्पूर्वं कार्याणि । सिद्धेऽन्ने पाककर्ता वैश्वदेवकर्तारं ब्रूयाद्भूतमिति, तत्सुभूतं विराडन्नं तन्मा क्षायि तन्मेऽशीय तन्म ऊर्जं धास्तत्सुभूतमिति प्रतिवचनः(म्) । तत्सुभूतमित्येतावदेव वा प्रतिवचनम् । यदि स्वयमेव पाककर्ता तदा[9] वचनप्रतिवचनयोर्लोपः[10][11] । स्त्रिया अप्येवं मन्त्रलोप एव । कर्ताऽग्न्यायतनस्य पश्चात्प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं[12] सिद्धान्नेनामुकाग्नौ प्रातर्वैश्वदेवेन यक्ष्य इति प्रातः संकल्पं कुर्यात् । तथैव सायंवैश्वदेवेन यक्ष्य इति सायम्[13] । अथवा (*प्रातर्वैश्वदेवं करिष्ये सायंवैश्वदेवं करिष्य इत्येवं संकल्पौ[14] । केचित्तु—मम कण्डनीपेषणीचुल्लीसंमार्जनीगृहलेपनादिहिंसाजन्यदोषपरिहारपूर्वकान्नसिद्ध्यात्मसंस्का-

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने च. पुस्तकेऽन्यथा ग्रन्थः स यथा—" सिद्धान्नेनामुकाग्नौ वैश्वदेवं करिष्य इति वा संकल्पः । द्रव्याग्न्योरुद्देशेन वा प्रातरेवापकृष्य तन्त्रेण होमे तु प्रातःसायंवैश्वदेवाभ्यां तन्त्रेण यक्ष्ये । प्रातःसायंवैश्वदेवौ तन्त्रेण करिष्य इत्येवंभूतयोः संकल्पयोरन्यतरः संकल्पः कार्यः " इति ।

---

१ ङ. °त्र वैश्वदेवकर्तुर्वैश्वदेवाधिकारे सति चतुर्थीहोमानन्तरम् , अनधिकारे दायविभागोत्तरं गु° । २ क. °र्वं चतु° । ३ क. ख. °न्तरं गु° । ४ च. °दिव्यतिरिक्ते च° । ५ ख. ङ. °ले का° । ६ च. शुद्धे । ७ ख. ङ. °म्भः । यदि । ८ च. °ति कमलाकरभट्टकृताचारप्रदीपोदाहृतधर्मप्रदीपवचनेन दे° । ९ ङ. च. °नः । यदि । १० च. °दा प्रश्नप्र° । ११ ख. ङ. °पः । क° । १२ च. °र्थं प्रा° । १३ क. ख. °म् । प्रा° । १४ क. ख. °कल्पमिच्छन्ति । के° ।

रसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं वैश्वदेवं करिष्य इति संकल्पं कुर्वन्ति । प्रातरेव तन्त्रेण होमे तु प्रातःसायंवैश्वदेवौ तन्त्रेण करिष्य इति संकल्पः । ) ततः पचनाग्नौ[1] होमकर्तव्यतायां तमग्निं[3] कुण्ड आनीय गृहमध्यभागे संस्थाप्य प्रज्वालयेत् । औपासनाग्नौ होमे तस्य प्रज्वालनमात्रं[2] नाऽऽनयनम् । ततोऽश-नीयादन्नाद्धविष्यान्नं होमार्थमुद्धृत्य सूपसंसृष्टं[4] सर्वव्यञ्जनसंसृष्टं[5] वाऽन्नं बलिदानार्थं पितृयज्ञार्थं च पृथक्पृथगुद्धृत्य सर्वव्यञ्जनसहितमेवान्नं मनुष्यय-ज्ञार्थमुद्धरेत् । यदि तु विप्राणां विप्रस्य वोदरपूर्तिपर्यन्तमन्नं[7] दातुं सामर्थ्य-मस्ति तदा तद्भोजनपर्याप्तमन्नं पृथगुद्धरेत् ।

वैश्वदेवोत्तरं नैवेद्यसमर्पणमितिकल्पे नैवेद्यार्थमपि पृथगुद्धरणीयम् । ततस्त-दुद्धृतं सर्वमन्नमग्नावधिश्रित्याभिघार्योद्वास्याद्भिः प्रोक्षेदिति देवपवित्रसंस्कार-संस्कृतं कुर्यात् । अयं च संस्कारः शूद्रकर्तृकपाकपक्ष इत्युज्ज्वलाकृत् । देवप-वित्रसंस्काराभावपक्षेऽप्यभिघारणं भवत्येव । मातृदत्तमते तु परोक्षनिष्पन्नत्वा-दयं संस्कार इति, तन्मत आर्यकर्तृकपाकपक्षेऽपि भवति ।

ततः—अदितेऽनुमन्यस्वेत्यादिभिरग्निं परिषिच्य यावद्धोमं हृदि[10] सव्यह-स्ततलं निधाय, (+अग्नये स्वाहेत्यादिमन्त्राणां याज्ञिक्यो देवता उपनिषदः स्वयंभूर्वा, ऋषिः । मन्त्रोक्ता देवताः । यजूंषि । होमे बलिहरणे च यथायथं विनियोगः, इत्युक्त्वा देवयज्ञानां पृथक्कर्तव्यतायां देवेभ्यः स्वाहेत्यादिमन्त्र-त्रयस्यापि पूर्ववद्यजूंषीत्यन्तेनर्ष्यादि स्मृत्वा देवयज्ञादिषु[11] विनियोगं चाभिसं-धाय ये भूता इत्यस्य याज्ञिक्यो देवता उपनिषदः स्वयंभूर्वा, ऋषिर्भूतानि पुष्टिपतिश्च देवता त्रिष्टुप्छन्दः । सर्वभूतबलिप्रदाने विनियोग इति* च स्मृत्वा । )व्यञ्जनरहितभागादङ्गुष्ठपर्वमात्रमादाय संहताङ्गुलिनोत्तानेन[12] दक्षिण-हस्तेन जुहोति । 'ॐ अग्नये स्वाहा ' अग्नय इदं० । 'ॐ विश्वेभ्यो देवेभ्यः स्वाहा ' विश्वेभ्यो देवेभ्य इदं० । ' ॐ ध्रुवाय भूमाय स्वाहा ' ध्रुवाय भूमायेदं० । 'ॐ ध्रुवक्षितये स्वाहा ' ध्रुवक्षितय इदं० । 'ॐ अच्युतक्षितये स्वाहा ' अच्युतक्षि-तय इदं० । 'ॐ अग्नये स्विष्टकृते स्वाहा ' अग्नये स्विष्टकृत इदं० । इति

+ धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः । अयं च ग्रन्थः क. पुस्तकेऽत्र नास्ति किं त्वेतदग्रे जुहोतीत्येतस्यानन्तरम् । * एतत्पदत्रयं नास्ति क. पुस्तके ।

१ ङ. तत आयतने प° । २ च. होमे तस्य प्रज्वालनमात्रं, कुण्ड आनयनं गृहमध्यभागे संस्थापनं च न । ततोऽ° । ३ ङ. °मग्निमानीय प्र° । ४ ङ. °नम् । ५ क. °संस्पृष्टं । ६ च. °स्पृष्टमन्नं । ७ क. ख. ङ. °र्यन्तं दा° । ८ च. °ग । दे° । ९ च. °व । तत— । १० च °दि वामह° । ११ च. °यज्ञपितृयज्ञभूतयज्ञमनुष्ययज्ञेषु विनियोग इति वि° । १२ क. ख. ङ. °न ह° ।

( * षडाहुतीर्हुत्वा— ) अदितेऽन्वमꣳस्था इत्याद्यैरुत्तरपरिषेकं कुर्यात् । ततो बलिदेशमद्भिर्[1]हस्तेन परिमृज्यावोक्ष्य बलिं न्युप्य गन्धमाल्यादिभिरभ्यर्च्य परिषिञ्चेत् । एवं सर्वबलिषु । एकदेशसमवेतानेकबलीनामपि मार्जनावोक्षणे पृथक्पृथगेव, परिषेचनं त्वन्ते सकृदेव । ततोऽपरेणाग्निं[3] 'ॐ धर्माय स्वाहा[2]' 'ॐ अधर्माय स्वाहा' इत्युदगपवर्गं दद्यात् । धर्मायेदं० । अधर्मायेदं० । परिषिच्य, ततोऽग्नेर्दक्षिणत उदधानसंनिधौ—'ॐ अद्भ्यः स्वाहा' अद्भ्य इदं० । परिषिच्य, अगारस्य मध्ये द्वाभ्यां प्रागपवर्गम्—'ॐ ओषधिवनस्पतिभ्यः स्वाहा' ओषधिवनस्पतिभ्य इदं० । 'ॐ रक्षोदेवजनेभ्यः स्वाहा' रक्षोदेवजनेभ्य इदं० । परिषिच्य, अगारस्योत्तरपूर्वदेशे 'ॐ गृह्याभ्यः स्वाहा' गृह्याभ्य इदं० । 'ॐ अवसानेभ्यः स्वाहा' अवसानेभ्य इदं० । 'ॐ अवसानपतिभ्यः स्वाहा' अवसानपतिभ्य इदं० । 'ॐ सर्वभूतेभ्यः स्वाहा' सर्वभूतेभ्य इदं० । इति चतुर्भिः प्रागपवर्गं, परिषिच्य, अगारस्य दक्षिणभागे शय्यादेशे 'ॐ कामाय स्वाहा' कामायेदं० । इत्येकेन । परिषिच्य, देहल्यामेकेन—'ॐ अन्तरिक्षाय स्वाहा' अन्तरिक्षायेदं० । परिषिच्य, कपाटसंनिधौ 'ॐ यदेजति जगति यच्च चेष्टति० नाम्नो भागोऽयं नाम्ने स्वाहा' अपिधानायेदं० । वायव इदमिति वा । परिषिच्य, अग्नेर्दक्षिणतो ब्रह्मसदने 'ॐ पृथिव्यै स्वाहा' पृथिव्या इदं० । 'ॐ अन्तरिक्षाय स्वाहा' अन्तरिक्षायेदं० । 'ॐ दिवे स्वाहा' दिव इदं० । 'ॐ सूर्याय स्वाहा' सूर्यायेदं० । 'ॐ चन्द्रमसे स्वाहा' चन्द्रमस इदं० । 'ॐ नक्षत्रेभ्यः स्वाहा' नक्षत्रेभ्य इदं० । 'ॐ इन्द्राय स्वाहा' इन्द्रायेदं० । 'ॐ बृहस्पतये स्वाहा' बृहस्पतय इदं० । 'ॐ प्रजापतये स्वाहा' प्रजापतय इदं० । 'ॐ ब्रह्मणे स्वाहा' ब्रह्मण इदं । इत्येतैर्दशभिः प्रागपवर्गं, परिषिच्य, पितृयज्ञार्थादन्नादाय[4], एतद्बलीनां दक्षिणतः प्राचीनावीती प्रसव्यं परिमृज्यावोक्ष्य दक्षिणं पाणिमुत्तानं कृत्वाऽङ्गुष्ठतर्जन्यो-

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने च. पुस्तकेऽन्यथा ग्रन्थः स यथा—" षडाहुतीर्जुहुयात् । अत्र मध्य एव स्विष्टकृदाहुतिर्नैशान्याम् । क्षीरादिद्रवद्रव्येण होमे तु स्रुवस्तत्साधनम् । एवं बलिष्वपि । एतस्य होमस्य स्वकर्तृकत्वे त्यागाः कृताकृताः । स्वस्यासंनिधौ पत्न्या त्यागाः कार्याः । पत्न्यसंनिधौ होमकर्त्रैव । ऋत्विक्कर्तृकत्वादौ तु तं वृत्वा तेन वैश्वदेवः कारणीयः । कर्मसमाप्तौ हिरण्यं गौर्वा पूर्णपात्रं वा तस्मै दक्षिणां दद्यात् । ततः—" इति । क. पुस्तकेऽपि स्विष्टकृत इदमित्यनन्तरम्—" अत्र मध्य इत्यादिर्दद्यादित्यन्तो ग्रन्थो बहिर्लिखितोऽस्ति ।

१ क. ख. ङ. °देशेऽद्भि° । २ क. °हा । इ° । ३ क. °र्माय स्वाहा । अधर्मायेदं० । परि° । ङ. °वोक्ष्यावाचीनपाणिर्भूत्वा द° ।

रन्तरालेन 'ॐ स्वधा पितृभ्यः' पितृभ्य इदं० । प्रसव्यं परिषिच्य यज्ञोपवीत्यप उपस्पृशेत्[१] ।

+ स्वधा पितृभ्य इति मन्त्रान्त एव पित्र्यबलिर्देयः । न तु स्वधाशब्दान्ते । अन्यथा मन्त्रकरणत्वव्याघातापत्तेः । स्वधाशब्दस्य हविर्धा(र्दा)नार्थत्वात्स्वधा पितृभ्य इत्येतावानेव मन्त्रः, न तु स्वाहान्तः । उज्ज्वलाकृता स्वधा पितृभ्य इत्येतावानेव मन्त्रः प्रदर्शितोऽस्ति । एतेन ज्ञायते स्वाहाकारपाठो नास्तीति । यद्यस्ति तदा पितृभ्यः स्वाहेतिमन्त्रान्तराभिप्रायेणैव स योज्यः । अस्मिन्कल्पे न (तु) यज्ञोपवीतिता च द्रष्टव्या । अयं च जीवत्पितृकविषये[२] । एतदन्त एव बलिदानं मन्त्रान्तस्थ[३]स्वधास्वाहाशब्दान्त एव पठनम्(?) । अनमध्यतस्थानत इत्यनार्थ[४]त्यान(?) स्वीकारात् । अन्यथोभयतः पाश आपद्येत ।

ततस्तदुत्तरतः प्रदक्षिणं परिमृज्यावोक्ष्य भूतयज्ञार्थादन्नादादाय 'ॐ नमो रुद्राय पशुपतये स्वाहा[५]' इत्येकेन[६] । रुद्राय पशुपतय इदं[७]० । ततस्तं प्रदक्षिणं परिषिच्याप[८] उपस्पृशेत्[९] । न वा त्यागाः ।

" द्वावेको द्वौ च चत्वारः प्रत्येकं त्रितयं तथा ।
दश चैक इति ज्ञेयं[१०] स्थानभेदाद्यथाविधि "

इति परिषेकक्रमसंग्रहः । ततो गृहद्वारं गत्वाऽवोक्ष्य 'ॐ ये भूताः प्रचरन्ति दिवा[११] नक्तं बलि० पतिर्दधातु स्वाहा " इति भूमौ बलिं दद्यात्परिषिञ्चेच्च । दिवाचारिभ्यो भूतेभ्यः पुष्टिपतये चेदं० । न वा त्यागः[१२] । ततो गृहद्वारेऽतिथिमाकाङ्क्षन्गोदोहनकालपर्यन्तं स्थित्वाऽतिथीन्विप्रा[१३]न्शक्तौ सत्यामभ्यागतांश्च गृहमानीय स्वयं हस्तपादान्प्र(दं प्र)क्षाल्याऽऽचम्य तथैव तेषामपि *हस्तपादान्प्रक्षाल्याऽऽचम्याऽऽसने प्राङ्मुखानुपवेश्य निवीती भूत्वा मनुष्ययज्ञेन यक्ष्य[१४] इति संकल्पं कुर्यात् । केचित्तु मनुष्ययज्ञं करिष्य इत्येव संकल्पमिच्छन्ति । ततस्तानतिथी[१५]नभ्यागतांश्च संपूज्य निवीत्येव मनुष्येभ्यो हन्ता मनुष्येभ्य इदं न ममेत्युत्सृज्य तान्भोजयेत् । अतिथित्रयाभाव

---

एतदाद्यापद्येतेत्यन्तं प्रायः पूर्वमागतमेव । * मध्यमपदलोपिना समासेन निर्वाहः ।

१ ङ. °त् । तदुत्तरतः । च. °त् । जीवत्पितृकश्चेत्पितृभ्यः स्वाहेतिमन्त्रेण यज्ञोपवीती प्राचीनावीती वा बलिं दद्यात् । ततस्तदुत्त° । २ ख. °ये दन्तये बलिदानंस्तु मन्त्रा° । ३ ख. °स्थब्रह्मस्व° । ४ ख. °यत्यन । ५ ङ. °हा । रु° । ६ क. ख. °न । नमो रु° । ७ क. ख. °दं० । प्र° । ङ. °दं० । इत्येकेन । प्र° । ८ ख. °रिमृज्याप । ९ ख. °त् । द्वा° । ङ. त् । ये भू° । १० क. ख. °यं धर्मभे° । ११ क. ख. ङ. °वा व° । १२ च. °गः । ततः परिषिञ्चेत् । त° । १३ क. ख. °प्रानभ्यागतान्गृह° । १४ ङ. च. यक्ष्ये मनुष्ययज्ञं करिष्य इत्येवं वा संकल्प्य तान° । १५ क. ख. °थीन्संपू° ।

एकस्मा अपि देयं मन्त्रेणैव । तत्र बहुवचनं पूजार्थत्वेन समर्थनीयम् । सर्वथाऽतिथ्यभावे विप्रेभ्यो देयम् । तेषामप्यभावे गोभ्यः । तासामप्यभावेऽग्नौ होतव्य[1]मिति शिष्टाः । उभयत्र मन्त्रलोपः । अथवा बहूनां सनकादीनामुद्देश्यत्वाद्बहु[4]वचनम् । तेनैकविप्रे तदभावेन[2] गवादिषु च[3] दाने यथापठितमन्त्रेणैव दानमिति युक्तम् । एवं सायमपि (*होमान्ते होमात्पूर्वं वा पूर्वबलीन्निष्काशयित्वा(श्य)) रौद्रान्तं[5] कृत्वा (+ 'ॐ ये भूताः प्रचरन्ति दिवा नक्तं बलिमिच्छन्तो वितु० देधातु स्वाहा' नक्तं चारिभ्यो भूतेभ्यः पुष्टिपतये चेदं० । इत्याकाशे बलिमुत्क्षिपन्दद्यात् । अथवा ) ' ॐ ये भूताः प्रचरन्ति दिवा नक्तं बलि० देधातु स्वाहा, दिवाचारिभ्यो नक्तंचारिभ्यश्च भूतेभ्यः पुष्टिपतये चेदं० । इति[6] नक्तमेवाऽऽकाशे[7] बलिर्देयः[8] । केचित्तु विभज्य विनियोगमिच्छन्ति । ये भूताः प्रचरन्ति दिवा बलिमिति प्रातः । ये भूताः प्रचरन्ति नक्तं बलिमिच्छन्त इति रात्राविति । अस्मिन्पक्षे—अयं बलिर्दिवा भूमौ देयः । सायमाकाश इति द्रष्टव्यम् । अन्ये तु सायंवैश्वदेवेऽयमेव बलिर्न पूर्वोक्ता बलय इत्याहुस्तद्दूषितमधस्तात् । ततो वृद्धातुरबालगुर्वतिथिभृत्यान्भोजयित्वा स्वयं प्राङ्मुखो भुञ्जीत ।

## अथ तन्त्रेण प्रयोगः ।

प्रातःसायंवैश्वदेवाभ्यां तन्त्रेण यक्ष्ये प्रातःसायंवैश्वदेवौ[9] तन्त्रेण करिष्य इत्येतदन्यतरं संकल्पं[10] कृत्वा संप्रतिपन्नदेवताकत्वा[11]द्रौद्रान्नं सकृद्देवं[12] कुर्यात् । ततो वैहायसबलिः, ये भूताः प्रचरन्तीति यथापठितमन्त्रेणाऽऽकाश एव देयः[13] । दिवाचारिभ्यो नक्तंचारिभ्यश्च भूतेभ्यः पुष्टिपतये चेदं न ममेति त्यागः । ततो मनुष्ययज्ञ इति प्रयोगक्रम इति । ( * देवयज्ञादीनां पृथक्करणकल्पे येषां मते देवयज्ञादयो भिन्नास्तन्मते ) रौद्रबलयन्ते देवयज्ञेन यक्ष्य[14] इति संकल्प्य पूर्वपरिषेकं कृत्वा होमार्थाद[15]न्नादङ्गुष्ठपर्वमात्रमन्नमादाय 'ॐ देवेभ्यः स्वाहा' इति तस्मिन्नेवाग्नौ जुहोति । देवेभ्य इदं० । तत उत्तरपरिषेकं कृत्वा प्राचीनावीती

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ख. ङ. पुस्तकेषु । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ख ङ. पुस्तकेषु । * धनुश्चिह्नान्तर्गतग्रन्थस्थाने च. पुस्तकेऽन्यथा ग्रन्थः स यथा—" अथ देवयज्ञभूतयज्ञपितृयज्ञानां पृथक्करणकल्पे प्रयोगः " इति ।

१ क. ख. °व्यम् । उ° । ङ. °व्यम् । ब° । २ क. °वें ग° । ३ क. ख. ग. °च य° । ४ च. °ति । ए° । ५ घ. °द्रान्ते कृ° । ६ ग. °ति सायमे° । ७ च. °काश एवायं ब° । ८ च. °यः । न दिवा । न च भूमौ । अन्ये । ९ क. ख. ङ. °देवौ । १० क. ख. ङ. इति संकल्पः । संप्र° । ११ च. °वतत्वा° । १२ क. ख. ङ. °व । त° । १३ च. °यः । न भूमौ । दि° । १४ च. यक्ष्ये देवयज्ञं करिष्य इ° । १५ च. °दङ्गु° ।

पितृयज्ञेन यक्ष्य इति संकल्प्य पित्रर्थादन्नादादाय 'ॐ पितृभ्यः स्वधाऽस्तु' इति पूर्वपित्र्यबलेः पुरस्तात्पित्र्यबलिधर्मेण ददाति । पितृभ्य इदं० । प्रसव्यं परिषिच्य यज्ञोपवीती भूत्वा भूतयज्ञेन यक्ष्य इति संकल्प्य धर्मार्थान्नशेषादादाय 'ॐ भूतेभ्यो नमः' इति रौद्रबलेः पुरस्ताद्दत्त्वा तत्परिषिञ्चेत् । भूतेभ्य इदं० । ये भूता इत्येतत्पूर्वं वोत्तरपरिषेकः, एतदनन्तरं वेति प्रयोगक्रमो द्रष्टव्यः । अथवा षडाहुत्यादौ पूर्वपरिषेकः । देवेभ्यः स्वाहेत्यन्त उत्तरपरिषेकः । न मध्यभूतौ परिषेकौ । सायंवैश्वदेवस्य स्वकाले क्रियायां देवेभ्यः स्वाहेत्यादि त्रयं न भवति । सर्वे बलयः कुक्कुटाण्डप्रमाणाः । अविभक्तेषु ज्येष्ठेन, तस्याशक्तावसंनिधाने वा तदाज्ञयाऽन्येनापि विहितकर्त्रा वैश्वदेवः कार्यः । तत्तत्स्थाने बलिदानाशक्तावग्नेः पश्चाद्गोमयेनोपलिप्तायां भूमौ यत्र यत्र यत्स्थानं भवति तदनुसारेण तत्तत्स्थानानि कल्पयित्वा बलिदानं कुर्यात् । पूर्ववदेव परिषेकः । ब्रह्मबलयन्तानां बलीनां सहैव वा परिषेकः संविभवात् । अस्ति च सूत्रं 'तेषां विभवन्ति तन्त्रमङ्गान्यविभवन्त्यावर्तन्ते' इति । एकत्र चेच्चक्राकारं व्यंजनाकारं वा बलिहरणमिच्छन्ति केचित् । कुर्वन्ति चेदानीमेतदनुसारेणैव शिष्टाः । यत्तु वैश्वदेवकारिकासु यथेष्टं वैश्वदेव उक्तः कूर्माकृतिबलिहरणं चोक्तं तत्सूत्रवृत्त्यर्थयोरज्ञानेनैव स्वकपोलकल्पितत्वाद्भ्रान्तप्रलपितमित्युपेक्षणीयम् । प्रवासेऽप्येवम् । वैश्वदेवसूत्रस्वरसात्, व्यजनाकारमायाति पुनरपि मृग्यं च सुधीभिः । प्रजापतये स्वाहेत्यादिमन्त्रत्रयस्य प्रजाकामपारमेष्ठ्यकामधनकामेषु क्रमेण विनियोगो द्रष्टव्यः । एतेषां होमो रौद्रबलयन्ते । ( + तत्तत्कामनानुसारेणाऽऽदौ संकल्पं

---

+ धनुश्चिह्नान्तर्गतो ग्रन्थश्च.. पुस्तक एव । क. पुस्तकेऽपि बहिष्टिप्पणीरूपेण लिखितोऽस्ति । एतद्ग्रन्थस्थाने क. ख. ङ. पुस्तकेष्वन्यथा ग्रन्थः स यथा—" अग्नौ देवयज्ञार्थेनानेन देवयज्ञादीनां भिन्नत्वमिति कल्पे भूतेभ्यो नम इत्यन्ते वैश्वदेवप्रकरणस्थत्वाद्बौधायनोक्तेश्च होमेऽन्नप्राप्तिर्द्रष्टव्येति सुस्थम् । मिताक्षरायां बृहस्पतिः—अनिर्वर्त्य महायज्ञान्यो भुङ्क्ते प्रत्यहं गृही । अनातुरः सति धने कृच्छ्रार्धेन विशुध्यतीति । चान्द्रायणकृच्छ्रार्धयोः शक्ताशक्तपरत्वेन व्यवस्था । गीतायाम्—"यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः । भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्" । इति करणे फलातिशयोऽकरणे प्रत्यवायश्च स्मर्यते । अत्र यज्ञो वैश्वदेव इति श्रीधरस्वामिना व्याख्यातम् । तेन साग्निकैर्निरग्निकैश्च भोजनलोपेऽपि येन केनापि द्रव्येण यथाकथंचित्पञ्च महायज्ञाः कर्तव्या एवेति निष्कर्षः " इति ।

---

१ च. यक्ष्ये पितृयज्ञं करिष्य इति वा पूर्वसंकल्पानुसारेण सं° । २ च. यक्ष्ये भूतयज्ञं करिष्य इति वा प्रथमसंकल्पानुसारेण सं° । ३ च. °यात् । भूतेभ्य इदं० । ततः परिषिञ्चेत् । ये° । ४ च. °कः । त° । ५ च. त्रितयं । ६ ङ. °न तदा° । ७ क. ख ङ. °पि वै° । ८ ख. ङ. °मौ तत्त° । च. °मौ स्वगृहे यत्र तत्स्था° । ९ च. विभवात् । १० क. ख. ङ. व्यञ्जना° । ११ च. °लिदानं केचिदिच्छन्ति । कु° । १२ ख. °त् । य° । १३ ख. ङ. °म् । वै° । १४ च. °म् । प्रजाप° । १५ च. °व्यः । रौ° ।

कृत्वा तदनुसारेण तस्मिन्नेवाग्नौ परिषेकपूर्वकं देवयज्ञार्थेनान्नेन प्रजापतये स्वाहेत्यादिमन्त्रैर्होमः कार्यः । तत उत्तरपरिषेकः । अथवा षडाहुत्यादौ पूर्वपरिषेक एतद्धोमान्त उत्तरपरिषेको न मध्यभूताः(तः) परिषेकः[1] । वैश्वदेवप्रकरणस्थत्वात् । एतद्धोमे तस्याग्नेस्तस्यान्नस्य च प्राप्तिर्द्रष्टव्या[2] । देवयज्ञादीनां पृथक्करणकल्पे भूतेभ्यो नम इत्यन्त एते होमाः ।

## अथ जले वैश्वदेवक्रियाया प्रयोगः ।

शुद्धजलसमीपे प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं जले जलेनामुकवैश्वदेवं करिष्य इति संकल्प्य, अञ्जलिना षडाहुतिमन्त्रैर्[3]बलिमन्त्रैर्ये[4] भूता इतिमन्त्रेण च जलं दद्यात् । नात्र पूर्वोत्तरपरिषेकौ । न परिमार्जनादयो बलिहरणधर्मा असंभवात् ।

## अथानग्निककर्तृकवैश्वदेवप्रयोगः ।

श्रीपरमेश्वरप्रीत्यर्थमनग्निकविहितवैश्वदेवविधिना वैश्वदेवं करिष्य इति संकल्प्य पूर्वपरिषेकान्ते हस्तेनाऽऽहुतीर्जुहुयात् । 'ॐ भूः स्वाहा' अग्नय इदं० । 'ॐ भुवः स्वाहा' वायव इदं० । 'ॐ सुवः स्वाहा' सूर्यायेदं० । 'ॐ भूर्भुवः सुवः स्वाहा' प्रजापतय इदं० । 'ॐ देवकृतस्यैनसोऽवयजनमसि स्वाहा' । 'ॐ मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा' । 'ॐ पितृकृतस्यैनसोऽवयजनमसि स्वाहा' । 'ॐ आत्मकृतस्यैनसोऽवयजनमसि स्वाहा' । 'ॐ अन्यकृतस्यैनसोऽवयजनमसि स्वाहा' । 'ॐ अस्मत्कृतस्यैनसोऽवयजनमसि स्वाहा' । 'ॐ यद्दिवा० सि स्वाहा' । 'ॐ यत्स्वप० सि स्वाहा' । 'ॐ यत्सुषु० सि स्वाहा' । 'ॐ यद्विद्वा० सि स्वाहा' । 'ॐ एनस एनसोऽवयजनमसि स्वाहा' । 'ॐ प्रजापतये स्वाहा[6]' । इति षोडशाऽऽहुतीर्जुहुयात् । अग्नय इदमिति देवकृतस्येत्याद्येकादशशाकलमन्त्रहोमत्यागः । एताभिः षोडशाहुतिभिरग्नये स्वाहेत्यादिषडाहुतीनां[5] बाधः । तत उत्तरपरिषेकबलि[*हरणादि समानम् ।

इत्यनग्निककर्तृकवैश्वदेवप्रयोगः ।

वैश्वदेवसिद्ध्यर्थं वैश्वदेवमन्त्रजपमहं करिष्य इति संकल्प्य, अग्नये स्वाहे-

* क. पुस्तकटिप्पण्यामेवैतच्चिह्नान्तर्गतो ग्रन्थः । च. पुस्तके तु त्रुटितः ।

१ क. 'षेकाः । वै' । २ क. 'स्याग्ने तस्या' । ३ क. 'हुतीर्मन्त्रै' । ४ क. 'न्त्रैर्ये' । ५ क. न मा' । ६ क. 'हा । प्रजापतय इदं० । इ' ।

त्यादीन्ये भूता इत्यन्ता]न्सर्वान्मन्त्रान्मनसा जपेत् । एतस्य(च) सर्वथा जलस्याप्यभावे ज्ञेयम् । )

इति संस्काररत्नमालायां वैश्वदेवविधिः ॥

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायाः सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालाया उत्तरार्धे पञ्चमं प्रकरणम् ॥ ५ ॥

अथ षष्ठं प्रकरणम् ।

## अथ पिण्डपितृयज्ञः ।

तत्रेदं सूत्रम्—" सोऽयमेवं विहित एवानाहिताग्नेस्तत्र यानि श्रपणसंयुक्तानि तान्यौपासने क्रियन्तेऽतिप्रणीत आहुतीर्जुहोति यस्मिञ्जुहोति तमुपतिष्ठतेऽत्र गार्हपत्यप्रवादः परिलुप्यते " इति ।

सोऽयं पिण्डपितृयज्ञ एवंप्रकारेणोक्त एवानाहिताग्नेरपि भवति । तत्र यानि श्रपणसंयुक्तानि तान्यौपासने क्रियन्ते । होमस्त्वतिप्रणीतेऽपि वा न तत्र पाकः । तत्समवेतनिर्वापपात्रासादनादीनि तान्यौपासने नियम्यन्ते । अतिप्रणीत आहुतीर्जुहोति । एकोल्मुके प्रणीते तत्रैव होमः । तथा च होमसमय एव प्रणयनम् । यस्मिञ्जुहोति तमुपतिष्ठते । अतिप्रणीतमेवोपतिष्ठत इत्यर्थः । तत्र भाष्यकृता व्याख्यातं यस्मिञ्जुहोतीति गुरुनिर्देशाद्विकल्प इति । गुरुनिर्देशस्यास्ति फलम् । दक्षिणाग्नौ पिण्डपितृयज्ञे कृतेऽपि गार्हपत्यस्योपस्थानवदौपासनस्य मा भूदित्येवमर्थं यस्मिन्नित्याद्युक्तम् । अत्र गार्हपत्यप्रवादः परिलुप्यते गार्हपत्यपदं लुप्यते नोह एतस्यापि पिण्डपितृयज्ञस्य प्रकृतित्वात् । नापि लक्षणया व्याख्या । प्रकृते गार्हपत्यमुपतिष्ठत इति सति विधौ ऐन्द्र्या[1] गार्हपत्यमुपतिष्ठत इति द्वितीयाश्रुतिबलेन व्याख्या । प्रकृते यस्मिञ्जुहोति तमुपतिष्ठत इत्येव विधौ द्वाराभावाल्लोप एव गार्हपत्यपदस्येति युक्तमिति व्याख्यातं वैजयन्तीकृता । एतत्कालस्तत्रैव सूत्रे[3]—

" अमावास्यायामपराह्णे पिण्डपितृयज्ञेन यजतेऽधिवृक्षसूर्ये वा यदहः पुरस्ताच्चन्द्रमसं न पश्यन्ति दृश्यमाने तूपोष्य श्वोभूते यजते " इति ।

---

१ च. °र्थः । अत्र मातृदत्तेन व्या° । २ क. °पद्भ्या । ३ ख. ङ. सूत्रे ।

संज्ञान्तरात्स्वतन्त्रकालविधानात्संस्कारेषु पृथगभिधानाच्च नित्योऽयं न च काम्यः कर्मान्तरम् । यद्यपि यजतिः श्रूयते तथाऽपि न यागो निर्ज्ञातया संज्ञया यजेरन्यार्थत्वम् । पिण्डैः पिण्डदानेन सहितः पितृभ्यो[1] देवेभ्यो यज्ञो होमः स पिण्डपितृयज्ञः । पिण्डा मानुषेभ्यः पितृभ्यो दीयन्त इति प्रसिद्धम् । तदिदं पिण्डदानं पिण्डशब्देनोपलक्षितम् । तेन सहभावो देवरूपपितृहोमस्योक्तः । तेन पिण्डदानहोमयोरुभयोरपि प्राधान्यमुक्तम् । तेनास्य कर्मणो दैवत्वं पित्र्यत्वं चास्ति[2] । ततस्तु जीवत्पितुः पिण्डदानलोपेऽपि होमेनैव तत्सिद्धिरसोमयाजिन इवाऽऽग्नेयोपांशुयागाभ्यां पौर्णमाससिद्धिः । अत्र दानहोमात्मके कर्मणि न ददातेः प्रयोगो नापि जुहोतेः । अत एव सूत्रान्तरे श्रुत्यन्तरे च पिण्डपितृयज्ञेन चरन्तीति सामान्यप्रयोगैः[3] । अतः सूत्रकृता यज्ञशब्देन सहकृतः शाखान्तरीयो यजतिरेव प्रयुक्तः साङ्गयज्ञविधिवदत्रापि साङ्गकर्मविधानाज्जुहोतिददात्योरनुगतप्रदानमात्रसामान्यवाची । तत्रोभयोः प्राधान्येऽङ्गानि किं पित्र्याणि प्राचीनावीतित्वलक्षणानि तद्विपरीतानि दैवानि चेति संदेहे त्वनियमप्राप्तौ प्रयोगेण न्यायमाहाऽऽचार्यस्तस्याभिप्रायो वर्ण्यते । तत्र पितृतन्त्रस्य मुखतः प्रवृत्तेस्तस्य बलवत्त्वम् । कथम् । अपां मेध्यमिति बर्हिराहरणं पित्रर्थमेव । परिस्तरणानि तु पृथगेव परिभोजनीयैः । यदा न पिण्डदानं तदा न बर्हिराहरणं प्रयोजनाभावात् । परिस्तरणार्थं परिभोजनीयाहरणं तु कर्तव्यमेव । तस्माद्धोमात्प्राचीनं सर्वमुभयार्थमपि पित्र्यधर्मेणैव कार्यम् । परिस्तरणान्यप्युभयार्थान्येव । देवानामुभयेषां निवासार्थसंस्तवात् । तस्मात्प्राचीनावीती भूत्वाऽध्वर्युः कर्माणि सर्वाण्यपि कुर्यात् । समानकर्तृकत्वादङ्गप्रधानयोः । प्रथमं प्रधानेऽध्वर्युं[4] होमकर्तारं वक्ष्यत्यतोऽध्वर्युरेव तत्राङ्गानां कर्ता । दक्षिणापवर्गाण्यप्रदक्षिणं चेत्यादि दर्शितं ज्ञेयम् । अत एवोक्तं दक्षिणाप्रागग्रैरिति । होमार्थमुपविष्टोऽध्वर्युरुपवीतीत्याद्याह । अपराह्णशब्दस्य कालवाचित्वात्तत्समभिव्याहृतस्तदपेक्षितोऽमावास्यादिशब्दोऽपि कालपर एव । तत्रैव मुख्यत्वाच्च । यजति(ते) चरतीत्यर्थः । आपस्तम्बेनाप्युक्तं चरन्तीति[5] । अपराह्णोऽत्र नवधाविभक्तस्याह्नोऽपरो भागः सवितुः प्रसव इति निरूपितः । यदा मासिके श्राद्धेऽधिकारी तदा द्वेधाविभागमाश्रित्यापराह्णो ग्राह्यः । अन्यथा पिण्डपितृयज्ञानन्तरं क्रियमाणस्य काललोपः स्यात् । अन्यस्य त्रेधा विभागः । अधिवृक्षसूर्ये वा, वृक्षानधि सूर्यो यत्र स

१ क. ख. °भ्यो य° । २ क. च. चास्तीति । ३ क. च. °ग. कृतः । अ° । ४ ख. ङ. च. होमे क° । ५ क. ख. ङ. °रन्तीति ।

तथा। तत्रामावास्याशब्दस्य पञ्चदश्यां प्रतिपदि च प्रवृत्तेर्नियमानाह—'यदहः पुरस्ताच्चन्द्रमसं न पश्यन्ति' [इति] प्रत्यक्षेण शास्त्रेण वा नाभ्रादिव्यवधानेन तत्र संधिमतीत्यर्थः। यदि दृश्यते तदाऽऽह—'दृश्यमाने तूपोष्य श्वोभूते यजते' [इति]। उषित्वा सत्यसति वा पर्वसंधौ परदिनेऽपराह्णेऽधिवृक्षसूर्ये वा यजत इति व्याख्यातं वैजयन्तीकृता।

आपस्तम्बसूत्रेऽपि—"अमावास्यायां यदहश्चन्द्रमसं न पश्यन्ति तदहः पिण्डपितृयज्ञेन चरन्ति" इति।

पिण्डैर्युक्तः पितृयज्ञः पिण्डपितृयज्ञः। स च कर्मान्तरं न तु दर्शशेषः। यथा वक्ष्यति—'पितृयज्ञः स्वकालविधानादनङ्गं स्यात्' इति। तं च यदहश्चन्द्रमसं न पश्यन्ति पञ्चदश्यां प्रतिपदि वा तदहः कुरुते यदहस्तयोः संधिस्तदहरित्यर्थ इति रुद्रदत्तः। रामाण्डारोऽप्याह—"पिण्डपितृयज्ञस्तु पर्वसंधिमदहोरात्राप-राह्णे" इति। 'अमावास्यायामपराह्णे पिण्डपितृयज्ञः' इत्यस्मिन्नाश्वलायनसूत्रे वृत्तिकारोऽपि—

"अमावास्याशब्दः प्रतिपत्पञ्चदश्योः संधिवचनोऽप्यत्रापराह्णशब्दसम-न्वयात्तद्वत्यहोरात्रे वर्तते। तस्यापराह्णे तुर्ये भागे पिण्डपितृयज्ञः कार्यः। औपवसथ्ये यजनीये वाऽहनि यदा त्वहोरात्रसंधौ तिथिसंधिः स्यात्त-दौपवसथ्य एवाहनि क्रियते" इति।

अध्वर्युरुपवीतीत्यत्राध्वर्युग्रहणमनाहिताग्नेरप्यध्वर्युकर्तृकत्वार्थमिति भाष्य-कृत्। वैजयन्तीकृत्तु कतिपयानां दर्विहोमधर्माणां पिण्डपितृयज्ञप्रकरणस्थेन विशेषविधिना बाधेऽपि कर्तुरध्वर्योरबाधं स्मारयितुमध्वर्युरित्युक्तमित्याह। तेनानाहिताग्नेरप्यध्वर्युवरणमावश्यकम्। अशक्यत्वात्तदकरणे तु यजुर्भ्रेषप्राय-श्चित्तमनाज्ञातजपो वा कार्यः।

## अथ प्रयोगः।

कर्ताऽमावास्याप्रतिपत्संधिमति दिनेऽपराह्णे प्राचीनावीती कृताचमनप्राणा-यामः प्रथमप्रयोगेऽसतिबाधक उक्ते काले यावज्जीवं पिण्डपितृयज्ञेन यक्ष्य इति संकल्पं कुर्यात्।

ततः पुनराचम्य पिण्डपितृयज्ञेन यक्ष्य इति संकल्प्य, अस्मिन्पिण्डपितृयज्ञेऽ-ध्वर्युं त्वामहं वृण इति वृणुयात्। ऋत्विजं त्वामहं वृण इत्येवं वा वरणम्।

१ ङ. च. °यममाह। २ च. मातृदत्तः।

तदभावे स्वयं वा कुर्यात् । ऋत्विक्कर्तृकेऽपि होमान्ते कर्मणि [1]तद्वत्प्राचीनावीतयज्ञोपवीते यजमानस्यापि भवतः । पिण्डदानं तु यजमानकर्तृकमेव । अध्वर्युः प्राचीनावीत्येव ‘ अपां मेध्यं यज्ञिय१० शतम् ’ इति सकृत्प्रयत्नेन मूलैः सह बर्हिराच्छिनत्ति[2] । अप उपस्पृश्य तूष्णीं बद्ध्वा[3]ऽऽहृत्यानधो निदधाति । तूष्णीं परिस्तरणाद्यर्थमन्यान्दर्भान्समूलानेवाऽऽच्छिद्य बद्ध्वाऽऽहृत्य बर्हिःसमीपे[4]ऽनधो निदध्यात् ।

ततः पुरस्ताद्दक्षिणाग्रैर्दक्षिणतः प्रागग्रैः पश्चाद्दक्षिणाग्रैरुत्तरतः प्रागग्रैर्दर्भैः प्रागादिप्रदक्षिणं यथावदेवाग्निं परिस्तृणाति । नात्राधरोत्तरभावनियमः । पूर्वं परिस्तृतत्वेऽपि धर्मभेदात्परिस्तरणं कार्यमेव । पिण्डपितृयज्ञपरिस्तरणदर्भाः प्रज्ञाताः कार्याः । पिण्डपितृयज्ञसमाप्तौ तेषामेव निष्काशनम् ।

तत उत्तरेणाग्निमुत्तराग्रान्दर्भान्संस्तीर्यैकैकशः पिण्डपितृयज्ञपात्राण्युत्तानान्येव प्रयुनक्ति । स्फ्यं स्थालीं मेक्षणं शूर्पं कृष्णाजिनमुलूखलं मुसलमिति प्रागपवर्गाण्युदगपवर्गाणि वाऽऽसादयेत् । सूत्रे पिण्डपितृयज्ञाधिकारे पुनः पिण्डपितृयज्ञपात्राणीतिवचनमेतदर्थानि भिन्नान्येव पात्राणि संपादनीयानि न दार्शपौर्णमासिकैः कार्यसिद्धिरितिख्यापनार्थमिति वैजयन्तीकृत् । पार्वणस्थालीपाकीयैरपि न कार्यसिद्धिरित्यपि द्रष्टव्यम् ।

ततोऽपरेणाग्निं व्रीहिमच्छकटमवस्थाप्य शकटाभावे स्फ्ये पात्रीं निधाय तत्र व्रीहीनोप्यैकदर्भमयं पवित्रं कृत्वोदगग्रं स्थालीमुखे निधाय शकटस्थव्रीहिभिः पात्रीपक्षे पात्रीस्थव्रीहिभिः स्थालीं पूरयित्वा स्थालीमुखतोऽधिकानुपरि राशीभूतान्हस्तेन शकटस्थव्रीहिषु पात्रीपक्षे[5] पात्रीस्थव्रीहिषु[6] निःसार्य पवित्रमपातयन्पितृभ्यस्त्वा जुष्टं निर्वपामीति शूर्पे सकृदेव निर्वपति । ततस्तूष्णीं दक्षिणेना(न) [दक्षिणा]ग्निं दक्षिणापूर्वेण दक्षिणापरेण वा प्रत्यगुदग्ग्रीवं कृष्णाजिनमास्तीर्य तत्रोलूखलं स्थापयति । दक्षिणापूर्वेण दक्षिणापरेण वेत्येतावतैव सिद्धे दक्षिणेन दक्षिणाग्निमितिवचनं शकटस्य दक्षिणापूर्वेण दक्षिणापरेण चेति स्यात्तन्मा भूदित्येतदर्थम् ।

तत आग्नेय्यभिमुखी तिष्ठन्ती पत्नी मुख्यैव तस्मिन्नुलूखले व्रीहीनोप्यावहन्ति । तदभावे तस्या अयोग्यत्वे च कनिष्ठा । ततस्तुषाणां निःसारणं कृत्वा सर्वांस्तुषान्निर्गमय्य सकृदेव कणाविमोकार्थं फली करोति ।

---

१ च. ॰व । ततोऽध्व॰ । २ च. ॰त्ति उत्पाटयतीत्यर्थः । अ॰ । ३ च. ॰नैवोत्पाटयाप उपस्पृश्य तान्बद्ध्वा॰ । ४ क. ख. ङ. ॰पे नि॰ । ५ ङ. च. ॰र्पे स्थाल्या स॰ । ६ च. ॰नि । पितृतीर्थेनेति केचित् । त॰ ।

ततः कर्ता फलीकरणान्यग्नेरुत्तरतो निक्षिप्य तण्डुलान्सकृत्प्रक्षाल्य स्थाल्यामुदकमानीयाग्नावधिश्रित्य तत्र तण्डुलानोप्याग्नौ *जीवतण्डुलमिव चरुं श्रपयति। जीवतण्डुला अविशीर्णास्तण्डुला यस्मिंश्चरौ तादृशमनतिपाकमित्यर्थ इति वैजयन्तीकृत्। ततो यस्मिन्कस्मिंश्चिदनिषिद्धे पात्रे नवनीतमानीय पूर्वकृतेनैवैकपवित्रेण सकृदुत्पूय तेन नवनीतेन पात्रस्थेनानुत्पूतेनाऽऽज्येन वा तेनैव पात्रेणाभिघार्योत्तरत उद्वास्य पश्चादासादयति। आज्येनाभिघारणपक्ष उत्पवनाभावान्निर्वापोत्तरमेवाग्नौ पवित्रस्य प्रहरणम्। नवनीतेनाभिघारणपक्ष उत्पवनोत्तरं प्रहरणम्। अग्न्यायतनस्योत्तरतस्त्यजेद्वा।

ततः प्राचीनावीत्येवैकस्फ्यया वेदेर्दक्षिणतः समीप एव स्थण्डिलं कृत्वा गोमयेनोपलिप्योद्धृत्य षड्लेखा लिखित्वाऽवोक्ष्यावोक्षणशिष्टमर्धं जलं स्थण्डिलस्य पुरत उत्तरतो वोत्सिच्य, (+अन्यच्छुद्धमुदकं तत्पात्र आनीय तत्पात्रं स्वस्योत्तरतो निधाय तेनोदककार्यं कुर्यात्। यस्मिन्कस्मिंश्चित्पात्रे वा स्थापनमतिप्रणीताग्नेः। अस्मिन्पक्षे न स्थण्डिलकरणादि। उदककार्यं तु येनकेनापि शुद्धोदकेन। ततो) 'ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति। परा पुरो निपुरो ये भरन्त्यग्निष्टानस्मात्प्रणुनोक्तु लोकात्' इत्यौपासनाग्नेरेकोल्मुकं धूपायत्पराचीनं[2] हृत्वा लेखासु[3] यस्मिन्कस्मिंश्चित्पात्रे वा निधाय प्रज्वाल्य तमग्निं परिस्तृणाति। अथाध्वर्युस्तदभावे यजमान एव यज्ञोपवीती भूत्वा होमं कुर्यात्। दक्षिणं जान्वाच्य मेक्षणेन स्थालीपाकैकदेशमुपहत्य 'सोमाय पितृपीताय स्वधा नमः' इति पितृतीर्थेन प्रथमामाहुतिं जुहोति। सोमाय पितृपीतायेदं न मम। पुनस्तथैव[4] स्थालीपाकैकदेशमुपहत्य 'यमायाङ्गिरस्वते पितृमते स्वधा नमः' इति द्वितीयां तथैव। यमायाङ्गिरस्वते पितृमत इदं न मम। 'अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः' इति यानि मेक्षणे द्वितीयाहुत्यवशेषितानि संलग्नानि सिक्थानि तैस्तृतीयामाहुतिं तथैव जुहोति। अग्नये कव्यवाहनाय स्विष्टकृत इदं न मम। प्रथमाहुतिसंबन्धिसिक्थानामपि होम इति केचित्। अस्मिन्पक्षे प्रथमाहुतिसंबन्धिमेक्षणसंलग्नानि सिक्थानि पात्रान्तरे निहितानि द्वितीयाहुत्यवशेषितमेक्षणस्थसिक्थेषु [मिश्रयित्वा] तेन तृ(तैस्तृ)तीयाहुतिर्होतव्या। अवशेपणमर्धस्य भागस्येति संप्रदायः।

* अत्र क. पुस्तकटिप्पण्यां "पुराणव्रीहयो येषां बीजमुप्तं प्ररोहति। तेभ्यो ये तण्डुला जाता विज्ञेया जीवतण्डुलाः। इति मैत्रावरुणपरिशिष्टे" इति वर्तते। + धनुश्चिह्नान्तर्गतं ख. ङ. पुस्तकयोर्नास्ति।

१ ङ. °त्यर्थः। त°। २ च. स्थण्डिले। ३ ख ङ. °सु नि°। ४ क. ख. ङ. पुनः स्था°।

अस्मिन्होमे पितृतीर्थस्यानियमः। अतिप्रणीत एवायं होम इति वैजयन्तीकृत्। औपासनेऽतिप्रणीते वेति विकल्प इति भाष्यकृत्। औपासनाग्नौ होमपक्षे तु नातिप्रणीताग्नेः परिस्तरणम्। द्वितीयाहुत्यवशेषितसंलग्नसिक्थाभावे लोप इति केचित्। स्थालीपाकात्कानिचित्सिक्थान्युपहृत्य तेन तृ( तैस्तृ )तीयामाहुतिं जुहोतीत्यन्ये। उभयपक्षेऽपि प्रायश्चित्तार्थमनाज्ञातत्रयजपविष्णुस्मरणे कर्तव्ये। ततस्तूष्णीं मेक्षणमनुप्रहरति। ततः प्राचीनावीती 'अपहता असुरा रक्षाꣳसि वेदिषदः' इत्यवहननदेशे दक्षिणापवर्गामाग्नेय्यपवर्गां वा वेदिं सकृत्स्फ्येनैकरेखयोल्लिख्य 'उदीरतामवर० हवेषु' इत्यद्भिरवोक्षति। प्रोक्षणीसंस्कारनिवृत्त्यर्थमद्भिरित्युक्तम्। 'सकृदाच्छिन्नं ब० गैः सह' इति सकृदाच्छिन्नेन बर्हिषा वेदिꣳ[1] स्तृणाति।

ततस्तत्र स्थालीपाकमासादयति। तद्दक्षिणत आञ्जनमभ्यञ्जनं कशिपूपबर्हणमुदकुम्भं च बर्हिष्येव प्रतिष्ठापयति। आञ्जनं कज्जलम्। अभ्यञ्जनं तैलम्। दध्न उपरितनः स्नेहो वा। कशिपु मञ्चः सतूलिकः। उपबर्हणं शिरस्यु(उ)पधानम्। उदकेन पूर्णः कुम्भ उदकुम्भः। जीवत्पितृकस्य नतत्। तस्य पिण्डदानाभावात्। एतावतत्विग्विरमति।

अथ यजमानः प्राचीनावीती सव्यं जान्वाच्य सकृदाच्छिन्ने बर्हिषि अवाचीनपाणिर्दक्षिणापवर्गांस्त्रीनुदकाञ्जलीन्निनयति। 'मार्जयन्तां पितरः सोम्यासः' इति प्रथमम्। 'मार्जयन्तां पितामहाः सोम्यासः' इति द्वितीयम्। 'मार्जयन्तां प्रपितामहाः सोम्यासः' इति तृतीयम्। 'पितरमुकशर्मन्नवनेनिङ्क्ष्व' इति प्रथमम्। 'पितामहामुकशर्मन्नवनेनिङ्क्ष्व' इति द्वितीयम्। 'प्रपितामहामुकशर्मन्नवनेनिङ्क्ष्व' इति तृतीयमित्येवं वा।

ततो निनयनसंस्कृतेषु स्थानेषु क्रमेणावाचीनपाणिस्त्रीन्+पिण्डान्कृतान्ददाति। 'एतत्ते ततामुकशर्मन्ये च त्वामनु' इति पित्रे पिण्डं ददाति। 'एतत्ते पितामहामुकशर्मन्ये च त्वामनु' इति पितामहाय। 'एतत्ते प्रपितामहामुकशर्मन्ये च त्वामनु' इति प्रपितामहाय। तूष्णीं चतुर्थः पिण्डः। स कृताकृतः। एतदर्थं निनयनमपि तूष्णीं कर्तव्यम्। अथ यदि नामधेयानि न जानीयात्तदा 'स्वधा पितृभ्यः पृथिवीषद्भ्यः' इति पित्रे पिण्डं दद्यात्। 'स्वधा पितृभ्योऽन्तरिक्षसद्भ्यः' इति पितामहाय। 'स्वधा पितृभ्यो दिविषद्भ्यः' इति

+ अत्र 'पिण्डान्कृत्वा तान्' इति क. पुस्तकशोधितः पाठः

---

1 च. स च क्रं।

प्रपितामहाय । यदि कर्ता द्विपिता स्यात्तदा 'एतद्वां ततावमुकशर्माणौ ये च युवामनु' इत्येकस्मिन्पिण्डे[1] पितरौ द्वावुच्चारयेत् । एतद्वां पितामहाविति पितामहौ[2] द्वौ । एतद्वां प्रपितामहाविति प्रपितामहौ[3] द्वौ । अत्रापि नामाज्ञान उभयोरभिध्यानं तत्र कुर्वन्स्वधा पितृभ्य इत्यादिभिरेव दानम् । जीवत्पितृकश्चेत्पितामहप्रपितामहाभ्यां[4] दद्यात् । जीवत्पितामहः पितृप्रपितामहाभ्याम्[5] । जीवत्प्रपितामहः पितृपितामहाभ्याम्[6] । अथवा जीवन्तमतिक्रम्य न ददातीतिनिषेधान्मेक्षणप्रहरणान्तमेव कुर्यात् । जीवत्पितुः पिण्डदानप्रभृति उत्तरं लुप्यते । द्विपितुरेकस्मिञ्जीवति पिण्डदानप्रमुखं कर्म लुप्यत इति व्याख्यातारः । उक्तरीत्या पिण्डान्निधाय[7] बर्हिषि स्थापितादुदकुम्भादर्धमुदकं पात्रान्तरे गृहीत्वा तेनैव वा 'आपो देवीः स्वधया वन्दमानास्ता वो गच्छन्तु पितरः स्योनाः । ऊर्जं वहन्तीः सतमक्षितोदकाः क्षीरमुदकं घृतं मधु पयः कीलालं परिस्रुत२ स्वधा स्थ तर्पयत मे पितॄन्' इति त्रीनुदपातान्निनयति । प्रत्येकं त्रिरिति केचित् । सकृत्सकृदित्यन्ये । चतुर्थे पिण्डे तूष्णीमिति केचित् । 'अत्र पितरो यथाभागं मन्दध्वमनुस्वधमावृपायध्वम्' इत्युक्त्वाऽप्रदक्षिणं पराङावर्तते[8] । 'स्वाहोष्मणोऽव्यथिष्यै' इत्यूष्माणमुद्यन्तमनुमन्त्रयते । व्यावृत्त ऊष्मण्यव्यावृत्ते वा 'अमीमदन्त पितरोऽनुस्वधमावृपायीपत' इत्युक्त्वा यथेतं पिण्डसंमुखो भवेत् । ततो यः स्थाल्यां शेषस्तमवघ्रेण भक्षयति । भक्षणबुद्धिः कार्येत्यर्थः । उदकस्पर्शः । बर्हिर्निष्काश्य हस्तेनोपस्पृशति वा । अस्मिन्पक्षे नोदकस्पर्शः । रोगनिवृत्तिकामो योग्यान्नकामो वा चेत्स प्राश्नीयात् । यश्चारुचिदोषेणान्नाद्याय समर्थोऽप्यन्नं नाश्नाति सोऽपि प्राश्नीयात् । अत्राञ्जनाभ्यञ्जने वासश्चानुपिण्डं ददाति । 'आङ्क्ष्व पितरमुकशर्मन्' इति पितृपिण्ड आञ्जनं ददाति । 'आङ्क्ष्व पितामहामुकशर्मन्' इति पितामहपिण्डे । 'आङ्क्ष्व प्रपितामहामुकशर्मन्' इति प्रपितामहपिण्डे । प्रत्येकं त्रिः । सकृन्मन्त्रेण द्विस्तूष्णीम् । एवं प्रत्येकमिति भाष्यकृत् । त्रिर्ग्रहणं चतुर्थपिण्डनिवृत्त्यर्थमित्यन्ये । तदा सकृत्सकृदेव । 'अभ्यङ्क्ष्व पितरमुकशर्मन्' इत्याद्यूहेन पितृपिण्डादिष्वभ्यञ्जनमाञ्जनवद्दद्यात् । द्विपितृकस्य तु—'आञ्जाथां पितरावमुकशर्माणौ' इत्याद्यूहेनाऽऽञ्जनदानम् । 'अभ्यञ्जाथां पितरावमुकशर्माणौ' इत्याद्यूहेनाभ्यञ्जनदानम् । नामाज्ञाने केवलैस्ततपितामहप्रपितामहशब्दैरेव दानम् ।

१ क. ख. ङ. °ण्डे द्वा° । २ क. ख. ङ. °महयोः । ए° । ३ क. ख. ङ. °महयोः । अ° । ४ क. ख. ङ. °महयोर्दद्या° । ५ क. ख. ङ. °महयोः । जी° । ६ क. ख. ङ. °महयोः । अ° । ७ क. ख. ङ. °धायोद° । ८ च. यथा पराङावृत्तस्तथैव वि° ।

ततो दशामूर्णास्तुकां वा छित्त्वा 'एतानि वः पितरो वासाꣳस्यतो नोऽन्यत्पितरो मा यूढ्वम्' इति सकृन्मन्त्रेण पिण्डेषु क्षिपति पूर्वे वयसि। छित्त्वेतिवचनाद्गलितयोर्न ग्रहणम्। पञ्चाशद्वर्षात्पूर्वं पूर्वं वयः। तत ऊर्ध्वमुत्तरं वयः। तत्रोत्तरं चेद्वयस्तदा स्वस्य दक्षिणप्रकोष्ठस्थं हृदयस्थं वा लोम च्छित्त्वा न्यस्यति। न दशा नोर्णास्तुका। आश्वलायनेन स्वं लोमेतिस्वशब्दग्रहणात्स्वकर्तृके पिण्डदान एव लोमदानं नाशक्तिवशेन प्रतिनिधिकर्तृके। तत्र तु दशोर्णास्तुकैव वा देयेति केचिद्व्याख्यातारः।[1]

ततः 'नमो वः पितरो रसाय पि० शुष्माय पित० जीवाय पि० स्वधायै पि० मन्यवे पि० घोराय पि०' इति सानुषङ्गैः षड्भिर्नमस्कारैः प्रत्येकं सकृद्वोपतिष्ठते। सप्तभिरिति वैजयन्तीकृत्। अस्मिन्पक्षे (* 'नमो वः पितरो रसाय० शुष्माय० जीवाय० स्वधायै० मन्यवे० घोराय० ६) नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो मन्यवे नमो वः पितरो घोराय पितरो न० भूयासम्' इत्येवं सप्त मन्त्रा द्रष्टव्याः।[2] यथापाठपठित एक एव मन्त्र इति केचित्।

तत उदकुम्भस्थमर्धमुदकं सर्वं पात्रान्तरे गृहीत्वा तेनैव वा 'ऊर्जस्वतीः स्वधया वन्दमाना० पितॄन्' इति त्रीनुदपातान्निनयति। चतुर्थे पिण्डे तूष्णीं पूर्ववदिति केचित्। 'उत्तिष्ठत पितरः प्रेतपूर्वे यमस्य पन्थामनुयाता पुराणम्। धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधां देवतासु' इति पितॄणामुत्थानं भावयञ्जपति। 'परेत पितरः सो० मदन्ति' इति प्रवाहणं भावयञ्जपति। प्रवाहणं समीचीनैर्यानैः पितॄणां पितृलोकं प्रति नयनम्। 'यन्तु पितरो मनसा जवेन' इति पितृलोकप्रापणं भावयञ्जपति। 'मनोऽन्वाहुवामहे० महि' इति तिसृभिर्मनस्वतीभिः स्वलोकस्थान्पितॄनुपतिष्ठते।[3] 'अक्षन्नमी० हरी। प्रजापते न० रयीणाम्' इति पङ्क्तिप्राजापत्याभ्यां प्रत्येति।[4] पितॄन्प्रापयित्वा(य्य) तस्माद्देशात्प्रत्यागमनं भावयञ्जपतीत्यर्थः। पङ्क्तित्वेन ज्ञानं कर्माङ्गम्। ज्ञानाभाव औपासनाग्नौ यजुष्टो यज्ञभ्रेषप्रायश्चित्तार्थमाज्यं संस्कृत्य भुव इत्याज्याहुतिं कर्मसमाप्त्यन्ते जुहुयात्।[5] ततोऽतिप्रणीताग्नेः पश्चाद्गत्वा 'यदन्तरिक्षं० देनसः प्रमुञ्चतु

* धनुश्चिह्नान्तर्गतं च. पुस्तके नास्ति।

१ च. °स्तुकयोरन्यतरदेव देयमिति। २ च. इत्यनुषङ्गरहितो मन्त्रः सप्तमो द्रष्टव्यः। य°। ३ च. °मवशिष्टमु°। ४ क. ख. ङ. °त्याभ्यामतिप्रणीताग्नेः पश्चादुपस्थानार्थं गच्छति। पङ्क्ति°। ५ क. ख. ङ. °तू। 'य°।

दु० मनेनसम्' इत्यतिप्रणीतमग्निमुपतिष्ठते। भाष्यकृद्रीत्यौपासनाग्नौ होमकरणे तस्यैवोपस्थानम्। 'अभून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा। प्रादाः पितृभ्यः स्वधया ते अक्षन्प्रजानन्नग्ने पुनरप्येतु देवान्' इत्यतिप्रणीतमग्निमौपासनाग्नौ मेलयति।

ततः पात्राण्यद्भिरभ्युक्ष्य द्वे द्वे आसादनस्थानाच्चालयति स्फ्यस्थाल्यौ शूर्पकृष्णाजिने उलूखलमुसले इति।

ततः स्थाल्यां पिण्डान्निक्षिपति। मध्यमं पिण्डं प्रज्ञातं निक्षिपति। चतुर्थपिण्डपक्षे तमपि।

ततः स्थालीतो मध्यमं पिण्डमादाय 'अपां त्वौषधीनाꣳ रसं प्राशयामि भूतकृतं गर्भं धत्स्व' इति मध्यमं पिण्डं पत्न्यै प्रयच्छति। पत्न्यनेकत्वे तं पिण्डं विभज्य[1] प्रतिपत्नि दद्यात्। 'आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्। यथेह पुरुषोऽसत्' इति सा प्राश्नाति। पत्न्यनेकत्वे सर्वा अपि मन्त्रेण प्राश्नीयुः। इदं च नित्यं कामपदाभावात्, इति वैजयन्तीकृत्। पत्न्या रजस्वलया प्रसूतयाऽऽशौचवत्या भक्षणं न कार्यम्। भक्षणाभावाद्दानमपि न। अजातरजस्कायै गतरजस्कायै च पत्न्यै न दद्यादिति रुद्रदत्तः। 'ये समानाः स० ये सजाताः' इति द्वाभ्यां सकृदाच्छिन्नान्यभ्युक्ष्यौपासनाग्नौ[2] प्रक्षिपति[3]। ततः स्थालीस्थान्पिण्डानप्सु प्रक्षिपति ब्राह्मणं वा भोजयति। पत्न्याः पिण्डभक्षणायोग्यतायां तमपि पिण्डमेतयैव रीत्या प्रतिपादयेत्।

तत उपवीती भूत्वा कर्मेश्वरार्पणं कुर्यात्। पिण्डपितृयज्ञ एकोल्मुकस्य प्रणयनप्रभृत्या समाप्तेर्नाशे यद्दैव ज्ञाते तदैव तद्भस्म निष्काश्य गोमयेन तद्देशमुलिप्य रेखालेखनाद्युत्सेचनान्तं कृत्वा पुनस्तेनैव मन्त्रेण योनिनस्तस्मिन्स्थानेऽग्निमतिप्रणीयैकोल्मुकनाशप्रायश्चित्तं करिष्य इति संकल्प्यौपासनाग्नौ संस्कृताज्येन 'ॐ भूर्भुवः सुवः स्वाहा' इत्येकामाहुतिं जुहुयात्। यद्यमावास्यायां पत्नी रजस्वला तदा तां गृहान्तरे संस्थाप्य तस्मिन्नेव दिनेऽपराह्णे पिण्डपितृयज्ञः कार्य इति रुद्रदत्तः। रामाण्डारस्तु पञ्चमदिवसादौ सर्वप्रायश्चित्तपूर्वकमतीतपिण्डपितृयज्ञं कुर्यादित्याह। प्रथमे पिण्डपितृयज्ञे पत्नी यदि रजस्वला तदाऽग्निमदर्शे सप्तहोतारं हुत्वा पिण्डपितृयज्ञ आरब्धव्य इति शनद्र्यीव्याख्यायाम्। अत्र प्रथमपिण्डपितृयज्ञग्रहणाद्द्वितीयादिप्रयोगे पत्न्यां रजस्वलायामपि पिण्डपितृयज्ञो भवत्येवेति गम्यते। सूतकप्रतिबन्धस्तु सर्वत्राप्यविशिष्ट इति द्रष्टव्यम्[4]।

१ च. 'ज्य सर्वाभ्यः पत्नीभ्यो द°। २ च. °न्नानभ्यु°। ३ च. °ति। प्रक्षेपणे मन्त्रः। त°। ४ ङ. च. °म्। य°।

आगामिदर्शे सप्तहोतारं सर्वप्रायश्चित्तं च जुहुयात् । यदि पिण्डपितृयज्ञस्य द्वितीयादिप्रयोगः केनापि निमित्तेन मुख्यकाले न जायेत तदा गौणकाले कर्तव्यः । तत्र निदानसूत्रम्—'सर्वमहः प्रातराहुतेः स्थानं सर्वा रात्रिः सायमाहुतेः + पूर्णः पक्षो दर्शस्य कृष्णः पक्षः पूर्णमासस्य' इति । अत्र केषांचिदुपादानं तुल्यन्यायानां प्राप्त्यर्थम् । तेन चातुर्मास्यपर्वणां पशोराग्रयणस्य पिण्डपितृयज्ञस्य च परकालात्प्राक्प्रायश्चित्तपूर्विका क्रिया भवतीति धूर्तः ।

अन्ये तु यावद्वचनं वाचनिकमिति न्यायेन निदानसूत्रोपात्तानामेवैष कालव्यपदेश इति । तेन पिण्डपितृयज्ञस्य न गौणकालेऽनुष्ठानमित्याहुः ।

आगामिदर्शपर्यन्तं पूर्वपिण्डपितृयज्ञस्य गौणकालस्तत्राप्यननुष्ठान आगामिदर्शे सप्तहोतारं सर्वप्रायश्चित्तं च जुहुयात् । गौणकालेऽनुष्ठानेऽप्येतत्प्रायश्चित्तं पूर्वं कार्यमेव । तच्चेत्थम्—दर्शे पिण्डपितृयज्ञात्पूर्वं देशकालौ संकीर्त्य पिण्डपितृयज्ञलोपप्रायश्चित्तार्थं सप्तहोतृहोमं समस्तव्याहृतिहोमं च करिष्य इति संकल्प्य होमोपयुक्तपात्राण्यासाद्य पवित्रकरणाद्याज्यसंस्कारान्तं कृत्वा स्रुवेण दर्व्या[१] चतुर्गृहीतं गृहीत्वाऽग्नेरपरिस्तृतत्वे तं परिस्तीर्यैकां समिधमभ्याधाय, महाहविरित्यस्य ग्रहसंज्ञकमन्त्रसहितस्य स्वयंभूर्वाचस्पतिर्ब्रह्मा यजुः । पिण्डपितृयज्ञलोपप्रायश्चित्ताज्यहोमे विनियोगः । 'ॐ महाहवि० पृथिव्यै स्वाहा' इति जुहोति । वाचस्पतये ब्रह्मण इदं न मम[२] ।

ततः समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । पिण्डपितृयज्ञलोपप्रायश्चित्ताज्यहोमे विनियोगः । 'ॐ भूर्भुवः सुवः स्वाहा' इत्येकामाहुतिं जुहोति । प्रजापतय इदं न मम । ततोऽनाज्ञातजपादि कुर्यात् । ततो[३]ऽन्तरितपितृयज्ञेन सह प्राप्तपितृयज्ञादि समानम् । (*अस्मिन्पक्षेऽन्तरितपितृयज्ञेन सहैतेन पितृयज्ञेन यक्ष्य इति संकल्पः । केवलं प्राप्तपितृयज्ञाद्येव नान्तरितपितृयज्ञ इत्यपि पक्षान्तरम् । यदि स्थालीपाकः पूर्वमनन्तरं पिण्डपितृयज्ञस्तत्र स्थालीपाकात्पूर्वमेवान्तरितपिण्डपितृयज्ञप्रायश्चित्तं कुर्यात् । पूर्वेद्युरन्वाधानपक्षे द्वितीयदि-

+ अत्र क. पुस्तकटिप्पण्यां 'पूर्वः' इति वर्तते । * धनुश्चिह्नान्तर्गतग्रन्थस्थाने च. पुस्तके 'स्रुचा होमपक्षे दर्विहोमधर्मेण होमः । स्रुच्यादिस्मरणे विकल्पः । एतच्च प्रायश्चित्तं पिण्डपितृयज्ञात्यये सप्तहोतारं जुहुयादिति बौधायनोक्तम् । कात्यायनोक्तं तु—'पिण्डयज्ञात्यये चैव वैश्वदेवात्ययेऽपि च । भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत्' इति वैश्वानरस्थालीपाकात्मकम् । तद्वा कार्यम्' इति ग्रन्थो वर्तते । ङ. पुस्तके तु धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ।

---

१ च. °र्व्या स्रुचि वा च° । २ च. °म । उद्गानेत्येतदन्तं मनसा पा(प)ठनीयम् । त° । ३ ङ. च. ततः प्रा° ।

वसपात्रासादनात्प्राग्वा )। आगामिदर्शस्याप्यतिक्रमणे पूर्वपिण्डपितृयज्ञलोपप्रायश्चित्तमेवाग्रिमे दर्शे कार्यं न तु तदनुष्ठानम् । जीवत्पितृकस्य तु होमान्तमेव कर्म न पिण्डदानाद्युत्तरम् । पिण्डदानाभावान्मक्रदाच्छिन्नाभावः । अतिप्रणीते होमपक्षेऽतिप्रणीतमेलने प्रोषितस्य पिण्डपितृयज्ञयाजमानमन्त्रजपे विकल्पः ।

तथा च मण्डनः—'पितृयज्ञे याजमानं जपन्त्येके न चापरे' इति ।

आहिताग्निकर्तृके पिण्डपितृयज्ञे तु मेक्षणाधानोत्तरमतिप्रणयनम्[1] । दक्षिणाग्नौ श्रपणहोमौ । यदन्तरिक्षमितिमन्त्रेण गार्हपत्योपस्थानम्[2] । अस्मिन्मन्त्रे न गार्हपत्यपदलोप इति विशेषः । अन्यत्समानम् ।

इति संस्काररत्नमालायां पिण्डपितृयज्ञप्रयोगः ॥

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायाः सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालाया उत्तरार्धे षष्ठं प्रकरणम् ॥ ६ ॥

अथ सप्तमं प्रकरणम् ।

अथामावास्यायां कर्तव्यं मासिश्राद्धमासिकश्राद्धात्मकं श्राद्धद्वयमुच्यते । तत्र[3] धर्मसूत्रोक्तं मासिश्राद्धं गृह्योक्तं मासिकम्[4] । अनयोर्भेदस्तु धर्मसूत्रे संज्ञान्तरकरणात्पुनःकालोपादानात्पृथग्धर्मोपादानाच्च । न च पितरो देवतेत्यादीनां धर्माणामाकाङ्क्षितत्वान्मासिकार्थत्वमेवास्त्विति वाच्यम् । गृह्योक्तैरेव धर्मैराकाङ्क्षायाः शान्तत्वेन पितरो देवतेत्यादीनां तदर्थत्वाभावात् । न च 'तत्र द्रव्याणि—तिलमाषा व्रीहियवा आपो मूलं फलानि च' इत्येतस्य द्रव्यविशेषविधेः 'प्रयतः प्रसन्नमनाः सृष्टो भोजयेत्' इति कर्तृधर्मविधेर्ब्राह्मणलक्षणविधेः[5] पूर्वेद्युर्निवेदनादिधर्माणां च गृह्योक्ते मासिकश्राद्धेऽप्यवश्यापेक्षितत्वेन[6] तदर्थत्वसंभवात्पितरो देवता ब्राह्मणस्त्वाहवनीयार्थ इत्यनयोर्मृतपित्रुद्देश्यको विप्रस्वीकाराङ्गको द्रव्यत्यागः श्राद्धमिति श्राद्धलक्षणप्रतिपादनार्थत्वेनोपयोगात्कथं कर्मभेद इति वाच्यम् । तथा सत्युपस्थितिलाघवात्तत्रैव वक्तव्ये दूर[7]-

१ क. ख. ङ. °प्रणयनमे° । २ क. °म् । तत्र मन्त्रे । ३ क. ख. ङ. °त्र गृ° । ४ क. ख. ङ. °सिकं धर्मसूत्रोक्तं मासिश्राद्धम् । ५ ख. °ह्मणोत्काल° । ६ ख. ङ. °द्धेऽव° । ७ क. ख. दूराम्नानस्य ।

विधानस्य निर्हेतुकत्वापत्तेः । न चैतेषां पाक्षिकत्वेन प्राप्तये दूरविधानमिति वाच्यम् । तत्र द्रव्याणीत्यादिविधेरावश्यकत्वेन पाक्षिकत्वासंभवात् । (* न चैवं तत्र द्रव्याणीत्यादिविधेरावश्यकत्वेन पाक्षिकत्वासंभवेऽपि उद्धरिष्यामीत्यादिविधेराकाङ्क्षाभावेनानावश्यकत्वात्पाक्षिकत्वसंभवः । तथा च दूरविधानस्य सार्थक्ये सिद्धे किमर्थं भेदकल्पनमिति वाच्यम् । तथा सत्यपि ) (+ योनिगोत्रमन्त्रासंबन्धान्नार्थापेक्षो भोजयेदित्यस्योभयत्रोपादानवैयर्थ्यापत्तेस्तदवस्थत्वेन सार्थक्यासंभवेन,)एतेन माध्यावर्षं व्याख्यातम्, यथा मासिक इति वचनाभ्यां माध्यावर्षपूर्वेद्युःश्राद्धाष्टकान्वष्टकाव्यतिरिक्तश्राद्धेषु सांवत्सरिकादिषु मासिकश्राद्धातिदेशस्य निरासेनेतरस्य प्रकृतिभूतस्य श्राद्धा[२]न्तरस्य चाभावेन सांवत्सरिकादीनामङ्गहीनत्वपरिहारार्थं च मासिकश्राद्धे भिन्नत्वकल्पनाया आवश्यकत्वात्[३] । न चाऽऽस्तामङ्गहीनता । तादृशस्य कर्मण एवाभावात् । ( * न च सांवत्सरिकश्राद्धादीनामङ्गहीनत्वपरिहारस्य दर्शश्राद्धेनैव संभवे किमर्थं मासिश्राद्धस्याङ्गहीनत्वपरिहारार्थं भेदकल्पनमिति वाच्यम् । स्मृत्युक्तत्वाविशेषाद्विरोधाभावात्, असति बाधके धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वाच्च मासिश्राद्धदर्शश्राद्धयोरभेदस्यैव कल्पनीयतया तेनैवाङ्गहीनत्वपरिहारसंभवात् । असति बाधक इति विशेषणान्न मासिश्राद्धमासिकयोरभेदापत्तिः । तत्र ब्राह्मणलक्षणस्योभयत्रोपादानवैयर्थ्यापत्तेरेव बाधकत्वात् ) । अतोऽवश्यं भेदोऽङ्गीकर्तव्य एवेति सिद्धम् । एवं च गृह्योक्तं मासिकं गृह्योक्तश्राद्धानां प्रकृतिः । धर्मसूत्रोक्तं मासिश्राद्धं धर्मशास्त्रोक्तानां महालयादीनां शास्त्रान्तरोक्तानां सांवत्सरिकादीनामिति व्यवस्थाया वक्तुं शक्यत्वेन न सांवत्सरिकादिष्वङ्गहीनत्वापत्तिः । नन्वस्तु गृह्योक्तमासिकश्राद्धान्मासिश्राद्धं भिन्नं, परं तु तद्विकृतिर्वा प्रकृतिर्वा । न तावदाद्यः । गृह्यानुक्तानां श्राद्धानां परिसंख्यातत्वेन मासिकविकृतित्वाभावात् । नापि दर्शश्राद्धविकृतित्वं तस्यै[४]वानुक्तेः । न द्वितीयः । कृत्स्नाङ्गोपदेशाभावात् । न च यावन्त्यङ्गान्युपदिष्टानि तावद्भिरेवाङ्गैः कृत्स्नाङ्गोपदेशोऽस्त्विति वाच्यम् । होमे देवतामन्त्रेतिकर्तव्यतानामनुक्तत्वेन कृत्स्नाङ्गोपदेशासंभवात् । न चात्र होमाभावः । अतिसृष्ट उद्धरेज्जुहुयाच्चेति होमार्थानुज्ञाविशेषविधानेन तत्सत्त्वप्रदर्शनात् । न चैवमस्तु होमः । तत्र देवतामन्त्रेतिकर्तव्यतास्तु पितरो देवता, अमन्त्रास्त्वमुष्मै[५] स्वाहेति सर्वद-

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. ङ. पुस्तकयोः । + धनुश्चिह्नान्तर्गतं नास्ति ख. पुस्तके । * धनुश्चिह्नान्तर्गतं ख. पुस्तके नास्ति ।

१ ङ. °पत्तेः । ए° । २ क. ख. ङ. °र्थं मा° । ३ ख. ङ. °त्वाच्च । न । ४ च. °शाभावा° । ५ च. °मुष्मै स्वा° ।

र्विहोमाणामेष कल्प इति सूत्रैः क्रमेण सिध्यन्तीति[1] नातः कृत्स्नाङ्गोपदेशासंभव इति वाच्यम्। एतस्य होमविधेर्विलम्बोपस्थितत्वेन दुर्बलत्वात्। न च पिण्डपितृयज्ञस्थहोमविधिरेवात्र, केवलपितृसंबधित्वेन शीघ्रोपस्थितत्वात्। तथा च न कृत्स्नाङ्गोपदेशाभाव इति वाच्यम्। मुख्यपिण्डदानस्यैवानुक्तत्वेन कृत्स्नोपदेशस्य सर्वथाऽभावेन प्रकृतित्वासंभवस्य दुरुद्धरत्वात्। न च पिण्डदानाभाव एवास्त्विति वाच्यम्। आपरपक्षिकसांवत्सरिकादिषु तदभावापत्तेः। न चैतेष्वपि पिण्डदानाभावोऽस्त्विति वाच्यम्। तथा सति युगादिश्राद्धेषु पिण्डदाननिषेधानुपपत्तेः सकलस्मृतिसूत्रनिबन्धशिष्टाचारविरोधापत्तेश्चेति चेन्न। मासिश्राद्धे जुहुयाच्चेत्यत्रत्येन चकारेण पिण्डदानस्यापि सूत्रकृता संगृहीतत्वात्। न चैतस्मिन्पिण्डदाने मासिकश्राद्धीयपिण्डदानविध्यसंभवेन कथमेतदिति वाच्यम्। पिण्डपितृयज्ञतो होमविधिप्राप्तिवत्तत्रत्यपिण्डदानस्यापि प्राप्तौ बाधकाभावात्। आतिदेशिकवचनाभावात्कथमेतयोः प्राप्तिरिति चेत्। हुत्वाऽग्नौ पितृयज्ञवत्। 'दद्याद्भुक्तेषु विप्रेषु त्रीन्पिण्डान्पितृयज्ञवत्' इति स्मृतित इति गृहाण। वस्तुतस्तु सूत्रकृता मासिश्राद्धस्य धर्मसूत्रे प्रणयनात्स्मृत्युक्तस्यैव सकलविधेर्ग्राह्यत्वं प्रदर्शितम्। प्रतिज्ञातं चास्ति पूर्वं सामयाचारिकान्धर्मान्व्याख्यास्याम इति। नातो होमपिण्डदानहीनता। एवं च स्मृतिसिद्धधर्मातिदेशस्य स्मृतित एव सिद्धत्वान्न सांवत्सरिकादिष्वपिण्डकत्वाद्यापत्तिः। सूत्रे पितरो देवता ब्राह्मणस्त्वाहवनीयार्थ इत्येतदुपादानं तु मृतपित्रुद्देश्यको विप्रस्वीकाराङ्गको द्रव्यत्यागः श्राद्धमितिश्राद्धस्वरूपप्रदर्शनार्थम्। स्मृतित एव तिलादिद्रव्याणामपि प्राप्तावत्र वचनं तिलमाषव्रीहियवानामावश्यकत्वार्थम्। आपो मूलं फलानि चेति तु अतिसंकटे तिलादिश्राद्धद्रव्यालाभे फलमूलान्यपि तावत्पितृभ्यो देयानि, एतेषामप्यलाभे श्राद्धदिन उदकमपि तावद्देयं, तेनैव श्राद्धसिद्धिरितिप्रदर्शनार्थम्। उद्धरिष्याम्यग्नौ च करिष्यामीत्यादिधर्माणामत्र वचनमशक्तौ पिण्डदानरहित एतावाननुकल्पस्तत्रैत एव धर्मा आवश्यका इति बोधयितुम्। ननु—अतिसृष्ट उद्धरेज्जुहुयाच्चेत्यादिकमेवास्तु किमर्थं मन्त्रोपादानमिति चेन्न। स्मृतिष्वामन्त्रणानुज्ञामन्त्रयोरनेकविधत्वदर्शनेन सर्वेषामपि प्राप्तौ तत्रैतावेव विवक्षितावितिप्रदर्शनार्थं तस्यात्रोपादानात्। एवमर्घ्यादीनामपि विवक्षितार्थप्रदर्शनार्थमेवोपादानं द्रष्टव्यम्। (* पितरो देवतेत्यादीनामुपादानं तु अशक्तौ पिण्डदानरहित एतावाननुकल्प इति बोधयितुम्।) होमस्याप्यशक्तौ ब्राह्मणभोजनमात्रं कर्तव्यम्। एतज्ज्ञापयितुमेव होमविशेषविधेः

* धनुश्चिह्नान्तर्गतं च. पुस्तके नास्ति।

१ ख. ङ. °ति वा°। २ च. °नविधेरपि।

पूर्वं सृष्टो भोजयेदितिभोजनविध्युपादानमिति द्रष्टव्यम् । तत्र दर्शश्राद्धमेव मासिश्राद्धं स्मृत्युक्तत्वाविशेषाद्विरोधाभावाच्च । संस्थात्वं तु गृह्योक्तस्य मासिकस्यैव । अष्टकादिसंस्थामांनिध्यात्प्रथमोपस्थितत्वादितरसंस्थावद्गृह्यान्तर्गतत्वलाभाच्च । न च बौधायनेनामाश्राद्धस्याङ्गिरसा पार्वणश्राद्धस्य तथात्वोक्तेः कथमेतदिति वाच्यम् । मासिकश्राद्धस्याप्यमायां पर्वणि चानुष्ठेयत्वेनामाश्राद्धत्वपार्वणश्राद्धत्वधर्मद्वयाक्रान्तत्वेनात्र ग्रहणे बाधकाभावात् । न च दर्शश्राद्धापरपर्यायं धर्मसूत्रोक्तं मासिश्राद्धमेव संस्थात्वेन ग्राह्यं दर्शश्राद्धस्यैव सर्वस्मृतिषु तथात्वोक्तेरिति वाच्यम् । तस्य गृह्यान्तर्गतत्वाभावेन संस्थात्वाभावस्यैव कल्पनात् । न चैवं वैश्वदेवस्य संस्थात्वं न स्यात्, गृह्यान्तर्गतत्वाभावादिति वाच्यम् । इष्टापत्तेः । न चैवं संस्थासु षट्त्वापत्तिः, इष्टापत्तौ गौतमाद्युक्तसप्तसंख्याव्याघात इति वाच्यम् । शूलगवस्य गृह्यान्तर्गतत्वेन तेनैव सप्तसंख्यापूरणसंभवेन सप्तसंख्याव्याघातस्य सुदूरपराहतत्वात् । न च शूलगवस्य संस्थात्वे किं प्रमाणमिति वाच्यम् । गौतमादिस्मृतीनामेव तत्र प्रमाणत्वात् । न च सूत्रकृता शिवो हैव भवतीति काम्यत्वप्रतिपादनात्कथं काम्यस्य शूलगवस्य संस्थात्वमिति वाच्यम् । बौधायनगौतमाद्युक्तसंस्थात्वबलेन नित्यत्वस्यापि कल्पनात्कामपदाभावात् । अकर्मणि दोषो येषां लोके कर्मण्युपालम्भस्तानि नियतानीति सूत्रेणापि नित्यत्वसिद्धेर्वक्तुं शक्यत्वाच्च । येषामकरणे दोषः । लोकशब्देन स्मृतिमूलसूत्रान्तरादिरूपं शास्त्रं गृह्यते । तादृशे शास्त्रे येषां कर्मणामकरण उपालम्भो निन्दा तानि नियतानीति ह्येतस्य सूत्रस्यार्थः । अस्ति च संस्थानामकरणे शास्त्रान्तरे दोषश्रवणं 'यो ह्येकविंशतिसंस्था न करोति स पापीयान्भवति' इति । पापीयस्त्वादेव तस्य लोके निन्दाऽपि । तस्य निन्दितस्य त्वधः पतनम् । आह च याज्ञवल्क्यः—

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" इति ॥

ननु कैश्चिदाचार्यैर्वैश्वदेवस्यापि संस्थात्वेन परिगणनात्कैश्चित्तु शूलगवस्यैव । तथा च संस्थात्वस्य शूलगववैश्वदेवयोरुभयोरपि दृष्टत्वादुभयोरपि संस्थात्वमस्तु इति चेन्न । तथा सति संस्थासु अष्टत्वापत्तेः । 'वैश्वदेवमेके चैत्रीस्थाने समामनन्ति' इति सूत्रस्वरसतोऽन्यतरस्यैव संस्थात्वप्रतीतेश्च । नन्वस्तु वैश्वदेवस्य शूलगवस्य वा संस्थात्वं गौतमीयबौधायनीयवचनानुरोधेन मासिकश्राद्धमासिश्राद्धयोस्तूभयोरप्यमावास्यानुष्ठेयत्वरूपमनुगतं धर्ममादाय संस्थात्वमस्तु

१ ङ. च. °तिसूत्रम्° । २ क. ख. ङ. °योरुभ° ।

पर्वानुष्ठेयत्वरूपमनुगतं धर्ममादाय दर्शपूर्णमासयोरिवेति चेन्न। दर्शपूर्णमासयोः पर्वानुष्ठेयत्वरूपानुगतधर्मस्यातिप्रसक्तत्वेन तमादाय द्वयोरेकसंस्थात्वनिर्वाहासंभवेनैकापूर्वजनकत्वरूपमनुगतं धर्ममादायैव द्वयोरेकसंस्थात्वस्य निर्वाह्यत्वेन प्रकृते तादृशानुगतधर्मासंभवेन मासिकश्राद्धमासिश्राद्धयोरुभयोरेकसंस्थात्वस्य वक्तुमशक्यत्वात्। न हि द्वयोः श्राद्धयोरेकापूर्वजनकत्वे प्रमाणमस्ति। येन द्वयोरपि संस्थात्वं वक्तव्यम्। एवं च मासिकश्राद्धस्यैव पूर्वोक्तहेतुभिः संस्थात्वं न दर्शापरपर्यायमासिश्राद्धस्येति सिद्धम्। ननु नित्यानां संध्यावन्दनादिकर्मणां संस्थानां च को विशेषः प्रत्यवायनिवर्तकत्वस्योभयत्रापि तुल्यत्वादिति चेत्सत्यम्। संस्थाजन्यफलेषु वैजात्यस्वीकारेण विजातीयफलजनकत्वरूपविशेषस्य संस्थास्वेव सत्त्वेन तमादाय संध्यावन्दनादिनित्यकर्मतो[२] विशेषसिद्धेः। अथवा संस्थाशब्दो[३] रूढो योगरूढो वा पङ्कजादिपदवत्। सम्यक्स्था स्थितिः स्वर्गे लोके येन कर्मणा सा संस्थेति योगार्थः। संध्यावन्दनादिष्वतिप्रसङ्गपरिहाराय रूढिरपीति द्रष्टव्यम्। दर्शश्राद्धापरपर्यायमासिश्राद्धस्य नित्यत्वं तु स्मृतिष्वकरणे प्रत्यवायश्रवणात् 'मासि मासि कार्यम्' इत्यापस्तम्बसूत्रे वीप्साश्रवणाच्च। अत एव प्रतिदर्शमनुष्ठानम्। मासिकश्राद्धस्य नित्यत्वं तु, 'अकर्मणि दोषो येषां लोके कर्मण्युपालम्भस्तानि नियतानि' इति सूत्रात्। मातृदत्तोऽप्येतस्मादेव सूत्रान्मासिकश्राद्धस्य नित्यत्वं साधितवान्। तत्र मासिकश्राद्धस्य 'सकृत्करणमिच्छन्ति पाकयज्ञेषु केचन' इति वचनात्प्रतिदर्शं यस्मिन्कस्मिंश्चिद्दर्शे वा क्रिया। पाकयज्ञेषु पाकयज्ञसंस्थासु।

उभयत्र पार्वणत्वं तु पर्वणि भवमिति योगात् 'अमायां क्रियते यच्च तत्पार्वणमुदाहृतम्' इति वचनाच्च। 'त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयो विदुः' इतिवचनसिद्धपार्वणत्वं तु माध्यावर्षादिश्राद्धसाधारणम्। तत्राऽऽदौ पितृयज्ञोत्तरं दर्शश्राद्धं कृत्वा मासिकं कार्यम्।

"पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान्।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्"

इति[४]मनुवचनात्पिण्डपितृयज्ञमासिश्राद्धापरपर्यायदर्शश्राद्धयोरव्यवधाने सिद्धेऽर्थान्मासिकश्राद्धस्य दर्शानन्तर्यम्। पिण्डानां पिण्डपितृयज्ञार्थानामनु पश्चादाह्रियते क्रियत इति पिण्डान्वाहार्यकं दर्शश्राद्धम्। (*द्वयोस्तन्त्रं वा। अत्राप-

* धनुश्चिह्नान्तर्गतं ख. ङ. पुस्तकयोर्नास्ति।

१ च. भेदः। २ क. च. 'तो भेदसि'। ३ च. 'ब्दो योगरूढः प'। ४ क. 'तिव'।

राह्णो द्वेधाविभक्तस्याह्नो द्वितीयभाग एव ।) मासिश्राद्धसूत्रं त्वित्थम् । 'मासिश्राद्धमपरपक्षस्योत्तमेऽहनि' इति । कर्तव्यमिति शेषः । उत्तमेऽहन्यमावास्यायाम् । अपराह्णोऽत्र प्रशस्तः कालः । तदुक्तं धर्मसूत्रे—'अपराह्णः श्रेयान्' इति । मासिश्राद्धेऽपराह्णः श्रेयान्प्रशस्त इत्यर्थः । मासिकश्राद्धसूत्रं गृह्ये—'अमावास्यायामपराह्णे मासिकम्' इति । मासि भवं श्राद्धं मासिकं तदमावास्यायां तिथावपराह्णे कर्तव्यमित्यर्थः । सर्वेषु कृष्णपक्षस्यामावास्याव्यतिरिक्तेष्वयुग्मदिवसेषु यस्मिन्कस्मिंश्चिद्दिवसेऽपि[1] वा पाक्षिकी श्राद्धकर्तव्यतोक्ता गृह्ये—'अपरपक्षस्य वाऽयुक्ष्वहःसु' इति । अपरपक्षस्यायुक्ष्वहःसु वेत्यन्वयः । अत्राप्यपराह्ण[2] इत्यनुवर्तते । वाशब्दात्पाक्षिकत्वम् । एतदेव कृष्णपक्षश्राद्धमित्युच्यते । धर्मसूत्रे पुनः कृष्णपक्षश्राद्ध[3]प्रदर्शनं फलं प्रदर्शयितुमनुवादः । प्रथमेऽहनि स्त्रीप्रायैश्चित्तमित्यादिकं तु तिथिविशेषेण फलविशेषप्रदर्शनार्थम् । मासिकश्राद्धविधिस्तु—पितृभ्योऽन्नं[4] संस्कृत्येत्यारभ्य सुवीरा ई[5]त्यन्तेन सूत्रेणोक्तः । उत्तरत्र विनियोगादेव पित्रर्थतासिद्धौ पितृभ्योऽन्नं संस्कृत्येत्यत्र पितृग्रहणं पित्रादित्रय एव संप्रदानपदार्था अत्रेति न, किं तु अन्येऽपि स्मृत्युक्ता अङ्गभूता[6]ः प्रधानीभूताश्च संप्रदानपदार्था[7] अत्र सन्तीतिज्ञापनार्थम्[8]। तेन शास्त्रान्तरप्रोक्तानामङ्गभूतानां दे[9]वानां प्रधानीभूतानां मातामहादीनां चात्र प्राप्तिः सिद्धा भव[10]ति । एवमष्टकादिषु । अथवा पितृग्रहणस्य प्रयोजनं मातामहादीनां प्रापणमात्रम् । देवानां प्राप्तिस्तु यथोपदेशं कुरुत इ[12]ति वचनेन वैश्वदेवव्यतिरिक्तस्थले शास्त्रान्तरोक्तोपसंहार[11]स्य ज्ञापितत्वाद्भवति । अत्र करणेऽष्टकादिष्वपि करणं नान्यथेति द्रष्टव्यम् । दक्षिणाग्रानितिवचनं प्रागग्रत्वोदगग्रत्वयोर्बाधनार्थम् । ब्राह्मणानामन्त्रयते शुचीनागन्तुकसहजदोषरहितान्नियमवतश्च मन्त्रवतो विद्यावतो नियमवत इत्येके । समङ्गान्संपूर्णाङ्गान् । अयुजस्त्रिप्रभृत्ययुग्मसंख्याकान् । इदं च पितृविषयम् । देवविषये तु समसंख्यैव ब्राह्मणानां स्मृतितो द्रष्टव्या । योनिगोत्रमन्त्रा[13]संबन्धान्, योनिगोत्रमन्त्रैरात्मनोऽसंबन्धान् । ( + योनिसंबन्धा मातुलमातामहादयः । गोत्रसंबन्धाः

+ धनुश्चिह्नान्तर्गतस्थाने च. पुस्तके—" योनिगोत्रमन्त्रासंबद्धानिति पाठः सुपाठः । संबद्धाः संबन्धविशिष्टाः । योनिसंबन्धो मातुलमातामहादीनाम् । गोत्रसंबन्धो गोत्राणाम् । मन्त्रसंबन्ध ऋत्विक्शिष्याचार्यादीनाम् । एतद्व्यतिरिक्ता ये भवन्ति तानामन्त्रयत इत्यर्थः " इति वर्तते ।

१ ख. ङ. °श्चिदयुग्मदिवसे वा । २ च. °त्राप° । ३ ख. °द्धविधानं सर्वतिथिषु श्राद्धविधानाय । प्रथ° । ङ. °द्धविधानं महालयश्राद्धविधानाय । प्रथ° । ४ क. ख. ङ. °यमि° । ५ ख. ङ. °षविधायकम् । ६ च. इतील° । ७ क. च. °रवि° । ८ च. °ताः सं° । ९ च. देवतानामत्र । १० च. °ति । मातामहादीनां प्राप्तिस्तु वैश्वदेवप्रकरणे य° । ११ च. °रस्यापि पक्षे कर्तव्यत्वस्य ज्ञा° । १२ ख. ङ. °ति । द° । १३ क. ख. ङ. °मन्त्रै° ।

सगोत्राः । मन्त्रसंबन्धा ऋत्विक्शिष्याचार्यादयः । एतद्व्यतिरिक्तान् । ) यदि योन्यादिसंबन्धरहिता वृत्तादिगुणहीना एव लभ्यन्ते तदा वृत्तादिभिर्युक्तः सोदर्योऽपि भोजयितव्य इत्यादि धर्मसूत्रतो ज्ञेयम् । अत्र सोदर्यापिशब्दाभ्यां गुणवन्तो योन्यादिसंबन्धिनोऽपि भोजयितव्या इति सूचितम् ।

तथा च मनुः—" एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥
मातामहं मातुलं च स्वस्त्रीयं श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यांश्च भोजयेत् " इति ॥

नार्थापेक्षो भोजयेत् । अर्थापेक्षः प्रयोजनापेक्षः प्रयोजनमपेक्षमाणः । अस्मिन्भोजित इदं मम कार्यं भविष्यतीति बुद्ध्या न भोजयेदित्यर्थः । अग्निमुपसमाधायेति । अग्निरौपासनाग्निः । सर्वाधानिनो विधुरादेर्लौकिकाग्निरेव । लौकिकाग्नौ होमेऽयाश्चेत्यादिविधिनोत्पाद्य तमग्निं होमार्थमुपसमादधाति । श्राद्धपाकस्तु लौकिकाग्नावेव न तु गृह्याग्नौ । नचाग्नौकरणस्यौपासनाग्निसाध्यत्वात्तदर्थस्य पाकस्यापि यः प्रधानस्य कालः सोऽङ्गानां स देशः स कर्ता सोऽग्निरिति परिभाषया तत्रैव क्रियाऽऽस्तामिति वाच्यम् । सूत्रकृताऽन्नसंस्कारब्राह्मणनिमन्त्रणोत्तरमग्न्युपसमाधानस्योक्त्या परिभाषाबाधस्य ज्ञापनात्[1] । औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रं हस्तेनैता आहुतीर्जुहोतीति वैश्वदेवप्रकरणस्थसूत्र औपासनेन साकं पचनस्य विकल्पकरणेनौपासने पचनत्वमेव नास्तीति ज्ञापितत्वेन परिभाषायाः प्रवृत्तेरेवाभावाच्च । अतो लौकिकाग्नावेव पाको न गृह्याग्नाविति । एवं मासिश्राद्धादिष्वपि ज्ञेयम् । दक्षिणाप्रागग्रैर्दर्भैः परिस्तीर्येति । ततस्तमग्निं परिस्तृणाति पुरस्ताद्दक्षिणाग्रैर्दक्षिणतः प्रागग्रैः पश्चाद्दक्षिणाग्रैरुत्तरतः प्रागग्रैरित्यर्थः । दक्षिणाप्रागाग्रैयी तदभिमुखाग्रैरित्येवं वा । एकपवित्रेणाऽऽज्यं संस्कृत्येति वाच्य एकपवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं संस्कृत्येतिगुरुनिर्देशः प्रदर्शनार्थः । तेन प्रणीतादिपवित्रकार्यमपि तेनैव स्यादिति । प्रसव्यं परिषिच्येति । देव सवितरित्यनेन यः परिषेकस्तं प्रसव्यं परिषिच्येत्यर्थः । एतामेव दिशमभ्यपः प्रसिञ्चति । एतामेव दक्षिणामेव दिशं प्रत्यपः प्रसिञ्चति, यथा दूरं गच्छन्ति तथाऽञ्जलिनाऽपः सिञ्चति आपो देवीरित्यनेन । एतच्छब्दस्य सर्वनामत्वेन प्रसिद्धिवाचित्वात्पितृकर्मणि दक्षिणावृद्धि पितॄणाम्, एषा वै पितॄणां दिगित्यादिषु श्रुतिषु तस्या एव प्रसिद्धत्वादेतच्छ-

१ ख. ङ. °नो दक्षिणाग्निः । विधुरादिः पूर्वोक्तविधिं । २ ख. ङ. °त् । यद्यौपासनाग्नौ पाक इष्टः स्यात्तदाऽग्निमुपसमाधायान्नं संस्कृत्येत्येव ब्रूयात् । अ° ।

ब्देन ग्रहणम् । एवकारकरणमावाहनमपि तामेव दिशमभिमुखीकृत्य कर्तव्यमितिज्ञापनार्थम् । अथ नामधेयैर्जुहोतीत्यत्राथशब्दः पूर्वेण संबन्धार्थः । तेन पितृपितामहप्रपितामहनामधेयैर्होमः सिध्यति । जुहोतिवचनं द्विपितृकस्यापि होमाभ्यावृत्तिनिवृत्त्यर्थम् । यन्मे पितामही यन्मे प्रपितामहीत्यस्योहप्रदर्शनार्थत्वात्पितृशब्देऽपि पितामहप्रपितामहशब्दाभ्यामूहः कार्यो यथायथम्, पितामहो वृद्धां प्रपितामहो वृद्धामिति । वहान्नमिति मन्त्रं[१] संनमतीत्येतस्य प्रदर्शनार्थत्वादन्नस्य कुल्या इत्यत्राप्यूहः । अत्रैके वर्णयन्ति—पूर्वानुक्रान्ताः षोडशाऽऽज्याहुतीरन्नस्य जुहोतीति । अपरे तु—आनन्तर्याद्वहाऽऽज्यमित्येतासामेव तिसृणामिति । उदीच्यानामपि पाठः । एवं ते पठन्ति—अथाऽऽज्यस्य जुहोति वहाऽऽज्यं जातवेद इति । तत्राथशब्द आज्यस्य ग्रहणं च, एवमन्नस्य जुहोतीत्यत्र तासामेव संप्रत्ययार्थम् । अथ सौविष्टकृतीं जुहोतीत्यत्राथशब्दः पूर्वेण संनिहितेनान्नहोमेन संबन्धार्थः । तेनान्नेनैव स्विष्टकृद्धोमः । एवमन्नस्येत्यनुवर्तनादन्नेन स्विष्टकृतमिति व्याख्यानम् । अथशब्दो यत्र यत्राथशब्दस्तत्र प्रधानार्थद्रव्येणैव स्विष्टकृद्धोम इतिज्ञापनार्थः । सर्वदर्विहोमाणामेष कल्प इतिसूत्रव्याख्याद्वयमध्ये पूर्वव्याख्यापक्षे वारुणीहोमादिप्राप्तिः साधिताऽस्ति तन्निवृत्त्यर्थोऽप्यथशब्दो द्रष्टव्यः । द्वितीयव्याख्याने त्वप्राप्तिरेव

ततो यज्ञोपवीती परिषेकादिकमशेषं समापयेत् । स्विष्टकृद्धोमस्य प्रदर्शनार्थत्वात् ।

अथान्नमभिमृशति—पृथिवी ते पात्रं[?]त्वायेति । अथ प्राचीनावीती ब्राह्मणभोजनार्थमन्नमभिमृशति पृथिवी त इत्येतैः । अथशब्दो होमार्थादन्नादस्यान्नस्यान्यत्वख्यापनार्थः । प्राणे निविश्येत्यनेनानखेनाङ्गुष्ठेनान्नमुपस्पर्शयति प्रतिपुरुषमावर्त्य मन्त्रम् । भुञ्जानान्ब्राह्मणान्ब्रह्मणि म इत्यनेन समीक्षते । सकृदेव मन्त्रः । विभवादत्रान्नं धनं वा दक्षिणा । यथाश्रद्धमन्नं धनं च ददातीति पूर्वेद्युःश्राद्धेऽन्नधनदानयोरुभयोर्दक्षिणात्वोक्त्या प्रकृतावन्यतरस्यैतदतिरिक्तस्य वासआदेर्वा दक्षिणात्वस्यार्थादवगमात् । तेन दक्षिणादानमपि सूत्रविहितमेवात्र । ततो गच्छतोऽनुप्रव्रज्य शेषमनुज्ञाप्यानुगतस्तान्विप्रान्प्रदक्षिणीकृत्य प्रत्येत्योदकुम्भं समूलदर्भमुष्टिं चकारादाञ्जनादिसामग्रीं गृहीत्वाऽग्रेर्दक्षिणपूर्वभवान्तरदेशं गत्वा तत्रोपविश्य प्राचीनावीती दक्षिणाग्रान्दर्भान्संस्तीर्य तेषु दर्भेष्ववाचीनपाणिरवाचीनीस्तिर्यगावर्तितः पाणिर्येन निनयनवेलायां सोऽवाचीनपाणिः । निनयनं दक्षिणहस्तेन पित्र्येण तीर्थेन कार्यमित्यर्थः । अवा-

---

१ च. कुल्या ।

चीनौ तिर्यगावर्तितौ पाणी कृताञ्जली येनेत्येतादृशे विग्रहेऽञ्जलिना निनयनं पूर्ववदेव । अवाचीनो दक्षिणः पाणिर्यस्याञ्जलेरित्येवं विग्रहेऽञ्जलिभूतस्य दक्षिणस्य पाणेरवाचीनताऽधरता कार्येति स एवार्थः । एवंभूतेन दक्षिणेन पाणिनाऽञ्जलिना वा दक्षिणापवर्गांस्त्रीनुदकपूर्णानञ्जलीन्मार्जयन्तामित्येतैस्त्रिभिर्मन्त्रैस्त्रिषु देशेषु निनयति रेचयति प्रतिमन्त्रमसाववनेनिङ्क्ष्वेत्येतैस्त्रिभिर्वा । असावित्यत्र तत्तन्नामग्रहणं संबुद्ध्यन्तम् । एवं मातामहपार्वणे तेष्ववा० ददाति । तेषु निनयनस्थानेष्ववाचीनपाणिरध आवृत्तो दक्षिणपाणिर्यस्याङ्गुष्ठभागस्य दक्षिणं पार्श्वमधो यस्य पाणेः सोऽवाचीनपाणिः । एवंभूतो दक्षिणापवर्गान्पिण्डान्कृतान्ददाति । कथम् । एतत्ते ततासाविति पित्रे पिण्डं ददाति । एतत्ते पितामहासाविति पितामहाय । एतत्ते प्रपितामहासाविति प्रपितामहाय । असावित्यत्र संबुद्ध्यन्तानि पित्रादिनामानि ग्राह्याणि, नात्र गोत्रवसुरूपादिशब्दोच्चारणम् । सूत्रकारेणाविधानात् । केचिदत्रापि कुर्वन्ति । सर्वेषु ये च त्वामित्यनुषङ्गः । तत्र तेष्ववाचीनपाणिर्दक्षिणापवर्गमेतत्ते ततासाविति पित्रे पिण्डं ददातीत्येवं लघुना सिद्धे पिण्डान्ददातीति पृथग्वचनं चतुर्थस्यापि निनयनस्थान एव दानार्थम् । इतरथा त्रीनितिवचनात्तत्र निनयनं न स्यात् । प्रपितामहात्परांस्त्रीनुद्दिश्य तूष्णीं चतुर्थं पिण्डं दद्यात् । स कृताकृतो वैकल्पिक इत्यर्थः । अप्रदानपक्षे बर्हिषि लेपनिमार्जनं कार्यम् । तूष्णींग्रहणं मन्त्रनिवृत्त्यर्थम् । अवचनादेव तत्सिद्धिरिति चेन्न । निनयनादीनामविशेषोपदेशान्मन्त्रप्रसङ्गात् । प्रधानस्य तूष्णींवचनात्तद्वशवर्तित्वात्तेषामपि तूष्णीकत्वम् ।

अथ यदि नामधेयानि न० सुवीरा इति । अथ यदि पितॄणां नामधेयानि न विद्यान्न जानीयात्तदा स्वधा पितृभ्यः पृथिवीषद्भ्य इत्येतैः पित्रादिभ्यः पिण्डान्दद्यात् । नामधेयानीत्येकशेषनिर्देशः । तेनैकस्य द्वयोस्त्रयाणां वा नाम्नो विस्मरण एतैरेव दानम् । अथशब्दः पृथगधिकारार्थः पूर्वेषां मन्त्राणां व्यतिषज्य क्रिया मा भूदित्येतदर्थम् । कुतः । अस्मिन्पक्षे मार्जयन्तामित्येव निनयनमन्त्रा भवेयुरर्थात् । अत्राञ्जनाभ्यञ्जने वासश्चानुपिण्डं ददाति । अत्रेतिवचनं कालनियमार्थम् । कालान्तरे पिण्डपितृयज्ञे दर्शनात् । तेन ज्ञायते तत्रोक्तः पिण्डदानकालोपायो द्विपितृकादीनामिहापि भवतीति । अञ्जनाभ्यञ्जनयोरेव समासवचनं क्रमनियमार्थम् । तयोरनुपिण्डमितिवचनाच्चतुर्थेऽस्याप्राप्तिराशङ्क्येत तन्निवृत्त्यर्थं ददातीत्युच्यते । आङ्क्ष्वामावाङ्क्ष्वासाविति त्रिराञ्जनमनुपिण्डं ददाति । तूष्णीं चतुर्थे । त्रिर्ग्रहणं प्रति-

१ ङ. 'वृत्तपाणिर्दक्षिणा' । २ च. 'ण्डान्कृत्वा ददा' । ३ क. ङ. च. 'थिविष' । ४ क. ख. च. चतुर्थम् । त्रि' ।

पिण्डं त्रित्वार्थम् । अभ्यङ्क्ष्वासावभ्यङ्क्ष्वासाविति त्रिस्त्रिरभ्यञ्जनमनुपिण्डं दद्यात् । तूष्णीं चतुर्थे । तैलमभ्यञ्जनं मस्तु वा । दध्न उपरितनः स्नेहो मस्तु । अविदिते नामधेयानि लुप्यन्ते, ततादिभिः शब्दैर्वा ब्रह्मविष्णुरुद्रशब्दैर्वोपलक्षयेत् । एतानीत्यात्मनो वाससो दशामूर्णास्तुकां वा कम्बलस्य च्छित्त्वा छित्त्वाऽनुपिण्डं क्षिपति । तूष्णीं चतुर्थे । पञ्चाशद्वर्षपर्यन्तं पूर्वं वयः । अत ऊर्ध्वमुत्तरं वयस्तत्र स्वं लोमोरस्थं प्रकोष्ठस्थं वा छित्त्वा छित्त्वाऽनुपिण्डं तेनैव मन्त्रेण क्षिपति । न दशा नोर्णास्तुका । तूष्णीं चतुर्थे । छित्त्वेतिवचनं पतितस्य ग्रहणं मा भूदित्येतदर्थम् । अन्यतरवचनादेव सिद्धे पूर्वोत्तरग्रहणं वयस्त्रित्वं केषांचिदिहोक्तं तन्मा भूदित्येतदर्थम् । एतदन्तं मातामहपिण्डेष्वपि ।

अथ पात्रं संक्षाल्य तिष्ठते । अथ यत्र पिण्डार्थमोदन उद्धृतस्तत्पात्रं संक्षाल्योदकेन सम्यक्प्रक्षाल्य पुत्रान्पौत्रानित्यनेन तेनोदकेन वर्गद्वयस्य पिण्डांश्चतुर्थपिण्डदानपक्षे तावप्युपगम्य प्रसव्यं परिषिच्य तत्पात्रं न्युब्जं कृत्वा पाणी व्यत्यस्य पाण्योरङ्गुलीनां व्यतिषङ्गं कृत्वा दक्षिणमुत्तरमुत्तरं च दक्षिणं बहिर्भूतपृष्ठौ पाणी कृत्वेत्येके । एवंभूतेन नमस्काराञ्जलिना नमो वः पितर इत्येतैर्नमस्कारैः सर्वान्पितॄनुपतिष्ठते । षडेते नमस्काराश्चतुर्थ्यन्तास्तेषु सर्वेषु पितरो नमो व इत्यादेरनुषङ्गः प्राक्प्राजापत्यायाः । यथापाठमेवेति केचित् । तत उदकान्तं सृत्वा इति । तत उदकसमीपं गत्वा, एष ते तत, एष ते पितामह, एष ते प्रपितामहेत्येतैः प्रतिमन्त्रं त्रीनुदकाञ्जलीन्दक्षिणापवर्गान्निनयति पित्रादिभ्यः । एवं मातामहादिभ्य ऊहेन । तत इति वचनं तूष्णीं चतुर्थमित्याशङ्कानिवृत्त्यर्थम् । प्रत्येत्योदकान्तात्कस्मिंश्चित्पात्र उदकमासिच्य प्रतिष्ठितं स्थालीनिष्कासं तस्मिन्निक्षिप्य परायात, इत्यनेनोपप्रवर्तयति । पिण्डानां समीपे सर्वान्पितॄनुद्दिश्य पिण्डानां समीपे दक्षिणापवर्गं निनयतीत्यर्थः । प्रत्येत्येतिवचनमुदकाञ्जलिदेश एवोपप्रवर्तनं मा भूदित्येतदर्थम् । एतदन्तं कृत्वा सर्वतः शेषं समवदायाश्नीयादित्येतत्कर्तव्यम् । अत्र पुनः कृत्स्नपिण्डदानविधिप्रदर्शनं पितृयज्ञोक्तानामुदपातनिनयनपराङ्गावर्तनोष्मानुमन्त्रणोपपर्यावर्तनशेषावघ्रभक्षणकाम्यशेषाशनपुनरुदपातनिनयनोत्थापनप्रवाहणसंसाधनमनस्वत्युपस्थानप्रत्यागमनगार्हपत्योपस्थानोल्मुकप्रत्यसनपात्रप्रत्याहरणपिण्डप्रत्यवधानप्राशनार्थपत्नीसंप्रदानकपिण्डप्रदानपत्नीकर्तृकप्राशन-

---

१ क. °तुर्थम् । तै° । २ ङ. °न सर्ववर्गद्वयानां पिण्डानुप° । ३ ख. च. °यपि° । ४ क. ख. च. °तितिष्ठंस्था° । ५ ङ. °पे वर्गद्वयपितॄनुद्दिश्य द° ।

सकृदाच्छिन्नाभ्युक्षणाभ्याधानानां परिसंख्यार्थम्। अत्र पितृणां स्वलोकगमनं तु परायातेत्यनेन भवति। अपः पिण्डानभ्यवहरति ब्राह्मणं वा भोजयतीति। पिण्डप्रतिपत्तिस्तु अत्रापि भवत्याकाङ्क्षितत्वात्।

## अथ भाष्यकृदुक्तः संग्रहः प्रदर्श्यते।

अत्र कालनियमनिमित्ता द्रव्यनिमित्ताश्च फलविशेषास्तिथयो विधयश्च धर्मेषूक्ताः। यथा प्रथमेऽहनि स्त्रीप्राय(?) मित्यादि तिलमाषव्रीहियवा उदीच्यवृत्तिस्त्वासनगतानामित्यादीनि तानि प्रेक्ष्याणि। तृतीयमामन्त्रणं, त्रयाणामेकैकस्यैकैकस्त्रयस्त्रयो वा पुरुषा उक्ताः। ते च त्रिप्रभृतयः पङ्क्त्योऽयुजो ग्राह्याः। वृद्धौ फलभूयस्त्वम्। सर्वेषामेकः प्रतिषिद्धः। दुर्भिक्षेऽशक्तस्य वा सर्वेषामेकोऽपि। वैश्वदेवपूर्वकं च पितृणां भोजनं, द्वौ दैवे त्रीन्पित्र्ये, एकैकमुभयत्र वेति विरोधाभावादिच्छातस्तस्यापि संग्रहः। तथा सति पूर्वं वैश्वदेवानामन्त्र्य पश्चात्पित्र्यानामन्त्रयते। ब्राह्मणानां गुणदोषबलाबलं च धर्मेषूक्तं तदप्युत्प्रेक्ष्यम्। पूर्वेद्युर्ब्राह्मणेभ्यो निवेद्योत्तरेद्युः प्रातः पुनर्निवेद्यम्। एवं तृतीयमामन्त्रणं कृत्वा श्मश्रूणि वापयित्वाऽभ्यञ्जनं स्नापनीयं च दत्त्वा स्नापयति। आज्यसंस्कारान्ते प्राचीनावीतिना ब्राह्मणान्कृतपादशौचानाचान्तान्दत्तेष्वासनेषूदङ्मुखान्प्रागपवर्गान्, पित्रे पितामहाय प्रपितामहायेति संकल्प्यैकैकस्य त्रींस्त्रीन्वा प्रागपवर्गमुपवेशयेत्। प्राप्नोतु भवानिति कर्ता ब्रूयात्। प्राप्नवानीतीतरे प्रत्याहुः। यदि सन्ति वैश्वदेवास्तानपि प्राङ्मुखान्पूर्वं पितृभ्य उदगपवर्गं वृद्धक्रमेणोपवेशयति। पित्र्ये यत्क्रियते तत्सर्वं वैश्वदेवेऽपि प्रथमं कर्तव्यमिति तिलोदकवर्जं यज्ञोपवीतिनैव। प्राचीनावीत्येकपवित्रान्तर्हिते तैजसे मृन्मये वा पात्रेऽप आनीय तिलानोप्य[1] च्छादयति। नास्य प्रचालनम्।

ततस्तिलोदकं पात्रान्तरेणोपादायाऽऽसनगतानां हस्तेष्वानयति—अमुष्मै स्वधाऽमुष्मै स्वधेति। पित्रर्थेषु पितुर्नाम गृह्णाति। पितामहार्थेषु पितामहस्य। प्रपितामहार्थेषु प्रपितामहस्य। एकत्वे तस्यैव हस्ते त्रीण्युदपात्राणि त्रयाणां नामानि गृहीत्वा निनयति।

ततः शुद्धोदकं प्रयच्छति। एतस्मिन्काले गन्धपुष्पधूपदीपाच्छादनादीनां [दानं] तेभ्यः कर्तव्यम्। ततोऽनुप्रकीर्य तिलान् 'उद्धरिष्याम्यग्नौ च करिष्यामि' इति ब्राह्मणानामन्त्रयते। काममुद्ध्रियतां काममग्नौ च क्रियतामिति तैः प्रत्युक्तो

१ ङ. 'नोप्यापिदधाति।

होमार्थमन्नमुद्धृत्य निधाय यज्ञोपवीती परिधानादि प्रतिपद्यते । एवमपि शास्त्रान्तरे दृष्टं प्रागुपसमाधानादुपवेशनाद्युद्धरणान्तं कार्यम् । पूर्ववद्ब्राह्मणेभ्यस्तिलोदकं प्रदाय शुद्धोदकं चान्नं प्रदायाङ्गुष्ठेनोपस्पर्शयति—प्राणे निविश्येत्यनेन । तृप्तान्ब्राह्मणान्मधु वाता इत्येतत्तृचं यज्ञोपवीती श्रावयेत् । अक्षन्नमीमदन्तेत्येतां च स्वधामुक्त्वाऽन्यान्यपि शास्त्रान्तरदर्शितानि कार्याणि । भुक्तवत्सु शेषादन्नात्किंचिदुपादाय निहितशेषेण सह पिण्डान्निधायावशिष्टमाचान्तेष्वाशयेष्वन्नं प्रकीर्य तेभ्यस्तिलोदकं पूर्ववत्प्रदाय शुद्धोदकं च । ततोऽक्षतान्प्रदाय यथाशक्ति दक्षिणां दत्त्वाऽक्षय्यमस्त्विति वाचयित्वा तिलोदकशेषं निनीय स्वधाऽस्त्विति ब्रूयात् । अस्तु स्वधेतीतरे । तत उत्थाप्य प्रसाद्योपसंगृह्य तान्भुक्तवतो गच्छतोऽनुप्रव्रज्येत्येतदन्तो भाष्यकृदुक्तः संग्रहः । तत्र देवा अस्माभिः सूत्रादेव साधिताः । एवं दक्षिणादानमपि । अत एतयोर्नित्यमेवानुष्ठानम् । इतरेषां भाष्यकृदुक्तानां शक्तौ सत्यामनुष्ठानम् । भाष्यकृता त्रिप्रायमेके श्राद्धमुपदिशन्तीतिसूत्रसिद्धं त्रिवारमर्घ्यदानं स्थलत्रय उक्तं तद्बौधायनसूत्रानुसारेण । एवमन्येऽपि स्मृत्युक्ता धर्माः शक्तौ सत्यामुपसंहार्याः ।

## ( + अथ विश्वे देवाः ।

हेमाद्रावादित्यपुराणे[1]—

" विश्वे(श्व)देवौ क्रतुर्दक्षः सर्वास्त्विष्टिषु कीर्तितौ ।
नित्यं नान्दीमुखे श्राद्धे वसुसत्यौ च पैतृके ॥
नवान्नलम्भने देवौ कामकालौ सदैव हि ।
अपि कन्यागते सूर्ये काम्ये च धुरिलोचनौ ।
पुरूरवार्द्रवौ चैव विश्वे देवास्तु पार्वणे " इति ॥

एतदपवादो हेमाद्रौ शातातपः(पेनोक्तः)—

" नित्यश्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च ।
मातृश्राद्धं तु युग्मं स्याद्दैवं प्राङ्मुखैः पृथक् ।
योजयेद्दैवपूर्वाणि श्राद्धान्यन्यानि यत्नतः " इति ॥

अत्रैकोदिष्टं नवश्राद्धद्वादशाहिकमासिकव्यतिरिक्तं ज्ञेयम् । नैमित्तिके कामकालाविति वचनेनैतेषु देवविधानात् । नैमित्तिकमेकोद्दिष्टं नवश्राद्धद्वादशाहमासिकादीति हेमाद्रिणा व्याख्यानाच्च । अन्ये तु नैमित्तिकं सपिण्डीकरण-

+ धनुश्चिह्नान्तर्गतग्रन्थो नास्ति ङ. पुस्तके ।

१ च. 'णे—' अ' । २ ख. 'श्राद्धाद' । च. 'श्राद्धाद्वा' । ३ क. 'द्धद' ।

माहुः । इष्टिषु, इष्टिश्राद्धेषु । इष्टिश्राद्धमाधानसोमयागादौ क्रियमाणमिति केचित् । कर्माङ्गश्राद्धमिष्टिश्राद्धम् । कर्माङ्गश्राद्धं तु—

" निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् "

इतिवचनोपात्तं ग्राह्यमिति हेमाद्रिः । पुरूरवआर्द्रवसु*(सौ)सत्यौ च(विश्वे देवास्तु ) पार्वण इति सान्तोऽपि क्वचित्पाठः । पुरूरवोमार्द्रवसौ विश्वे देवा इति व्युत्पत्तिवादे द्वितीयदेवनाम मादि ( + फरहितमिकारवच्च ) पठितं तत्र मूलं चिन्त्यम् )

## अथ मासिश्राद्धाग्नौकरणाग्निनिर्णयः ।

तच्चाग्नौकरणं सर्वाधानिना दक्षिणाग्नौ कार्यम् । अर्धाधानिना स्मार्ताग्निमता च गृह्याग्नौ । प्रोषितकर्तृकामश्राद्धे कदाचिल्लौकिकाग्न्यभावे द्विजपाणावुदके वेति । तदुक्तं विष्णुधर्मोत्तरे—

" आहिताग्निस्तु जुहुयाद्दक्षिणेऽग्नौ समाहितः ।
अनाहिताग्निश्चौपसदेऽग्न्यभावे द्विजेऽप्सु वा " इति ॥

अत्राऽऽहिताग्निः सर्वाधानीति केचित् । अस्मिन्मतेऽर्धाधानिनो गृह्याग्निमद्भावात्तत्रैवाग्नौकरणं न दक्षिणाग्नाविति । आहिताग्निः सर्वाधान्यर्धाधानी चेत्यस्मिन्मते तु गृह्याग्निसद्भावेऽपि दक्षिणाग्नावेव न तु गृह्याग्नौ । पिण्डपितृयज्ञप्रकरणे दक्षिणाग्नौ जुहोतीतिवचनादग्नौकरणप्रकरणे च याज्ञवल्क्येन जुहुयात्पितृयज्ञवदितिस्मरणादिति । अतिदेशेनोपदेशबाधो न्याय्य इति शंभुशङ्खधरप्रभृतयो दक्षिणाग्न्यधिकरणत्ववादिनः । हेमाद्रिरप्येवम् । तेनैतन्मते सर्वाधान्यर्धाधान्याहिताग्न्योरमावास्याश्राद्धे विहृतदक्षिणाग्निसद्भावाद्दक्षिणाग्नावेवाग्नौकरणहोमः । तिथ्यन्तरश्राद्धे तु विहृतदक्षिणाग्नेरसंभवे सर्वाधानिनो लौकिकाग्नावर्धाधानिनश्चौपासनाग्नावग्नौकरणहोम इति । उपदेशेनातिदेशबाधं मन्यमानोऽपरार्कस्तु पितृयज्ञवदित्यतिदेशसामान्यवचनं कर्म स्मार्तमित्युपदेशसामान्यवचनानुरोधेन दक्षिणाग्निव्यतिरिक्तप्राकृतपदार्थविषयम् । अतोऽर्धाधानिनो गृह्याग्नावेव होमः, [इत्याह] । स्मृत्यर्थसारचन्द्रिका[कार]विज्ञानेश्वरादयोऽप्येवम् । एतन्मतमयुक्तम् । फलचमसेनेव सोमस्य शरैरिव च कुशानां गृह्याग्निसत्त्वेऽपि दक्षिणाग्निना तद्बाधस्यैवोचितत्वात् । आहिताग्नेरमावास्याश्राद्धे विहृतदक्षि-

---

* क. पुस्तके 'वसौ वसुसत्यौ च पा' इति शोधितः पाठः । + धनुश्चिह्नान्तर्गतमसंगतम् ।

१ क. 'दि रेफ' इति शोधितः पाठः । च. 'दि पुर' । २ ङ. 'रणमनाहिताग्निना ।

णाग्निसद्भावाद्दक्षिणाग्नावेव होमः । तिथ्यन्तरश्राद्धे तु विहृतदक्षिणाग्नेरभावादौपासन इति यदुक्तं तद्येषां सूत्रे दक्षिणाग्नेरुद्धरणपक्षस्तत्परम् । स्वसूत्रे तु नित्यं गार्हपत्यदक्षिणाग्नी धार्येते इति वचनेन दक्षिणाग्नेर्धारणस्यैव सर्वदा विहितत्वेन तिथ्यन्तरश्राद्धेऽपि तत्रैवाग्नौकरणहोम इति ज्ञेयम् । यद्यपि स्मार्तमग्नौकरणं श्रौते दक्षिणाग्नौ न युक्तं तथाऽप्याहिताग्निस्तु जुहुयादितिवचनाद्भवतीति हेमाद्रिमाधवचन्द्रिका[कारा]दयः । मासिकश्राद्धस्य गृह्योक्तत्वाद्गृह्याग्नावेव होमः । न दक्षिणाग्नौ । गृह्याग्नेरभावे तु लौकिकाग्नाविति द्रष्टव्यम् ।

" अग्न्यभावः स्मृतस्तावद्यावद्भार्यां न विन्दति " ।

इतिवचनात् ।

" अग्न्यर्थो[1] लौकिके वाऽपि जुहुयात्कर्मसिद्धये " ।

इति वायुपुराणवाक्यात्,

" साग्निरौपासनेऽनग्निरग्नौ कुर्वीत लौकिके ।
पाणौ होमं प्रशंसन्ति न त्वापस्तम्बशाखिनाम् ॥
स्नातका विधुरा वा स्युर्यदि वा ब्रह्मचारिणः ।
अग्नौकरणहोमं तु कुर्युस्ते लौकिकेऽनले " ॥

इतिवचनाच्च तैत्तिरीयैर्ब्रह्मचारिस्नातकविधुरैर्लौकिकाग्नावेव होमः कार्यः । आपस्तम्बपदं सत्याषाढाद्युपलक्षणं, समानन्यायत्वात् । सर्वाधानिनो गृह्योक्तमासिकश्राद्धेऽपि विश्वप्रकाशवचनाल्लौकिकाग्नौ होमो भवत्येव, न तु लोप इति ज्ञेयम् । अयं होमो लौकिकाग्नावयाश्चेत्याहुतिं हुत्वा कार्यः ।

तदुक्तं बृहन्नारदीये—

" नष्टाग्निर्दूरभार्यश्च पार्वणे समुपस्थिते ।
संधायाग्निं ततो होमं कृत्वा तं विसृजेत्पुनः " इति ॥

अयाश्चेति तत्कालेऽग्निं संधाय हुत्वा तं त्यजेदित्यर्थः ।

" नष्टाग्निर्दूरभार्यश्च पार्वणे समुपस्थिते ।
अयाश्चेत्यग्निं संधाय कृत्वा होमं विसर्जयेत् " ॥

इतिस्मृत्यन्तरसंवादात् । नष्टाग्निर्विधुरो दूरभार्यः प्रवासी । नष्टाग्निरिति स्नातकब्रह्मचारिणोरुपलक्षणमिति केचित् ।

विश्वप्रकाशेऽन्या अप्याहुतय उक्ताः—

" अयाश्चाग्ने मनोज्योतिरुद्बुध्यव्याहृतीस्तथा ।
हुत्वाऽग्नौकरणं तत्र कृत्वा तं विसृजेत्पुनः " इति ॥

---

१ ख. च. अग्न्यर्थौ । ङ. अग्न्यर्थे ।

मनोज्योतिरित्ययं मन्त्रो घृतेनेतिपदान्तः। तस्यैव सर्वत्र प्रायश्चित्तार्थत्वदर्शनात्। उद्बुध्य, उद्बुध्यस्वाग्न इति मन्त्रः। व्याहृतयो व्यस्ताः समस्ता वा। लौकिकाग्नेरप्यलाभे द्विजपाण्यादिषु।

तदुक्तं मत्स्यपुराणे—

"अग्न्यभावे तु विप्रस्य पाणौ वाऽथ जलेऽपि वा।
अजकर्णेऽश्वकर्णे वा गोष्ठे वाऽथ शिवान्तिके" इति॥

अत्र यद्यपि 'अग्न्यभावे तु विप्रस्य' इति सामान्यत उक्तं तथाऽपि प्रकृतत्वात्संनिहितपरित्यागे कारणाभावात्,

"पित्र्ये यः पङ्क्तिमूर्धन्यस्तस्य पाणावनग्निकः।
हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत्"

इति कात्यायनोक्तेश्च पित्रर्थविप्रस्येति गम्यते। प्रधानस्य प्रत्यङ्गमावृत्तेर्निषेधात्पङ्क्तिमूर्धन्य इतिवचनाच्चैकस्य प्रथमोपविष्टस्यैव। यद्यप्यत्र हस्तशब्दः साधारणस्तथाऽपि 'ब्राह्मणस्य दक्षिणे हस्ते होतव्यम्' इतिश्रुतेः, 'दक्षिणाचारेण कर्तव्यम्' इतिसूत्रान्तरात्, 'पाणौ दद्यात्तु दक्षिणे' इतिगार्ग्यस्मृतेश्च दक्षिणहस्त एव होमः। अनग्निकः श्राद्धकर्ता मासिकश्राद्धं चेद्दक्षिणहस्ते सोमाय पितृमत इत्यादिभिः षोडशमन्त्रैः षोडशाऽऽज्याहुतीस्तैरेव मन्त्रैः षोडशान्नाहुतीः, अन्त्यैस्त्रिभिरन्नाहुतित्रयमेव वा, मासिश्राद्धं चेत्पिण्डपितृयज्ञाहुतित्रयमेवान्नेन हुत्वाऽवशिष्टमन्नं पङ्क्तिमूर्धन्यादन्येषां पित्र्यविप्राणामेव पात्रेषु विभज्य निदध्यात्। शेषप्रतिपत्ताविदमपिधास्यते[१६]। अजकर्णाश्वकर्णयोर्दक्षिणयोरेव ग्रहणम्। 'एकाङ्गवचने दक्षिणं प्रतीयादनादेशे' इत्याश्वलायनोक्तेः।

शङ्खः—"अप्सु चैव कुशस्तम्बे अग्निं कात्यायनोऽब्रवीत्।
रजते च सुवर्णे च नित्यं वसति पावकः" इति॥

ब्राह्मणपाणिरेव प्रथमोऽनुकल्पः। न च जलाजकर्णादीनां निरवकाशतया समविकल्प इति वाच्यम्। ब्राह्मणाभावे विधीयमाने दर्भवटुश्राद्धे तेषां सावकाशत्वात्। पाणावग्नौकरणहोमेऽपि प्राकृता धर्माः सर्वेऽपि कार्याः पाण्यधिकरणकाग्निहोत्रवत्। समिन्धनरूपकार्यस्याभावादिध्माभावः। इध्मप्रेक्षणविप्राभ्यनुज्ञा न सन्ति। पित्र्यविप्रपाणिं परिसमुह्य पर्युक्ष्य वामेनोपस्तीर्य दक्षिणेनावदाय पुनर्वामेनाभिघार्य जुहुयादिति स्मृत्यर्थसारे। स्मृतिचन्द्रिकाकारस्तु विप्राभ्यनुज्ञा नास्तीत्यशुद्धम्। अनग्निश्चेदाज्यं गृहीत्वा भवत्स्वेवाग्नौकरण-

---

१६. 'मभिधा'।

मिति पूर्ववत्तथाऽस्त्वतिशौनकगृह्यविरोधात् । मेक्षणाभावोक्तिरपि मेक्षणकार्येऽन्यस्य विध्यभावादयुक्ता । परिसमूहनपर्युक्षणसद्भावोक्तिश्चायुक्ता । पांसुनिरसनलक्षणस्य दृष्टकार्यस्य लोपात् । नियमादृष्टमात्रस्य चाप्रयोजकत्वादित्याह । यदा तु प्रश्नाभ्यनुज्ञासद्भावस्तदा स्वसूत्रानुसारेणैव प्रश्नाभ्यनुज्ञावचने उद्धरिष्याम्यग्नौ च करिष्यामि काममुद्ध्रियतां काममग्नौ च क्रियतामिति । जलपाण्यादिषु होमेऽपि प्रश्नप्रतिवचने यथावस्थिते एव । एतेषां प्रतिनिधित्वेन प्रतिनिधिषु तच्छब्दनिगम इतिन्यायेन मुख्यशब्दप्रवृत्तेरनपायात् ।

विशेषमाह कश्यपः—" अनग्निको यदा विप्रः श्राद्धं कुर्यात्तु पार्वणम् ।
अग्नौकरणवत्तत्र होमो दैवकरे भवेत् " इति ॥

यमोऽपि—" अपत्नीको यदा विप्रः श्राद्धं कुर्वीत पार्वणम् ।
पित्र्यविप्रैरनुज्ञातो(ते) वैश्वदेवे तु हूयते " इति ॥

भोः पित्र्यविप्रा भवदनुज्ञयोद्धरिष्यामि देवविप्रपाणावग्नौ च करिष्यामीत्यामन्त्र्य काममुद्ध्रियतां कामं देवविप्रकरेऽग्नौ च क्रियतामिति तैरनुज्ञातो देवविप्रकरेऽग्नौकरणहोमं कुर्यादित्यर्थः ।

## अथ हुतावशिष्टप्रतिपत्तिः ।

तत्राग्नौ होममुक्त्वाऽऽह याज्ञवल्क्यः—

" हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ।
यथालाभोपपन्नेषु रौप्येषु तु विशेषतः " इति ॥

अत्र रौप्येष्वितिवचनात्पैतृकविप्रभाजनेष्विति गम्यते ।

तथा च यमः—" अग्नौकरणशेषं तु पित्र्येषु प्रतिपादयेत् ।
प्रतिपाद्य पितॄणां तु न दद्याद्वैश्वदेविके " इति ॥

अत्राग्निशब्दः पाण्याद्यधिकरणोपलक्षकः । अग्नौकरणशब्दस्य नामधेयत्वात् ।
तथा च पङ्क्तिमूर्धन्यपित्र्यपाणौ होममुक्त्वाऽऽह कात्यायनः—

" हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत् " इति ।

अन्यशब्दस्य प्रकृतसजातीयवचनात्पित्र्यपङ्क्त्युपविष्टविप्रपात्रेष्विति लभ्यते ।

अत एवाऽऽह यमः—

" पित्र्यपाणिहुतोच्छेषं पित्र्यपात्रेषु निक्षिपेत् ।
अग्नौकरणशेषं तु न दद्याद्वैश्वदेविके " इति ॥

अत्र पित्र्यपाणिग्रहणमुपलक्षणम् । अतो वैश्वदेविकद्विजपाणौ होमेऽपि शेषस्य पितृपात्रेष्वेव प्रक्षेपो न देवपात्रेष्विति ।

परस्परस्पर्शे शङ्खः—" श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।
तदन्नमत्यजन्भुक्त्वा गायत्र्यष्टशतं जपेत् " इति ॥

तदन्नं पात्रगतमन्नं भुञ्जीयादेव न तु त्यजेत् । ततः प्रायश्चित्तार्थं गायत्रीमष्टोत्तरशतवारं जपेदित्यर्थः । अत्र श्राद्धपङ्क्ताविति श्रवणाच्छ्राद्धव्यतिरिक्तभोजने स्पर्शे परित्याग एवेति बोध्यते । तदन्नमत्यजन्नित्यनेन स्पर्शोत्तरमन्यदन्नं न गृह्णीयादिति बोध्यते ।

यदि पात्र उच्छिष्टं पतेत्तदा तु परित्याग एव—

" उच्छिष्टमिश्रमन्नं चेद्भवेत्पात्रगतं तदा ।
नैवान्नं तच्च भोक्तव्यमुपवासं दिवाऽऽचरेत् ।
रात्रौ चेत्तत्र कर्तव्य उपवासो मनीषिभिः ॥
यदि स्वस्यापि संस्पर्शस्तस्योच्छिष्टस्य वै तदा ।
न भुञ्जीत दिवा रात्राविति केचित्समूचिरे " ॥

इतिस्मृतिसंग्रहोक्तेः ।

उच्छिष्टं परस्य । तत्र रात्रौ ।

विप्रस्य भोजनकाले गुदस्रवणं चेत्तदा किं कार्यमित्यपेक्षायां पृथ्वीचन्द्रोदये भरद्वाजः—

" भुञ्जानेषु तु विप्रेषु प्रमादात्स्रवते गुदम् ।
पादकृच्छ्रं ततः कृत्वा अन्नं विप्रे निवेदयेत् " इति ॥

क्षणपाद्यादिविधिना पुनः श्राद्धं कुर्यादित्यर्थः ।

विप्रस्य त्वापस्तम्ब आह—

" भुञ्जानस्य तु विप्रस्य कदाचित्स्रवते गुदम् ।
उच्छिष्टमशुचित्वं च प्रायश्चित्तं कथं भवेत् ॥
आदौ कृत्वा तु वै शौचं ततः पश्चादुपस्पृशेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति " इति ॥

मूत्रकरणेऽप्येतदेव ज्ञेयम् ।

श्राद्धविप्रवमने दक्षः—

" केतितस्तु यदि श्राद्धे भोजनं मुखनिःसृतम् ।
तदैव होमं कुर्वीत स्वाग्नौ विप्रः समाहितः ॥
प्राणादिपञ्चभिर्मन्त्रैर्होमं द्वात्रिंशत्संख्यया ।
ब्राह्मणस्तु ततः कृत्वा त्वन्नप्राशनमाचरेत् " इति ॥

केतितो निमन्त्रितो विप्रः श्राद्धे भोजनं मुखनिःसृतं यदि कुर्याद्वमेदिति यावत्। तदैव स्नात्वा स्वोपासनाग्नौ लौकिकाग्नौ वा विप्रः श्राद्धकर्ता प्राणाय स्वाहा, अपानाय स्वाहा, व्यानाय स्वाहा, उदानाय स्वाहा, समानाय स्वाहा, इत्येतैः पञ्चभिर्मन्त्रैर्द्वात्रिंशत्संख्यया होमः कार्यः। अनादेश आज्यं प्रतीयादितिपरिभाषयाऽऽज्येन। अयं पञ्चभिर्मन्त्रैः प्रतिमन्त्रं द्वात्रिंशत्संख्ययेति केचित्। एतन्मते षष्ठ्यधिकशतमाहुतयो भवन्ति। अन्ये तु—पञ्चभिर्मन्त्रैर्द्वात्रिंशत्संख्ययाऽऽहुतीर्जुहुयादिति यथाश्रुतमेवार्थं वर्णयन्ति। एतन्मते द्वात्रिंशदेव। आहुतिमन्त्रयोर्वैषम्यं तु—अन्ताल्लोपो विवृद्धिर्वेतिन्यायेन परिहरणीयम्। परे तु यावच्च त्रिंशत्संख्ययेति पाठमाहुः। एतत्पाठे वैषम्यं न। ततः श्राद्धकर्तृकर्तृकहोमानन्तरम्, ब्राह्मणः श्राद्धभोजी, कृत्वा, एतैर्मन्त्रैरुक्तसंख्यं होमं कृत्वेत्यर्थः। तुशब्दः पूर्वापेक्षया वैलक्षण्यार्थः। तच्च वैलक्षण्यं विशेषविधिकृतमिति तदर्थं तं विधिमाह—घृतप्राशनमाचरेदिति। यदि श्राद्धकर्तुः श्राद्धभोक्तुरेव वाऽयं घृतप्राशनान्तो विधिर्भवेत्तदा विप्रब्राह्मणपदयोरन्यतरस्य वैयर्थ्यापत्तिः स्यात्। अत उभयोरप्ययं विधिर्भवति। न च विनिगमनाविरहाद्धोमघृतप्राशने श्राद्धकर्तुः, होममात्रं तु श्राद्धभोक्तुरिति वैपरीत्यमेवास्त्विति वाच्यम्। घृतप्राशनस्यादृष्टार्थत्ववद्वमनजातदौर्गन्ध्यपरिहारस्य दृष्टार्थस्याप्यत्र संभवेन तस्याप्यत्र कल्पनात्। अतः श्राद्धभोक्तृविषयकत्वमेव। पिण्डदानोत्तरं वमने श्राद्धस्य नाऽऽवृत्तिः। पिण्डादानात्प्राग्वमने तु पुनः श्राद्धम्। तदुक्तं पृथ्वीचन्द्रोदये स्मृतिसंग्रहे—

“ अकृते पिण्डदाने तु भुञ्जानो ब्राह्मणो वमेत्।
पुनः पाकात्प्रकर्तव्यं पिण्डदानं यथाविधि ” इति ॥

पिण्डदानं श्राद्धम्।

“ अकृते पिण्डदाने तु पिता यदि वमेत्तदा।
पुनः पाकं प्रकुर्वीत श्राद्धं कुर्याद्यथाविधि ”

इति तत्रैवोक्तेः। तच्च पुनः श्राद्धं श्राद्धदिन उपवासं कृत्वा परेऽहनि कार्यम्। तदुक्तं स्मृतिसंग्रहे—

“ पित्रर्थानां त्रयाणां हि पिता चेद्वमते यदि।
तद्दिने चोपवासः स्यात्पुनः श्राद्धं परेऽहनि ” इति ॥

तथा—“ वमने वा विरेके वा तद्दिनं परिवर्जयेत् ” इति।

विरेको गुदस्रावः। एतद्वचनद्वयं निर्मूलम्। समूलत्वेऽपि न मासिकाब्दिकविषयम्। मासिश्राद्धसांवत्सरिकयोर्वान्तावामेन तस्मिन्नेव दिने कार्यम्।

" श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
अमावास्यादिनियतं माससंवत्सरादृते " इति मरीच्यो(च्यु?)क्तेः ।

आरब्धं श्राद्धं समापनीयमेव ।

" आरब्धं च समापयेत् " इतिवचनात् ।

केचित्तु ब्राह्मणान्तरलाभे पक्वान्नेनैतस्मिन्दिन एव कुर्यात् । अकृते पिण्डदाने त्वितिपूर्वोक्तवाक्यात् । श्राद्धविघ्ने द्विजातीनामित्यत्र श्राद्धविघ्नपदं भार्यारजोदर्शनरूपविघ्नपरमित्याहुः । ब्राह्मणास्तु त एव संप्रदानत्वेन स्वीकार्या इति केचित् । अनेकप्राधानिके यागे यस्य कस्यचित्प्रधानस्य वैकल्ये पुनः साङ्गक्रियार्थाहवनीयान्तरप्रणयनवद्विप्रान्तरमेवेत्यन्ये । श्राद्धे पिण्डदानमेव प्रधानमिति कर्कः । विप्रभोजनमपीति मेधातिथिः । भोजनपिण्डदानाग्नौकरणानीत्युज्ज्वलाकारकपर्दिधूर्तरामाण्डारहरदत्तहेमाद्र्यादयः । तत्र येषां मते भोजनस्याङ्गत्वं तैर्नाऽऽवृत्तिः कर्मणः कार्या । होमवैकल्य उज्ज्वलाकारादिमते पुनरावृत्तिः श्राद्धस्य । तस्यापि तन्मते प्रधानत्वादिति । वस्तुतस्तु भोजनपिण्डदाने एव प्रधाने नाग्नौकरणमिति । भोजनपिण्डदानवैकल्ये पुनःश्राद्धविधानवदग्नौकरणवैकल्ये तददर्शनात् । केवलभोजनेन केवलपिण्डदानेन वा श्राद्धसिद्धिवत्केवलहोमेन श्राद्धसिद्ध्यदर्शनाच्च । तथा च होमवैकल्ये प्रायश्चित्तमात्रं कर्तव्यं न तु पुनः श्राद्धमिति द्रष्टव्यम् । वैश्वदेविकविप्रवमने होम एव नाऽऽवृत्तिरङ्गत्वात् । पितामहादिविप्रवमनेऽपि नाऽऽवृत्तिः । अकृते पिण्डदाने त्वितिवचने पितेत्युक्तेरिति केचित् । तस्यापि प्रधानत्वात्पितृवदिति तु युक्तम् ।

पिण्डोपघाते हेमाद्रौ प्रायश्चित्तकाण्डे जातूकर्ण्यः—

" श्वशृगालखरैः पिण्डः स्पृष्टो भिन्नः प्रमादतः ।
कर्तुरायुष्यनाशः स्यात्प्रेतस्तं नोपसर्पति ॥
तद्दोषपरिहारार्थं प्राजापत्यं प्रकल्पयेत् ।
पुनः स्नात्वा तदा कर्ता पिण्डं दद्याद्यथाविधि " इति ॥

काकसंस्पर्शे तु न दोषः । पिण्डोपघातं प्रक्रम्य—

" धनस्य च विनाशः स्यात्काकसंस्पर्शनं विना "

इति तत्रैव श्लोकगौतमोक्तेः । स्मृतिदर्पणेऽत्रिः—

" मार्जारमूषकस्पर्शे पिण्डे च विदलीकृते ।
पुनः पिण्डाः प्रदातव्यास्तेन पाकेन तत्क्षणात् " इति ॥

बौधायनः—" श्वचाण्डालादिभिः स्पृष्टः पिण्डो यद्युपहन्यते ।
प्राजापत्यं चरित्वाऽथ पुनः श्राद्धं समाचरेत् " इति ॥

## अथ वैश्वदेवकालः ।

तत्राऽऽहिताग्नेर्विशेषः—" पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः " इति ॥

अत्र साग्निकपदेनाऽऽहिताग्निर्गृह्यत इति हेमाद्रिः । नवीनास्तु साग्निकपदेन श्रौताग्निमान्गृह्याग्निमांश्च गृह्यत इत्याहुः । अनाहिताग्नेस्तु—अग्नौकरणानन्तरं बलिदानोत्तरं वा वैश्वदेव इति । अत्र मूलं वैश्वदेवप्रकरणे प्रदर्शितम् । अत्र पृथक्पाकेनैव वैश्वदेवहोममात्रं कृत्वा श्राद्धसमाप्त्यनन्तरं वैश्वदेवार्थान्नेनैव बलिहरणादि कर्तव्यम् । यदा त्वन्ते तदा श्राद्धशेषेणैव । आहिताग्नेः सर्वेषु श्राद्धेष्वेकादशाहिकं मुक्त्वा श्राद्धारम्भात्प्रागेव वैश्वदेवः ।

" श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः ।
ऐकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते "

इति सालङ्कायनिवचनात् ।

समवदाय शेषं प्राश्नीयादित्यनेन शेषस्याशनं विहितं तच्च दिवैव कार्यं न रात्रौ ।

' न रात्रौ शेषमश्नीयात् ' इति स्मृतौ निषेधात् ।

तस्मिन्दिन आवश्यकोपवासप्राप्तौ शेषाघ्राणं कार्यम् । तत्रापि प्राशनव्यवहारस्य शास्त्राभ्युपगतत्वात् । तन्नेव प्राशितं नेवाप्राशितमित्यर्थवादेनाप्युभयविधित्वबोधनात् । तावताऽपि शास्त्रार्थसंभवाच्च । चतुर्थ्यादिरात्रिव्रतेषु दिवा शेषाघ्राणं कृत्वा रात्रौ पूजां विधाय मूलफलादिकं भक्षयेत् । रात्रौ भोजनस्य तस्मिन्दिन उपवासस्य च निषेधात् ।

" उपवासनिषेधे तु किंचिद्भक्ष्यं प्रकल्पयेत् "

इतिवचनेन फलमूलादिभक्षणस्य विहितत्वात् । केचित्तु रात्रावपि शेषाघ्राणमाहुः । शेषनाशे भोजनलोप इति केचित् । प्रतिनिधिभूतेनान्नेन भोजनं कार्यमित्यन्ये ।

" दन्तधावनताम्बूलतैलाभ्यङ्गमभोजनम् ।
रत्यौषधपरान्नानि श्राद्धकर्ता विवर्जयेत् ॥
पुनर्भोजनमध्वानं भारमध्यायसंगमम् ।
दानं प्रतिग्रहो(हं) होमः(मं) श्राद्धभुग्वर्जयेद्द्विजः ॥ "

( भार्यार्तवषोडशदिनश्राद्धदिनसंनिपाते विचारः )
( भार्यारजस्वलात्वाद्यापत्सु विशेषः )

इत्यादिकर्तृभोक्तृनियमाः श्राद्धरत्नमालायां द्रष्टव्याः ।

श्राद्धदिनेषु यद्यृतुमत्या भार्यायाः षोडशदिनं पतेत्तदा तत्र विशेषमाह वसिष्ठः—

" एकादश्यां यदा राम प्रतिसंवत्सरं दिनम् ।
भार्या ऋतुमती चैव कथं धर्मः प्रवर्तते ॥
श्राद्धं कुर्याद्धृतं कुर्यादाघ्राय पितृसेवितम् ।
ऋतुमत्या ऋतुं दद्यादर्धरात्रादनन्तरम् " इति ॥

तथा श्राद्धकर्तुः पत्न्यां रजस्वलायां प्रवासादौ च तद्दिन एवाऽन्नेनैव कार्यम् । तदुक्तं माधवीये लौगाक्षिणा—

" पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः ।
अन्नेनैवाऽऽब्दिकं कुर्याद्धेम्ना वाऽऽमेन न क्वचित् " इति ॥

अपुत्रकस्त्रीकर्तृकश्राद्धं तु पञ्चमेऽह्नि भवति । तदुक्तं तत्रैव श्लोकगौतमेन—

" अपुत्रा तु यदा भार्या संप्राप्ते भर्तुराब्दिके ।
रजस्वला भवेत्सा तु कुर्यात्तत्पञ्चमेऽहनि " इति ॥

दर्शश्राद्धाद्यन्नेनैव कार्यम् । तदुक्तं कालिकापुराणे—

" मासिकानि सपिण्डानि अ(आ)मावास्या(स्यं) तथाऽऽब्दिकम् ।
अन्नेनैव तु कर्तव्यं यस्य भार्या रजस्वला " इति ॥

इदं चाप्रवासविषयम् । तथा चोशना—

" अपत्नीकः प्रवासी च यस्य भार्या रजस्वला ।
सिद्धान्नेन न कुर्वीत आमं तस्य विधीयते " इति ॥

एतदपि पाकासंभवे । तथा सुमन्तुः—

" पाकाभावेऽधिकारः स्याद्विप्रादीनां नराधिप ।
अपत्नीनां महाबाहो विदेशगमनादिभिः ॥
सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः ।
आत्मनो देशकालाभ्यां विप्लवे समुपस्थिते ॥
आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ।
चन्द्रसूर्यग्रहे चैव दद्यादामं विशेषतः " इति ॥

मरीचिः—" श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
अमावास्यादिनियतं माससंवत्सरादृते " इति ॥

दर्शसांवत्सरिकश्राद्धदिने यदि पत्नी रजस्वला तदा पञ्चमेऽह्नि कार्यमिति हेमाद्रिः। तस्मिन्नेव दिने कर्तव्यमिति माधवप्रयोगपारिजातकारादयः। आमश्राद्धाशक्तौ हेमश्राद्धं कुर्यात्।

" द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि।
हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला " ॥

इतिस्मृत्यन्तरवचनात्।

आमहेम्नोः परिमाणमुक्तं स्मृत्यन्तरे—

" आमं तु द्विगुणं दद्याद्धेमं दद्याच्चतुर्गुणम् " इति।

द्विगुणामान्नदानाशक्तौ सममप्यामं दद्यादित्युक्तं प्रघट्टके। चतुर्गुणहिरण्यदानाशक्तौ द्विगुणं समं वा हिरण्यं दद्यादित्यपि तत्रैव। हेम्नोऽप्यसंभवे श्राद्धकाण्डे स्मृत्यन्तरे—

" तृणानि वा गवे दद्यात्पिण्डान्वा विधिपूर्वकम्।
तिलोदकैः पितॄन्वाऽपि तर्पयेत्स्नानपूर्वकम् ॥
अग्निना वा दहत्कक्षं श्राद्धकालसमागमे।
तस्मिंश्चोपवसेदह्नि जपेद्वा श्राद्धसंहिताम् " इति ॥

श्राद्धसंहिता सर्वमन्त्रसहितः श्राद्धकल्पः। कक्षं पर्वतदरीति हेमाद्रिः। बृहन्नारदीये—

" द्रव्याभावे द्विजाभावे अन्नमात्रं तु पाचयेत्।
पैतृकेण तु सूक्तेन होमं कुर्याद्विचक्षणः ॥
अत्यन्तद्रव्यशून्यश्चेच्छक्त्या दद्यात्तृणं गवे।
स्नात्वा च विधिवद्विप्रः कुर्याद्वा तिलतर्पणम् ॥
अथवा रोदनं कुर्वन्नत्युच्चैर्विजने वने।
दरिद्रोऽहं महापापी वदन्निति विचक्षणः " इति ॥

आशौचेन मृताहातिक्रमे तदाशौचान्ते कार्यम्। तथा च ऋष्यशृङ्गः—

" देये पितॄणां श्राद्धे तु आशौचं जायते यदि।
तदाऽऽशौचे व्यतीते तु तेभ्यः श्राद्धं प्रदीयते " इति ॥

आब्दिकदिने ग्रहणं चेत्तस्मिन्नेवाहनि श्राद्धमपराह्णेऽन्नादिना कार्यमित्युक्तं प्रयोगपारिजाते गोभिलेन—

" दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थिते।

---

१ ङ. 'द्धेम द'।

अन्नेनासंभवे हेम्ना कुर्यादामेन वा सुतः " इति ॥

" अन्नेनैवाऽऽब्दिकं कुर्याद्धेम्ना वाऽऽमेन न क्वचित् " ।

इति तु ग्रहणदिनातिरिक्तविषयमिति निर्णयामृते ।

यत्तु—" ग्रहणात्तु द्वितीयेऽह्नि रजोदोषात्तु पञ्चमे "

इति वचनं तन्महानिबन्धेष्वनुपलम्भान्निर्मूलमिति नवीनग्रन्थे ।

विस्तृतपार्वणविधिना श्राद्धकरणाशक्तौ विवाहादिनिमित्तेन पिण्डदाननिषेधे च सांकल्पविधिरुक्तः स्मृत्यन्तरे—

" पिण्डो यत्र निवर्तेत मघादिषु कथंचन ।
सांकल्पिं तदा कार्यं नियमाद्ब्राह्मणादिभिः " इति ॥

अत्र कथंचनेत्युक्त्याऽशक्तिकृतपिण्डदाननिवृत्तिरनुगृह्यते ।

संग्रहे—" अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् ।
संकल्पश्राद्धमेवासौ कुर्यादर्घ्यादिवर्जितम् " इति ॥

सांकल्पिकस्वरूपमुक्तं संवर्तेन—

" समग्रं यस्तु शक्नोति कर्तुं नैवेह पार्वणम् ।
अपि संकल्पविधिना काले तस्य विधीयते ॥
पात्रे भोज्यस्य चान्नस्य त्यागः संकल्प उच्यते ।
तत्प्रयुक्तो विधिर्यस्तु स तेन व्यपदिश्यते ॥
तावन्मात्रेण संबद्धं श्राद्धं सांकल्पमुच्यते " इति ।

अत्र यद्यन्निषिद्धं तदाह व्यासः—

" सांकल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणम् ।
नाऽऽवाहनाग्नौकरणे पिण्डांश्चैव न दापयेत् " इति ॥

दापयेदिति स्वार्थे णिच् । पात्रपूरणमर्घ्यपात्रपूरणम् । आवाहननिषेधः समन्त्रकावाहननिषेधपरः । तेन तूष्णीं भवत्येवेति हेमाद्रिः । स्मृत्यन्तरे तु 'विकिरं न च दापयेत्' इति तुरीयः पादः ।

वसिष्ठः—" आवाहनं स्वधाशब्दं पिण्डाग्नौकरणे तथा ।
विकिरं पिण्डदानं च सांकल्पे परिवर्जयेत् " इति ॥

पिण्ड उच्छिष्टपिण्डः ।

१ ख. ङ. च तु मरणे । २ ङ. °ल्पिकं तं° । ३ ख. च. सान्नस्य ।

हेमाद्रौ वृद्धशातातपस्तु—

“ पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते ।
स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते ” ॥

इति विकिरस्यालोपमाह । तेन विहितप्रतिषिद्धत्वाद्विकल्पः ।

व्याघ्रपादः—“ अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् ।
स तदा वाचयेद्विप्रान्संकल्पात्सिद्धिरस्त्विति ” [ इति ] ।

प्रत्याब्दिककर्तव्यतामाह जातूकर्ण्यः—

“ पितृवर्गस्य कुर्वीत श्राद्धं पार्वणवत्सुतः ।
कुर्वीत दर्शवच्छ्राद्धं मातापित्रोर्मृतेऽहनि ” इति ॥

अपुत्रसा(स)पत्नमातृमातामहीस्वपत्नीपितृव्यमातुलज्येष्ठभ्रातॄणामपि तद्दिने कार्यम् ।

“ अपुत्रस्य पितृव्यस्य श्राद्धं पितृवदाचरेत् ” इतिवचनात्,
“ पत्नीभर्त्रोः परस्परम् ” इति वचनात्,
“ पितृव्यभ्रातृमातॄणां पत्न्या मातामहस्य च ।
मातामह्या मातुलस्यापुत्रत्वे श्राद्धमाचरेत् ” इति वचनाच्च ।

एतच्चैकोद्दिष्टविधिना मातामहमातामहीपार्वणव्यतिरिक्तानामेव ।

“ मातामहस्य तत्पत्न्याः श्राद्धं पार्वणवद्भवेत् ” ।

इति चतुर्विंशतिमतात् । पितृव्यभ्रातृमातॄणामेकोद्दिष्टमेव ।

“ पितृव्यभ्रातृमातॄणामेकोद्दिष्टं न पार्वणम् ” इतिवचनात् ।

माता सपत्नमाता । पत्न्या अप्येकोद्दिष्टमेव ।

“ पितृव्यभ्रातृपत्नीनां मातुर्नैव तु पार्वणम् ” इतिवचनात् ।

पित्रोः सांवत्सरिकश्राद्धेऽप्येकोद्दिष्टविधिरुक्तो यमेन—

“ सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः ।
मातापित्रोः पृथक्कार्यमेकोद्दिष्टं क्षयेऽहनि ” इति ॥

शातातपस्तु—“ सपिण्डीकरणादूर्ध्वं कुर्यात्पार्वणवत्सदा ।
प्रतिसंवत्सरं विद्वांश्छागलेयोदितो विधिः ” इत्याह ॥

अत्र देशाचाराद्व्यवस्थितविकल्प इति विज्ञानेश्वरः ।

“ भ्रातुर्ज्येष्ठस्य कुर्वीत ज्येष्ठो भ्राताऽनुजस्य च ।
दैवहीनं तु तत्कुर्यादिति धर्मविदब्रवीत् ” इति ॥

१ क. ड. 'ता साप' ।

दैवहीनमेकोद्दिष्टम्। ज्येष्ठो भ्राताऽनाद्यगर्भजः। तथा च शातातपः—
"अनाद्यज्येष्ठगर्भस्य भ्रातुर्नैव तु पार्वणम्।
ऋते सपिण्डनात्तस्येत्येवं धर्मविदो विदुः" इति॥
आद्यगर्भे तु पार्वणमेकोद्दिष्टं वेत्यर्थः।
यत्तु वृद्धपाराशरः—"अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत्।
स एव तस्य कुर्वीत पिण्डदानादिकक्रियाम्॥
पार्वणं तेन कार्यं स्यात्पुत्रवद्भ्रातृजेन तु।
पितृस्थाने तु तं कृत्वा शेषं पूर्ववदाचरेत्"
इति, तद्देशाचाराद्व्यवस्थितं ज्ञेयमिति पृथ्वीचन्द्रोदये।
श्राद्धदीपकलिकायां चतुर्विंशतिमते तु—
"सदा पितृव्यभ्रातॄणां ज्येष्ठानां पार्वणं भवेत्।
एकोद्दिष्टं कनिष्ठानां दंपत्योः पार्वणं मिथः॥
अपुत्रस्य पितृव्यस्य भ्रातुश्चैवाग्रजन्मनः।
मातामहस्य तत्पत्न्याः श्राद्धं पार्वणवद्भवेत्" इत्युक्तम्॥

अत्र दंपत्योः पार्वणं मिथ इति पत्न्याः पार्वणविधानं पूर्वेणैकोद्दिष्टविधानेन विकल्पते। सा च व्यवस्था देशाचाराद्व्यवस्थितेति श्राद्धप्रदीपे। पत्न्याः कर्तृत्वेऽपि पार्वणमेव।
"सर्वाभावे स्वयं पत्न्यः स्वभर्तॄणाममन्त्रकम्।
सपिण्डीकरणे कुर्युस्ततः पार्वणमेव च"॥
इति लौगाक्षिस्मृतेरिति निर्णयामृते। अन्ये तु—एतत्पाक्षिकपार्वणपरम्।
"भर्तुः श्राद्धं तु या नारी मोहात्पार्वणमाचरेत्।
न तेन तृप्यते भर्ता कृत्वा तु नरकं व्रजेत्"॥

इतिवचनं क्षयाहे पाक्षिकैकोद्दिष्टप्रशंसार्थं[1] न पार्वणनिषेधार्थम्। स्वभर्तृप्रभृति त्रिभ्य इत्यनेनापि विरोधो नेत्याहुः।
प्रचेताः—"सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं विधीयते।
अपुत्राणां च सर्वेषामपत्नीनां तथैव च" इति॥
अपत्नीनां ब्रह्मचारिस्नातकादीनामिति हेमाद्रिः।
मार्कण्डेयपुराणे—"प्रतिसंवत्सरं कार्यमेकोद्दिष्टं नरैः स्त्रियाः।
मृताहनि यथान्यायं नृणां तद्वदिहोदितम्" इति॥

१ च. °प्रसङ्गार्थं।

वसिष्ठः—" सपिण्डीकरणादूर्ध्वं यत्तु यत्र प्रदीयते ।
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ॥
मातामहस्यासुतस्य श्राद्धं वै पितृवद्भवेत् " इति ॥

एतच्चाऽऽवश्यकत्वार्थं न तु पार्वणार्थमिति हेमाद्रिः ।

स्मृत्यन्तरेऽपि—" पितृव्यभ्रातृपुत्राणामेकोद्दिष्टं न पार्वणम् " इति ।

अत्रिः—" भ्रात्रे भगिन्यै पुत्राय श्वशुरे मातुलाय च ।
पितृव्ये गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् " इति[2] ॥

श्वशुरे श्वशुराय । पितृव्ये पितृव्यस्य(व्याय) । ( * न च सपिण्डीकरणादूर्ध्वं यत्र(त्तु) यत्र प्रदीयत इतिवृद्धवसिष्ठवचनादमावास्यादिष्वपि श्राद्धप्रसक्तिरिति वाच्यम् ।)

" पितृव्यभ्रातृमातृणामपुत्राणां तथैव च
मातामहस्य पुत्राय श्राद्धादि पितृवद्भवेत् "

इति जातूकर्ण्यवाक्यस्य क्षयाहप्रकरणस्थत्वेन [क्षयाहपरतया तत्सदृशवसिष्ठवाक्यस्य] तत्परत्वात् । तत्रत्यश्राद्धशब्दस्य क्षयाहपरताया एव हेमाद्र्यादिभिरुक्तत्वाच्च । अत एव क्षयाहश्राद्धमेवाऽऽवश्यकं नान्यत् । एवं च पित्रादिवर्गचतुष्टयस्य पार्वणं, सपत्नमातृपितृव्यादीनामेकोद्दिष्टमेव । पत्न्या एकोद्दिष्टं पार्वणं वा । केचित्तु पितृव्यभ्रातृसपत्नमात्रादिश्राद्धं पार्वणमाचरन्ति । तत्र मूलं पितृवदिति पार्वणत्वस्यानिर्देश इति द्रष्टव्यम् । सांवत्सरादिकं[3] विभक्तैः पृथक्कार्यम् ।

" विभक्तैस्तु पृथक्कार्यं प्रतिसं(सां)वत्सरादिकम् ।
एकेनैवाविभक्तेषु कृतं सर्वैस्तु तत्कृतम् " इति पैठीनसिस्मृतिः (तेः) ॥

सांवत्सरिकात्पूर्वाणि मासिकान्येकत्रैव । तदाह लघुहारीतः—

" सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश ।
पृथक्त्वे न सुताः कुर्युः पृथग्द्रव्या अपि क्वचित् " इति[4] ॥

" अर्वाक्संवत्सराज्ज्येष्ठः श्राद्धं कुर्यात्समेत्य तत् ।
ऊर्ध्वं सपिण्डीकरणात्सर्वे कुर्युः पृथक्पृथक् " इति व्यासोक्तेः ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थः सर्वपुस्तकेषु तत्परत्वादित्यन्तग्रन्थात्परं वर्तते । तथाऽपि, अर्थानुरोधेनात्रैवापेक्षित इति अत्रैव संगृहीतः ।

१ ङ. °तृव्यगु° । २ ङ. °ति । एकवचनं छान्दसम् । न चैवममावास्यादिष्वपि श्राद्धप्रसक्तिरिति वाच्यम् । पितृव्यभ्रा° । ३ ख. °त्सरिकादि° । ४ क. ख. च. °ति स्मृतेः 'अ° । ५ क. ख. च. °ति । संविभक्तधनेष्वर्पात्युशनोवचनाच्च । व्या° ।

" नवश्राद्धं सपिण्डं च श्राद्धान्यपि च षोडश ।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि " ॥

इत्युशनोवचनाच्च ।

एकोद्दिष्टस्वरूपमाह मनुः—

" एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रकीर्तितम् " इति ।

तत्र विशेषमाह याज्ञवल्क्यः—

" एकोद्दिष्टं देवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं त्वपसव्यवत् " इति ॥

## अथ प्रोष्ठपदीश्राद्धम् ।

तत्र ब्रह्मपुराणम्—" नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।
पौर्णमास्यां प्रकर्तव्यं वराहवचनं यथा " इति ॥

नान्दीमुखशब्दार्थस्तत्रैवोक्तः—

" पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः संप्रकीर्तिताः ॥
तेभ्यः परतरा ये च प्रजावन्तः सुखैधिताः ।
ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते " इति ॥

एतच्च प्रत्यब्दमित्युक्तेः पक्षश्राद्धे सकृन्महालयपक्षे चाऽऽवश्यकमिति प्रयोगपारिजाते । अत्र मातामहा अपि कार्याः । ' पितरो यत्र पूज्यन्ते ' इतिवचने पितृशब्दस्य साधारणत्वादिति केचित् । जनकघटितसमुदायवाचित्वादत्र तादृशसमुदायाभावात्पितरो यत्रेतिवाक्यस्यात्राप्रवृत्तिरित्यन्ये ।

महालयेऽपि श्राद्धं कार्यमित्युक्तं पृथ्वीचन्द्रोदयादौ वृद्धमनुना—

" आषाढीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः ।
काङ्क्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम् " इति ॥

वृद्धमनुः—" मध्ये वा यदि वाऽप्यन्ते यत्र कन्यां व्रजेद्रविः ।
स पक्षः सकलः श्रेष्ठः श्राद्धषोडशकं प्रति " इति ॥

मार्कण्डेयः—" कन्यागते सवितरि दिनानि दश पञ्च च ।
पार्वणेनैव विधिना तत्र श्राद्धं विधीयते " इति ॥

अन्येऽपि पक्षा ब्राह्मे—

" अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने ।
त्रिभागहीनपक्षं वा त्रिभागं त्वर्धमेव वा " इति ॥

१ क. ख. ग. °णि । ए° ।

त्रिभागमित्यनेन पञ्चम्यादिपक्ष उच्यते । तथा च स्मृतिः—

" मौजगीं तिथिमारभ्य यावच्चन्द्रार्कसंगमम् " इति ॥

मौजगी तिथिः पञ्चमी । चन्द्रार्कसंगमेऽमावास्यायां तावत्पर्यन्तमित्यर्थः । अर्धमित्यष्टम्यादिपक्षः । त्रिभागमिति दशम्यादिपक्षः । त्रिभागहीनमिति चतुर्दशीसहितप्रतिपदादिचतुष्टयवर्जनाभिप्रायेणेति कल्पतरुः । अशक्तस्त्वेकदिन एव कुर्यात् । तदुक्तं हेमाद्रौ नागरखण्डे—

" आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।
यो वै श्राद्धं पितुर्दद्यादेकस्मिन्नपि वासरे ॥
तस्य संवत्सरं यावत्संतुष्टाः पितरो ध्रुवम् " इति ।

तत्र वर्ज्यतिथ्यादिकमुक्तं पारिजाते वसिष्ठेन—

" नन्दायां भार्गवदिने चतुर्दश्यां त्रिजन्मसु ।
एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् " इति ॥

त्रिजन्मनक्षत्राणि जन्मनक्षत्रं दशमैकोनविंशे च । एतच्च सकृन्महालयविषयम् ।

" सकृन्महालये काम्ये पुनः श्राद्धे खिलेषु च ।
अतीतविषये चैव सर्वमेतद्विचारयेत् " ॥

इति पृथ्वीचन्द्रोदये नारदोक्तेः ।

एतदपवादः संग्रहे—" अमापाते भरण्यां च द्वादश्यां पक्षमध्यके ।
तथा तिथिं च नक्षत्रं वारं च न विचारयेत् " इति ॥

पराशरमाधवीये मदनपारिजातादिषु चैवम् । निर्णयदीपिकायां तु पितृमृताहे निषिद्धदिनेऽपि सकृन्महालयः कार्य इत्युक्तम् । स्मृत्यन्तरे—

" आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।
मृताहनि पितुर्यो वै श्राद्धं दास्यति मानवः ॥
तस्य संवत्सरं यावत्संतुष्टाः पितरो ध्रुवम् " इति ।

कात्यायनोऽपि—"या तिथिर्यस्य मासस्य मृताहे तु प्रवर्तते ।
सा तिथिः पितृपक्षे तु पूजनीया प्रयत्नतः ॥
तिथिच्छेदो न कर्तव्यो विनाऽऽशौचं यदृच्छया ।
पिण्डश्राद्धं च कर्तव्यं विच्छित्तिं[1] नैव कारयेत् " इति ॥

---

१ ख. च. विच्छिन्नं ।

अत्र विनाऽऽशौचमिति वचनात्पितृमृताहे सकृन्महालयपक्षपरिग्राहिणो भार्यायां रजस्वलायामपि तद्दिने महालयश्राद्धं भवत्येवेति केचित् । वस्तुतस्तु यावद्वृश्चिकदर्शनादितिकालान्तरस्य सत्त्वादनिषिद्धे दिनान्तर एव महालयश्राद्धं कार्यम् । तत्रापि रजस्वलायां तु कालान्तराभावात्तत्रैव श्राद्धं पञ्चमदिने वेति मतद्वयं दर्शादिवदत्रापि द्रष्टव्यम् ।

पक्षश्राद्धकरणेऽपि न नन्दादिषु पिण्डनिषेध इत्याह पराशरमाधवीये कार्ष्णाजिनिः—

" नभस्यस्यापरे पक्षे श्राद्धं कुर्याद्दिने दिने ।
नैव नन्दादि वर्ज्यं स्यान्नैव निन्द्या चतुर्दशी " इति ॥

यत्तु—" प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् "

इति याज्ञवल्कीयं [तत्] पञ्चम्यादिपक्षविषयम् । पृथ्वीचन्द्रोदयमदनपारिजातादिषु चैवम् । निर्णयदीपे तु नन्दादिनिषेधः प्रत्यहभिन्नश्राद्धविषयः । षोडशाहव्यापिश्राद्धप्रयोगैकत्वे तु प्रत्यहं पिण्डदानं कार्यमित्येवोक्तम् । तदयमर्थः संपन्नः—षोडशाहव्यापिश्राद्धैक्ये न पिण्डनिषेधः । मृताहे सकृन्महालयेऽपि । तथा प्रत्यहं श्राद्धभेदेऽपि । व्यतीपातादौ तथा । अन्यत्र मृताहातिक्रमे च पिण्डनिषेध इति । चतुर्दश्यां मृतस्य तु 'श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां समाचरेत्' इतिवचनेन शस्त्रहतस्यैव तत्र श्राद्धनियमेनेतरेषां चतुर्दश्यां श्राद्धनिषेधे सिद्धेऽर्थादमावास्यादिष्वितरेष्वनिषिद्धेषु दिनेष्वनुष्ठानम् । एतच्चापरपक्षप्रयुक्तश्राद्धविषयम् ।

" प्रेतपक्षे चतुर्दश्यामेकोद्दिष्टविधानतः ।
दैवयुक्तं च यच्छ्राद्धं पितृणां दत्तमक्षयम् " ॥

इतिवचनादिति पारिजातः । नवीनास्तु—एतस्य वचनस्यानिर्दिष्टमूलकत्वेनैकोद्दिष्टं देवहीनमित्यादिवचनानां कथमेतेन वचनेन बाध इति चिन्त्यमित्याहुः । पौर्णमास्यां मृतस्य महालयश्राद्धममावास्यायां कर्तव्यमिति कौस्तुभे । तस्या महालयान्तर्गतत्वाभावादिति तदाशयः । न च प्रोष्ठपद्या सह षोडशत्वसंपादनस्य हेमाद्रिणोक्तत्वात्तस्या अपि महालयान्तर्गतत्वमस्तीति वाच्यम् । तस्य पक्षस्यैव विरुद्धत्वेन निर्मूलत्वेन च हेयत्वात् । कथं तर्हि षोडशत्वसंपादनमिति चेत् ।

" अहःषोडशकं यत्तु शुक्लप्रतिपदा सह ।
चन्द्रक्षयाविशेषेण साऽपि दर्शात्मिका स्मृता " ॥

इतिवचनप्रतिपादितशुक्लप्रतिपदेति गृहाण । तिथिवृद्धौ षोडशत्वसंपादनमिति माधवाचार्याः । एतच्च श्राद्धमन्नेनैव कार्यम् ।

तथा च गालवः—" मृताहं च सपिण्डं च गयाश्राद्धं महालयम् ।
आपन्नोऽपि न कुर्वीत श्राद्धमामेन कर्हिचित् " इति ॥

अत्र देवताः संग्रहे—

" तातम्बात्रितयं सपत्नजननी मातामहादित्रयं
सस्त्रि स्त्रीतनयादि तातजननीस्वभ्रातरः सस्त्रियः ।
तातम्बात्मभगिन्यपत्यधवयुग्जायापिता सद्गुरुः
शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे " इति ॥

सस्त्रीतिपाठे मातामहादीनां सपत्नीकानामित्यूहः । तत्स्त्रीति पाठे मातामहीवर्गस्य सर्वं पृथगेव ।

" महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च ।
नवदैवतमत्रेष्टं शेषं पाट्पौरुषं विदुः ॥
ज्ञेयं द्वादशदैवत्यं तीर्थे प्रोष्ठे मघासु च ।
महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च " ॥

इति स्मृतिभ्यां पक्षद्वयस्याप्युक्तत्वात् । अत्र शक्ताशक्तत्वेन देशाचाराद्व्यवस्था ज्ञेया । नवदैवतमिति वचनं पार्वणत्रयमत्रेतिप्रदर्शनार्थं न त्वेकोद्दिष्टनिवर्तकम् । एवं द्वादशदैवत्यमितिवचनमपि । तातजननीस्वभ्रातरस्तत्स्त्रिय इतिपाठे पितृव्यमातृलभ्रातृपत्नीनां पृथग्देवतात्वम् । तत्तदनन्तरं पृथगुल्लेख इति प्रघट्टके । अपत्यधवयुगित्यत्र सापत्यायाः सधवाया इत्युल्लेखः । शिष्टं स्पष्टम् ।

यत्तु—" आषाढ्याः पञ्चमे पक्षे श्राद्धं कुर्याद्दिने दिने ।
उद्दिश्य नवदैवत्यमित्येवं मनुरब्रवीत् ॥
अथैकस्मिन्दिने कुर्यात्सर्वानुद्दिश्य यत्नतः ।
महालयात्मकं श्राद्धं तद्गयासदृशं भवेत् " ॥

इति धर्मप्रवृत्तौ वचनं तन्निर्मूलमेव । महानिबन्धेष्वदर्शनात् ।

महालयेऽनेकब्राह्मणनिमन्त्रणाशक्तस्य विशेषः स्मृत्यन्तरे—

" एकस्मिन्ब्राह्मणे सर्वानाचार्यान्तान्प्रपूजयेत् " इति ।

विधवायास्तु विशेषः संग्रहे—

" चत्वारि पार्वणानीह विधवायाः सदैव हि ।

स्वभर्तृश्वशुरादीनां मातापित्रोस्तथैव च ॥
ततो मातामहानां च श्राद्धदानमुपक्रमेत् " इति ।

इह महालये । सदेत्यनेन सांवत्सरिकव्यतिरिक्ते गयाश्राद्धादावप्येवं पार्वणानि न तु स्वभर्त्राद्युद्देश्यकपार्वणमात्रमिति बोध्यते ।

तथा—" श्वश्रूणां च विशेषेण मातामह्यास्तथैव च " इति ।

अशक्तौ तु स्मृतिरत्नावल्याम्—

" स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च ।
विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता " इति ॥

एतच्च विधवाकर्तृकं श्राद्धमपुत्रत्वे ।

" अपुत्रा पुत्रवत्पत्नी पुत्रकर्म समाचरेत् " इतिवचनात् ।

अत्र स्वपितुरपुत्रपौत्रवत्त्व एव तत्पार्वणमिति दिवोदासीये । भर्तुर्मातामहपार्वणेन सह षड्दैवत्यम् । अपुत्रा पुत्रवत्पत्नीतिवचनस्य वनिताप्रकरणानुरोधाच्छ्राद्धक्रियातुल्यतोक्त्या पुत्रकर्तृकश्राद्धवदेव मातामहादीनामपि प्रापणात् । अत्रोद्देश्यत्वं पित्रादीनां तन्मातामहादीनां च पितृत्वादिना । यं प्रति येन रूपेण संबन्धिता तां(तं) प्रति तेनैव रूपेणोद्देश्यत्वादिति केचित् । अन्ये तु—अपुत्रा पुत्रवदितिवचनं दर्शश्राद्धादिषु पुत्रकर्तृकश्राद्धदेवतामात्रप्रापणाना(र्थ)म् । उद्देश्यता तु स्वस्वसंबन्धानुसारेणैवेत्याहुः । वस्तुतस्तु स्वभर्तृश्वशुरादीनामितिबहुवचनाद्भर्तृमातामहादीनां प्राप्तिः स्वस्वसंबन्धानुसारेणोद्देश्यता चेति द्रष्टव्यम् । स्वस्य भर्ता च श्वशुरश्च तावादी येषां त इति विग्रहः । अस्मिन्कल्पे भर्ता श्वशुरो भर्तुः पिता । आदिपदग्राह्यो भर्तुः पितामह इत्येवं पार्वणम् । बहुवचनग्राह्या भर्तुर्मातामहादयः । स्वस्य भर्ता श्वशुरादयश्चेति विग्रहे भर्तुरेकोद्दिष्टत्वापत्तिर्द्रष्टव्या । न च सांवत्सरिकादौ भर्तुः पक्ष एकोद्दिष्टत्वमपि दृष्टमस्ति तद्वदत्राप्यस्त्विति वाच्यम् । पार्वणधर्मविरोधेन सांवत्सरिकवदेकोद्दिष्टत्वासंभवात् । न च महालये यथा विरुद्धयोरप्येकत्रानुष्ठानं तथाऽत्राप्यस्त्विति वाच्यम् । महालये च स्पष्टं वचनाभावात् । अस्तु वा पक्ष एकोद्दिष्टत्वमपि सांवत्सरिकवदिति यद्यभ्युपेयते तदा भर्तुः पितृपितामहप्रपितामहानां देवतात्वं द्रष्टव्यम् । अस्मिन्नेव कल्पे श्वश्र्वादित्रय्या उद्देश्यत्वं संभवति । पूर्वत्र श्वश्रूणामितिबहुवचनमपि संगच्छते । पूर्वकल्पे द्विवचने बहुवचनं द्रष्टव्यम् । वस्तुतस्तु

" श्वश्रूणां च विशेषेण मातामह्यास्तथैव च " ।

इतिवचनस्य समूलत्वं मृग्यम् । स्वमात्रादिपार्वणचतुष्टयमपुत्रविषयकमिति

नवीनाः। पितृव्याद्येकोद्दिष्टानां तु पुत्रवत्तस्या अपीति प्रघट्टके। विधवा स्वयं संकल्पं कृत्वाऽन्यद्ब्राह्मणद्वारा कारयेदिति प्रयोगपारिजाते। अत्र धूरिलोचनौ विश्वे देवाः।

"अपि कन्यागते श्राद्धे काम्ये च धूरिलोचनौ"।

इत्यादित्यपुराणात्।

अत्र कन्यागत इत्युपलक्षणम्।

"आदौ मध्ये तथाऽप्यन्ते यत्र कन्यां रविर्व्रजेत्।
स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रति" इतिवचनात्॥

तथा च कन्यागते कन्याग[त]त्वोपलक्षिते भाद्रपदापरपक्षश्राद्धे धूरिलोचनावित्यर्थ इति हेमाद्रिः। अन्ये तु कन्यागत इत्यनेन कन्यासंक्रमणस्य साक्षान्निमित्तत्वबोधनेनोपलक्षणत्वे प्रमाणाभावात्कन्यासंक्रान्तिनिमित्तके श्राद्ध एव धूरिलोचनौ न महालयश्राद्धे। तत्र तु पुरूरवार्द्रवावेवेति [आहुः]। कन्यासंक्रान्तिनिमित्तकं श्राद्धं तु प्रोष्ठपदीश्राद्धम्।

"नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ"।

इतिवचनेन कन्याराशिनिमित्तत्वस्यैव बोधनात्। इदं च महालयश्राद्धं नित्यं काम्यं च।

"वृश्चिके समनुप्राप्ते पितरो दैवतैः सह।
निश्वस्य प्रतिगच्छन्ति शापं दत्त्वा सुदारुणम्"॥

इतिकार्ष्णाजिनिवचनेनाकरणे प्रत्यवायस्योक्तत्वात्।

"पुत्रानायुस्तथाऽऽरोग्यमैश्वर्यमतुलं तथा।
प्राप्नोति पञ्चमे कृत्वा श्राद्धं कामांश्च पुष्कलान्"॥

इति तत्रैव जाबालिवचने फलश्रवणाच्च। पञ्चमे पञ्चमे पक्षे महालय इत्यर्थः। एतस्य पञ्चमत्वं तु—

"आषाढ्याः पञ्चमः पक्षः स महालयसंज्ञकः"

इतिवचनसिद्धम्। महालयस्य नित्यतयाऽनुष्ठाने तु पुरूरवार्द्रवावेव। काम्यतयाऽनुष्ठाने तु काम्ये तु धुरिलोचनावितिशास्त्राद्धुरिलोचनावेवेति।

आश्वलायनः—"अन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम्।
पित्रादि मातृमध्यं च ततो मातामहान्तकम्" इति॥

ब्रह्माण्डेऽपि—"पितॄणां प्रथमं दद्यान्मातॄणां तदनन्तरम्।
ततो मातामहानां च आन्वष्टक्ये क्रमः स्मृतः" इति॥

हेमाद्रौ छागलेयः—

" केवलास्तु क्षये कार्या वृद्धावादौ प्रकीर्तिताः ।
अन्वष्टकासु मध्यस्था नान्ते कार्यास्तु मातरः " इति ॥

दीपिकायां तु मातृयजनं त्वन्वष्टकास्वादित इत्युक्तम् ।

हेमाद्रौ ब्राह्मेऽपि—" अन्वष्टकासु क्रमशो मातृपूर्वं तदिष्यते " इति ।

अत्र शाखाभेदेन व्यवस्थेति पृथ्वीचन्द्रोदये । जीवत्पितृकविषयमिति निर्णयदीपे । एतच्च नित्यम् ।

" अष्टकान्वष्टकास्तिस्रस्तथैव च नृपोत्तम ।
एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः ॥
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते " ॥

इति हेमाद्रौ विष्णुधर्मोत्तरात् । अत एवेदं स्वतन्त्रं प्रधानं नाष्टकाङ्गं, पूर्वेद्युःश्राद्धं त्वष्टकाङ्गमेव, फलवत्संनिधावफलं तदङ्गमिति न्यायादिति केचित् । अन्ये तु—अन्वष्टकातः पृथगेवेदं मातुः श्राद्धमिति परास्तं, लाघवेन मूलैक्यादन्वष्टकापदाविशेषाच्च । तेनान्यत्रान्वष्टकाश्राद्धस्याङ्गस्याप्यत्र प्रधानत्वं वचनादित्याहुः । इयमेवान्वष्टकाऽक्षय्यनवमी सौभाग्यनवमीति व्यवह्रियते पामरैः । न तत्र कर्मभेदे प्रमाणं किंचिदस्ति । अजीवत्पितृकेण शक्तौ सत्यामेतस्यामष्टम्यामष्टकाश्राद्धमपि कर्तव्यम् । एतस्या अष्टम्या अष्टकात्वं गौतमेनोक्तम्—तथा महालयाष्टमीति । स्मृत्यन्तरेऽपि—

" प्रोष्ठपद्यष्टका भूयः पितृलोके भविष्यति " इति ।

एतदङ्गभूतत्वात्पूर्वेद्युःश्राद्धान्वष्टकाश्राद्धेऽप्येतस्या अन्वष्टकायाः प्रधानीभूतान्वष्टकानुष्ठानेन प्रसङ्गसिद्धिरिति द्रष्टव्यम् । अत्रैव नवम्यां मृतमातृकस्य जीवत्पितृकस्य श्राद्धमावश्यकम् । तदुक्तं निर्णयामृते मैत्रायणीयपरिशिष्टे—

" आन्वष्टक्यं गयाप्राप्तौ मत्यां यच्च मृतेऽहनि ।
मातुः श्राद्धं पृथक्कुर्यात्पितर्यपि च जीवति " इति ॥

अग्निपुराणे—" अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि ।
अत्र मातुः पृथक्श्राद्धमन्यत्र पतिना सह " इति ॥

यथा जीवत्पितृकस्य सर्वा अन्वष्टका आवश्यकास्तथेयमप्यावश्यकी—

" सर्वासामेव मातॄणां श्राद्धं कन्यागते रवौ ।
नवम्यां हि प्रदातव्यं ब्रह्मलब्धवरा यतः " ॥

इति हेमाद्रौ सुमन्तूक्तेः । अत्र सर्वासामित्युक्तेः स्वमातरि जीवन्त्यामपि

सपत्नमातृभ्यो दद्यात् । तन्मरणे सति तस्यै ताभ्यश्च दद्यात् । तच्च पार्वणमेव कुर्यात् ।

“ आन्वष्टक्यं च यन्मातुर्गयाश्राद्धं महालयम् ।
पितृपत्नीषु च श्राद्ध सर्वं पार्वणवद्भवेत् ” ॥

इति बृहन्मनूक्तेरिति श्राद्धदीपकलिकायाम् । अन्ये तु—पितृव्यभ्रातृमातृणामितिवाक्यादेकोद्दिष्टमेव न पार्वणमित्याहुः ।

तत्र विशेषः—“ अनेका मातरो यस्य श्राद्धे चाऽऽपरपक्षिके ।
अर्घ्यदानं पृथक्कुर्यात्पिण्डमेकं तु निर्वपेत् ” इति ॥

यन्मातुर्जनन्या आन्वष्टक्यं गयाश्राद्धं महालयश्राद्धं च पार्वणवद्यथा तथा पितृपत्नीषु जननीव्यतिरिक्तासु सर्वास्वपि श्राद्धमान्वष्टक्यादि तत्सर्वं पार्वणवदेव भवेदिति वाक्यार्थः । ‘ पितृव्यभ्रातृमातृणामेकोद्दिष्टं न पार्वणम् ’ इतिवचनेन प्राप्तस्य पार्वणधर्मस्य बाधोऽनेन क्रियते । पितृपत्नीषु पितृपत्नीनामित्यर्थः । श्राद्ध इत्यत्र तीर्थे इति कुत्रचित्पाठः । पिण्डो(ण्डं) ब्राह्मणाय देयं भोज्यं बर्हिषि प्रदेयं च, एकं तु निर्वपेत्, मात्रो(त्रु)द्देशेनैकमेव दद्यात्, द्विवचनादिनाऽनेकमात्रुद्देशेन दद्यादित्यर्थः । तत्र प्रकारः—अस्मिन्पक्षे सपत्नमातॄणां मात्रनन्तरमेव निर्देशः संकल्पे क्षणादिषु च । मातृपार्वणेऽनेकब्राह्मणपक्ष—अस्मन्मात्रोरमुकगोत्रयोरमुकामुकदयोर्वसुरूपयोरित्यूहः । तथैवाऽऽसनाक्षय्ययोः । गन्धादिप्रदानेषु अस्मन्मातरावमुकामुकदे अमुकगोत्रे वसुरूपे एष युवां गन्ध इत्यादि । अन्नदाने मातृभ्यां दाभ्यां गोत्राभ्यां वसुरूपाभ्यामिदमन्नमित्यूहो मातृद्वित्वे । बहुत्वे तु अस्मन्मातॄणां दानां गोत्राणां वसुरूपाणां, मातरो दाः, गोत्राः, वसुरूपाः । मातृभ्यः, दाभ्यः, गोत्राभ्यः, वसुरूपाभ्य इत्यूहः । एवं पिण्डदानेऽपि । आन्वष्टक्यं च यन्मातुरित्यनन्तरोदाहृतबृहन्मनूक्त्या महालये यदि सपत्नमातॄणां पार्वणश्राद्धं क्रियते तदाऽप्येवमेव । एतच्चाशक्तिविषयम् । शक्तस्तु—पृथक्ब्राह्मणभोजनं पृथक्पिण्डदानं च कुर्यादिति प्रघट्टके । अत्र सुवासिनीभोजनमुक्तं मार्कण्डेयपुराणे—

“ मातुः श्राद्धे तु संप्राप्ते ब्राह्मणैः सह भोजनम् ।
सुवासिनीभ्यो दातव्यमिति शातातपोऽब्रवीत् ॥
भर्तुरग्रे मृता नारी सह दाहेन वा मृता ।
तस्याः स्थाने नियुञ्जीत विप्रैः सह सुवासिनीम् ” इति ॥

१ क. °णवच्छ्राद्धं ।

एतच्च सांवत्सरिकादिष्वपि, मातुः श्राद्ध इति सामान्यतः श्रवणादिति केचित्। अत्र भर्तृमरणोत्तरमिदं न कार्यमिति केचिदाहुः।

पठन्ति च—'श्राद्धं नवम्यां कुर्वीत मृते भर्तरि लुप्यते' इति।

अन्ये तु—एतस्य वचनस्य निर्मूलत्वात्कार्यमेवेत्याहुः।

श्राद्धदीपकलिकायां ब्राह्मे—

"पितृमातृकुलोत्पन्ना याः काश्चित्तु मृताः स्त्रियः।
श्राद्धार्हास्तास्तु विज्ञेयाः श्राद्धं तेषां(तासां) प्रदीयते" इति॥

अत्र देशाचाराद्व्यवस्था। इदं चानुपनीतेनापि कार्यम्। तदुक्तं शूलपाणौ मात्स्ये—अमावास्याऽष्टका कृष्णपक्ष इत्यभिधाय—

"एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु।
श्राद्धं साधारणं नाम सर्वकामफलप्रदम्॥
भार्याविरहितोऽप्येतत्प्रवासस्थोऽपि नित्यशः" इति।

जीवत्पितृकेणाप्येतच्छ्राद्धं मातृक्षयाहश्राद्धवदविशेषात्सपिण्डमेव कार्यम्।

यत्तु—"मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः।
न जीवत्पितृकः कुर्याद्गुर्विणीपतिरेव च"॥

इति दक्षवाक्यत्वेन केनचिल्लिखितं तद्दक्षस्मृतौ निबन्धान्तरे चादर्शनादनाकरमिति केचित्। मात्रतिरिक्तपरमित्यन्ये। 'अन्वष्टकासु च स्त्रीणां श्राद्धं कार्यं तथैव च' इत्युपक्रम्य 'पिण्डनिर्वपणं कार्यं तस्यामपि नृपत्तम' इतिवचनं श्राद्धविधिना पिण्डदाने प्राप्ते पुनर्वचनं यस्य जीवत्पितृकत्वगुर्विणीपतित्वादिना पिण्डदानं निषिद्धं तस्यापि प्राप्त्यर्थमिति नवीनाः।

संन्यस्तपितृको महालयश्राद्धं द्वादश्यामेव कुर्यात्।

तदुक्तं वायवीये—"संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि।
महालयं तु यच्छ्राद्धं द्वादश्यामेव तद्भवेत्" इति॥

स्मृत्यर्थसारे—"एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रिया[म्]।
न कुर्यात्पार्वणादन्यद्ब्रह्मीभूताय भिक्षवे॥
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते।
एकादशाहे संप्राप्ते कर्तव्यं पार्वणं ततः" इति॥

वपनमपि न कर्तव्यमिति कैश्चिदुक्तं तन्निर्मूलम्। परमहंसस्य वार्षिकादिकमपि न कार्यमिति शूलपाण्यादयः।

बौधायनः—" ब्रह्मनिष्ठे च संन्यस्ते पितर्युपरते श्रुते ।
सपिण्डीकरणं नैव कर्तव्यं तु सुतादिभिः ॥
सद्यः संन्यसनादेव प्रेतत्वं नैव जायते ।
एकोद्दिष्टं न कर्तव्यं संन्यस्तानां कदाचन " इति ॥

शौनकः—" ब्रह्मीभूते च संन्यस्ते ताते च निधनं गते ।
न तस्य सूतकं कार्यं पश्च(न च) पिण्डोदकक्रिया ॥
ब्रह्मीभूतस्यात्र पितुः कर्तव्यं नैव विद्यते ।
दशाहे तु व्यतिक्रान्ते पुत्रः कुर्यात्तु पार्वणम् " इति ॥

तथा—" संनिकृष्टो यदा पुत्रो यदि स्वपितृनाशनम् ।
कुर्यात्तु वपनस्नाने नोदकं नैव च क्रिया " इति ॥

सपिण्डविषय आहोशना—
" यतौ मृते च वपनं नोदकं नैव च क्रिया ।
नाऽऽशौचं नैव शोकं च(कश्च) बन्धूनां गोत्रिणामपि " इति ॥

अनुभाविनां तु परिवापनमित्यनेन सपिण्डानामपि वपनं प्राप्तमनेन निषिध्यते । अनुभाविनः कनिष्ठाः सपिण्डाः ।

अत्र मघात्रयोदश्यां श्राद्धमुक्तं संग्रहे—
" विभक्ता वाऽविभक्ता वा कुर्युः श्राद्धं पृथक्सुताः ।
मघासु तु ततोऽन्यत्र नाधिकारः पृथग्विना " इति ॥

तुशब्दस्य ततोऽन्यत्रेत्यनन्तरमन्वयः । पृथग्विना विभक्तं विना मघाश्राद्धव्यतिरिक्तश्राद्धेषु पृथगधिकारो नास्तीत्यर्थः ।

" ( + श्राद्धं न चैकवर्गस्य त्रयोदश्यामुपक्रमेत् ।
न तृप्तास्तत्र ये यस्य प्रजा हिंसन्ति तस्य ते " इति ॥ )

चतुर्दश्यामपमृत्युहतानामेकोद्दिष्टं तच्च दैवयुक्तं कार्यम् ।
तदुक्तं स्मृत्यन्तरे—" प्रेतपक्षे चतुर्दश्यामेकोद्दिष्टविधानतः ।
दैवयुक्तं च तच्छ्राद्धं दत्तं भवति चाक्षयम् " इति केचित् ।

अन्ये तु—अनिर्दिष्टमूलकेन वचनेन ' एकोद्दिष्टं दैवहीनम् ' इत्यादिवचनानां बाधः कथमिति चिन्त्यमित्याहुः । एतन्मते दैवाः सन्त्येवात्र ।

---

+ धनुश्चिह्नान्तर्गतं ङ. पुस्तके नास्ति ।

१ च °तृशासन° । २ क. ख. च. °थक्पृथक् ' । ३ ङ. °ति । पृ । ४ क. ख. च. °थरभवेत् । अविभक्तानामपि म° ।

अपमृत्युनिमित्तान्युक्तानि प्रचेतसा—

" वृक्षारोहणलोहाद्यैर्विद्युज्ज्वालाविषाग्निभिः ।
नखिदंष्ट्रिविपन्नानां तेषां शस्ता चतुर्दशी " इति ॥

मरीचिरपि—" विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनाम् ।
चतुर्दश्यां क्रिया कार्या अन्येषां तु विगर्हिता " इति ॥

एतच्च युद्धव्यतिरिक्तविषयम् ।

" चौरादिभिः शस्त्रहते चतुर्दश्यां क्रिया भवेत् ।
युद्धे शस्त्रहते तु स्यात्स्वस्वकाले परिक्रिया "

इति स्मृत्यन्तरवचनात् । पितामहोऽपि शस्त्रहतश्चेदेकोद्दिष्टद्वयं कार्यम् । तदुक्तं स्मृत्यन्तरे—" एकस्मिन्द्वयोर्वैकोद्दिष्टम् " इति ।

त्रिषु शस्त्रहतेषु पार्वणमेव ।

" पित्रादयस्त्रयो यस्य मृताः शस्त्रैर्यदि क्रमात् ।
स भूते पार्वणं कुर्यादाब्दिकादि पृथक्पृथक् " इति पराशरोक्तेः ॥

यस्त्वत्रैव शस्त्रादिना हतस्तस्य वार्षिकमेव न तु श्राद्धद्वयं प्रसङ्गसिद्धेरिति पृथ्वीचन्द्रोदये । तच्च पार्वणविधिनैकोद्दिष्टविधिना वेत्यपि तत्रैव । सर्वतृप्त्यर्थं महालयश्राद्धममावास्यायां पृथक्कर्तव्यम् । महालये चतुर्दश्यां श्राद्धं लुप्तं चेद्वृश्चिकदर्शनपर्यन्तं यस्मिन्कस्मिंश्चिदनिषिद्धदिन एकोद्दिष्टविधिनैव कार्यं यथाप्राप्त एव गौणकालविधानात् । एतेन टोडरानन्दीया पार्वणोक्तिरपास्ता । सकृन्महालयश्राद्धं तु आहिताग्निना दर्श एव कार्यम् ।

तदुक्तं संग्रहे—" न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः " इति ।

आश्विनशुक्लप्रतिपदि दौहित्रो मातामहश्राद्धं कुर्यात् । उक्तं च हेमाद्रौ स्मृत्यन्तरे—

" जातमात्रोऽपि दौहित्रो विद्यमाने च मातुले ।
कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते " इति ॥

इदं च संगवव्यापिन्यां कार्यम् । उक्तं च निर्णयदीपे—

" प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणम् ।
श्राद्धं मातामहं कुर्यात्सपिता संगवे सिते " इति ॥

अत्र सपितेति विशेषणाज्जीवत्पितृकोऽप्यधिकारी[२] । तत्र जीवत्पितृकः पिण्डरहितं कुर्यात् ।

---

१ ङ. 'तृक एवाधि' । २ ङ. 'री । अत एव पि' ।

" मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः ।
न जीवत्पितृकः कुर्याद्गुर्विणीपतिरेव च " ॥

इति दक्षवचनादान्वष्टक्यवद्विशेषवचनाभावाच्चेति । कैश्चित्तु दौहित्रप्रतिपच्छ्राद्धं सपिण्डमेव मुण्डनं पिण्डदानं चेति दक्षवाक्यस्य निर्मूलत्वादित्युक्तम् । संगवव्यापित्वबोधकवचसोऽपि निर्मूलत्वमाहुः केचित् । तथा तीर्थेऽपि श्राद्धं कार्यम् । तदुक्तं पाद्मे—

" तीर्थायतनगोष्ठेषु द्वीपोद्यानगृहेषु च ।
विविक्तेषूपलिप्तेषु श्राद्धं देयं विजानता " इति ॥

मात्स्ये तीर्थं पुष्करकं नामेत्यादिना तीर्थान्यनुक्रम्योक्तम्—

" एषु तीर्थेषु यच्छ्राद्धं तत्कोटिगुणमिष्यते ।
यस्मात्तस्मात्प्रयत्नेन तीर्थे श्राद्धं समाचरेत् " इति ॥

तत्र विशेषो देवीपुराणे—

" अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम् ।
तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत् " इति ।

तथा—" नाऽऽवाहनं न दिग्बन्धो न दोषो दृष्टिसंभवः ।
सकारुण्यं च कर्तव्यं तीर्थश्राद्धं विचक्षणैः " इति ॥

बोपदेवकृतसंग्रहेऽग्नौकरणस्यापि निषेधः कृतः—

" तैर्थेऽर्घ्यावाहनाग्नौकरणविकिरदृग्दोषदिग्बन्धतृप्ति-
प्रश्नाङ्गुष्ठावगाहा न च भवति विसर्गः " इति ।

स्मृतिरत्नावल्यामप्युक्तम्—" तीर्थश्राद्धेऽग्नौकरणमपि न " इति ।

प्रयोगपारिजाते तु—अर्घ्यमावाहनं चैवेत्यस्मिन्वाक्ये पञ्चानामेव निषेधेनाग्नौकरणस्यानिषेधात्तीर्थश्राद्धेऽग्नौकरणं कार्यमेवेत्युक्तम् । यदा तीर्थसमीपे कुशबटुषु श्राद्धं क्रियते तदा तीर्थजल एव होमः । अन्यथा तु पाणावेवेत्यपि तत्रोक्तम् । तीर्थश्राद्धेऽग्नौकरणपक्षेऽग्नावेव होमो न जल इति शिष्टाः ।

पिण्डद्रव्यमुक्तं पाद्मे—

" तीर्थे श्राद्धं प्रकुर्वीत पक्वान्नेन विशेषतः ।
आमान्नेन हिरण्येन कन्दमूलफलैरपि " इति ॥

देवीपुराणब्राह्मयोः—

" सक्तुभिः पिण्डदानं च संयावैः पायसेन वा ।
कर्तव्यमृषिभिः प्रोक्तं पिण्याकेन गुडेन वा " इति ॥

देवलः—" न चात्र श्येनकाकादीन्पक्षिणः प्रतिषेधयेत् ।
तद्रूपाः पितरश्चैव समायान्तीति वै श्रुतिः " इति ॥

भविष्ये—" देवाश्च पितरो यस्माद्गङ्गायां तु सदा स्थिताः ।
आवाहनं विसृष्टिश्च तत्र तेषां न विद्यते " इति ॥

ब्राह्मणपरीक्षानिषेधोऽत्रोक्तो मरीचिना—

" न ब्राह्मणान्परीक्षेत तीर्थश्राद्धे सदा बुधः " इति ॥

तत्र पिण्डास्तु जल एव प्रक्षेप्याः ।

" तीर्थश्राद्धे सदा पिण्डान्क्षिपेत्तीर्थे समाहितः ।
दक्षिणाभिमुखो भूत्वा पित्र्या दिक्सा प्रकीर्तिता " ॥

इतिवचनादिति प्रघट्टके । एतच्चाधिमासेऽपि कार्यम् ।

" मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च " इति चन्द्रिकोक्तेः ।

तीर्थयात्रार्थं गच्छन्गमनारम्भे यात्रोत्तरं गृहप्रवेशे च श्राद्धं कुर्यात् ।

तदुक्तं स्मृत्यन्तरे—" गच्छन्देशान्तरं यस्तु श्राद्धं कुर्यात्तु सर्पिषा ।
यात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः " इति ॥

अत्र सर्पिषेति सर्पिर्ग्रहणात्सर्पिष एव प्राधान्यम् । अन्नभक्ष्यादिकं तु व्यञ्जनार्थत्वेनेति विशेषः ।

एतच्च पारणादिन एव ।

" उपोष्य रजनीमेकां प्रातः श्राद्धं विधाय च ।
गणेशं ब्राह्मणान्नत्वा भुक्त्वा प्रस्थितवान्सुधीः " इतिस्कान्दात् ।

वायवीये—" उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ।
विधाय कार्पटीवेषं ग्रामं कृत्वा प्रदक्षिणम्
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ।
ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः " इति ॥

श्राद्धशेषस्य भोजनं घृतस्य भोजनम् । तच्च क्रोशमध्य एव । श्राद्धोत्तरं क्रोशाधिकगमननिषेधात् । गयायामेवैतन्नान्यत्रेति केचित् । हेमाद्रिस्तु—गयायां श्राद्धदिन एव प्रस्थानं, तीर्थान्तरे तु श्राद्धोत्तरदिन इत्याह । यात्रामध्य आशौचे रजसि वा शुद्धिपर्यन्तं स्थित्वा तदन्ते गच्छेत् । मार्गवैषम्ये त्वदोषः । यात्रां गच्छता मध्ये तीर्थान्तरप्राप्तौ श्राद्धादि कार्यमेव । यो हि वाणिज्याद्यर्थं गच्छति तेन मुण्डनोपवासादि न कार्यमिति प्रयागसेतौ । तत्रापि मुण्डनोपवासश्राद्धादि कार्यमेवेति युक्तम् ।

"अर्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति" इति ब्राह्मोक्तेः ।

काशीखण्डादिषु—"अकालेऽप्यथवा काले तीर्थे श्राद्धं च तर्पणम् ।
अविलम्बेन कर्तव्यं नैव विघ्नं समाचरेत्" इति ॥

मात्स्ये पितॄणां तर्पणमिति तुर्यः पादः । तत्र देवता महालयनिर्णये प्रागुक्ताः ।

शङ्खदेवलौ—"तीर्थद्रव्योपपत्तौ च न कालमवधारयेत् ।
सत्पात्रब्राह्मणं प्राप्य सद्यः श्राद्धं समाचरेत्" इति ॥

हारीतः—"दिवा वा यदि वा रात्रौ भुङ्क्ते चोपोषितोऽपि वा ।
न कालनियमस्तत्र गङ्गां प्राप्य सरिद्वराम्" इति ॥

भारते—"भुक्तो वाऽप्यथवाऽभुक्तो रात्रौ वा यदि वा दिवा ।
पर्वकालेऽथवा काले शुचिर्वाऽप्यथवाऽशुचिः ॥
यदैव दृश्यते तत्र नदी चित्रा यथा प्रिया ।
प्रमाणं दर्शनं तस्मान्न कालस्तत्र कारणम्" इति ॥

एतदाशौचेऽपि कार्यम् ।

"विवाहयज्ञदुर्गेषु यात्रायां तीर्थकर्मणि ।
न तथा सूतकं तद्वत्कर्म यज्ञादि कारयेत्" इतिपैठीनसिस्मृतेः ।

तदानीमकरणे त्वाशौचान्त एव कुर्यात् । प्रभासखण्डे—

"न वारो न च नक्षत्रं न कालस्तत्र कारणम् ।
यदैव दृश्यते तीर्थं तदा पर्वसहस्रकम्" इति ॥

एतच्च मलमासेऽपि कार्यम् ।

"नित्यनैमित्तिके कुर्यात्प्रयतः सन्मलिम्लुचे ।
तीर्थश्राद्धं गजच्छायां प्रेतश्राद्धं तथैव च" इतिबृहस्पतिवचनात् ।

एतच्चाशौचे कृतभोजनस्य रात्रौ वा स्नानश्राद्धादिकमाकस्मिकतीर्थप्राप्तावामहेमश्राद्धविषयं ग्रहणादिवत् । न तु बुद्धिपूर्वमाशौचादौ तीर्थप्राप्तिः कार्या । मलमासे तु मासद्वये तीर्थश्राद्धं कार्यमिति चन्द्रिकायाम् ।

जीवत्पितृकेणाप्येतत्कार्यम् ।

"महानदीषु सर्वासु तीर्थेषु च गयामृते ।
जीवत्पिताऽपि कुर्वीत श्राद्धं पार्वणधर्मवत्" इति परिशिष्टोक्तेः ।

गयामृत इति मातृव्यतिरिक्तविषयम् । आन्वष्टक्यगयाप्राप्तावित्यनन्तरोदाहृतपरिशिष्टवचनात् ।

गयाप्राप्तौ प्रासङ्गिकम् ।

" गयां प्रसङ्गतो गत्वा मातुः श्राद्धं समाचरेत् " इतिवचनात् ।

तेन मृतमातृको गयायां तत्पार्वणमात्रं कुर्यात् । तच्च फल्गुविष्णुपदाक्षय्य-वटेष्विति केचित् । आद्यान्त्ये एवेत्यन्ये । मध्यमान्त्ये इत्यपरे । संकोचे प्रमाणाभावात्तत्र तु श्राद्धानि सर्वाणि कार्याणीति युक्तमिति सिन्धौ । तीर्थ-श्राद्धादि विधवयाऽपुत्रया कार्यं न सपुत्रया ।

" सपुत्रया न कर्तव्यं भर्तुः श्राद्धं कदाचन " इति स्मृतेः ।

अनुपनीतेनापि कार्यम् ।

" एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु " ।

इति प्राप्ततीर्थश्राद्धमुपक्रम्योक्तेः । जीवत्पित्राऽपि कर्तव्यम् ।

" उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः " इति ॥

श्राद्धविधिस्तु पूर्वोक्ततीर्थश्राद्धविधिवदिति ।

तथा कालविशेषेऽपि श्राद्धं कार्यमित्याह याज्ञवल्क्यः—

" अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसंपत्तिर्विषुवत्सूर्यसंक्रमः ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः " इति ॥

द्रव्यं पायसादि । ब्राह्मणो वक्ष्यमाणलक्षणः । तयोः संपत्ती इति द्विवच-नान्तः पाठ इति केचित् । एकवचनान्तः पाठः । द्रव्यब्राह्मणसंपत्तिर्यस्मि-न्काल इति बहुव्रीहिरिति माधवस्मृतिचन्द्रिकाकारौ । द्रव्यमित्यसमस्तमिति विज्ञानेश्वरः ।

तथाऽन्यत्रापि—" आषाढ्यामथ कार्तिक्यां माघ्यां मन्वन्तरादिषु ।
युगादिषु च दुःस्वप्ने जन्मर्क्षे ग्रहपीडने ॥
प्रोष्ठपद्यसिते पक्षे श्राद्धं कुर्यात्प्रयत्नतः " इति ।

अयनद्वयं मकरकर्कसंक्रमौ । विषुवत्तुलामेषसंक्रमौ । सूर्यसंक्रम इत्यनेनैव सिद्धेऽत्र श्राद्धमशक्तेनापि सर्वथा कार्यमितिप्रदर्शनार्थमयनविषुवयोः पृथङ्नि-र्देशः । व्यतीपातो योगेषु प्रसिद्धः । तिथिनक्षत्रविशेषप्रयुक्तो वा ।

एतल्लक्षणं तु स्मृतिचन्द्रिकायां वृद्धमनुराह—

" श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः ।
यद्यमा रविवारेण व्यतीपातः स उच्यते " इति ॥

नागदैवतमाश्लेषा । मस्तकं मृगशिरः । यद्यमावास्या रविवारेण श्रवणाद्यन्यतमनक्षत्रेणैव वा युक्ता स व्यतीपात इत्यर्थः । श्रवणादिपञ्चानां चतुर्थपाद इति हेमाद्रौ । शास्त्रान्तरेऽपि—

" पञ्चाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद्यदि शुक्लपक्षे ।
पाशाभिधाना करभेण युक्ता तिथिर्व्यतीपात इतीह योगः " इति ॥

पञ्चाननः सिंहः । पाशाभिधाना द्वादशी । करभं हस्तः ।

गजच्छाया त्वपरार्के वायुपुराणे—

" हंसे हंसस्थिते या तु मघा शुक्ला त्रयोदशी ।
तिथिर्वैवस्वती नाम सा छाया कुञ्जरस्य तु " इति ।

तथा—" हंसे हंसस्थिते या तु अमावास्या करान्विता ।
सा ज्ञेया कुञ्जरच्छाया इति बौधायनोऽब्रवीत् " इति ।

हंसः सूर्यः । तद्दैवतत्वाद्धस्तनक्षत्रमपि । चन्द्रसूर्ययोर्हस्तस्थयोरिति फलितोऽर्थ इति हेमाद्रौ ।

स्कान्दे—" यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
तिथिर्वैवस्वती नाम गजच्छाया प्रकीर्तिता " इति ॥

इन्दुश्चन्द्रः । पितृदैवत्यं मघाः । हंसः सूर्यः । करो हस्तः । वैवस्वती तिथिस्त्रयोदशी । याम्या तिथिर्भवेत्सा हीत्यपि क्वचित्पाठः । याम्या तिथिस्त्रयोदश्येव हस्तिच्छायेति स्मृतिचन्द्रिकायाम् । ' एतद्धचेव पितॄणामयनं यद्धास्तिश्राद्धं तस्माच्छायायां श्राद्धं दद्यात् ' इति पाठकोक्तेः । गजच्छायासु कुर्वीत कर्णव्यजनवीजित इति भारतोक्तेश्च ।

" परमान्नं तु यो दद्यात्पितॄणां मधुना सह ।
छायायां तु गजेन्द्रस्य पूर्वस्यां दक्षिणामुखः " ॥

इति विश्वामित्रोक्तं वा ग्राह्यम् । मन्वन्तरादयो युगादयश्चानध्यायप्रकरण उक्ताः । शुक्लपक्षे पूर्वाह्णव्यापिनी तिथिः कृष्णपक्षे त्वपराह्णव्यापिनीति हेमाद्रिः । कालादर्शे तु—अविशेषेणापराह्णव्यापिन्येव तिथिः । अपराह्णः पितॄणामिति वचनादित्युक्तम् । एतच्चाधिमासेऽपि कार्यम्[1] । मन्वादिकं तैर्थिकं चेत्युदाहृतवचनात् । अपरार्के मात्स्ये—

" अयनद्वितये चैव विषुवद्वितये तथा ।
संक्रान्तिषु च सर्वासु मन्वादिषु युगादिषु ॥
एषु श्राद्धं प्रकुर्वीत पिण्डनिर्वपणादृते " इति ॥

---

१ च. पितॄणा ।

अत्र पिण्डनिषेधात्सांकल्पविधिरेवावतिष्ठते।

अत्र श्राद्धाकरणे प्रायश्चित्तमुक्तमृग्विधाने—

" त्वं भुवः प्रतिमन्त्रं च शतवारं जले जपेत्।
मन्वादयो यदा न्यूनाः कुरुते नैव वा यदि " इति ॥

मन्वादिरित्युपलक्षणं युगादेः। षण्णवतिश्राद्धान्यपि नित्यानि।

तेषां संग्रहः—

" अमा१२मनु१४युग४क्रान्ति१२धृति१३पात१३महालयाः१६।
आन्वष्टक्यं च पूर्वेद्युः षण्णवत्योऽष्टका१२स्तथा " इति ॥

## अथ क्षयाहाज्ञाने निर्णयः।

तत्र मरीचिः—" श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि।
एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः " इति ॥

विशेषत इत्युक्तेः शुक्लैकादश्यामपि।

बृहस्पतिः—" न ज्ञायते मृताहश्चेत्प्रमीते प्रोषिते सति।
मासश्चेत्प्रतिविज्ञातस्तद्दर्शे स्यात्तथाऽऽब्दिकम् ॥
दिनमासौ न विज्ञातौ मरणस्य यदा पुनः।
प्रस्थानमासदिवसौ ग्राह्यौ पूर्वोक्तया दिशा " इति ॥

मदनरत्ने भविष्ये—

" मृताहं यो न जानाति मानवो विनतात्मज।
तेन कार्यममायां तु श्राद्धं सांवत्सरं सदा ॥
दिनमेव तु जानाति मासं नैव तु यो नरः।
मार्गशीर्षेऽथवा भाद्रे माघे वा तद्दिनं भवेत् " इति ॥

निर्णयामृते तु—" यदा मासो न विज्ञातो विज्ञातं दिनमेव च।
तदा त्वाषाढके मासि माघे वा तद्दिनं भवेत् " ॥

इति बृहस्पतिस्मृतावाषाढोऽप्युक्त इत्युक्तम्। कालादर्शेऽपि—

" मासाज्ञाने दिनज्ञाने कार्यमाषाढमाघयोः " इत्युक्तम् ॥

हेमाद्रौ प्रभासखण्डे—

" मृताहं यो न जानाति मासं वाऽपि कथंचन।
तेन कार्यममायां स्याच्छ्राद्धं माघेऽथ मार्गके " इति ॥

भविष्ये तु—" मृतवार्ताश्रुतेर्ग्राह्यौ तौ पूर्वोक्तक्रमेण तु " इत्युक्तम् ॥

पूर्वोक्तेति प्रस्थानदिनाज्ञाने मासज्ञाने च तद्दर्शे मासाज्ञाने दिनज्ञाने च

मार्गशीर्षादावितिवच्छ्रवणदिनमपि ज्ञेयमित्यर्थः । श्रवणदिनमासाज्ञाने माघ-मार्गशीर्षदर्शे कार्यम् । अनन्तरोदाहृतप्रभासखण्डात् ।

इति क्षयाहाज्ञाने निर्णयः ।

## अथ पिण्डप्रमाणम् ।

हेमाद्रावङ्गिराः—" कपित्थबिल्वमात्रान्वा पिण्डान्दद्याद्विधानतः ।
कुक्कुटाण्डप्रमाणान्वाऽऽमलकैर्बदरैः समाः " इति ॥

तत्रैव यमः—" कपित्थस्य प्रमाणेन पिण्डान्दद्यात्समाहितः ।
तत्समं विकिरं दद्यात्पिण्डान्तेषु सुसंयुतः " इति ॥

संग्रहे—" एकोद्दिष्टे सपिण्डे च कपित्थं तु विधीयते ।
नारिकेलप्रमाणं तु प्रत्यब्दे मासिके तथा ॥
तीर्थे दर्शे च संप्राप्ते कुक्कुटाण्डप्रमाणतः ।
महालये गयाश्राद्धे कुर्यादामलकोपमम् " इति ॥

कलिकायां स्मृत्यन्तरे—
" यत्र स्युर्बहवः पिण्डास्तत्र बिल्वफलोपमाः ।
यत्र चैको भवेत्पिण्डस्तत्र खर्जूरसंनिभः " इति ॥

## अथ पिण्डदाननिषिद्धकालः ।

तत्र बृहत्पराशरपुलस्त्यौ—
" युगादिषु मघायां च विषुवेऽप्ययनेऽथवा ।
भरणीषु च कुर्वीत पिण्डनिर्वपणं न हि " इति ॥

कालादर्शे स्मृतिसंग्रहेऽपि—
" विषुवायनसंक्रान्तिमघासु च युगादिषु ।
विहाय पिण्डनिर्वापं श्राद्धं सर्वं समाचरेत् " इति ॥

मात्स्ये—" अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
युगादिषु च सर्वासु पिण्डनिर्वपणादृते " इति ॥

अत्र संक्रातिष्वित्यनेनैवायनविषुवलाभे पुनस्तदभिधानं तत्कालकृतस्य पिण्डदानस्यातिनिन्दितत्वद्योतनार्थमिति हेमाद्र्यादयः ।

ब्रह्मपुराणे—" यदा च श्रोत्रियोऽभ्येति गृहं वेदविदग्निचित् ।
तेनैकेन तु कर्तव्यं श्राद्धं विषुवदुत्तमम् " इति ॥

विषुवतो विषुवच्छ्राद्धादुत्तमं श्रेष्ठं श्रोत्रियागमननिमित्तकमपि श्राद्धम् । विषुवच्छ्राद्धादुत्तममित्युक्त्येदमप्यपिण्डकं भवितुमर्हतीति हेमाद्रिः ।

मघायुक्तां भाद्रपदापरपक्षत्रयोदशीमधिकृत्य देवीपुराणे—

" तत्रापि महती पूजा कर्तव्या पितृदैवते ।
ऋक्षे पिण्डप्रदाने(नं) तु ज्येष्ठपुत्री विवर्जयेत् " इति ॥

तत्रापि भाद्रपदापरपक्षत्रयोदश्यामपि पितृदैवत ऋक्षे मघानक्षत्रे जाते सति महती श्राद्धलक्षणा पितृपूजा कर्तव्या । स तु कर्ता ज्येष्ठपुत्रवाञ्जीवत्प्रथमपुत्रश्चेद्भवेत्तर्हि तत्र श्राद्धं कुर्वन्पिण्डदानं वर्जयेत् । पिण्डरहितं श्राद्धं कुर्यादित्यर्थः । ज्येष्ठपुत्रीत्यनेन मघाकालिकस्य त्रयोदशीकालिकस्योभयसमवायकालिकस्य च पिण्डदानस्य ज्येष्ठपुत्रविनाशकत्वलक्षणो दोषः सूचितः ।

तत्र महाभारतम्—" संक्रान्तावुपवासेन पारणेन च भारत ।
मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति " इति ॥

कृत्यरत्ने गार्ग्यः—" पौर्णमासीषु सर्वासु निषिद्धं पिण्डपातनम् ।
वर्जयित्वा प्रोष्ठपदीं यथा दर्शस्तथैव सा " इति ॥

अस्य समूलत्वं विमृश्यम् ।

" संक्रान्तावुपरागे च पर्वोत्सवमहालये ।
निर्वपेदत्र पिण्डांस्त्रीन् " ॥

इति प्रजापतिवाक्यं तु माधवादिभिरलिखनान्निर्मूलम् । समूलत्वेऽपि न पिण्डदानविधायकं, किंत्वशक्तस्यैकपार्वणश्राद्धविधायकत्वेनोपपादनीयम् ।

स्मृतिरत्नावल्याम्—

" पुत्रे जाते व्यतीपाते ग्रहणे चन्द्रसूर्ययोः
श्राद्धं कुर्यात्प्रयत्नेन पिण्डनिर्वपणादृते " इति ॥

संग्रहे—" नन्दाश्वकामरव्यारभृग्वग्निपितृकालभे ।
गण्डवैधृतिपाते च पिण्डास्त्याज्याः मुमुक्षुभिः " इति ॥

नन्दाः प्रतिपत्षष्ठ्येकादश्यः । अश्वः सप्तमी । कामस्त्रयोदशी । आरो भौमः । भृगुः शुक्रः । अग्निपितृकालभानि कृत्तिकामघाभरण्यः । पातो व्यतीपातः ।

नारदः—" कृत्तिकासु च नन्दासु भृगुवारे त्रिजन्मसु ।
पिण्डदानं न कर्तव्यं कुलक्षयकरं यतः " इति ॥

त्रिजन्मानि जन्मनक्षत्रं दशमैकोनविंशे च नक्षत्रे

यत्तु—" कर्तुश्च पुत्रदाराणां त्रिजन्मर्क्षाणि वर्जयेत् " ।

इति तत्र मूलं चिन्त्यम् । स्मृतिरत्नावल्यां स्मृत्यन्तरे—

"भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम्" इति ॥

वसिष्ठः—"नन्दायां भार्गवदिने चतुर्दश्यां त्रिजन्मसु ।
एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात्" इति ॥

नारदः—"त्रिजन्मसु त्रिपादेषु नन्दासु भृगुवासरे ।
धातृपौष्णभयोः श्राद्धं न कर्तव्यं कुलक्षयात्" इति ॥

कृत्तिकापुनर्वसूत्तरा(र)फल्गुनीविशाखोत्तराषाढापूर्वा(र्व)भाद्रपदास्त्रिपादनक्षत्राणि । धातृनक्षत्रं रोहिणी । पौष्णं रेवती ।

वृद्धगार्ग्यः—"प्राजापत्ये च पौष्णे च पित्र्यर्क्षे भार्गवे तथा ।
यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति" इति ॥

प्राजापत्यं रोहिणी । पौष्णं रेवती । पित्र्यर्क्षं मघाः । अत्र सर्वेऽपि श्राद्धशब्दाः पिण्डदानपराः । अन्यथा विधिवैयर्थ्यापत्तेः । योऽयं च तिथिवारनक्षत्रनिषेधः स तत्तत्प्रयुक्तश्राद्धेष्वेव बोध्यः । न तु तत्र पतितेषु नित्येषु ।

अत एवोक्तं विश्वरूपनिबन्धे—

"तिथिवारप्रयुक्तो यो निषेधः समुदाहृतः ।
स श्राद्धे तन्निमित्ते स्यान्नान्यश्राद्धे कदाचन" इति ।

अत्र तिथिवारग्रहणं नक्षत्रोपलक्षणम् ।

अत्रापवादः प्रयोगपारिजाते हेमाद्रौ च—

"अमापाते भरण्यां च द्वादश्यां पक्षमध्यगे ।
तिथिवारं च नक्षत्रं योगं च न विचारयेत्" इति ॥

इदं निषेधतत्प्रतिप्रसवपर्यालोचनं महालयपक्षान्तर्गततिथौ सकृन्महालयासंभवेन यदा तिथ्यन्तरेऽनुष्ठानं तदैव । महालयान्तर्गतमृततिथौ सकृन्महालयानुष्ठानं मुख्यं तत्र न निषेधः ।

"अशक्तः पक्षमध्ये तु करोत्येकदिने यदि ।
निषिद्धेऽपि दिने कुर्यात्पिण्डदानं यथाविधि" इतिकात्यायनोक्तेः ।

अत एव निषेधप्रयोजकनक्षत्रादियुक्तायामपि तिथौ सकलदेशीयशिष्टानामनुष्ठानम् ।

अत्रिः—"महालये क्षयाहे च दर्शे पुत्रस्य जन्मनि ।
तीर्थेऽपि निर्वपेत्पिण्डान्विवाहादिकेष्वपि" इति ॥

विवाहादिनिमित्तकपिण्डदाननिषेधकालास्तु विवाहोत्तरवर्ज्यपदार्थनिरूपण उक्ताः।

## अथान्वारोहणे निर्णयः।

तत्र लौगाक्षिः—"मृताहनि समासेन पिण्डनिर्वपणं पृथक्।
नवश्राद्धं तु दंपत्योरन्वारोहण एव तु" इति॥

अस्यार्थः—अन्वारोहणेन सहगमनेन निमित्तेन दंपत्योर्मृततिथेरेकत्वे पिण्डनिर्वपणं श्राद्धं समासेन तन्त्रेण। यथा द्विपितृकश्राद्धे द्वयोरेकः पिण्डो विप्रश्च, एवमत्रापि द्वावुद्दिश्यायुग्मब्राह्मणभोजनं पिण्डनिर्वपणमपि द्वावुद्दिश्य। एवमेकदैव श्राद्धद्वयकरणात्समासः। अत्र वैश्वदेविकमपि आरादुपकारकत्वात्तन्त्रेणैव। मृततिथेर्भेदे तु न समासेन श्राद्धं किं तु पृथगेव। वार्षिके समासविधानादन्यत्र सर्वत्र पृथक्त्वे प्राप्ते नवश्राद्धमेव पृथगिति परिसंख्ययाऽन्यत्र पृथगुक्तेष्वपि वार्षिकषोडशश्राद्धतीर्थसपिण्डनान्वष्टक्यादिषु समास एव। समासविधिबलादेव ज्येष्ठपुत्रस्य कर्तृत्वे सपत्नमातुरन्वारोहणे तत्पुत्रे सत्यपि तद्वार्षिकादिकमविभक्तः सापत्नपुत्र एव ज्येष्ठः कुर्यान्नौरसः। वक्ष्यमाणपृथ्वीचन्द्रादिमते तु—औरस एव मातुः पृथक्कुर्यादिति। एवं बह्वीष्वपि मातृषु ज्ञेयम्। यत्तु गार्ग्यः—"एकचित्यां समारूढौ दंपती निधनं गतौ।
पृथक्श्राद्धं तयोः कुर्यादोदनं च पृथक्पृथक्"॥

इति, अत्रत्यश्राद्धशब्दस्य ब्राह्मणभोजनपिण्डदानरूपप्रधानवाचित्वात्तन्मात्रपृथक्त्वोक्त्याऽन्येषामारादुपकारकाङ्गानां(णां) तन्त्रत्वे प्रसिद्ध ओदनस्याप्यारादुपकारकाङ्गत्वात्तन्त्रत्वं सिध्येत्तन्मा भूदित्येतदर्थमोदनस्य पार्थक्यं विधीयते। एकः पृथक्शब्दस्तिथिभेदबोधकः। एतन्नवश्राद्धविषयम्।
यत्तु भृगुः—"या समारोहणं कुर्याद्भर्तुश्चित्यां पतिव्रता।
तां मृताहनि संप्राप्ते पृथक्पिण्डेन योजयेत्॥
प्रत्यब्दं च नवश्राद्धं युगपत्तु समापयेत्"।

इति, तद्येषां वार्षिकमेकोद्दिष्टमुक्तं तद्विषयम्। नवश्राद्धं युगपदिति दर्शे वर्गद्वयवदेकतन्त्रेण न पृथगित्यर्थमाह हेमाद्रिः। एतन्मृततिथेर्भेदविषयमिति पृथ्वीचन्द्रोदयदेवयाज्ञिकनिर्णयामृताद्याः। पराशरमाधवस्तु—गार्ग्यभृगुवचनाभ्यां लौगाक्षिवाक्ये समासवचनेन पाकादितन्त्रैक्यविधानाद्दर्शे वर्गद्वयवत्पृथक्श्राद्धं कुर्यान्नवश्राद्धं च तथेत्याह। पृथ्वीचन्द्रोदयस्तु—द्वयोरेकपिण्डदानं लौगाक्षिवचनसिद्धमापद्विषयं पृथक्पिण्डदानं तु मुख्यः कल्पः।

---

१ ख. ग. 'न्त्रैक्यावि'।

तदाह वृद्धपराशरः—

" आरुह्य भर्तुश्चितिमङ्गना या प्राप्नोति मृत्युं खलु सत्त्वयुक्ता ।
एकादशाहे तु तयोर्विधेयं श्राद्धं पृथक्स्वर्गमपेक्ष्य सद्भिः ॥
एकत्वमिच्छन्ति मतिप्रहीणा एकादशाहादिषु ये तु नार्याः ।
ते स्वर्गमार्गं विनिहत्य कुर्युः स्त्रीसत्त्वघातान्नरकाधिवासम् ॥
भर्त्रा सह मृता या तु नाकलोकमभीप्सती ।
साऽर्हेच्छ्राद्धे पृथक्पिण्डान्नैकत्वं तु स्मृतं तयोः ॥
पृथगेव हि कर्तव्यं श्राद्धमैकादशाहिकम् ।
यानि श्राद्धानि सर्वाणि तान्युक्तानि पृथक्पृथक् " इति ॥

विश्वादर्शेऽपि—" मातुर्गयाष्टकावृद्धिमृताहेषु महालये ।
श्राद्धं कुर्यात्पृथग्दैवतन्त्रं त्वनुगतावपि ॥
एकचित्यां समारुह्य मृतयोरेकवह्निषि ।
पित्रोः पिण्डान्पृथग्दद्यात्पिण्डं त्वापत्सु तत्सुतः " ॥

इत्यत्रिस्मृतेरित्याहुः(ह) ।

यत्तु षट्त्रिंशन्मते—" एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ।
न पृथक्पिण्डदानं तु तस्मात्पत्नीषु विद्यते "

इति, तद्दर्शादिपरम् ।

चन्द्रप्रकाशे तु—" एकचित्यां समारूढौ दंपती प्रमृतौ यदि ।
पृथक्श्राद्धं प्रकुर्वीत पत्युरेव क्षयेऽहनि " इति ॥

सहगमने सर्वत्र श्राद्धार्थमेकः पाक इत्याह मदनरत्ने प्रचेताः—

" एकचित्यां समारूढौ म्रियेते दंपती यदि ।
तन्त्रेण श्रपणं कुर्यात्पृथक्पिण्डं तु निर्वपेत् " इति ॥

एतत्सर्वं तिथिभेदविषयम् ।

तिथ्यैक्ये तु—" एकचित्यधिरोहे तु तिथिरेकैव जायते ।
एकपाकेन पिण्डैक्ये द्वयोर्गृह्णीत नामनी " इति स्मृत्यन्तरात् ।

" अन्वारोहे तु नारीणां पत्युश्चैकोदकक्रिया ।
पिण्डदानक्रिया तद्वच्छ्राद्धं प्रत्याब्दिकं तथा ॥
नवश्राद्धानि सर्वाणि सपिण्डीकरणं पृथक् ।
एक एव वृषोत्सर्गो गौरेका तत्र दीयते " इति संग्रहवचनाच्च ॥

वार्षिकं तु तिथिभेदे पृथगेवेति निर्णीतं प्राक् । अत्र भर्तुराशौचमध्येऽन्य-

दिनेऽनुगमने पतिमरणदिनगणनयाऽऽशौचपिण्डदाने । एकादशाहादिकार्यं भिन्नं, नात्र पक्षिणीवृद्धिः ।

" मृतं पतिमनुव्रज्य पत्नी चेदनलं गता ।
न तत्र पक्षिणी कार्या पैतृकादेव शुध्यति ॥
पुत्रोऽन्यो वाऽग्निदस्तस्यास्तावदेवाशुचिस्तयोः ।
ततः श्राद्धं सपिण्डं च युगपत्तु समापयेत् " इति स्मृत्यन्तरोक्तेः ।

" यदा नारी विशेदग्नौ यस्य वा प्रियवाञ्छया ।
तदाऽऽशौचं विधातव्यं भर्त्राशौचक्रमेण हि " इतिलघुहारीतोक्तेश्च ।

भर्त्राशौचोत्तरमन्वारोहणे तु त्र्यहमाशौचम् ।

" ऋग्वेदवादात्साध्वी स्त्री न भवेदात्मघातिनी ।
त्र्यहाशौचे तु निर्वृत्ते श्राद्धं प्राप्नोति शाश्वत[म्] " ॥

इति ब्राह्मोक्तेरिति पृथ्वीचन्द्रापरार्कौ । एतदन्वारोहण एव न त्वेकचितावित्यन्ये । एतदसवर्णापरमित्यपरे । ऋग्वेदवाद इमा नारीरविधवा इत्यादिः । स्मार्तगौडास्तु—देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयम् " इत्युपक्रम्य ब्राह्मे त्र्यहाशौचे तु निर्वृत्तेरित्युक्तेर्भर्त्राशौचोत्तरमन्वारोहणे त्र्यहम् । सहगमने तु पूर्णदशाहादि ।

पिण्डास्तु दशापि सहैव ।

" संस्थिते पतिमालिङ्ग्य प्रविशेद्या हुताशनम् ।
तस्याः पिण्डादिकं ज्ञेयं क्रमशः पतिपिण्डवत् ॥
अन्विता पिण्डदानं च यथा भर्तुर्दिने दिने ।
तदन्वारोहणी यस्मात्तस्मात्सा नाऽऽत्मघातिनी " इति व्यासोक्तेः ।

पृथक्चितौ तु भर्त्राशौचमध्ये तदूर्ध्वं वा सत्यां त्र्यहेण दश पिण्डाः ।

" अन्विताया: प्रदातव्या दश पिण्डास्त्र्यहेण तु ।
स्वाम्याशौचे व्यतीते तु तस्याः श्राद्धं प्रदीयते " इति पैठीनसिवचनात् ।

भर्त्राशौचोत्तरं मृतौ तु चतुर्थेऽह्नि श्राद्धम् । युद्धहतस्य सद्यःशौचे त्वन्वारोहणे त्रिरात्रम् । एकचितौ तु संस्थितं पतिमिति प्रागुक्तव्यासोक्तेः सद्यःशौचमित्याहुः । अन्यसपिण्डाशौचमध्ये विदेशमृतान्वारोहणं त्वशक्यमेव शुचिताया अङ्गत्वादिति । अत्र विशेषो हेमाद्रौ स्मृत्यन्तरे—

" माता मङ्गलसूत्रेण म्रियते यदि तद्दिने ।
उद्दिश्य विप्रपङ्क्तौ तां भोजयेच्च सुवासिनीम् " इति ॥

## अथ श्राद्धसंपाते निर्णयः ।

तत्र भृगुः—" एककाले गतासूनां बहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कुर्याच्छ्राद्धं चैव पृथक्पृथक् ॥
पूर्वकस्य मृतस्याऽऽदौ द्वितीयस्य ततः परम् ।
तृतीयस्य ततः कुर्यात्संनिपाते त्वयं क्रमः " इति ॥

यदा पितृमातृभ्रात्राद्यनेकसांवत्सरिकाणां युगपत्संनिपातस्तदा पितुः श्राद्धं ततो मातुस्ततश्चान्येषामिति प्रधानोपसर्जनतरतमभावेन सांवत्सरिकं कुर्यादित्यर्थः । पूर्वकस्य संबन्धासन्नस्य द्वितीयस्य ततो दूरसंबन्धस्य तृतीयस्य ततोऽपि दूरतरस्येत्येवं संबन्धानुसारेण क्रमेण सर्वेषामेषां सांवत्सरिकश्राद्धं कुर्यादित्यर्थः । ऋष्यशृङ्गेणाप्ययमेवार्थ उक्तः—

" भवेद्यदि सपिण्डानां युगपन्मरणं तदा ।
संबन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत् " इति ॥

एतच्च श्राद्धं तेषामपुत्रत्वे ।

अत्रिः—" बहूनामथवा द्वाभ्यां श्राद्धं चेत्स्यात्समेऽहनि ।
तन्त्रेण श्रपणं कृत्वा पृथक्श्राद्धानि कारयेत् " इति ॥

कार्ष्णाजिनिः—" पित्रोः श्राद्धे समं प्राप्ते नवे पर्युषितेऽपि वा ।
पितृपूर्वं सुतः कुर्यादन्यत्राऽऽसत्तियोगतः " इति ॥

अत्र पितृपूर्वमित्यनेन मातुः पूर्वं मरणेऽपि पितृश्राद्धं पूर्वं पश्चान्मातुः श्राद्धमित्युच्यते । विप्रकृष्टस्य पूर्वं मरणे संनिकृष्टस्य पश्चान्मरणेऽपि संनिकृष्टस्याऽऽदौ पश्चाद्विप्रकृष्टस्येति पूर्वोक्तार्थकं ज्ञेयम् ।

पार्वणैकोद्दिष्टयोर्युगपत्प्राप्तावाह जाबालिः—

" यद्येकत्र भवेयातामेकोद्दिष्टं च पार्वणम् ।
पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेत् " इति ॥

अत्रैकोद्दिष्टमभिनिर्वर्त्य पार्वणं समाचरेदित्यन्वयो युक्तः । क्रमानुरोधेन कालबाधस्य सिद्धान्तविरुद्धत्वात् । यत्रैकेन पाकेनानेकश्राद्धानुज्ञा तत्र दर्शादौ पितृश्राद्धमातामहश्राद्धवत्तन्त्रेणैवानुष्ठानमुक्तं गारुडे—

" एकेनैव तु पाकेन श्राद्धानि कुरुतेऽत्र हि ।
विकिरं त्वेकतः कुर्यात्पिण्डान्दद्यात्पृथक्पृथक् " इति ॥

एवं च यदाऽनेकोद्देश्यकानामपि श्राद्धानां कालैक्ये तन्त्रेणानुष्ठानं तदा किं वक्तव्यमेकस्मिन्कालेऽनेकनिमित्तसमवाय एकोद्देश्यकश्राद्धानां तन्त्रेणानु-

ष्ठाने। यत्तु 'नैकस्मिन्क्रियमाणे तु नाना कर्म समाचरेत्' इति हेमाद्रौ वचनं तत्सहैवानुष्ठाननिषेधकं न तु तन्त्रस्येति बोध्यम्। अत एव हेमाद्रिणाऽमावास्यानिमित्तकं संक्रान्तिनिमित्तकं युगादिनिमित्तकं चेत्येतानि श्राद्धानि तन्त्रेण करिष्य इत्येतादृशं संकल्पवाक्यमुक्तम्। प्रसङ्गे तु महातन्त्रवतोऽमाश्राद्धादेरेवोल्लेखो न प्रसङ्गिनः संक्रान्त्यादिश्राद्धस्य। वस्तुतस्तु अमाश्राद्धे विशेषग्रहणात्प्रसङ्ग एवोचितः। जाबालिवचनमप्यत्रास्ति—

"श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने।
नैमित्तिकं तु कर्तव्यं निमित्तानुक्रमोदयम्" इति॥

कात्यायनवचनमपि—

"द्वे बहूनि निमित्तानि जायेरन्नेकवासरे।
नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात्" इति॥

नैकः श्राद्धद्वयं कुर्यादिति निषेधस्तु श्राद्धं कृत्वा तु तस्यैवेत्येकवाक्यतयैकोद्देश्यकैककालिकैककर्तृकश्राद्धस्यैव पुनःप्रयोगनिषेधकमिति न तद्विरोधोऽपि। अत एव हेमाद्रिणोक्तम्—उदाहृतनिषेधस्तु श्रद्धाजडारभ्यमाणैकनिमित्तकश्राद्धावृत्तिविषय इत्युक्तम्(इति)। यत्तु त्रिप्रायमेके श्राद्धमुपदिशन्तीति धर्मसूत्रवचनं [तत्] श्राद्धं श्राद्धसंबन्धि यावदङ्गजातं त्रिवारं कर्तव्यं न तु स्वातन्त्र्येण सर्वं श्राद्धं त्रिवारं कर्तव्यमित्येतदभिप्रायेणैव नेयं विरोधपरिहाराय।

कालादर्शे—"नित्यस्य चोदकुम्भस्य नित्यमासिकयोरपि।
नित्यस्य चाऽऽब्दिकस्यापि दार्शिकाब्दिकयोरपि॥
युगाद्याब्दिकयोश्चैव मन्वाद्याब्दिकयोस्तथा।
प्रत्याब्दिकस्य चालभ्ययोगेषु विहितस्य च॥
संपाते देवताभेदाच्छ्राद्धयुग्मं समाचरेत्।
निमित्तानियतिश्चात्र पूर्वानुष्ठानकारणम्॥
पित्रोस्तु पितृपूर्वत्वं सर्वत्र श्राद्धकर्मणि" इति॥

अत्र नित्यदर्शयुगादिमन्वाद्यलभ्ययोगश्राद्धेषु सपत्नीकाः पितरो देवताः। उदकुम्भमासिकाब्दिकेषु त्वपत्नीका इति देवताभेद इत्याशयः। यत्र त्वान्वष्टक्यादौ नवदैवत्यविधानात्केवलानामेव पित्रादीनां देवतात्वं तत्राऽऽन्वष्टक्यादिना मासिकाब्दिकयोरपि प्रसङ्गसिद्धिः। एवं सपिण्डकश्राद्धेनापिण्डकस्य

श्राद्धस्यापि प्रसङ्गसिद्धिः । देवतैक्ये क्वचिदेकनिमित्तकानुष्ठानेनाप्यन्यनिमित्तकस्य प्रसङ्गतः सिद्धिर्भवति । तदप्युक्तं तत्रैव—

" नित्यदार्शिकयोश्चोदकुम्भमासिकयोरपि ।
दार्शिकस्य युगादेश्च दार्शिकालभ्ययोगयोः ॥
दार्शिकस्य च मन्वादेः संपाते श्राद्धकर्मणः ।[1]
प्रसङ्गादितरस्यापि सिद्धेरुत्तरमाचरेत्[2] " इति ॥

इतरस्याल्पतन्त्रस्यापि सिद्धेः, उत्तरं महातन्त्रमाचरेदित्यर्थः ।

स्मृतिसंग्रहे—" काम्यतन्त्रेण नित्यस्य तन्त्रं श्राद्धस्य सिध्यति " इति ।

दर्शे वार्षिकं चेत्तदा पूर्वं वार्षिकं कृत्वाऽनन्तरं पिण्डपितृयज्ञो दर्शश्राद्धं चेति क्रमः ।

" दर्शे क्षयाहे संप्राप्ते कथं कुर्वन्ति याज्ञिकाः ।
आदौ क्षयाहं निर्वर्त्य पश्चाद्दर्शो विधीयते[3] " ॥

इति स्मृतिसारवचनादिति निर्णयदीपे[4] । केचित्तु—एतद्वचने मूलाभावात्, ' पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ' इति दर्शश्राद्धे पिण्डपितृयज्ञानन्तर्यस्याऽऽब्दिकेऽप्यतिदेशप्राप्तेः पिण्डपितृयज्ञानन्तरं वार्षिकं ततो दर्शश्राद्धमिति । निमित्तानियतिश्चात्र पूर्वानुष्ठानकारणमिति कालादर्शोक्तिरप्यत्रानुकूला । सर्वान्प्रत्येकरूप्याभावात्क्षयाहनिमित्तस्यानियतत्वम् । (*सांवत्सरिकमहालयदर्शानां संपातेऽल्पत्वान्निमित्तानियतत्वादा(च्चाऽऽ)दौ मध्याह्न एव सांवत्सरिकं श्राद्धं कृत्वा ब्राह्मणविस्तारवर्जं महालयं कृत्वा पिण्डपितृयज्ञं कृत्वा दर्शश्राद्धं कुर्यात् । सांवत्सरिकात्पूर्वं पिण्डपितृयज्ञ इति मतं(ते) तदनुसारेण पूर्वं कार्यः । अत्र सर्वश्राद्धपाकभेदः केवलौदनमात्रभेदो वा । दर्शश्राद्धमत्र सांकल्पविधिनैव कार्यमन्यथाऽपराह्णे कर्मचतुष्टयासंभवात् । मासिकश्राद्धस्य दर्शश्राद्धाभे(द्भे)दस्य साधितत्वात्तस्यापि सर्वामावास्यास्वनुष्ठाने पिण्डपितृयज्ञेन सह चतुर्णां श्राद्धानामनुष्ठानासंभवात्सांवत्सरिकस्य दर्शस्य च सांकल्पविधिनैवानुष्ठानम् । ) एवं मासिकादिष्वपि ज्ञेयम् ।

" प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि " ।

इति सर्वातिदेशात् । एतच्च देवताभेद[5] इत्याहुः । इति संपातनिर्णयः ।

---

* धनुश्चिह्नान्तर्गतं ङ. पुस्तके नास्ति ।

१ ख. °र्मणि । प्र° । २ ङ. °ति । अत्रोपात्तयोर्द्वयोर्द्वयोर्मध्य उत्तरस्यानुष्ठानेन पूर्वस्यापि सिद्धिरित्य° । ३ ख. कुर्वीत याज्ञिक° । आ° । ४ ङ. °पे । युक्तं त्वेवम्—ए° । ५ ङ. °भेदे । इति ।

## अथ सामान्यतः श्राद्धतिथिनिर्णयः ।

" एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रकीर्तितम् ।
त्रीनुद्दिश्य तु यच्छ्राद्धं पार्वणं मुनयो विदुः " ॥

इतिवचनात्त्रिपुरुषोद्देश्यकं श्राद्धं यस्यां तिथौ विहितं सा चेद्दिनद्वयसंबन्धिनी तदा याऽपराह्णसंबन्धिनी सा ग्राह्या ।

तथा च हेमाद्रौ निगमः—

" पूर्वाह्णिकास्तु तिथयो देवकार्ये फलप्रदाः ।
अपराह्णिकास्तथा ज्ञेयाः पितृकार्ये शुभप्रदाः " इति ॥

यदा तु दिनद्वयेऽप्यपराह्णसंबन्धिनी तदा पूर्वा ।

तदाह तत्रैव मनुः—" यस्यामस्तं विनिर्याति पितरस्तामुपासते ।
सा पितृभ्यो यतो दत्ता ह्यपराह्णे स्वयंभुवा " इति ॥

यस्यामपराह्णसंबन्धे सत्यस्तमयानुवृत्तिः सा पितृकार्ये प्रशस्ता न त्वनस्तमयसंबन्धिनीत्यर्थः ।

अत एवाऽऽह हारीतः—" अपराह्णः पितॄणां तु याऽपराह्णानुयायिनी ।
सा ग्राह्या पितृकार्ये तु न पूर्वाह्णानुयायिनी " इति ॥

यदा दिनद्वयेऽप्यपराह्णसंबन्धो नास्ति तदा पूर्वैव ।

तदुक्तं तत्रैव नारदीये—

" तिथेः प्रान्तं सुराख्यं हि उपोष्यं कवयो विदुः ।
पित्र्यं मूलं तिथेः प्रोक्तं शास्त्रज्ञैः कालकोविदैः ॥
पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते ।
न तत्रौदयिकी ग्राह्या दैवे ह्यौदयिकी तिथिः " इति ॥

गोभिलोऽपि—" सायाह्नव्यापिनी या तु पार्वणे सा उदाहृता " इति ।

ननु ' सायाह्नस्त्रिमुहूर्तः स्यात्सर्वकर्मसु गर्हितः ' इति सायाह्नस्य निषेधादपराह्णे तु निमित्तभूततिथ्यभावेऽपि तत्रानुष्ठाने ' कर्मणो यस्य यः कालः ' इतिवचनविरोध इति चेन्न । ' विधिः पूज्यतिथौ तत्र निषेधः कालमात्रकः ' इति वचनाद्वचनान्तरबोधितपूज्याया एव तिथेः कर्मकाले ज्योतिःशास्त्रप्रसिद्धत्वाभावेऽपि साकल्यवचनबोधिततिथिसत्त्वमादायैव कर्मकालव्याप्तिशास्त्रप्रवृत्तेः । अत एव ' पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते ' इत्यादिवचनानां सार्थक्यम् ।

" तिथ्यादिषु भवेद्यावान्ह्रासो वृद्धिः परेऽहनि ।
तावान्ग्राह्यः स पूर्वेद्युरदृष्टेऽपि स्वकर्मणि " ॥

इति वचनादधिककालकल्पनयाऽपराह्णेऽपि निमित्तभूततिथिसंभवादि सिद्धान्तयतां हेमाद्र्यादीनामुक्तार्थ एव स्वारस्याच्च । इदं च तिथिक्षये । तिथिवृद्धौ तिथिसाम्ये चोत्तरा ग्राह्या ।

तथा च व्याघ्रः—" खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।
खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी " इति ॥

खर्वः साम्यम् । दर्पो वृद्धिः । हिंसा क्षयः । उभयत्र साम्येनैकदेशव्याप्तावप्येवमेव । यदा तु वैषम्येणोभयत्रैकदेशव्याप्तिस्तदा यत्राधिककालव्यापिनी सैव ग्राह्येति । एकोद्दिष्टश्राद्धे तु मध्याह्नव्यापिनी तिथिर्ग्राह्या ।

तथा च वृद्धगौतमः—" मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथिर्भवेत् ।
अपराह्णव्यापिनी तु पार्वणे सा तिथिर्भवेत् " इति ॥

हारीतः—" आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यतः ।
पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् " इति ॥

मनुः—" पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्वणम् ।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् " इति ॥

दैविकं श्राद्धं हेमाद्रौ पाराशरः—
" देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते ।
तन्नित्यश्राद्धवत्कुर्याद्द्वादश्यादिषु यत्नतः " इति ॥

अत्र कर्मणो यस्य यः काल इति वचनात्कर्मकालव्यापिनी तिथिर्ग्राह्या ।

इति सामान्यतः श्राद्धतिथिनिर्णयः ।

## अथ दर्शश्राद्धतिथिनिर्णयः ।

तत्र शातातपः—" दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितम् ।
अपराह्णे पितॄणां तु तत्र दानं प्रशस्यते " इति ॥

अत्र विशेषमाह कात्यायनः—
" पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयांशे नातिसंध्यासमीपतः " इति ॥

राजनि चन्द्रे क्षीणे । त्रेधाविभक्तदिनतृतीयभागेऽपराह्ण इति हेमाद्रिः । सायाह्नात्प्राचीनोऽपराह्ण एवाभिप्रेतः । ईषन्न्यूनोऽपराह्णः सायाह्नसहितस्तृती-

१ च. ङ. °दिति सि° । २ च. व्याघ्रपादः । ३ ख. पराशरः । ङ. पारस्करः ।

'यांश इत्यनेनोच्यते। तत्र नातिसंध्यासमीपत इत्यनेन 'सायाह्नस्त्रिमुहूर्तः स्याच्छ्राद्धं तत्र न कारयेत्' इति यमवचनेन त्रिमुहूर्तात्मकस्य सायाह्नकालस्य श्राद्धकालत्वेन प्रतिषिद्धस्यैव निषेधः। तेनार्थात्तृतीयेंऽश इत्यस्यैकादशद्वादशमुहूर्तयोस्तत्कालत्वं सिद्धं भवति।

तत्रोपक्रमकालेऽमावास्याया अप्रवृत्तावपि—

"यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः।
सा तिथिः सकला ज्ञेया पितृकर्मणि सूरिभिः"॥

इति साकल्यप्रयुक्ततत्सत्त्वमादायाप्यनुष्ठानम्।

एतदभिप्रायेणैव कात्यायन आह—

"यदा चतुर्दशी यामं तुरीयमनुपूरयेत्।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते" इति॥

दिनद्वयेऽपराह्णव्यापित्वे निरग्निकानामुत्तरा साग्निकानां पूर्वा।

तथा च जाबालिः—"अपराह्णद्वयव्यापी यदि दर्शस्तिथिक्षये।
आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता" इति॥

दिनद्वयेऽपराह्णव्यापित्वे शिवराघवसंवादे—

"अमावास्या तु या हि स्यादपराह्णद्वये समा।
क्षये पूर्वोत्तरा वृद्धौ साम्येऽपि च परा स्मृता" इति॥

अनेन वचनेन द्वितीयापराह्णस्पर्शेऽपि तिथिक्षयेऽपि च निरग्न्यादीनामुत्तरस्या एव नियमनात्तिथेः साम्ये वृद्धौ चोत्तराग्रहणमर्थसिद्धम्।

उक्तं च लौगाक्षिणाऽपि—

"सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणि।
स्त्रीभिः शूद्रैः कुहूः कार्या तथा चानग्निकैर्द्विजैः" इति॥

व्यासेनाप्युक्तम्—"दृष्टचन्द्रा सिनीवाली कार्या विप्रैस्तु साग्निकैः।
नष्टचन्द्रा कुहूः कार्या शूद्रैर्विप्रैरनग्निकैः" इति॥

बौधायनेनाप्युक्तम्—"सिनीवाली कुहूश्चैव श्रुत्युक्ते श्राद्धकर्मणि।
साग्निकैस्तु सिनीवाली कुहूः कार्या निरग्निकैः" इति।

यानि तु—"भूतविद्धाममावास्यां मोहादज्ञानतोऽपि वा।
श्राद्धकर्मणि ये कुर्युस्तेषामायुः प्रहीयते॥
मध्याह्नात्परतो यत्र चतुर्दश्यनुवर्तते।
सिनीवाली तु सा ज्ञेया पितृकार्ये तु निष्फला॥

मध्याह्नाद्या त्वमावास्या परस्तात्संप्रवर्तते
भूतविद्धा तु सा ज्ञेया न तु पञ्चदशी भवेत्" ॥

इति हेमाद्रौ कार्ष्णाजिनिबौधायनवचनानि "भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम्" इत्येकवाक्यतयाऽपराह्ण चतुर्दशीनिषेधकानि, तान्याहिताग्निभिन्नविषयाण्युदाहृतवचनविरोधात् ।

"अपराह्णद्वयाव्यापी यदि दर्शस्तिथिक्षये ।
आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता" ॥

इति माधवाद्युदाहृतजाबालिवचनेनापराह्ण(ह्ना)स्पर्शेऽपि साग्निकानां चतुर्दशीविद्धाया अपि सिनीवाल्या एव नियमनाच्च । क्वचित्तु अपराह्णद्वयव्यापीतिपाठः स लेखकप्रमादात् । संपूर्णापराह्णव्यापित्वस्य वृद्ध्येकसाध्यत्वेन तिथिक्षय इत्यस्य हेतुत्वासंगतेः । अत एव दिनद्वयेऽप्यपराह्णं न स्पृशति तदा साग्न्यनग्निव्यवस्थेति माधवः । एवं च साग्नीनां सिनीवाली निरग्नीनां कुहूरिति व्यवस्थया साग्निकानां तैत्तिरीयाणामपि सिनीवालीग्रहणे प्राप्ते तैत्तिरीयविषयेऽपवादमाह हारीतः—

"त्रिमुहूर्ताऽपि कर्तव्या पूर्वा सर्वाऽपि बह्वृचैः ।
कुहूरध्वर्युभिः कार्या यथेष्टं सामगीतिभिः" इति ॥

अध्वर्युशब्दस्तैत्तिरीयपरः ।

"सिनीवालीमुपोष्याथ कृत्वेष्टिं चापरेऽहनि ।
पिण्डयज्ञं ततः कुर्युः स्वकाले तैत्तिरीयकाः" ॥

इति स्मृत्यन्तरवचनेन तैत्तिरीय उपसंहारात् ।

"बह्वृचैः प्रथमा कार्या तैत्तिरीयैस्तु या कुहूः ।
यथेष्टं सामगैः कार्या दर्शश्राद्धे तिथिः सदा" ॥

इति स्मृत्यन्तरवचनसंवादाच्च ।

"दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम् ।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते" ॥

इति वचनमपि तैत्तिरीयातिरिक्तपरमेव । निरग्नीनां सर्वत्र भूतविद्धानिषेधे प्राप्तेऽभ्यनुज्ञामाह हेमाद्रिमाधवयोर्जाबालिः—

"प्रतिपत्स्वप्यमावास्या पूर्वाह्णव्यापिनी यदि ।
भूतविद्धैव सा कार्या पित्र्ये कर्मणि सर्वदा" इति ॥

प्रतिपदि यामद्वयपरिमितेत्यर्थः ।

"अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा ।
तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः" ॥

इति हेमाद्र्युदाहृतमात्स्योक्तकुतपार्धपर्यन्तेति यावत् । अत एव हेमाद्रिमाधवयोर्बौधायनेन

"घटिकैकाऽप्यमावास्या प्रतिपत्सु न चेत्तदा ।
भूतविद्धैव सा ग्राह्या दैवे पित्र्ये च कर्मणि" ॥

इति कुतपोत्तरार्धव्यापित्वाभाव एव भूतविद्धा विहिता । अत एव निरग्निकानां कुतपव्याप्त्यैव निर्णयमाह हेमाद्रिमाधवयोर्हारीतः—

"भूतविद्धाऽप्यमावास्या प्रतिपन्मिश्रिताऽपि वा ।
पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतपकालिकी" इति ॥

दिनद्वयेऽपि कुतपकालव्याप्तौ क्षये पूर्वा वृद्धिसाम्ययोः परा ।

तदाह हेमाद्रौ प्रचेताः—

"सिनीवाली कुहूश्चैव श्रुत्युक्ते श्राद्धकर्मणि ।
स्यातां ते चेत्तु मध्याह्न श्राद्धादि स्यात्कथं तदा ॥
तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूः स्मृता ।
साम्येऽपि च कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः" इति ॥

कात्यायनोऽपि—"क्षीयमाणाममावास्यां प्रथमेऽहनि लक्षयेत् ।
वर्धमानाममावास्यां द्वितीयेऽहनि लक्षयेत्" इति ॥

यदैकादशघटिकानन्तरं प्रवृत्ता चतुर्दशी द्वितीयदिने चतुर्दशघटिकापरिमिता तदनन्तरं प्रवृत्ताऽमावास्या प्रतिपदि षोडशघटिका भवति तदा त्रिषष्टिघटिकापरिमितचतुर्दश्यपेक्षया द्विषष्टिघटिकापरिमितामावास्यायाः क्षीयमाणत्वात्पूर्वा ग्राह्या । एवं तिथिप्रवृत्तिवैचित्र्यात्प्रकारान्तरेणापि चतुर्दश्यपेक्षयाऽमावास्याक्षयेऽपि बोध्यम् । यदा तु द्वादशघटिकानन्तरं प्रवृत्ता, उत्तरदिने चतुर्दशघटिका चतुर्दशी द्वितीयदिने षोडशघटिकाऽमावास्या तदा तिथिसाम्यम् । यदा तु पूर्वदिने चतुर्दशघटिकापेक्षया किंचिन्न्यूना चतुर्दशी द्वितीयदिने किंचिदधिकषोडशघटिकाऽमावास्या तदा तिथिवृद्धिः । एवं प्रकारान्तरेणापि वृद्धिसाम्ययोः कुहूरेवेत्यर्थः । कालादर्शे तु—स्यातां ते चेत्तु मध्याह्नादिति पाठः । तत्र ल्यब्लोपे पञ्चमीति मध्याह्नं व्याप्य स्यातामित्यर्थात्तत्राप्युक्त एवार्थः । द्वितीयदिने कुतपानन्तरममाया अभावात्कथं तत्र पार्वणश्राद्धानुष्ठानमिति शङ्कामपाकरोति हेमाद्रिमाधवयोर्हारीतः—

" पूर्वाह्णे चेदमावास्या अपराह्णे न चेद्यदि ।
प्रतिपद्यपि कर्तव्यं श्राद्धं श्राद्धविदो विदुः " इति ॥

वचनात्पादिताया अमावास्यायाः सत्त्वात्तत्रैवानुष्ठानमिति तात्पर्यम् । अत एव मृताहतिथेर्विहिताया अपराह्णेऽसत्त्वेऽपि साकल्यवचनापादिततिथिसत्त्वादपराह्ण एव श्राद्धानुष्ठानमिति सांवत्सरिकश्राद्धप्रकरणे हेमाद्रिमाधवादिसिद्धान्तः संगच्छते ।

तस्मात्—" भूतविद्धाममावास्यां मोहादज्ञानतोऽपि वा ।
श्राद्धकर्मणि ये कुर्युस्तेषामायुः प्रहीयते " ॥

इत्याद्युदाहृतकार्ष्णाजिन्यादिवचनैर्निरग्निकानां निषिद्धाया भूतविद्धायाः ।

" प्रतिपत्स्वप्यमावास्या पूर्वाह्णव्यापिनी यदि ।
भूतविद्धैव सा कार्या पित्र्ये कर्मणि सर्वदा " ॥

इत्यादिजाबाल्यादिवचनैरुत्तरदिने कुतपोत्तराव्यापित्व एव पूर्वविद्धाभ्यनुज्ञानात्—" पूर्वाह्णे चेदमावास्या अपराह्णे न चेद्यदि " इतिवचनाद्द्वेधाविभक्तदिनस्य कुतपोत्तरार्धादिरूपापराह्णव्यापिन्यमावास्या निरग्निकैः श्राद्धे ग्राह्येति सिद्धम् ।

" आहिताग्नेस्तु यो धर्मो गृह्याग्नेरपि स स्मृतः "

इति वृद्धप्रवादाद्गृह्याग्निमतामप्ययमेवामावास्यानिर्णयः ।

इति दर्शश्राद्धतिथिनिर्णयः ।

## अथ सांवत्सरिकश्राद्धतिथिनिर्णयः ।

तत्र या मुख्यापराह्णव्यापिनी पूर्वा परा वा सैव ग्राह्या ।

" अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेत् " ।

इति वृद्धगौतमवचनात् ।

मात्स्ये—" अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा ।
तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥
अष्टमे भास्करो यस्मान्मन्दी भवति सर्वदा ।
तस्मादनन्तफलदस्तत्राऽऽरम्भो विशिष्यते ॥
ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् ।
मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते " इति ॥

तत्रापि पादन्यूनापराह्णान्त्यमुहूर्तस्य चतुर्थप्रहरान्तर्गतत्वाच्चतुर्थप्रहरस्य—

" चतुर्थे प्रहरे प्राप्ते यः श्राद्धं कुरुते द्विजः ।
आसुरं तद्भवेच्छ्राद्धं दाता च नरकं व्रजेत् " ॥

इति निषिद्धत्वात्कुतपमारभ्य मुहूर्तचतुष्टयं पार्वणस्य मुख्यः कालः । यदा दिनद्वये संपूर्णमुख्यापराह्णव्याप्तिस्तदा पूर्वैव ।

तदाह मनुः—" यस्यामस्तं रवियाति पितरस्तमुपासते ।
सा पितृभ्यो यतो दत्ता ह्यपराह्णे स्वयंभुवा " इति ॥

अत्रापराह्णशब्दोऽपराह्णैकदेशपर इति हेमाद्रिः ।

सुमन्तुरपि—" द्व्यहे तु व्यापिनी चेत्स्यान्मृताहस्य तु या तिथिः ।
पूर्वस्यां निर्वपेत्पिण्डानित्याङ्गिरसभाषितम् " इति ॥

नारदीयेऽपि—" दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम् ।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते " इति ॥

यदा दिनद्वयेऽपि साम्येनैकदेशव्याप्तिस्तदा तिथिवृद्धावुत्तरा तिथिक्षये पूर्वा।

तदाह बौधायनः—" अपराह्णद्वयव्यापिन्यतीतस्य च या तिथिः ।
क्षये पूर्वा तु कर्तव्या वृद्धौ कार्या तदोत्तरा " इति ॥

अत्र क्षयवृद्धी उत्तरतिथिगते ज्ञेये न ग्राह्यतिथिगते । दिनद्वये संपूर्णापराह्णादिव्याप्तेर्द्वयैकनियतत्वेन । तत्र क्षयोदाहरणम्—यदा प्रतिपदष्टादशघटिका द्वितीया चतुर्विंशतिघटिका तृतीया द्वाविंशतिघटिका तदा द्वितीयाश्राद्धं प्रतिपदि कार्यम् । वृद्ध्युदाहरणं यदा प्रतिपद्द्वितीये यथास्थिते तृतीयाऽष्टाविंशतिघटिका तदा द्वितीयायां तदिति माधवादयः । अत्रेदं क्षयोदाहरणं ज्योतिःशास्त्रप्रसिद्ध्या न कदाचिदपि संभाव्यत इति वृद्धिक्षयौ पूर्वतिथ्यपेक्षया ग्राह्यतिथिगतौ ग्राह्याविति केचिन्नवीनाः । तिथिसाम्येऽपि पूर्वैव । यस्यामस्तमिति दर्शं च पौर्णमासं चेत्यनन्तरोदाहृतवचनद्वयात् । अत एव खर्वशास्त्रं तु क्षयाहविषयबहुवाक्यानुरोधात्तद्व्यतिरिक्तविषयमिति हेमाद्रिः संगच्छते । खर्वो दर्प इति क्षयाहव्यतिरिक्तश्राद्धतिथिविषयम् । द्व्यहे तु व्यापिनीत्याद्युदाहृतवचनविरोधादिति मदनरत्नश्च । वैषम्येणोभयापराह्णैकदेशव्याप्तौ तु यत्राधिकापराह्णव्याप्तिः सा ग्राह्या । तदाह माधवीये मरीचिः—

" ह्यपराह्णव्यापिनी चेद्वाऽऽब्दिकस्य यदा तिथिः ।
महती यत्र तद्विद्धां प्रशंसन्ति महर्षयः " इति ॥

यदा दिनद्वयेऽप्यपराह्णसंबन्धाभावस्तदाऽपि पूर्वैव । तदाह मनुः—

" न व्यह्नव्यापिनी चेत्स्यान्मृताहस्य यदा तिथिः ।
पूर्वस्यां निर्वपेत्पिण्डानित्याङ्गिरसभाषितम् " इति ॥

एकोद्दिष्टस्य तु मध्याह्नो मुख्यः कालः ।

" एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् " इतिवचनात् ।
" मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथिर्भवेत् " इतिवचनाच्च ।

अत्र मध्याह्नशब्देन मध्याह्नैकदेशः कुतपरौहिणाख्यमुहूर्तद्वयात्मको गृह्यते । अत एव श्लोकगौतमः—

" आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत् " इति ॥

कुतपपूर्वभाग एवाऽऽरम्भः । तदाह व्यासः—

" कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत् ।
आवर्तनसमीपे वा तत्रैव नियतात्मवान् " इति ॥

तत्रैव कुतप एव । अत्रापि तिथिद्वैधे पार्वणतिथिवन्निर्णयो ज्ञेयः ।

इति क्षयाहैकोद्दिष्टतिथिनिर्णयः ।

## अथाऽऽमश्राद्धकालः ।

तत्र मरीचिः—" आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यतः ।
पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् " इति ॥

तत्रापि संगवकाले कर्तव्यम् ।

" कालात्प्रातस्तनादूर्ध्वं त्रिमुहूर्ता तु या तिथिः ।
आमश्राद्धं तत्र कुर्याद्द्विमुहूर्ताऽपि वा भवेत् " इति व्याघ्रपाद्वचनात् ॥

अयमेव कालो हिरण्यश्राद्धस्यापि । वृद्धिश्राद्धस्य निमित्तानि पारिजाते—

" स्यादाभ्युदयिकं श्राद्धं वृद्धिपूर्तेषु कर्मसु " इति ।

वृद्धिपूर्तशब्दार्थं स्वयमेव विवृणोति—

" पुंसः सवनसीमन्तचौलोपनयनेष्विह ।
विवाहे चानलाधेयप्रभृतिश्रौतकर्मसु ॥
इदं श्राद्धं प्रकुर्वन्ति द्विजा वृद्धिनिमित्तकम् ।
अन्यैः षोडशसंस्कारश्रावण्याद्यावपीष्यते ॥
वाप्याद्युद्यापनादौ तु कुर्युः पूर्तिनिमित्तकम् " इति ।

आश्वलायनः—" युग्मान्वृद्धिपूर्तेष्वयुग्मानितरेषु " इति ।

पुंसवनसीमन्तोन्नयनचौलकर्मोपनयनविवाहा इति पञ्चाग्न्याधेयादीनि च श्रौतानि वृद्धिश्राद्धविषय इत्येके । अन्ये षोडश कर्मसंस्काराः श्रवणाकर्मादयश्च श्रौतानि चेत्याहुः ।

"अनिष्ट्वा तु पितॄञ्श्राद्धे वैदिकं कर्म नाऽऽचरेत्" इति स्मृतेः ।

वापीकूपतटाकारामाद्युद्यापनादीनि पूर्तश्राद्धस्य विषयः । उभय[त्र]युग्मान्भोजयेदिति । अत्राऽऽश्वलायनः स्मृतिरूपेणाऽऽह—

"कार्यमभ्युदयश्राद्धं श्रौते स्मार्ते च कर्मणि" इति ।

अन्यैरित्युक्तसंस्कारेभ्योऽन्येषु जातकर्मादिषु तदनावश्यकमितिज्ञापनार्थमिति कौस्तुभे । वृद्धिश्राद्धस्य कालस्तु "प्रातर्वृद्धिनिमित्तकम्" इत्यनेनोक्तो ज्ञेयः । अत्र प्रातःशब्दार्थो गार्ग्येणोक्तो वृद्धिश्राद्धं प्रकृत्य—'प्रहरोऽध्यर्धसंयुक्तः प्रातरित्यभिधीयते" इति ।

आधानाद्यङ्गभूतनान्दीश्राद्धं त्वपराह्णे ।

"नान्दीमुखाह्वयं प्रातराग्निकं त्वपराह्णतः" इति विष्णूक्तेः ।

एतस्माद्वचनात्पूर्वेद्युरेव नान्दीश्राद्धानुष्ठानं युक्तम् । नान्दीश्राद्धपूर्वभावित्वात्पुण्याहवाचनमातृकापूजनयोरपि । द्वितीयदिनेऽनुष्ठीयमाने कर्मान्तःपातित्वं स्यात् । नहि श्रौतकर्ममध्ये स्मार्तानुष्ठानं युक्तम् । गणपतिपूजनं तूभयदिनेऽपि जातकर्मार्थनान्दीश्राद्धं तात्कालिकमेव ।

"पूर्वाह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकम् ।
पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः" इत्यत्रिस्मरणात् ॥

आपस्तम्बसूत्रानुसारिणस्तु संभारस्पर्शोत्तरं नान्दीश्राद्धमाचरन्ति तदुपेक्ष्यमेव । इदं च केषांचित्कर्मणामावृत्तावपि प्रथमप्रयोग एव कर्तव्यं न प्रतिप्रयोगमित्याह च्छन्दोगपरिशिष्टे कात्यायनः—

"असकृद्यानि कर्माणि क्रियन्ते कर्मकारिभिः ।
प्रतिप्रयोगं नैताः स्युर्मातरः श्राद्धमेव च ॥
आधानहोमयोश्चैव वैश्वदेवे तथैव च ।
बलिकर्मणि दर्शे च पूर्णमासे तथैव च ॥
नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक्पृथक्" इति ॥

असकृत्पुनः पुनः प्रतिदिनं प्रतिमासं प्रत्यब्दं चेति यावत् । एता मातरः । अत्र प्रथमश्लोकोऽपराभ्यामाधानादीनां केषांचिदेव वाऽऽवृत्तावपि नान्दी-

श्राद्धं नाऽऽवर्तेत इत्येतत्परतया व्यवस्थाप्यते। अत एवाऽऽपस्तम्बसूत्रानुसारियाज्ञिकानां विच्छिन्नाग्न्याधाने नान्दीश्राद्धाचारश्चिन्त्य इति नवीना आहुः। आधान इत्यादिश्लोकद्वयं पूर्वोक्तकर्मणामेव विवरणार्थं न पृथग्वाक्यम्। अतो ज्योतिष्टोमादिषु प्रतिप्रयोगं भवत्येव वृद्धिश्राद्धमित्यन्ये नवीनाः। केषांचित्प्रथमप्रयोगेऽपि नैतत्कार्यमित्यप्याह कात्यायनः—

"नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते।
न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु" इति॥

अत्र द्वितीयः पादो हेतुवन्निगमतया प्रथमशेषः। सोष्यन्त्या आसन्नप्रसवायाः सोष्यन्तीमभ्युक्ष्येति कात्यायनोक्तं कर्म। प्रोषितागतकर्म तु प्रवासादेत्याऽऽगतं पुत्रमभिमृशतीति विहितं कर्म। जातकर्माङ्गत्वेन निषेधस्तु च्छन्दोगमात्रविषयः। तत्परिशिष्टगतत्वात्, इति समयोद्योते। तदाऽपि वृद्धिनिमित्तकं पुरुषार्थं ततः पूर्वं भवत्येवेति नवीनाः। इति वृद्धिश्राद्धनिर्णयः।

## अथ प्रायश्चित्तार्थभूतं वैष्णवं श्राद्धम्।

तदाह शातातपः—

"विधाय वैष्णवं श्राद्धं सांकल्पं निजकाम्यया।
धेनुं दद्याद्द्विजाग्र्याय दक्षिणां च स्वशक्तितः" इति॥

अत्र विष्णुदेवतया पित्रादिदेवताबाधः। सांकल्पिकत्वाच्चार्घ्यावाहनाग्नौकरणादिविकिरपिण्डदानस्वधावाचनानां बाधः।

## अथ श्राद्धे निषिद्धकालः।

"रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा।
संध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते" इति॥

बौधायनः—"चतुर्थे प्रहरे प्राप्ते यः श्राद्धं कुरुते नरः।
आसुरं तद्भवेच्छ्राद्धं दाता च नरकं व्रजेत्" इति॥

एतच्च सूत्रोक्तमासिकश्राद्धे न प्रवर्तते।

"पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्"॥

इति दर्शानन्तरं मनुना तस्य विहितत्वात्। पिण्डान्वाहार्यकशब्दस्य दर्शश्राद्धपरत्वं तु दर्शोपोद्घातनिरूपणे प्रदर्शितम्। ग्रहणश्राद्धेऽपि नायं निषेधस्तस्यापि विहितत्वात्। एवं पुत्रजन्मनिमित्तकनान्दीश्राद्धेऽपि।

माधवीये शिवराघवसंवादे—

" प्रातःकाले तु न श्राद्धं प्रकुर्वीत कदाचन ।
नैमित्तिकेषु श्राद्धेषु न कालनियमः स्मृतः " इति ॥

" ग्रहादिव्यतिरिक्तस्य प्रक्रमे कुतपः स्मृतः ।
कुतपादथवाऽप्यर्वागासनं कुतपे भवेत् " ॥

इति माधवोदाहृतशिवराघवसंवादवचनेन गान्धर्वमुहूर्तेऽप्यारम्भस्योक्तत्वेनार्थात्संगवनिषेधः । तथा च संगवकालादूर्ध्वं सायंकालात्प्राक्तनोऽनैमित्तिकस्य श्राद्धस्य काल इत्युक्तं भवति । तत्रापराह्णस्य प्राशस्त्यमाह मनुः—

" अथ चैवापरपक्षः पूर्वपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते " इति ॥

" अपराह्णः पितॄणां तु याऽपराह्णानुयायिनी ।
तिथिस्तेभ्यो यतो दत्ता ह्यपराह्णे स्वयंभुवा " ॥

इत्यादिपूर्वोदाहृतवचनैश्चापराह्णस्य मुख्यकालत्वं प्रतिपाद्यते । मुख्यत्वेन निषिद्धस्यापि सायाह्नस्य गौणकालत्वमाह व्यासः—

" स्वकालातिक्रमे कुर्याद्रात्रेः पूर्वं यथाविधि " इति ।

चातुर्मास्यान्तर्गतादित्येष्टौ बद्धक्रमेण प्राप्तपूर्वाह्णकालबाध इव मासिकश्राद्धदिन एवानुष्ठेयतया मुख्यकालस्य मासिश्राद्धावरुद्धत्वेनोत्तरभावित्वादत्रापि मुख्यापराह्णकालबाधः । तत्रापि सति संभवे दिनान्त्यघटिकाद्वयतः पूर्वमेव समापनीयम् ।

यत्तु—" चतुर्थे प्रहरे प्राप्ते यः श्राद्धं कुरुते द्विजः ।
आसुरं तद्भवेच्छ्राद्धं दाता च नरकं व्रजेत् " ॥

इतिवचनं श्रा(तच्छ्रा)द्धान्तरेण मुख्यकालस्यानवरोधे । प्रकृते तु मासिकश्राद्धकालस्य मासिश्राद्धेनावरोधान्नैतद्वचनप्रवृत्तिः । न चैवं तयोरभेद एवास्तु किमेतावताऽऽयासेनेति वाच्यम् । उभयत्रोपात्तब्राह्मणदक्षिणादिवैयर्थ्यापत्त्यादिदोषग्रस्तत्वेन तस्य वक्तुमशक्यत्वात् । न चान्तेवास्यसंबन्धान्ब्रह्मविद इति विधानायानुवाद इति वाच्यम् । तयोर्विशेषयोर्लाघवादत्रैव वक्तुमुचितत्वेन गुणद्वयविधानार्थं पुनः कृत्स्नानुवादेन गौरवस्य दुष्परिहरत्वात् । न च *तयोर्गुणयोर्मासिकश्राद्धे मासिकश्राद्ध[त्व]मिति वाच्यम् । ब्रह्मविदोऽन्तेवास्यसंबन्धानित्येतावतैव तत्सिद्धौ पुनस्तदोपतादवस्थ्यात् । अतस्तयो-

* अत्र सतोरिति शेषो ज्ञेयः ।

भेद एव । सायाह्नस्याप्यतिक्रमे दर्शश्राद्धमासिकश्राद्धयोर्लोप एव । तदर्थं द्वितीयदिन औपासने समस्तव्याहृतिभिराज्याहुतिं हुत्वोपोष्य प्राणायामं च कृत्वा प्राजापत्यद्वयमाचरेत् । केचित्तु शुक्लपक्षे सर्वप्रायश्चित्तमौपासने हुत्वाऽन्तरितश्राद्धं कुर्यात् । तत्राप्यतिक्रमे द्वितीयदर्शपूर्वदिनप्राप्तौ सर्वप्रायश्चित्तं हुत्वोपोष्य प्राणायामं कृत्वा प्राजापत्याचरणं कर्तव्यमिति वदन्ति । एवं महालयादिष्वपि ज्ञेयम् । सांवत्सरिकश्राद्धे सायाह्नस्यातिक्रमे रात्रावपि कार्यम् ।

'मृताहं समतिक्रम्य चण्डालेष्वभिजायते' इति मरीचिना मृताहातिक्रमे दोषोक्तेः । न च नक्तं श्राद्धं कुर्वीतेतिधर्मसूत्रोक्तो निषेधः सांवत्सरिकश्राद्धव्यतिरिक्तश्राद्धपर इति बहवः । मृताहं समतिक्रम्येति निषेधस्तु बुद्ध्या समतिक्रमे न तु दैवादतिक्रमे । तेन धर्मसूत्रोक्तनिषेधोऽत्राप्यस्त्येवेति केचिद्वदन्ति । अयं च रात्रौ श्राद्धनिषेधो ग्रहणश्राद्धे न । अन्यत्र राहुदर्शनादितिवचनात् ।

## अथ श्राद्धविघ्ने निर्णयः ।

तत्र विप्रस्य निमन्त्रणोत्तरं सूतके मृतकेऽपि वाऽऽशौचाभावः ।

" निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ।
निमन्त्रणाद्धि विप्रस्य स्वाध्यायाद्विरतस्य च ॥
देहे पितृषु तिष्ठत्सु नाऽऽशौचं विद्यते क्वचित् " इति ब्राह्मोक्तेः ॥

कर्तुस्तु विष्णुराह—" व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् " इति ॥

प्रारम्भशब्दार्थस्तेनैवोक्तः—

" प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया " इति ॥

पाकपरिक्रिया पाकनिष्पत्तिः पाकारम्भो वा । पाकप्रोक्षणमित्यन्ये । माधवीये ब्राह्मेऽपि सद्यःशौचं प्रकृत्य—

" श्राद्धादौ पितृयज्ञे च कन्यादाने च नो भवेत् " इति ।

मिताक्षरायां स्मृत्यन्तरेऽपि सद्यःशौचं प्रकृत्य—

" यज्ञे संभृतसंभारे विवाहे श्राद्धकर्मणि " इति ।

दातृगृहे मरणादौ ब्राह्मे—

" भोजनार्धे तु संभुक्ते विप्रैर्दातुर्विपद्यते ।

यदा कश्चित्तद्योच्छिष्टं शेषं त्यक्त्वा समाहिताः ॥
आचम्य परकीयेन(ण) जलेन शुचयो द्विजाः " इति ।

विपद्यत इत्यत्र गृह इति शेषः । एतच्च श्राद्धविषयमिति हेमाद्रिः । अन्ये तु—अत्र श्राद्धपदाभावाद्विवाहोत्सवयज्ञेष्वित्युपक्रम्य

" भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके ।
अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः " ॥

इतिषट्त्रिंशन्मतैकवाक्यत्वान्निमन्त्रितेषु विप्रेष्वित्युदाहृतवचनविरोधाच्च विवाहादिविषयमेवेत्याहुः । श्राद्धे तु यद्यपि विष्णुना पाकोत्तरमाशौचाभाव उक्तस्तथाऽपि कर्तुरेव सः । भोक्तुस्तु दोषोऽस्त्येव ।

" अपि दातृग्रहीत्रोश्च सूतके मृतके तथा ।
अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कथंचन ॥
विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिकं क्रमात् " ।

इति माधवीये ब्राह्मोक्तेः ।

आदिशब्देनाऽऽशौचं गृह्यते । तच्चाऽऽह विष्णुः—

" ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नाति तस्य तावदाशौचं यावत्तेषामाशौचं व्यपगमे प्रायश्चित्तं कुर्यात् " इति ।

यत्तु—" देहे पितृषु तिष्ठत्सु नाऽऽशौचं विद्यते क्वचित् " ।

इति ब्राह्मं तच्छ्राद्धकालिकस्य निषेधकं न तूत्तरकालिकस्य ।

यत्तु—" देये पितॄणां श्राद्धे तु आशौचं जायते यदा ।
आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदीयते " ॥

इत्यनेनाऽऽशौचानन्तरं कर्तव्यमित्युक्तं तन्मुख्यकालिकश्राद्धोपक्रमात्प्रागाशौचज्ञाने ज्ञेयम् । श्राद्धचिन्तामणौ ज्योतिषे—

" प्रतिसंवत्सरं श्राद्धमाशौचात्पतितं च यत् ।
मलमासेऽपि तत्कार्यमिति भागुरिभाषितम् " इति ॥

आशौचादाशौचहेतुना । आशौचान्त्यदिनत्वेन निमित्तत्वादित्यर्थः । एतन्मासिकाब्दिकपरम् । अत एव सुदर्शनभाष्ये—अपरपक्षे पित्र्याणीतिनियमात्कृष्णपक्षश्राद्धलोपे प्रायश्चित्तमेव न तु गौणकाले करणम् । तच्चोपवासः ।

" वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् " इति मनूक्तेरित्युक्तम् ॥

आशौचे तु प्रायश्चित्तमपि न मुख्यकालेऽनधिकारात् ।

आशौचान्तऽसंभव तु व्यासः—

" श्राद्धविघ्ने समुत्पन्ने अन्तरा मृतसूतके ।
अमायां तत्प्रकर्तव्यं शुद्धाविके मनीषिणः " इति ॥

हेमाद्रौ षट्त्रिंशन्मतेऽपि—

" मासिके चाऽऽब्दिके त्वह्नि संप्राप्ते मृतसूतके ।
वदन्ति शुद्धौ तत्कार्यं दर्शेऽपि च विचक्षणाः " इति ॥

गोभिलः—" देये प्रत्याब्दिके श्राद्धे अन्तरा मृतसूतके ।
आशौचानन्तरं कुर्यात्तन्मासेन्दुक्षयेऽपि वा " इति ॥

मरीचिः—" श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि ।
एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः " इति ॥

विशेषत इत्युक्तेः शुक्लायामपि । आशौचेतरविघ्न एतदिति माधवपृथ्वीचन्द्रौ ।

यत्तु—" तदहश्चेत्प्रदुष्येत केनचित्सूतकादिना ।
सूतकानन्तरं कुर्यात्पुनस्तदहरेव च " ॥

इत्यत्रिवचनं तत्पूर्वकालासंभवे ज्ञेयम् । एतदाब्दिकेतरविषयम् ।

यच्च—" एकोद्दिष्टे तु संप्राप्ते यदि विघ्नं प्रजायते ।
मासेऽन्यस्मिन्दिने तस्मिञ्श्राद्धं कुर्यात्प्रयत्नतः " ॥

इति तदपि मासिकपरमिति मदनरत्ने हेमाद्रौ च । व्याध्यादौ विस्मरणे चैवं ज्ञेयम् । इति श्राद्धविघ्ने निर्णयः ।

## अथ श्राद्धभोजने प्रायश्चित्तानि ।

तत्र श्राद्धानि त्रिविधानि । नवनवमिश्रपुराणाख्यानि । तत्रान्तर्दशाहश्राद्धानि नवश्राद्धानि, एकादशाहश्च । षोडशैकोद्दिष्टानि नवमिश्राणि सपिण्डीकरणं च । ततः पुराणानि । तत्राऽऽपदि नवश्राद्धभोजने कायम् । एकादशाहैकोद्दिष्टे कायं पादोनकायं वा । द्वादशाह ऊनमासे च पादोनं कायमेव कुर्यात् । द्विमासे त्रिपक्ष ऊनषाण्मासिक ऊनाब्दिके चार्धकृच्छ्रः । त्रिमासाद्याब्दिकान्तेषु सपिण्डने चाऽऽद्याब्दिके चोपवासः पादकृच्छ्रो वा । प्रत्यब्दे पुराणे च नक्तम् । द्रव्यार्थं नवश्राद्धे भोजने त्रिरात्रं, द्वादशाहादौ द्विरात्रं, मासादावुपवासः । त्रिमासादौ नक्तं पञ्चगव्याशनं च । प्रत्यब्ददर्शादिषु पुराणेषु षट्प्राणायामाः । वृद्धौ त्रयः प्राणायामाः । तत्रैव निस्पृहभोक्तुर्जपशी-

१ क. °द्रौ । व्या° ।

लिनो वा तदर्धम् । क्षत्रियादिषु श्राद्धेषु द्वित्रिचतुर्गुणानि क्रमात्कार्याणि । अनापदि तु नवश्राद्धे चान्द्रं कायं च । द्वादशाहादौ कायमेव । द्विमासादौ पादोनं, त्रिमासाद्यब्दान्तेषु त्रिरात्रमर्धकायं वा । आद्याब्दिके पादकायं, प्रत्याब्दिके तूपवासः । क्षत्रियस्य तु नवश्राद्धे चान्द्रम्(न्द्रे) । आद्यमासिके चान्द्रं पराकश्च । द्वादशाहादौ पराकः । आब्दिकद्विमासत्रिपक्षादौ महासांतपनं, त्रिमासादौ कायम् । आब्दिके पादोनं, प्रत्याब्दिके त्वर्धं, पुराणे पादोन(दपरिमित)म् । वैश्यस्य त्वेतान्येव व्रतानि सार्धानि । शूद्रस्य द्विगुणानि । यद्वा नवश्राद्धे चान्द्रद्वयं सार्धं चान्द्रं च । द्वादशाहादौ सार्धं चान्द्रमेव । द्विमासत्रिपक्षादौ चान्द्रं त्रिमासादौ पराकः । अब्दे सह(महा)सांतपनम् । चण्डालानामुदकसर्पब्राह्मणपशुदंष्ट्रिवैद्युतप्रपतनविषोद्बन्धनादिमृतानां पापिनां पतिताद्यभोजनानां च नवश्राद्धे चान्द्रे । आद्यमासिके चान्द्रं पराकश्च । द्वादशाहादौ पराक एव । पक्षद्विमासत्रिमासेष्वतिकृच्छ्रः । मासादौ कायोऽ(यम)ब्दे पादः प्रत्यब्दे तूपवासः । धनिकामां द्रव्यार्थभोजिनां चैवम् । अपाङ्क्तेयानामेकादशाहे चान्द्रम् । यतिव्रतिब्रह्मचारिणां तु सूतकान्ननवश्राद्धमासिकादौ भुक्तावुक्तं प्रायश्चित्तं कृत्वाऽधिकं त्रिरात्रं प्राणायामत्रयं घृतप्राशनं च कृत्वा व्रतशेषं समापयेत् । अनापदि तु कायं त्रिरात्रमेकरात्रं वोपवासः प्राणायामत्रयं पञ्चगव्यप्राशनमित्यधिकम् । अभ्यासे तप्तकृच्छ्रादि द्विगुणम् । आमहेमसांकल्पिकश्राद्धेषूक्तार्धम् । यद्वाऽनापद्यामश्राद्धे कायं तप्तकृच्छ्रं वा शक्तश्चरेत् । हेमश्राद्धे त्रिरात्रं कायं च । सांकल्पिकश्राद्धे तूपवासस्त्रिरात्रं च । दैवात्सूतकव्यवहितेषु तु ब्राह्मणक्षत्रियवैश्यशूद्रश्राद्धेषु एकोद्दिष्टे तु कृच्छ्रातिकृच्छ्रतप्तकृच्छ्रचान्द्राणि । द्वादशाहादिषु पादं पादं ह्रासयेत् । अतिव्यवहितेषु तु त्रिरात्रादिकम् । गुरुविषये तूपवासनक्तपद्प्राणायामाः । अनापदि सर्वत्र द्विगुणम् । अतिश्रोत्रियदर्शादिश्राद्धेष्वनुक्तप्रायश्चित्तेषु च गायत्र्या दशकृत्वोऽपः पीत्वा संध्यामुपासनहोमं च यथोचितं कुर्यात् । नामकरणे जातकर्मणि चाङ्गश्राद्धे सूतक आमश्राद्धे चूड(डा)होमान्ते चौलश्राद्धे सीमन्ते सोमे ब्रह्मौदने चामत्या चाऽऽपदि च भुक्त्वा सांतपनम् । मत्याऽनापदि च चान्द्रम् । अन्येषु संस्कारेषु तूपवासो नित्यस्त्रिरात्रं चानापदि । अन्यदत्ता कन्याऽन्यस्मै पुनर्दत्ता सा पुनर्भूस्तद्विवाहेऽसंस्कृते पूर्वगर्भे पूर्ववत्सांतपनं चान्द्रं वा । सर्वस्त्रीप्रथमगर्भे च । ( + असंस्कृते पूर्वे गर्भे प्रसूते द्वितीये गर्भे संस्कारे या सा पुनारताः(ता(?))

---

+ धनुश्चिह्नान्तर्गतं ख. च. पुस्तकयोर्नास्ति ।

१ क. ख. च. चान्द्रं । २ क. ख. च. अब्देन । ३ क. ख. ङ. चान्द्रम् । ४ ङ. पुनरताः ।

ऋतुषोडशाहात्पश्चादेव गर्भिणी सा रेतोधाः । भर्तृशासनोल्लङ्घिनी कामचारिणी । आसो(सां)[प्रथ]भ(म)गर्भे पूर्ववत्सांतपनं चान्द्रं वा । )

## अथ श्राद्धाङ्गतिलतर्पणम् ।

तच्च दर्शश्राद्धे तदहरेव पूर्वं विधाय श्राद्धारम्भः कार्यः ।

" पूर्वं तिलोदकं दत्त्वा अमाश्राद्धं तु कारयेत् " इति गर्गवचनात् ।

" दर्शे तिलोदकं पूर्वम् " इति संग्रहोक्तेश्च ।

( * कारयेदिति स्वार्थे णिच् । श्राद्धस्य द्व्यहकालत्वे नित्यतर्पणस्य तन्त्रमध्यपातित्वात्तेनैव प्रसङ्गसिद्धिः । सद्यस्कालपक्षेऽप्येवम् । अन्याङ्गैरन्याङ्गानां प्रसङ्गसिद्धेः पशुपुरोडाशादावभ्युपगमात् । यत्तु यदा त्वनायत्या नित्यतर्पणोत्तरं श्राद्धसंकल्पस्तदा पृथक्कार्यम् । नित्यस्य प्रयोगानन्तःपातित्वादिति । तन्न । क्त्वाप्रत्ययेन प्रयोगबहिर्भूताङ्गानुष्ठानस्याऽऽरम्भणीयाबृहस्पतिसंवादौव(द)भ्युपगमात् । अत इदमपि प्रयोगबहिर्भूतमेवाङ्गं पूर्वं कार्यम् । अतश्च प्रसङ्गानुष्ठानमविरुद्धम् । अतो न पृथक्तर्पणं दर्शे । यदा तु सप्तम्यादौ नित्यतर्पणं तिलरहितं क्रियते तदा तन्त्रप्रसङ्गयोरभावादिदं तिलसहितं पृथक्कार्यमेवेति । )

वार्षिकश्राद्धे तु परेद्युरेव ।

तत्रैव—" प्रत्यब्दे न भवेत्पूर्वं परेऽहनि तिलोदकम् " इतिस्मरणात् ।

बृहन्नारदीयेऽप्याब्दिकं प्रक्रम्य—

" परेद्युः श्राद्धकृन्मर्त्यो यो न तर्पयते पितॄन् ।
तस्य ते पितरः क्रुद्धाः शापं दत्त्वा व्रजन्ति हि " ॥

इति गर्गेण प्रत्यवायस्योक्तेश्च । ( + मातापित्रोर्वार्षिके विशेपः(षं) स्मृतिरत्नावल्यां वृद्धमनुराह—

" सप्तम्यां भानुवारे च मातापित्रोः क्षयेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः " इति ॥

क्षयेऽहनीति निमित्तसप्तमीति केचित् । तन्न । वैरूप्यापत्तेः । प्रत्यब्दाङ्ग(ङ्गं) तिलैर्दद्यादितिवक्ष्यमाणवचनविरोधाच्च । किं त्वधिकरणसप्तम्येव । तेन क्षयाहे

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तके 'नित्यतर्पणेन(नै)व श्राद्धाङ्गतर्पणस्य प्रसङ्गतः सिद्धिरिति केचित् । बहवस्तु श्राद्धेज्यदेवतानामेव तर्पणमादौ कृत्वा श्राद्धारम्भः कर्तव्य इति वदन्ति ' इति ग्रन्थो वर्तते । + धनुश्चिह्नान्तर्गतं ङ. पुस्तके नास्ति ।

१ क. ऋतुः षो° । २ च. °दाभ्यु° ।

यत्तर्पणं नित्यं नैमित्तिकं वा तत्तिलरहितमेव कार्यम् । इदं च तर्पणं प्रस्तरप्रहरणे देवतासंकीर्तनवत्संनिपत्योपकारकम् । अत एव यद्दैवत्यं श्राद्धं तद्दैवत्यमेव भवति । ) अत्र पितृशब्दश्च श्राद्धेज्यदेवतापरः । तेनाऽऽब्दिकदिने तिलैर्विना सर्वासां नित्यतर्पणं पृथक्कर्तव्यमेव । ( * न चेयं नित्यतर्पणाकरणनिन्दा । अल्पप्रकरणेऽन्यस्याकरणनिन्दाया अयोग्यत्वात् । श्राद्धाङ्गभूतं तु परेद्युस्तिलसहितमेव । )

तदुक्तं संग्रहे—" प्रत्यब्दाङ्गं तिलैर्दद्यान्निषिद्धेऽपि परेऽहनि ।
वर्गैकस्य वचो येषामन्येषां तु विवर्जयेत् " इति ॥

तत्र श्राद्धाङ्गतर्पणे विधिरुक्तः संग्रहे—

" स्नात्वा तीरं समागत्य उपविश्य कुशासने ।
संतर्पयेत्पितृनिज्यान्स्नात्वा वस्त्रं च धारयेत् " इति ॥

तर्पणोत्तरं नित्यस्नानं संध्यां च कृत्वेत्यर्थः । ( + अत्र स्नानोत्तरसंध्यामकृत्वैव तर्पणं कार्यमित्याहुस्तन्मन्दम् ।

" संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु " इति वाक्यात् ।

न च तर्पणपर्यन्तं श्राद्धप्रयोगानुवृत्तेर्मध्ये संध्या नानुष्ठेयेति वाच्यम् । श्राद्धदिनसायंसंध्याननुष्ठानप्रसक्तेः । ततश्च स्नानसंध्यादीनां सर्वकर्मार्थत्वेन प्राप्तेरुपवेशनस्यापि सामान्यतः प्रातः(प्तेः) कुशासनं तर्पणोत्तरं स्नानं च विधीयत इति युक्तम् ) । संतर्पयेत्पितृन्सर्वानिति पाठो महालयाभिप्रायेण । तत्र सर्वेषां पित्रादिगुर्वन्तानां श्राद्धविधानात् ।

" वर्गैकस्य वचो येषामन्येषां तु विवर्जयेत् " ।

इत्याब्दिक इतरदेवतातर्पणनिषेधाच्च ।

गर्गः—" पक्षश्राद्धे हिरण्ये च अनुव्रज्य तिलोदकम् ।
सकृन्महालये श्वः स्यादष्टकास्वन्त एव हि " इति ॥

हिरण्ये हिरण्यश्राद्धे । पक्षश्राद्धे हिरण्यश्राद्धे च ब्राह्मणविसर्जनोत्तरं तर्पणं कर्तव्यमित्यर्थः । अन्ते श्राद्धसमाप्तौ ।

गर्गः—" कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत् ।
पितॄणां प्रत्यहं कार्यं निषिद्धाहेऽपि तर्पणम् " इति ॥

* धनुश्चिह्नान्तर्गतस्थाने ङ. पुस्तके ' श्राद्धाङ्गभूतस्यैव परेद्युरुक्तेः ' इति वर्तते । + धनुश्चिह्नान्तर्गतं ङ. पुस्तके नास्ति ।

१ ख. च. 'लरहि' ।

निषिद्धदिनानि नित्यतर्पणप्रकरणे वक्ष्यन्ते । जीवत्पितृकेणापि मातृमृताहश्राद्धोत्तरदिने तद्वर्गमात्रस्य शुक्लतिलैस्तर्पणं कार्यमेव । (* परेद्युः श्राद्धकृन्मर्त्य इति तर्पणाकरणे दोषश्रवणादिति केचित् ।

अन्ये तु—" जीवमानः पिता यस्य माता यदि विपद्यते ।
मातुः श्राद्धं सुतः कुर्यान्न कुर्यात्तिलतर्पणम् "

इति स्मृतिसारोदाहृतवचनं[२] जीवत्पितृकस्य श्राद्धाङ्गतिलयुक्ततर्पणनिषेधकं न तु तिलरहिततर्पणनिषेधकम् । अन्यथा तिलपदवैयर्थ्यापत्तेः । तेन तिलरहितं तु भवत्येवेत्यर्थादवगम्यत इति प्राहुः[३] । ) एवमाश्विनशुक्लप्रतिपदादिश्राद्धादिष्वपि ज्ञेयम् । तीर्थश्राद्धे दर्शश्राद्धवत् । ( + माघ्या(घ्या)वर्षश्राद्धस्य मासिकश्राद्धवत्पूर्वमष्टकाङ्गत्वात् । पूर्वेद्युःश्राद्धान्वष्टकाश्राद्धयोरप्यन्त एव । अन्वष्टकाश्राद्धस्यानङ्गत्वे तु मासिकश्राद्धवत्पूर्वमेव ।

यत्तु—" विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् " ॥

इति तन्महालयाष्टकालभ्ययोगश्राद्धव्यतिरेकेण द्रष्टव्यम् ।

" तिथितीर्थविशेषे च गयायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् " इतिवचनात् ॥

तिथिविशेषोऽष्टकादिः ।

यत्तु—" पित्रोः क्षयाहे संप्राप्ते यः कुर्यान्नित्यतर्पणम् ।
आसुरं तर्पणं ज्ञेयं तत्तोयं रुधिरं भवेत् ॥
सर्वदा तर्पणं कुर्याद्ब्रह्मयज्ञपुरःसरम् ।
मृताहे नैव कर्तव्यं कृतं चेन्निष्फलं भवेत् " ॥

इति पठन्ति तन्निर्मूलमेव । समूलत्वेऽपि सतिलतर्पणनिषेधपरम् । पूर्वलिखितवाक्यानुरोधात् । अन्योऽपि विशेषः—

" ज्येष्ठभ्रातृपितृज्येष्ठसपत्नमातरस्तथा ।
एतेषां तु मृताहे तु परेऽहनि तिलोदकम् " इति ॥

* धनुश्चिह्नान्तर्गतं ङ. पुस्तके नास्ति । + धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तके ' माघ्यावर्षादिष्वष्टकावदन्ते ' । इति वर्तते ।

१ च. 'णात् । यत्तु—जी' । २ च. 'नं तज्जीव' । ३ च. ज्ञेयम् । ४ ख. 'स्यानेकत्वे ।

शौनकः—" मातापित्रोः क्षयाहे तु परेऽहनि तिलोदकम्।
कारुण्यश्राद्धविषये सद्यो दद्यात्तिलोदकम् " इति ॥)

मन्वादिश्राद्धे कपिलः—

" मन्वादिषु युगाद्यासु दर्शे संक्रमणेऽपि च।
पौर्णमास्यां व्यतीपाते दद्यात्पूर्वं तिलोदकम् ॥
अर्धोदये(य)गजच्छायाषष्ठीषु च महालये।
भरण्यां च मघाश्राद्धे तदन्ते तर्पणं विदुः " इति ॥

नान्दीश्राद्धादौ तर्पणनिषेधो बृहन्नारदीये—

" वृद्धिश्राद्धे सपिण्डे च प्रेतश्राद्धेऽनुमासिके।
संवत्सरविमोके च न कुर्यात्तिलतर्पणम् " इति " ॥

इति तर्पणम्।

## अथ जीवत्पितृककर्तृकपितामहाद्युद्देशश्राद्धनिर्णयः।

तत्र कात्यायनः—

" वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः " इति ॥

मैत्रायणीयपरिशिष्टमपि—

" उद्वाहे पुत्रजनने पित्रेष्ट्यां सौमिके मखे।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः " इति ॥

यत्तु प्रयोगपारिजाते—

" न जीवतः पितुः कुर्याच्छ्राद्धमग्निमृते द्विजः।
येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः " ॥

इति सुमन्तुवचनान्मैत्रायणीयपरिशिष्टोक्तविषयेष्वपि जीवत्पितृकस्य साग्नेरेवाधिकारो न निरग्नेरिति प्रतिपादितं तदुद्वाहपुत्रजनननिमित्तकनान्दीश्राद्धव्यतिरिक्ततीर्थश्राद्धादिविषयम्।

" अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि।
येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणम् " ॥

इत्याचारमदनरत्नोदाहृतहारीतवचनेन सुमन्तुवाक्यापवादात्। साग्निरत्र

श्रौताग्निमान्स्मार्ताग्निमांश्च । तदितरो निरग्निरित्यपि तत्रैवोक्तम् । अतश्च जीवत्पितृकस्य निरग्नेस्तीर्थश्राद्धादौ नाधिकार इति सिद्धम् ।

इति संस्काररत्नमालायां श्राद्धोपोद्घातः ॥

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायाः सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालाया उत्तरार्धे सप्तमं प्रकरणम् ॥ ७ ॥

अथाष्टमं प्रकरणम् ।

## अथ दर्शश्राद्धापरपर्यायमासिश्राद्धप्रयोगः ।

कर्ता[2] तद्दिवसप्रक्षालितश्वेतवस्त्रधृक्प्र(त्प्र)क्षालितपाणिपादः कृतनित्यक्रियो दर्भपाणिः पूर्वाह्ण एव सपत्नीकपितृवर्गस्य सपत्नीकमातामहवर्गस्य च तिलतर्पणं[3] नद्यादौ विधायासंभवे गृह एव तिलरहितं विधायाऽऽचम्य श्राद्धप्रदेशसमीपे ह्ययश्चेत्तं दूरीकृत्य रजस्वलापतितकुक्कुटश्वमार्जारादीनां मध्यतो गमनं दृष्टिपातश्च यथा न भवति तथा परिहृते गोमयोपलिप्ते देश आसन उपविश्य सर्वदृग्दोषनिबर्हणार्थं[4] समीपे छागं तदभावे कृष्णाजिनं बद्ध्वा तस्याप्यभावे तूष्णीं तिलान्प्रागादिषु[5] चतसृषु दिक्षु[6] प्रदक्षिणं विकीर्याऽऽचम्य[7],

" देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः " इति त्रिः पठित्वा,

" निहन्मि सर्वं यदमेध्यवद्भवेद्धताश्च सर्वेऽसुरदानवा मया ।
रक्षांसि यक्षाश्च पिशाचगुह्यका हता मया यातुधानाश्च सर्वे " ॥

इति सर्वदोषनिबर्हणार्थं सकुशान्यवान्प्रदक्षिणं[8] श्राद्धस्थले विकीर्य,

" तिला रक्षन्त्वसुरान्दर्भा रक्षन्तु राक्षसान् ।
पङ्क्तिं वै श्रोत्रियो रक्षत्वतिथिः सर्वरक्षकः " ॥

इति तिलानप्रदक्षिणं प्राचीनावीती प्रदक्षिणं यज्ञोपवीती वा विकीर्य[9],

---

१ ङ. °गः । यथाधिकारं कृतनित्यक्रियः कर्ताऽपराह्णे दर्भपाणिः सप° । २ क. कर्तैस° । ३ ङ. °णं विधायाऽऽच° । ४ ङ. °र्वदोष° । ५ च. °षु दि° । ६ ङ. °क्षु वि° । ७ ङ. °म्य, निह° । ८ ङ. सकु° । ९ ङ. विकिरेत् । जीवत्पितृकस्य प्रकोष्ठपर्यन्तं प्राचीनावीतम् । ततः प्रमा° ।

" ये राक्षसाः श्रिता दिक्षु श्राद्धकर्मविघातकाः ।
तिलप्रकिरणात्सर्वे तेऽपगच्छन्तु दूरतः " ॥

इति दिग्बन्धार्थं तथैव तिलान्विकिरेत् । ततः प्रमादकृताविज्ञाताशुचित्वनिवृत्त्यर्थं शुचित्वातिशयार्थं वा पुण्डरीकाक्षं स्मरेत् । ततः कुरुक्षेत्राय नमः । गयायै नमः । गङ्गायै नमः । प्रभासाय नमः । पुष्करेभ्यो नमः । गदाधराय नमः । वस्वादिभ्यः पितृभ्यो नमः । इति ध्यानपूर्वकमेतान्नमस्कृत्योदङ्मुखो द्विराचम्य,

(*" पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत " ॥

इति दर्भचतुष्टयात्मके दर्भत्रयात्मके दर्भद्वयात्मके वा ब्रह्मग्रन्थिमती हस्तयोः पवित्रे बिभृयात् । द्विगुणीकृतानां दर्भशिखानां पाशः प्रादक्षिण्येन सर्ववेष्टनं विधाय पुरोभागेन(ण) प्रवेश्यते स[1] ब्रह्मग्रन्थिः । अनन्तर्गर्भितसाग्रद्व्याद्यन्यतमसंख्यदर्भनिर्मितं प्रादेशमात्रं पवित्रं कुर्यात् । तन्मूलं द्व्यङ्गुलम् । एकाङ्गुलो ग्रन्थिः । चतुरङ्गुलमग्रम् । तस्य ग्रन्थिः प्रणवेन कार्यः । आचमनसमये ग्रन्थिमत्पवित्रे पात्रे निधायाऽऽचमनार्थं ग्रन्थिरहिते अन्ये पवित्रे धृत्वाऽऽचमने कृते ग्रन्थिरहिते पवित्रे त्यक्त्वा पूर्वधृते ग्रन्थिमती पवित्रे बिभृयात् । पवित्रस्य भूमौ पाते स्नात्वाऽऽघमर्षणं सकृज्जपित्वा प्राणायामत्रयं कुर्यात् । श्राद्धमध्ये स्नाननिषेधान्मार्जनमेव । ततः) प्राणानायम्य देशकालौ संकीर्त्य पुरूरवार्द्रवसंज्ञकानां विश्वेषां देवानां तृप्त्यर्थमित्युक्त्वा प्राचीनावीती भूत्वा दक्षिणामुखः, अस्मत्पितृपितामहप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानाम्, अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानां तृप्त्यर्थं (+मासिश्राद्धमन्नेन हविषा सद्यः करिष्य इति संकल्पं कुर्यात् । सपत्नीकानामित्येतदमुकगोत्राणामित्येतत्पूर्वं वा वदेत् । अमुकदामुकदापत्नीसहितानामित्येवं वा सपत्नीकशब्दस्थाने वदेत् । एवं तत्तद्विभक्त्यूहेन सर्वत्र गोत्रोच्चारणं सर्वत्र सकारसहितं वा । यथाऽमुकसगोत्राणामिति ।)

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके । + धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तके 'दर्शश्राद्धाख्यं मासिश्राद्धं सदैवं सपिण्डं पार्वणेन विधिनाऽन्नेन हविषा सद्यः करिष्य इति संकल्पं कुर्यात्' इति ग्रन्थो वर्तते ।

१ क. "त्रं त" ।

पूर्वं गोत्रोच्चारणं पश्चान्नामोच्चारणमित्येवं वा । एवं सर्वत्र । नामाज्ञाने पिण्डदानव्यतिरिक्तकर्मसु ब्रह्मविष्णुशिवशब्दैर्व्यवहारः । गोत्राज्ञाने काश्यपगोत्रम् । ( *सर्वदा रुद्राक्षतुलस्यादिधारणनियमरहितस्य न श्राद्धे रुद्राक्षतुलस्यादिधारणम् । नात्र शङ्खशुक्तिघण्टानादाः । सर्वत्र देवकार्येषु दक्षिणजानुनिपातः । पित्र्यकार्येषु सव्यजानुनिपातः । देवकार्ये ऋजवश्चत्वारश्चत्वारो दर्भाः । पितृकार्ये पञ्च पञ्च भुग्नाः पिण्डास्तरणवर्जम् । श्राद्धारम्भप्रभृति समाप्तिपर्यन्तं कलहं भार्यादिताडनं शूद्रादिसंभाषणं च न कुर्यात् । एवं विप्रा अपि न कुर्युः । मालाधारणमपि विप्रा न कुर्युः कर्ता च । एतस्मिन्दिने स्वशरीरं कर्ता नालंकुर्यात् । पिण्डदानात्प्रागेतस्मिन्दिने बालादीनपि न भोजयेत् । पक्वमपक्वं वाऽन्यस्मा अन्नं न दद्यात् । यद्येतस्मिन्दिने श्राद्धभोजनार्होऽतिथिरागच्छेच्चेत्तमपि श्राद्धे भोक्तुं नियोजयेत् । यदि प्रमादादामन्त्रितं विप्रं विस्मरेत्तदा तं प्रयत्नेन प्रसाद्य विशेषेण तोषयेत् । ) ततो यज्ञोपवीती स्वयमेव ब्राह्मणगृहं गत्वा दक्षिणहस्तेन ब्राह्मणस्य[1] दक्षिणजानुन आलम्भनं कृत्वाऽद्य[2] श्वो वा करिष्यमाणेऽस्मिन्मासिश्राद्धे पुरू[3]र[4]वसंज्ञकविश्वदेवार्थं त्वामहं निमन्त्रये, इति निमन्त्रयेत् । दैवे क्षणः क्रियतामिति ब्रूयात् । ओं तथेति स विप्रः प्रतिजानीयात्[5] । प्राप्नोतु भवानिति कर्ता विप्रं वदेत् । प्राप्नवानीति विप्रः कर्तारं प्रति वदेत् । ( +आर्द्र[6]वसंज्ञकविश्वदेवार्थं त्वामहं निमन्त्रय इति द्वितीयविप्रनिमन्त्रणम् । उभयत्रापि पुरूरवार्द्र[7]वसंज्ञकविश्वदेवार्थं त्वामहं निमन्त्रय इत्येवं वा । इदं च पक्षद्वयं सर्वत्र[8] वैकल्पिकं ज्ञेयम्[9] । ) दैवे क्षणः क्रियतामित्यादि समानं सर्वत्र । मातामहार्थं पृथग्वैश्वदेवपक्षे तदर्थमपि द्वौ विप्रौ पूर्ववन्निमन्त्रयेत् । अत्र देवविप्रावा ब्रह्मन्नित्यनुवाकम्[10], उपह्वये सुदुघां धेनुमेतां सुहस्तो० स्तद्गु षु प्रवोचमित्यृचं वा यथाशाखं पठेताम् । उपह्वये हिंकृण्वतीत्यृग्द्वयं पठेदिति केचित् । ततः प्राचीनावीती पित्रर्थब्राह्मणगृहं गत्वा तस्य सव्यजानुन आलम्भनं कृत्वा, अद्य करिष्यमाणेऽस्मिन्मासिश्राद्धे सपत्नीकपित्रर्थं[11] त्वामहं निमन्त्रय इति विप्रं निमन्त्रयेत् । पित्र्ये क्षणः क्रियतामिति ब्रूयात् । ओं तथेति स विप्रः प्रति-

* धनुश्चिह्नान्तर्गत नास्ति ङ. पुस्तके । + धनुश्चिह्नान्तर्गतं नास्ति च. पुस्तके ।

१ ङ. °स्य जानुद्वयमालभ्याद्य । २ ङ. च. °द्य क° । ३ च. °रवार्द्रव° । ४ ङ. °वदेवार्थे क्षणः क्रियतामिति निमन्त्रयेत् । ओं । ५ ङ. °त् । आ° । ६ ङ. °वदेवार्थे क्षणः क्रियतामिति द्वि° । ७ ङ. °वदेवार्थे क्षणः क्रियतामित्येव वा । इदं । ८ ङ. °त्र ज्ञे° । ९ ङ. °म् । मा° । १० ङ. °वाकं जपेताम् । ततः । ११ ङ. °र्थे क्षणः क्रियतामिति विप्रं निमन्त्रयेत् । ओं ।

जानीयात् । अस्मिन्मासिश्राद्धे सपत्नीकपितामहार्थे[1] त्वामहं निमन्त्रये । अस्मि० सपत्नीकप्रपितामहार्थे[2] त्वामहं निमन्त्रये । अस्मिन्मासिश्राद्धे सपत्नीकमातामहार्थे[3] त्वामहं निमन्त्रये । अस्मिन्मासिश्राद्धे सपत्नीकमातुःपितामहार्थे[4] त्वामहं निमन्त्रये । अस्मिन्मासिश्राद्धे सपत्नीकमातुःप्रपितामहार्थे[5] त्वामहं निमन्त्रये । इति यथायथं विप्रान्निमन्त्रयेत्[6] । पित्र्ये क्षणः क्रियतामित्यादि समानं सर्वत्र । ॐ तथेति स विप्रः प्रतिजानीयात् । अत्र पितृविप्रा आ ब्रह्मन्नित्यनुवाकम्[7], "उपह्वये सुदुघां० स्तदु षु प्रवोचम्" इत्यृचं वा यथाशाखं पठेयुः। उपह्वये हिंकृण्वतीत्यृग्द्वयं पठेत्, इति केचित् । तपोविद्याबाहुल्याद्यनुसारेण निमन्त्रणे क्रमो ज्ञेयः । सर्वेषां तुल्यत्वे त्वैच्छिकः । मातामहानां पृथग्वैश्वदेवपक्षे दश ब्राह्मणाः । तन्त्रपक्षेऽष्टौ । अत्यशक्तौ देवार्थ एकः । पितृपार्वणार्थ एकः । मातामहपार्वणार्थ एकः । पृथग्वैश्वदेवपक्षे चत्वारः । यदा त्वेक एव विप्रस्तदा तत्रैव पार्वणद्वयम् । देवस्थाने शालग्रामशिलादि संस्थाप्य देवकार्यं संपादनीयम् । तदीयप्रतिवचनानि तु स्वयमेव वदेत् । लोप एव वा । श्राद्धसमाप्तौ तदीयमन्नमग्नौ प्रक्षिपेत् । ब्रह्मचारिणे वा दद्यात् । सर्वथा ब्राह्मणालाभेऽनियतदर्भात्मकान्दर्भवटूंस्तत्तत्स्थाने निधाय प्रतिवचनयुक्तं सर्वं श्राद्धं कर्तव्यम् । तदीयं दक्षिणादिकमन्येभ्यो ब्राह्मणेभ्यो देयम् । ब्राह्मणाभावेऽप्सु क्षेपणीयम् । स्वस्य निमन्त्रणासामर्थ्ये तु सुतेन शिष्येण सजातीयेन येन केनचित्साधुनाऽऽप्तेन वा कारयेत् । त्र्यहकालतापक्षे[8] यज्ञोपवीती स्वयमेव ब्राह्मणगृहं गत्वेत्यादि एतदन्तं पूर्वस्मिन्दिने सायंहोमानन्तरं कर्तव्यम्[9] । अस्यां रात्रौ न भोजनम् । तर्पणं परेद्युः श्राद्धीयप्रयोगारम्भात्प्राक् । ततो यज्ञोपवीत्येव लौकिकाग्नौ स्वयमेव पाकं कुर्यात् । (*स्वस्याशक्तावन्यः कर्ता । अन्यकर्तृकत्वे पुरुषेषु समानप्रवरसपिण्डमित्रगुणवत्कृतोपकाराः प्रशस्ताः । स्त्रीषु तु पत्न्येव मुख्या पाककर्त्री । तस्या अभावे मात्राद्यन्यतमा तदभावे मातृपितृवंशजा । तत्र विधवाऽन्यगोत्रजा पाखण्डा पुंश्चली पतिता कुत्सिता व्यङ्गा चतुर्थाहःस्नाता गर्भिणी मृतवन्ध्या गर्भघ्नी दुर्मुखीत्याद्याः स्त्रियो वर्ज्याः । पाखण्ड्यादिदोषवत्त्वे पत्न्यादयोऽपि वर्ज्याः । अथं

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने 'स्वस्याशक्तौ पत्न्यादिभिः । अत्र' इति वर्तते ङ. पुस्तके ।

---

१ ङ. °र्थे क्षणः क्रियताम् । अ° । २ ङ. °र्थे क्षणः क्रियताम् । अ° । ३ ङ. °र्थे क्षणः क्रियताम् । अ° । ४ ङ. °र्थे क्षणः क्रियताम् । अ° । ५ ङ. °र्थे क्षण इ° । ६ ङ. °त् । ॐ । ७ ङ. °वाकं जपेयुः । एतच्च पृ° । ८ ङ. °क्षे तर्पणव्यतिरिक्तमेत° । च. °क्षे, ए° । ९ ङ. °म् । ततो ।

च पाको घटिकाचतुष्टयोत्तरं संगवपूर्वार्धे वाऽऽरम्भणीयः । पुरुषस्य पाककर्तृत्वे महानसे रेखाकरणादि । न स्त्रियाः पाककर्तृत्वे । पाकसिद्ध्युत्तरं कर्ता ) पाकः सिद्ध आगम्यतां[1] पुरूरवसंज्ञकविश्वदेवार्थे त्वामहं निमन्त्रये । दैवे क्षणः क्रियेताम्[2] । आर्द्रवसंज्ञकविश्वदेवार्थे त्वामहं निमन्त्रये । दैवे क्षणः क्रियताम् । सपत्नीकपित्रर्थे त्वामहं निमन्त्रये । पित्र्ये क्षणः क्रियतामित्यादि यथायथं दैवपित्र्यधर्मेण पूर्ववन्निमन्त्रणं कुर्यात्[3] । पूर्ववज्जपः सर्वेषाम् । ततो द्वादशघटिकाभ्य ऊर्ध्वं कर्ता ( *तीर्थे गत्वा मध्याह्नस्नानं श्राद्धार्थं स्नानं च तन्त्रेण करिष्य इति संकल्प्य तन्त्रेण स्नानद्वयं विदध्यात् । प्रसङ्गसिद्धिर्वा श्राद्धार्थस्नानस्य । अस्मिन्कल्पे मध्याह्नस्नानं करिष्य इत्येतावानेव संकल्पः । ततो मध्याह्नसंध्यां कृत्वा ब्रह्मयज्ञोऽकृतश्चेत्तमपि कृत्वा तर्पणं विधाय, इमं मे वरुणेत्याद्यैर्मन्त्रैर्वरुणं संप्रार्थ्य दक्षिणप्रवाहं शुद्धं जलं श्राद्धार्थमाहरेत् । आहारयेद्वा । तदभावे शुद्धं जलमितरदिक्प्रवाहम् । तीर्थे स्नानाशक्तौ गृह एवोष्णोदकेन स्नानम् । ततो मौनी गृहमागत्य हस्तपादान्प्रक्षाल्याऽऽचम्याग्निसमीपमागत्योपविश्य सर्वां सामग्रीं स्वसमीपे निधाय शुद्ध्यर्थं पवमानानुवाकं कूश्माण्डानुवाकान्वा पठित्वा पुण्डरीकाक्षं स्मृत्वा, ॐ वैष्णव्यै नमः । ॐ काश्यप्यै नमः । ॐ क्षमायै नमः । इति पृथ्वीं नमस्कुर्यात् । तत आगतैर्ब्राह्मणैः सति संभवे श्मश्रुकर्माभ्यञ्जनादि कारयेत् । न वा । ततो द्विराचम्य सौवर्णं ताम्रमयं वाऽव्रणं पात्रं देवकार्यार्थं यवसंयुक्तोदकेन पूरयित्वा तस्मिन्नवसप्तपञ्चान्यतमसंख्यदर्भात्मकं ग्रन्थियुतं समन्ताद्दर्भवेष्टितं कूर्चं चन्दनं पुष्पाणि फलं हिरण्यं च प्रक्षिपेत् । ततः प्राचीनावीती राजतं ताम्रमयं वाऽव्रणं पात्रं पित्र्यकार्यार्थं तिलसंयुक्तोदकेन पूरयित्वा तस्मिन्पूर्ववत्कूर्चं चन्दनादीनि च प्रक्षिपेत् ) । ततो यज्ञोपवीती 'शुची वो हव्या मरुतः शुचीनां शुचिं[4] हि० पावकाः । अग्निः शुचिव्रततमः ० ष्यर्चयः" इति शुद्धोदकेनाऽऽत्मानं मार्जयेत् ।

ततः—"समस्तसंपत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः ।
अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः ॥

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तके 'तीर्थे स्नात्वा मौनी कृतमाध्याह्निकक्रियो गृहमागत्य हस्तपादान्प्रक्षाल्याग्निसमीपमागत्याऽऽचम्य, एकस्मिन्पात्रे देवकार्यार्थं यवमिश्रितमुदकं कृत्वा तस्मिन्दर्भमयं कूर्चं गन्धादींश्च निक्षिप्य प्राचीनावीती—अन्यस्मिन्पात्रे पितृकार्यार्थं तिलमिश्रितमुदकं कृत्वा दर्भमयकूर्चं गन्धादींश्च निक्षिपेत्' इति वर्तते ।

१ ङ. °तां दै° । २ ङ. °यतां पित्रर्थे क्षणः क्रियतामि° । ३ ङ. °त् । त° । ४ च. °कं प° ।

आपद्घनध्वान्तसहस्रभानवः समीहितार्थार्पणकामधेनवः ।
समस्ततीर्थाम्बुपवित्रमूर्तयो रक्षन्तु मां ब्राह्मणपादपांसवः ॥
विप्रौघदर्शनात्क्षिप्रं क्षीयन्ते पापराशयः ।
वन्दनान्मङ्गलावाप्तिरर्चनादच्युतं पदम् ॥
आधिव्याधिहरं नृणां मृत्युदारिद्र्यनाशनम् ।
श्रीपुष्टिकीर्तिदं वन्दे विप्रश्रीपादपङ्कजम् " ॥

इति यवतिलदर्भादिपूजोपचारहस्तो विप्रांस्त्रिः[1] सकृद्वा प्रदक्षिणी कुर्यात् । ततो " यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति " इतिश्रुतिसिद्धब्राह्मणमहिमानं विभावयन्विप्रान्सकृ[2]देव नमस्कुर्यात् ।

ततः —" अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ।
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा " ॥

इति विप्रान्प्रार्थयेत्[3] । ओं तथेति विप्राः प्रतिजानीयुः । ततः पुरूरवार्द्रवसंज्ञकानां विश्वेषां देवानामित्युक्त्वा प्राचीनावीती—अस्मत्पितृपितामहप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानाम्, अस्मन्माता० सपत्नीकानां मासिश्राद्धं कर्तुं ममाधिकारसंपदस्त्विति भवन्तो ब्रुवन्तु, इति विप्रान्वदेत् । अस्तु तव श्राद्धाधिकारसंपदिति विप्राः प्रतिब्रूयुः । कालोऽयं मुख्यकालोऽस्त्विति भवन्तो ब्रुवन्तु, इति विप्रान्वदेत् । अस्त्वयं कालो मुख्यकाल इति विप्राः । (+अत्र नीविकल्पनम् । सा च [स]कुशतिलानां परिहितवस्त्रोत्तराञ्चलदशानां वामकटि[4]संलग्नवस्त्रबहिर्भागेन(ण) संवेष्ट्यान्तः प्रवेश्योत्तरीयवस्त्रेणोपरिष्टाद्वेष्टनेन गोपनमिति हेमाद्र्यादयः । इयं च नीविः श्राद्धसमाप्त्यन्तम् । अत्र पूर्ववत्संकल्पः । कुरुष्वेति विप्रानुज्ञाऽधिकाऽत्र ) ततः प्राचीनावीती—

" अपहता असुरा रक्षांसि पिशाचा ये क्षयन्ति पृथिवीमनु ।
अन्यत्रेतो गच्छन्तु यत्रैतेषां गतं मनः "

इति सर्वतः सदर्भांस्तिलांस्त्रिरप्रदक्षिणं विकीर्य, ' उदीरतामवर उत्प० हवेषु ' इति तथैव केवलं तिलान्विकीर्य[5],

+ धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके ।

१ ङ. विप्रान्प्रद° । २ ङ. °प्राक्षम° । ३ ङ. °त् । भवाम इति विप्राः । ततः । ४ च. °कटिसं° । ५ ङ. °स्तिलान्विकी° ।

" श्राद्धभूमिं गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।
वस्वादींश्च पितॄन्ध्यात्वा ततः श्राद्धं प्रवर्तये "

इति वदेत् । प्रवर्तयेति विप्राः । ततस्तिलोदकमादाय दर्भैर्गायत्र्या कूश्माण्डीभिश्च गायत्र्यैव वा पाकस्य पूजोपचारादीनां च प्रोक्षणं कुर्यात्[3] । गायत्र्यन्ते कूश्माण्डीनां सर्वासामन्ते चेति द्विवारं प्रोक्षणम् । ततः पाकादीनां पवित्रताऽस्त्विति भवन्तो ब्रुवन्त्विति विप्रान्वदेत् । अस्तु पाकादीनां पवित्रता, इति विप्राः प्रतिब्रूयुः । तत उपवीती—( * अमेध्याशनरहिताया अनङ्गहीनाया अनतिजीर्णदेहाया अनवप्रसूताया अवन्ध्याया गोर्गोमयमानीय तेन गोमूत्रयुतेन तदयुतेन वा गोमयेनाभावे गारमृत्तिकया भस्मना वा श्राद्धगृहद्वाराभिमुखस्थितेऽङ्गणप्रदेश उत्तरभागे 'ॐ वैश्वदेविकं मण्डलं करोमि ' इतीशानीमारभ्य प्रदक्षिणं प्रादेशमात्रं चतुरश्रं मण्डलं कृत्वा यवांश्चन्दनं पुष्पाणि प्रागग्रान्दर्भांश्च तत्र निक्षिपेत् । ततः प्राचीनावीती—प्राङ्मुख एव वैश्वदेविकमण्डलाद्दक्षिणतः प्रादेशमात्रं षडङ्गुलं वा स्थलं त्यक्त्वाऽऽग्नेयीमारभ्याप्रदक्षिणं प्रादेशमात्रविष्कम्भं वर्तुलं मण्डलम् 'ॐ पित्र्यं मण्डलं करोमि ' इति पूर्वोक्तान्यतमद्रव्येण कृत्वा तिलांश्चन्दनं पुष्पाणि दक्षिणाग्रान्दर्भांश्च निक्षिपेत् । एतयोर्मण्डलयोर्मध्ये देवपितृविप्रपाद्याद्युदकासंसर्गाय मृदादिभिरन्तरं कुर्यात् ।) अस्मिन्मासिश्राद्ध इत्यादिविधिना पूर्ववन्निमन्त्र्य दैवे क्षणः क्रियतामित्यादि प्राप्नवानीतिविप्रप्रतिवचनान्तं पूर्ववत्कुर्यात् । पूर्ववज्जपः । ततः पूर्वे पवित्रे यस्मिन्कस्मिंश्चित्पात्रे प्रज्ञाते निधायान्ये ग्रन्थिरहिते पवित्रे धृत्वा पुरूरवसंज्ञका विश्वे देवाः स्वागतमिति चतुरश्रमण्डलतः[6] पश्चिमदेशे[7] प्राङ्मुखं विप्रमुपवेश्य तत्पादौ मण्डले तेन निधाप्य सुस्वागतमिति विप्रेणोक्ते स्वयं तत्पुरतः प्रत्यङ्मुख उपविश्य धृते ग्रन्थिरहिते पवित्रे यस्मिन्कस्मिंश्चित्पात्रे निधाय गव्येन माहिषेण वा सर्पिषा सुगन्धतैलेन वा विप्रपादावभ्यज्य ग्रन्थिरहिते पूर्वधृते पवित्रे एव धृत्वा सकुशयवगन्धपुष्पं जलं पात्रे गृहीत्वा पुरूरवसंज्ञका विश्वे देवा इदं वः पाद्यं स्वाहा न ममेति द्विवारं तज्जलं देवतीर्थेन पादयो-

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तके ' नवप्रसूतातोतिरिक्तगोर्गोमयेनाभावे गौरमृत्तिकया भस्मना वा गृहाङ्गण उत्तरे प्रादेशमात्रं चतुरस्रं मण्डलं कृत्वा यवदर्भांश्च तत्र प्रक्षिप्य प्राचीनावीती दक्षिणे प्रादेशमात्रं वर्तुलं मण्डलं कृत्वा तिलान्दर्भांश्च प्रक्षिपेत् ' इति ग्रन्थो वर्तते ।

१ ङ. °भूमौ ग° । २ ङ. °ग्या पाकप्रो° । ३ ङ. °त् । पा° । ४ ङ. °मात्रं व° । च. °मात्रं वि° । ५ ङ. °वत्क्षणं दद्यात् । ततः पुरूरवविश्वे । ६ ङ. °ण्डले प° । ७ ङ. °शे वि° । ८ ङ. °श्य सु° । ९ ङ. °श्य वि° । १० ङ. °पादयोः सयवकुशग° ।

निक्षिप्य सुपाद्यमिति विप्रेणोक्ते[1] धृते पवित्रे निष्काश्य 'शं नो देवीरभिष्टये, आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः' इति[2] पादौ मण्डलोपरि क्षालयेत्[3] । नात्र विप्रपादाधःक्षालनम् । पादक्षालने यदि पत्नी वारि स्रावयेत्तदा पत्युर्दक्षिणतः स्थितैव स्रावयेत् । न वामे स्थिता । एवमितरविप्रेष्वपि द्रष्टव्यम् । आर्द्रवसंज्ञका विश्वे देवा[4] इदं वः पाद्यं स्वाहा न ममेति द्वितीयदेवविप्रे विशेषः । अन्यत्समानम् । ततः[5] सग्रन्थिके पूर्वे पवित्रे धृत्वा प्राचीनावीती—अस्मिन्मासिश्राद्ध इत्यादिविधिना पूर्ववन्निमन्त्र्य पित्र्ये क्षणः क्रियतामिति प्रतिब्रूयात् । एवं पितामहादीनाम् । ॐ तथेति स स विप्रः । प्राप्नोतु भवानिति कर्ता । प्राप्नवानीति स स विप्रः । पूर्ववज्जपः । ततः पूर्वे पवित्रे यस्मिन्कस्मिंश्चित्पात्रे प्रज्ञाते निधायान्ये ग्रन्थिरहिते पवित्रे धृत्वोपवीती—अस्मत्पितः सपत्नीक स्वागतम्, इति वर्तुल[6]मण्डलतो दक्षिणे देशे पित्रर्थं ब्राह्मणं सव्येनैवोदङ्मुखमुपवेश्य[7] तत्पादौ मण्डले तेन निधाप्य सुस्वागतमिति विप्रेणोक्ते[8] प्राचीनावीती स्वयं प्रत्यङ्मुखः सन्नेव[9] धृते ग्रन्थिरहिते पवित्रे यस्मिन्कस्मिंश्चित्पात्रे निधाय गव्येन माहिषेण वा सर्पिषा सुगन्धतैलेन वा विप्रपादावभ्यज्य ग्रन्थिरहिते पूर्वधृते एव पवित्रे धृत्वा सकुशतिलगन्धपुष्पजलं[10] पात्रे गृहीत्वाऽस्मत्पितरमुकशर्मन्नमुकगोत्र वसुरूप सपत्नीकेदं ते पाद्यं स्वधा न मम, इति त्रिः सकृद्वा तज्जलं पितृतीर्थेन[11] पादयोर्निक्षिप्य सुपाद्यमिति विप्रेणोक्ते 'शं नो देवी० स्रवन्तु नः' इति मन्त्रेण[12] निष्काशितपवित्र एव पादौ मण्डलोपरि क्षालयेत् । ( * क्षालनं यज्ञोपवीतिनैव कार्यमिति संप्रदायः । ) एवं पितामहादिविप्रेषूहेन । + पित्र्य एकब्राह्मणपक्षे[13]—अस्मत्पितृपितामहप्रपितामहाः, शर्माणः, गोत्राः, वसुरुद्रादित्यस्वरूपाः सपत्नीकाः स्वागतं, पाद्यम् । अस्मन्मातामहमातुःपितामहमातुःप्रपितामहाः, शर्माणः, गोत्राः, वसुरुद्रादित्यस्वरूपाः सपत्नीकाः स्वागतं, पाद्यमित्येवं सहैवोत्कीर्तनम् । एवमन्यत्रापि ज्ञेयम्[14] । आचमनपादप्रक्षालनोदकानि न मेलनीयानि । ततो[15] देवविप्रौ स्वमण्डलोत्तरत उपविश्य द्विराचमनं कुर्याताम् । पित्र्यविप्राः स्वमण्डलोत्तरतः । तेष्वा-

* धनुश्चिह्नान्तर्गतं नास्ति ङ. पुस्तके । + पित्र्य इति नास्ति ङ. पुस्तके

१ ङ. °क्ते शं । २ ङ. °तिमन्त्रेणासंस्पृशन्पादौ । ३ ङ. °त् । आ° । ४ ङ. °देवाः स्वागतम् । आर्द्रवविश्वे देवा इ° । ५ ङ. ततोऽस्म° । ६ ङ. °लसमीपे पि° । ७ ङ. °श्य मु° । ८ ङ. °क्ते स्व° । ९ ङ. °व तस्य पादयोः सकु° । १० ङ. °जलमस्म° । ११ ङ. °न निक्षि° । १२ ङ. °ण संस्पृशन्पादौ । १३ ङ. °क्षे—पुरूरवार्द्रवाविश्वे देवाः स्वागतं, पाद्यम् । अ° । १४ ङ. °म् । त° । १५ ङ. °तो विप्राः स्वस्वमण्डलोत्तरतो द्विवारमाचमनं कुर्युः । ते° ।

चान्तेषु कर्ता[1], एते पवित्रे त्यक्त्वा सग्रन्थिके पवित्रे विसृष्टग्रन्थिके कृत्वा[2] विसृज्य हस्तौ पादौ च प्रक्षाल्य द्विराचामेत् । सर्वाण्याचमनानि सव्येनैव [3]भवन्ति । ततो[4]ऽन्ये सग्रन्थिके पवित्रे धृत्वोपक्लृप्ते श्राद्धप्रदेशे प्रागग्रेषु दर्भेषु पुरूरवसंज्ञका विश्वे देवाः समाध्वम् । आर्द्रवसंज्ञका विश्वे देवाः समाध्वम्, इति देवविप्रौ प्राङ्मुखावुदक्संस्थमुपवेशयेत् । सुसमास्महे इति विप्रौ[5] । ततः प्राचीनावीती—अस्मत्पितरमुकशर्मन्गोत्र वसुरूप सपत्नीक समास्स्व । अस्मत्पितामह शर्मन्गोत्र रुद्ररूप सपत्नीक समास्स्व । अस्मत्प्रपितामह शर्मन्गोत्राऽऽदित्यरूप सपत्नीक समास्स्व । अस्मन्मातामह शर्मन्गोत्र वसुरूप सपत्नीक समास्स्व । अस्मन्मातुःपितामह शर्मन्गोत्र रुद्ररूप सपत्नीक समास्स्व । अस्मन्मातुःप्रपितामह शर्मन्गोत्राऽऽदित्यरूप सपत्नीक समास्स्व, [6]इति यथायथं दक्षिणाग्रेषु दर्भेषु[7] भुग्नेषु पित्र्यविप्रानुदङ्मुखान्प्राक्संस्थमुपवेशयेत् । सुसमा[8]से, इति विप्राः । ततः[9] प्राचीनावीत्येव—

" देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः "

[10]इति पापहरं सप्तार्चिःसंज्ञकं मन्त्रं त्रिः पठेत् । अत्र वा सदर्भतिलविकिरणं[11] केवलतिलविकिरणं वा पाकाद्युपचारप्रोक्षणं च । ( +तत उदङ्मुखो देवद्विज-

---

+ धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ पुस्तके संक्षिप्तो ग्रन्थो विद्यते । स यथा—" तत उदङ्मुखो दक्षिणं जान्वाच्य देवद्विजदक्षिणकरयोर्यवोदकं दर्भयवुना दत्त्वा ' पुरूरवविश्वेषां देवानामिदमासनम् । अत्राऽऽस्यताम् ' इति यवसहितान्प्रागग्रान्दर्भानृजून्दक्षिणतो दद्यात् । धर्मोऽसीति विप्राः प्रतिब्रूयुः । एवं द्वितीये विप्र आर्द्रवविश्वेषां देवानामित्यूहेन । ' स इषुहस्तैः० ऋक् । नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमः । नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः ' इति मन्त्रावपेताम् । ततः पुरूरवविश्वे(श्व)देवार्थे त्वया क्षणः करणीयः, इति क्षणं दद्यात् । ओँ तथेति प्रतिवचनम् । आर्द्रवविश्वे(श्व)देवार्थे त्वया क्षणः करणीय इत्यूहेन द्वितीयदेवविप्रे । देवविप्रावा ब्रह्मन्नित्यनुवाकं जपेताम् । ततो भुवं यवोदकेन प्रोक्ष्य तत्र प्रागग्रं दर्भद्वयं निधाय तत्र प्राक्संस्थं पात्रद्वयं निधाय तदुपरि प्रादेशमितौ द्वौ द्वौ कुशौ साग्रौ प्रागग्रौ निधाय तस्मिन्यवमिश्रिता अप आसिच्य ' शं नो देवी० स्रवन्तु नः ' [ इति ] सकृदेव मन्त्रमुक्त्वा पात्रद्वयमनुमन्त्र्य ' यवोऽसि धान्यराजो० मुनिभिः स्मृतम् ' इति मन्त्रेण ' यवोऽसि यवया० रातीः ' इत्यनेन मन्त्रेण वा तयोः क्रमेण यवानोप्य गन्धद्वारामिति गन्धमोषधयः प्रतिमोदध्वमिति पुष्पाणि च प्रक्षिपेत् । सर्वत्र मन्त्रावृत्तिः । ततो देवपात्रे संपन्ने इति देवविप्रौ वदेत् । सुसंपन्ने इति विप्रौ प्रतिवदेताम् । ततो देवविप्रकरयोर्यवोदकं दत्त्वा कुशयवकरः पुरूरवविश्वान्देवांस्त्वयि आवाहयिष्य इति प्रथमदेवविप्रस्य दक्षिणपादादिमूर्धान्तं प्रदक्षिणमावाह्य, आर्द्रवविश्वान्देवांस्त्वय्यावाहयिष्य इति द्वितीयदेव-

---

१ ङ. °र्ता पवित्रे ग्रन्थिं मुक्त्वा विसृज्य पादौ प्र° । २ च. °त्वा शुद्धदेशे त्यक्त्वा ह° । ३ ङ. कार्याणि । ४ ङ. °तो दक्षिणाप्रवणे गृहमध्ये प्रा° । ५ ङ. विप्राः । ६ ङ. इत्यूहेन द° । ७ ङ. °षु पि° । ८ ङ. °मास्स्वेति । ९ ङ. °तः ' दे° । १० ङ. °ति पठे° । ११ ङ. °णं पाकप्रो° ।

दक्षिणकरयोर्यवोदकं कूर्चेन दत्त्वा देवविप्रावुत्थाप्य तेष्वेव दर्भेषु वक्ष्यमाणासनेषु अन्यतमजातीये प्राङ्मुखे देवविप्रार्थे आसने विविक्ते संस्थाप्य प्राचीनावीती पित्र्यविप्रानुत्थाप्य तज्जातीयान्येवाऽऽसनानि तेष्वेव दर्भेषु दक्षिणामुखानि संस्थाप्योभयेष्वासनेषु तत्तदासनाभिमुखाग्रान्बहुलान्दर्भानास्तृणी-

---

विप्रमामन्त्र्याऽऽवाहयेति तेनानुज्ञातः 'विश्वे देवाः शृणु० ध्वम्' आर्द्रवविश्वान्देवानावाहयामीति पूर्ववदावाहयेत् । 'विश्वायां दक्षकन्यायां जाता धर्मान्महात्मनः । विश्वे देवा इति ख्याता देववर्या महाबलाः । शक्रेण सह योद्धृणां विजेतारस्तु रक्षसाम् । यन्नामस्मरणादेव प्रद्रवन्त्यसुराः क्षणात् । बाणबाणासनधरा द्विभुजाः श्वेतवाससः । केयूरिणः कुण्डलिनः किरीटकटकान्विताः । धैर्यसौन्दर्यसंयुक्ता दिव्यस्रगनुलेपनाः । इन्द्रस्यानुचराः सर्वे गोप्तारस्त्रिदिवस्पतेः' इति विश्वेदेवमूर्ति ध्यात्वा 'विश्वे देवाः शृ० मादयध्वम्' 'आगच्छन्तु महा० भवन्तु ते' इति द्वाभ्यां देवानुपतिष्ठते । भवाम इति विप्रौ । ततोऽपो दत्त्वा पुरूरवविश्वे देवाः संपादिता वः स्वाहाऽर्घ्या इति प्रथममर्घ्यपात्रं प्रथमविप्रस्य निकटे निदध्यात् । सन्त्वर्घ्या इति विप्रः । आर्द्रवविश्वे देवाः संपादिता वः स्वाहाऽर्घ्या इति द्वितीयमर्घ्यपात्रं द्वितीयविप्राग्रे निदध्यात् । सन्त्वर्घ्या इति विप्रः । ततोऽपो दत्त्वा प्रथमपात्रस्थं कुशद्वयं प्रागग्रं प्रथमविप्रदक्षिणकरे निधाय 'या दिव्या आपः प० वर्चसा' इति मन्त्रान्ते पुरूरवविश्वेदेवा इदं वोऽर्घ्यं स्वाहा न मम इति द्विवारमर्घ्यं देवतीर्थेन दत्त्वा पुनरपो दद्यात् । अस्त्वर्घ्यमिति विप्रः । आर्द्रवविश्वे देवा इत्यूहेन द्वितीयपात्रस्थमुदकं द्वितीयविप्रकरे पूर्ववद्दद्यात् । पुरू० आर्द्र० देवा अमी वो गन्धाः स्वाहा न मम इति गन्धः । स्वाहा न ममेति सर्वत्रानुषङ्गः । प्रत्युपचारं जलदानम् । सुगन्धाः सन्त्विति प्रतिवचनम् । पुरू० आ० इमानि वः पुष्पाणि । सुपुष्पाणीति प्रतिवचनम् । पुरू० आर्द्र० एष वो धूप इति धूपं दद्यात् । सुधूपोऽस्त्विति प्रतिवचनम् । पुरूरव० आर्द्र० एष वो दीप इति दीपं दद्यात् । सुदीपोऽस्त्विति प्रतिवचनम् । पुरू० आर्द्र० इदं व आच्छादनम्, इति वस्त्रं दद्यात् । स्वाच्छादनमस्तु, इति प्रतिवचनम् । वस्त्राभावे यज्ञोपवीतं दद्यात्तच्छब्देनैव । गन्धाद्याच्छादनान्ता उपचाराः परिपूर्णा भवन्त्विति विप्रौ वदेत् । तौ च भवन्तु परिपूर्णा इति प्रतिब्रूयाताम् ।

## इति देवार्चनम् ।

ततः प्राचीनावीती दक्षिणामुखः सव्यं जान्वाच्य पित्र्यविप्रदक्षिणकरेषु तिलोदकं दर्भवटुना दत्त्वा, अस्मत्पितुः शर्मणो गोत्रस्य वसुरूपस्य सपत्नीकस्येदमासनमत्राऽऽस्यतामिति तिलसहितान्द्विगुणभुग्नान्दक्षिणाग्रान्दर्भान्वामभागे दद्यात् । धर्मोऽसीति विप्रः । अस्मत्पितामहस्य श०गो० रुद्ररूपस्य सप० इदमा० । अस्मत्प्रपितामहस्य श० गो० आदित्य० सप० इदमा० । अस्मन्मातामहस्य श० गो० वसु० सप० इदमा० । अस्मन्मातुःपिता० श० गो० रु० सप० । अस्मन्मातुःप्रपिता० श० गो० आदि० सप० इदमासनमित्यूहेन क्रमेणाऽऽसनानि पूर्ववद्दद्यात् । धर्मोऽसीति विप्राः । अत्र पूर्वोक्तान्निपङ्कपदन्मन्त्राञ्जपेयुः । एकविप्रपक्षे—अस्मत्पितृपितामहप्रपितामहानां श० गो० वसुरु० सप० । अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानां श० गो० वसुरु० सप० इदमासनम् । सहैवोत्कीर्तनम् । एवमत्रापि । ततोऽस्मत्सपत्नीकपित्रर्थे त्वया क्षणः करणीय इत्याद्यूहेन क्रमेण क्षणं दद्यात् । ॐ तथेति प्रतिवचनम् । अत्र पितृ(त्र्य)विप्रा आ ब्रह्मन्निलनुवाकं जपेयुः । ततस्तिलोदकेन भुवं प्रोक्ष्य तत्र दक्षिणाग्रान्दर्भान्संस्तीर्य तत्र दक्षिणापवर्गाणि प्रतिवर्ग त्रीणि पात्राणि निधाय तदुपरि प्रादेशमितांस्त्रींस्त्रीन्कुशान्दक्षिणाग्रान्दक्षिणापवर्गान्निधाय तिलोदकेन क्रमेणाऽऽपूर्य शं नो देवीरिति सकृदेव मन्त्रयित्वा जलमनुमन्त्र्य 'तिलोऽसि सोमदेवत्यो० दि नः स्वधा नमः' इति प्रतिपात्रं क्रमेण तिलानोप्य

**यात् । कम्बलाद्यासनेषु दशा एव मुखानि । काष्ठमयाद्यासनेषु तु मुखस्थानी-यत्वेनावयवः संकेतेन परिकल्पनीयः । तत्र देवार्थासनयोर्विप्रदक्षिणदेशमनु-लक्ष्य तत्रर्जूनसयवान्प्रागग्रान्दर्भान्निधाय भूर्भुवः सुवः पुरूरवसंज्ञकानां विश्वेषां देवानामिदमासनमिति प्रथमदेवविप्राय सव्यहस्तेनाऽऽसनं स्पृशन्निवेद्य, भूर्भुवः सुवः, अत्राऽऽस्यतामित्यासनं स्पृशन्नेव दक्षिणहस्तेन तं विप्रमासनस्योपरि प्राङ्मुखमुपवेशयेत् । विप्र ओमित्यङ्गीकृत्य** ' जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि विशि राजा प्रतिष्ठितः ' **इति मन्त्रेण तस्मिन्नासन उपविशेत् । आर्द्रवसंज्ञकानां विश्वेषां देवानामित्यूहेन द्वितीयदेवविप्र एवमेव । उपवेशनमपि प्रथमविप्रवद्द्वितीयवि-**

---

गन्धद्वारामिति गन्धमोषधयः प्रतिमोदध्वमिति पुष्पाणि च निक्षिपेत् । सर्वत्र मन्त्रावृत्तिः । ततः पित्र्यपात्राणि संपन्नानीति विप्रान्वदेत् । सुसंपन्नानीति विप्राः । ततः पित्र्यविप्रदक्षिणकरेषु तिलोदकं दत्त्वा कुशतिलहस्तः ' अस्मत्पितरं शर्माणं गोत्रं वसुरूपं सपत्नीकं त्वय्यावाहयिष्ये ' इति पित्रर्थ-विप्रमामन्त्र्याऽऽवाहयेति तेनानुज्ञातः ' उशन्तस्त्वा ह० अत्तवे ' अस्मत्पितरं सपत्नीकमावाहयामि, इति विप्रमूर्धादिदक्षिणपादान्तं तिलैरप्रदक्षिणमावाहयेत । अस्मत्पितामहं शर्माणं गोत्रं रुद्ररूपं सप-त्नीकं त्वय्यावाहयिष्य इत्याद्यूहेन तत्तद्विप्रेषु पितामहादीन्पूर्ववदावाहयेत् । ' उपहूताः पितरः० त्वस्मान् ' इति पितॄनुपस्थायापो दत्त्वा प्राचीनावीत्येवास्मत्पितः शर्मन्गोत्र वसुरूप सपत्नीक संपा-दितास्ते स्वधाऽर्घ्या इत्याद्यूहेन तत्तदर्घ्यपात्रं तत्तद्विप्रसमीपे निदध्यात् । मन्त्वर्घ्या इति प्रतिवचनम् । ततोऽपो दत्त्वा पित्रर्थपात्रस्थान्दर्भान्द्विजदक्षिणहस्ते दक्षिणाग्रान्निधायार्घ्यपात्रोदकं किंचिदवशेषय-न्खड्गपात्रे गृहीत्वा वामकरान्वारब्धेन गृहीतखड्गपात्रेण दक्षिणेन हस्तेन ' अस्मत्पितः शर्मन्गोत्र वसुरूप सपत्नीकेदं तेऽर्घ्यं स्वधा नमः, इति पितृतीर्थेन दद्यात् । अस्त्वर्घ्यमिति विप्रः । ' या दिव्या आ०वर्चसा ' इति द्विजहस्तात्स्रवन्तीरपोऽनुमन्त्रयेत् । एवं पितामहादिष्वूहेन तत्तत्पात्रस्थजलं पूर्व-वत्खड्गपात्रेण किंचिदवशेषयन्दद्यात् । ततोऽपो दत्त्वा प्रपितामहपात्रशेषं पितामहपात्रे निक्षिप्य तज्जलं पितृपात्रे निक्षिप्य मातुःप्रपितामहपात्रशेषं मातुःपितामहपात्रे निक्षिप्य तज्जलं मातामहपात्रे निक्षिप्य पितृपितामहप्रपितामहद्विजकरस्थितकुशान्पितृपात्रे मातामहमातुःपितामहमातुःप्रपितामहद्वि-जकरस्थितकुशान्मातामहपात्रे च निधाय द्विजवामतः पितृपितामहप्रपितामहानां स्थानमसि मातामहमातुःपितामहमातुःप्रपितामहानां स्थानमसीति तत्पात्रद्वयं दक्षिणसंस्थं न्युब्जं निदध्यात् । अथवा मातामहादिपात्रस्थं शेषं सर्वं पितृपात्र एव निक्षिप्य तत्पात्रमेकमेव स्थापयेत् । आ समाप्तेः पात्रचा-लनं न कुर्यात् । ततोऽपो दत्त्वाऽस्मत्पितः शर्मन्गोत्र वसुरूप सपत्नीकेत्याद्यूहेनामी ते गन्धाः । इमानि पुष्पाणि । धूपः, दीपः, आच्छादनम्, इति तत्तच्छब्दैर्गन्धादि दद्यात् । सर्वत्र स्वधा न ममेत्यनुषङ्गः । प्रत्युपचारं तिलोदकदानम् । वस्त्राभावे यज्ञोपवीतं तच्छब्देनैव देयम् । पूर्ववत्प्रतिवचनानि । एक-ब्राह्मणपक्षे व इत्यूहः ।

## इति पित्रर्चनम् ।

तत उपवीती देवद्विजभोजनस्थाने गोमयेन चतुरस्रे मण्डले कृत्वा तदुपरि सयवान्दर्भान्प्रा-गग्रान्निक्षिप्य सौवर्णान्यभावे कांस्यानि तदभावे मध्यमपर्णव्यतिरिक्तपलाशपत्रमधूकाम्रप्लक्षग्राम्य-कदल्याद्यन्यतमपात्राणि संस्थाप्य तत्समीपे लघुपात्राणि च संस्थापयेत् । ततः प्राचीनावीती पितृपा-त्रभोजनस्थाने गोमयेन वर्तुलानि मण्डलानि कृत्वा तदुपरि सतिलकुशान्दक्षिणाग्रान्निक्षिप्य रौप्यपा-त्राण्यभावे कांस्यानि तदभावे पूर्वोक्तानि पात्राणि संस्थाप्य तत्समीपे लघुपात्राणि संस्थापयेत्" इति ।

प्रस्य। चतुर्थ्या विभक्त्या वाऽऽसनदानम्। देवविप्राभ्यामासनदानमुदङ्मुखेनैव कार्यम्। अन्यत्र तदभिमुखेनोदङ्मुखेन वा। सति संभव आसनदानोत्तरं तत्तदासनसमीपे तिलतैलघृताद्यन्यतमप्रशस्तस्नेहपूरितसूज्ज्वलदीपवर्त्येकैका दीपिका देया। एवं पित्र्यविप्रार्थासनसमीपेष्वपि। ततः 'स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा सयुध इन्द्रो गणेन। सꣳसृष्टजित्सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता। नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमः। नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः। ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि' इति यजुर्वेदिनौ देवविप्रौ पठेताम्। 'इन्द्र द्दह्य याम कोशा अभूवन्० वाशीमन्त ऋष्टिमन्तो मनीषिणः०। स इषुहस्तैः स निषङ्गिभिर्वशी०' इति ऋग्वेदिनौ चेद्देवविप्रौ तदा तावेतान्मन्त्रान्पठेताम्। ततः पुरूरवसंज्ञकविश्वदेवार्थं त्वया क्षणः करणीयः। इति प्रथमदेवविप्रं वदेत्। ॐ तथेति प्रतिवचनम्। आर्द्रवसंज्ञकविश्वदेवार्थं त्वया क्षणः करणीय इति द्वितीयदेवविप्रं वदेत्। ॐ तथेति प्रतिवचनम्। ततः प्रथमदेवविप्रस्य पुरत आसनाद्द्वादशाङ्गुलपरिमितं स्थलं त्यक्त्वा तत्र कूर्चेन यवोदकेन भुवं प्रोक्ष्य तत्र प्रागग्रं प्राक्संस्थं दर्भद्वयं निधायोभयत्र प्राक्संस्थं दशाङ्गुलविस्तृतमेकैकं पात्रं न्युब्जं निधाय कूर्चेन यवोदकेन प्रोक्ष्योत्ताने कृत्वा सममन्तर्गर्भरहितं साग्रं दर्भद्वयं गृहीत्वाऽग्रभागे प्रादेशमात्रमवशेष्य तृणं काष्ठं वाऽन्तर्धाय 'पवित्रे स्थो वैष्णवी वायुर्वां मनसा पुनातु' इति तत्रासिदेनान्येन वा दात्रेण च्छिनत्ति न नखेन। शुद्धोदकं स्पृष्ट्वा तूष्णीमेव यवोदकेनोन्मृज्यैवमेवान्यत्पवित्रं कृत्वोन्मृज्य तूष्णीं यवोदकेन पवित्रे पात्रे च प्रोक्ष्य तयोः पात्रयोरुपरि कृतं पवित्रद्वयं क्रमेण प्रागग्रं निधाय 'समन्यायन्त्युपयन्त्यन्याः समानमूर्वं नद्यः पृणन्ति। तमू शुचिꣳ शुचयो दीदिवाꣳसमपांनपातं परितस्थुरापः' इति मन्त्रेण 'शं नो देवीरभिष्टये। आपो भवन्तु पीतये। शं योरभि स्रवन्तु नः' इति मन्त्रेण वा प्राङ्मुख एव दैवतीर्थेन यवोदकेन पात्रद्वयमुपबिलं पूरयेत्। मन्त्रावृत्तिः सर्वत्र। ततस्तत्सवितुरिति गायत्र्या पात्रद्वयस्था अपोऽनुमन्त्रयते। संभवात्सकृदेव मन्त्रः। तत उदङ्मुखः 'यवोऽसि धान्यराजस्त्वं वारुणो मधुसंयुतः। निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम्' इति मन्त्रेण 'यवोऽसि यवयास्मद्द्वेषो यवयारातीः' इति मन्त्रेण वा मन्त्रावृत्त्या देवतीर्थेन यवान्निक्षिपेत्। केचित्तूभयोः समुच्चयमाहुस्तत्तुच्छम्। एकमन्त्राणि कर्माणीतिपरिभाषाविरोधात्। समुच्चायकवचनाभावाच्च। तत उदङ्मुखो विप्राभिमुखो वा 'गन्धद्वारां दुराधर्षां० ह्वये श्रियम्' इति चन्दनं तयोः प्रक्षिपेत्। 'ओषधयः प्रतिमोदध्व० मासदत्' इति सतुलसीपत्राणि पुष्पाणि प्रक्षिपेत्। उभयत्र मन्त्रावृत्तिः। तूष्णीं वा क्षेपणम्। 'देवो वः सवि-

तोत्पुनातु । अच्छिद्रेण पवित्रेण । वसोः सूर्यस्य रश्मिभिः ' इति प्रथमार्घ्यपात्रस्था अपस्तत्पवित्रेण त्रिरुत्पूय तथैव द्वितीयपात्रस्था अपस्तत्पवित्रेण त्रिरुत्पुनाति। अयं मन्त्रो गायत्रीछन्दस्कस्तस्य पादत्रयं तत्र पादान्ते पादान्त एकैकमुत्पवनम् । एवं त्रिरुत्पवनमिति मातृदत्तमते। पादशो मन्त्रं पठित्वा गायत्रीछन्दस्कैतन्मन्त्रान्त एकमुत्पवनं तूष्णीं द्विरिति वैजयन्तीकृन्मते । एतयोरन्यतरप्रकारेणोत्पवनं करोति । तूष्णीमेव वोत्पवनम् । ततो देवपात्रे संपन्ने इति देवविप्रौ वदेत् । सुसंपन्ने इति विप्रौ । ततो देवविप्रदक्षिणकरयोर्यवोदकं कूर्चेन दत्त्वा कुशयवान्दक्षिणहस्ते[1] गृहीत्वा वामहस्तेन निरङ्गुष्ठेन निरङ्गुष्ठं विप्रस्य दक्षिणं हस्तं धृत्वा पुरूरवसंज्ञकान्विश्वान्देवांस्त्वय्यावाहयिष्य इति प्रथमदेवविप्रमामन्त्र्याऽऽवाहयेति तेनानुज्ञातः ' विश्वे देवाः शृणुतेम॑ हवं० मादयध्वम् ' पुरूरवसंज्ञकान्विश्वान्देवानावाहयामि, इति दक्षिणपादे वामपादे दक्षिणजानुनि सव्यजानुनि दक्षिणकरे वामकरे दक्षिणस्कन्धे वामस्कन्धे शिरसि, इति क्रमेण सकुशयवान्निक्षिपेत् । दक्षिणपादे दक्षिणजानुनि दक्षिणकरे दक्षिणस्कन्धे शिरसीत्येतेष्वेव वा । सकृन्मन्त्रः । इदमावाहनम् । निक्षेपणकाले किंचिदवशेषयन्निक्षिप्यावशेषितान्प्रथमार्घ्यपात्रे निक्षिपेत् । पुनरन्यान्कुशसहितान्यवान्गृहीत्वा पूर्ववद्दक्षिणहस्तं धृत्वा[2], आर्द्रवसंज्ञकान्विश्वान्देवांस्त्वय्यावाहयिष्य इति द्वितीयदेवविप्रामन्त्रणं पूर्ववत्कृत्वाऽऽवाहयेति तेनानुज्ञातः ' विश्वे देवाः शृणु० मादयध्वम् ' आर्द्रवसंज्ञकान्विश्वान्देवानावाहयामि, इति पूर्ववदावाह्य पूर्ववत्तदावाहनशिष्टाक्षतानां द्वितीयार्घ्यपात्रे क्षेपणम् ।

" विश्वायां दक्षकन्यायां जाता धर्मान्महात्मनः ।
विश्वे देवा इति ख्याता देववर्या महाबलाः ॥
शक्रेण सह योद्धृणां विजेतारस्तु रक्षसाम् ।
यन्नामस्मरणादेव प्रद्रवन्त्यसुराः क्षणात् ॥
बाणबाणासनधरा द्विभुजाः श्वेतवाससः ।
केयूरिणः कुण्डलिनः किरीटकटकान्विताः ॥
धैर्यसौन्दर्यसंयुक्ता दिव्यस्रगनुलेपनाः ।
इन्द्रस्यानुचराः सर्वे गोप्तारस्त्रिदिवस्पतेः " ॥

इति ध्यात्वा, ' विश्वे देवाः शृणुतेम॑ हवं मे० मादयध्वम् ' इति देवानुपतिष्ठते ।

---

१ च. 'स्तेन गृ' । २ क 'त्वा, ॐ आ' ।

" आगच्छन्तु महाभागा विश्वे देवा महाबलाः ।
ये ह्यत्र विहिताः श्राद्धे सावधाना भवन्तु ते " ॥

इति देवविप्रौ वदेत्। भवन्त्विति विप्रौ । विश्वेषां देवानां विशेषतः स्वरूपाज्ञानेऽयं श्लोकः पठनीय इति हेमाद्रिः। ततो यवोदकं कूर्चेन दत्त्वा 'पुरूरवसंज्ञका विश्वे देवाः संपादिता वः स्वाहाऽर्घ्याः' इति प्रथममर्घ्यपात्रं प्रथमविप्रस्य निकटे निदध्यात्। सन्त्वर्घ्या इति विप्रः। 'आर्द्रवसंज्ञका विश्वे देवाः संपादिता वः स्वाहाऽर्घ्याः' इति द्वितीयमर्घ्यपात्रं द्वितीयविप्रस्य निकटे निदध्यात्। सन्त्वर्घ्या इति विप्रः। ततो यवोदकं कूर्चेन दत्त्वा प्रथमपात्रस्थं पवित्रद्वयं प्रागग्रं प्रथमदेवविप्रदक्षिणहस्तेऽञ्जलौ वा निधाय गन्धपुष्पाभ्यां तद्धस्तमञ्जलिं वाऽभ्यर्च्य 'या दिव्या आपः पयसा संबभूवुः। या अन्तरिक्ष उत पार्थिवीर्याः। तासां त्वा सर्वासा९ रुचा अभिषिञ्चामि वर्चसा' इति मन्त्रेण 'हिरण्यवर्णाः शुच० भवन्तु' इति मन्त्रेण वा। पुरूरवसंज्ञका विश्वे देवा इदं वो अर्घ्यं स्वाहा नम इति सौवर्णेन ताम्रमयेण पर्णपुटेन वा प्रथमदेवविप्रदक्षिणकरेऽञ्जलौ वा देवतीर्थेन द्विवारमर्घ्यं दद्यात्। स्वर्घ्यमिति तेनोक्ते कूर्चेन यवोदकं दद्यात्। कूर्चेन यवोदकदानादिहस्ताभ्यर्चनान्तं कृत्वाऽऽर्द्रवसंज्ञका विश्वे देवा इत्यूहेन द्वितीयपात्रस्थमुदकं द्वितीयविप्रकरे पूर्ववद्दद्यात्। स्वर्घ्यमिति तेनोक्ते कूर्चेन यवोदकं दद्यात्। ततो देवार्घ्यपात्रद्वयमेकं वा देवविप्रयोर्दक्षिणतः 'देवेभ्यः स्थानमसि' इति दर्भेषु न्युब्जमुत्तानं वा संस्थापयेत्। अर्घ्यपात्रयोर्जलावशेषणपक्ष उत्तानमन्यथा न्युब्जम्। उत्तानपक्षे दर्भैस्तदाच्छादनं कार्यं गन्धपुष्पप्रक्षेपणं च। पात्रचालनमासमाप्ति न कुर्यात्। यदि बहवो ब्राह्मणास्तदाऽपि पात्रद्वयमेव विभज्य दानम्। एकब्राह्मणपक्षेऽप्येवम्। ततो हस्तस्थे पवित्रे निष्काश्य पात्रे निधाय 'गन्धद्वारां दुराधर्षां० श्रियम्' पुरूरवसंज्ञका विश्वे देवा अमी वो गन्धाः स्वाहा नमः। 'गन्धद्वारां० श्रियम्' आर्द्रवसंज्ञकविश्वे देवा अमी वो गन्धाः स्वाहा नम इति हस्तेनैव गन्धान्दद्यात्। स्वाहा नम इति सर्वेषूपचारेष्वनुषज्यते। प्रत्युपचारं तूष्णीं जलदानम्। सुगन्धाः सन्त्विति प्रतिवचनम्। एकवचनान्तो वाऽयं गन्ध इति गन्धशब्दः प्रयोक्तव्यः। अस्मिन्पक्षे सुगन्धोऽस्त्विति प्रतिवचनम्। मस्तके लापनकाल एव पवित्रनिषेध इति मते दाने पवित्रधारणनिषेधो न। दानलापनयोरुभयोरपि ग्रन्थिमत्पवित्रधारणं निषिद्धमिति मते तु ते पवित्रे यस्मिन्कस्मिंश्चित्पात्रे निधाय ग्रन्थिरहिते अन्ये पवित्रे धृत्वा गन्धदानं विप्रभालादौ लापनं च कृत्वा ते पवित्रे त्यक्त्वा पूर्वधृते ग्रन्थिमती पवित्रे धृत्वा पुष्पदानादि कर्तव्यमिति क्रमः। गन्धलापनं तु यथाकथंचित्तिर्यग्लेपनमात्रं गन्धदानोत्तरं

पूजोत्तरं वा कार्यं न तूर्ध्वपुण्ड्रत्रिपुण्ड्रवर्तुलार्धचन्द्राकारं लेपनम्। कस्तूरीदाने विकल्पः। ‘ ओषधयः प्रतिमोदध्वमेनं० मासदत् ’ पुरूरवसं०। आर्द्रवसं०। इदं वः पुष्पमिति प्रतिविप्रमेकैकं पुष्पं दद्यात्। सुपुष्पमस्त्विति प्रतिवचनम्। बहूनि वा पुष्पाणि देयानि। अस्मिन्कल्प इमानि पुष्पाणीति प्रयोगः। सुपुष्पाणि सन्त्विति प्रतिवचनम्। ‘ धूरसि धूर्व धूर्वन्तं धूर्वतं योऽस्मा० धूर्वामः ’ पुरूरवसं०। आर्द्रवसं०। अयं वो धूप इति धूपं दद्यात्। सुधूपोऽस्त्विति प्रतिवचनम्। धूपो व्यजनवातेन देयः। न हस्तवस्त्रपर्णादिवातेन। ‘ उद्दीप्यस्व जातवेदो० दिशो दिशः ’ पुरूरवसं०। आर्द्रवसं०। अयं वो दीप इति दीपं दद्यात्। सुदीपोऽस्त्विति प्रतिवचनम्। घृतदीपो देयः। ‘ युवं वस्त्राणि पीवसा वसाथे युवो० सचेथे ’ युवा सुवासा इति वा, पुरूरवसं०। आर्द्रवसं०। इदं वो वस्त्रमिति प्रतिविप्रमेकैकं वस्त्रं दद्यात्। सुवस्त्रमस्त्विति प्रतिवचनम्। इदं व आच्छादनमित्येवं वा प्रयोगः। अस्मिन्कल्पे स्वाच्छादनमस्त्विति प्रतिवचनम्। मन्त्रस्तु स एव। शक्तौ सत्यां वस्त्रद्वयं देयम्। अस्मिन्पक्षे—इमे वो वस्त्रे इमे व आच्छादने इति वा, सकृन्मन्त्रमुक्त्वा सहैव दद्यात्। सुवस्त्रे स्तः स्वाच्छादने स्त इति वा प्रश्नानुसारेण प्रतिवचने। वस्त्राभाव एकं यज्ञोपवीतं दद्यात्तच्छब्देनैव। वस्त्रद्वित्वपक्षे द्वयम्। वस्त्राभावे समर्थेन निष्क्रयो देयः। असमर्थेनोपवीतम्। स्वतन्त्रतया यज्ञोपवीतदाने यज्ञोपवीतं परममिति दद्यात्। सति संभवेऽलंकारादर्शादिदानमप्यत्र कर्तव्यम्। दक्षिणाकाल एव वाऽऽदर्शालंकारादिदानम्। दाने—इमेऽलंकाराः। अयमादर्श इति वाक्यानि। स्वलंकाराः स्वादर्श इत्यादीनि प्रतिवचनानि ज्ञेयानि। दक्षिणाकाले दानेऽलंकारादर्शादिसहिता दक्षिणाः पान्त्वित्येवं वाक्यप्रयोगो ज्ञेयः। प्रतिवचनमप्येतदनुसारेणैव। भो देवा गन्धाद्याच्छादनान्ता उपचाराः परिपूर्णा भवन्त्विति विप्रौ वदेत्। तौ च भवन्तु परिपूर्णा इति प्रतिवदेताम्।

“ आदित्या रुद्रा वसवः सुनीथा द्यावा क्षामा पृथिवी अन्तरिक्षम्।
सजोषसो यज्ञमवन्तु देवा ऊर्ध्वं कृण्वन्त्वध्वरस्य केतुम् ”॥

इति देवविप्राववलोकयन्पठेत्। इति देवार्चनम्।

ततः प्राचीनावीती दक्षिणामुखः पित्र्यविप्रदक्षिणकरेषु कूर्चेन तिलोदकं दत्त्वा पित्र्य[1]ब्राह्मणानुत्थाप्य पित्राद्यर्थेषु पूर्वमेव संस्थापितेष्वासनेषु पित्रर्थविप्रवामदेशमनुलक्ष्य तत्र सतिलान्भुग्नान्दर्भान्दक्षिणाग्रान्निधाय भूर्भुवः सुवः, अस्मत्पितुरमुकशर्मणोऽमुकगोत्रस्य वसुरूपस्य सपत्नीकस्येदमासनमिति प्रथ-

१ च. पित्र्या°।

मपित्र्यविप्राय निवेद्य स्वासनमिति तेनोक्ते सव्यहस्तेनाऽऽसनं स्पृशन्भूर्भुवः सुवः, अत्राऽऽस्यतामिति दक्षिणहस्तेनाऽऽसनस्योपरि दक्षिणामुख उदङ्मुखमुपवेशयेत्। ओमिति विप्र उक्त्वा 'जङ्घाभ्यां पद्भ्यां० प्रतिष्ठितः' इति मन्त्रेण तत्रोपविशेत्। अस्मत्पितामहस्येत्याद्यूहेन प्रथमपित्र्यविप्रवदासनदानाद्युपवेशनान्तम्। चतुर्थ्या विभक्त्या वाऽत्राप्यासनदानम्। 'स इषुहस्तैः स० नमः ककुभाय० नमो निषङ्गिणे० ये तीर्थानि० इन्द्र दृह्यया० वाशीमन्त ऋष्टिमन्तो० स इषुहस्तैः०' इति पूर्ववद्यथाशाखं निषङ्गपदवन्मन्त्रजपः। एकविप्रपक्षे—अस्मत्पितृपितामहप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानाम्। अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानामिदमासनमिति सहैवोत्कीर्तनम्। एवमन्यत्रापि। अस्मत्सपत्नीकपित्रर्थे त्वया क्षणः करणीय इत्यादितत्तच्छब्दोहेन क्रमेण तत्तद्विप्रं प्रति वदेत्। ओं तथेति प्रतिवचनम्। ततः प्रथमपित्र्यविप्रस्य पुरत आसनाद्द्वादशाङ्गुलपरिमितं स्थलं त्यक्त्वा तत्र कूर्चेन तिलोदकेन भुवं प्रोक्ष्य तत्र दक्षिणाग्रं दक्षिणसंस्थमाग्नेय्यग्रमाग्नेयीसंस्थं वा स्थलत्रये दर्भपञ्चकं दर्भपञ्चकं दर्भत्रयं दर्भत्रयं वा निधाय स्थानत्रयस्थितेषु दर्भेषु अष्टाङ्गुलविस्तृतमेकैकं पात्रं न्युब्जं निधाय तेभ्यः प्रसिद्धपश्चिमदिशि तथैव दर्भेषु मातामहाद्यर्थमेकैकं पात्रं निधाय कूर्चेन तिलोदकेन पात्रषट्कं प्रोक्ष्योत्तानानि क्रमेण कृत्वा सममन्तर्गर्भरहितं साग्रदर्भत्रयं गृहीत्वाऽग्रभागे प्रादेशमात्रमवशेष्य तृणं काष्ठं वाऽन्तर्धायासिदेनान्येन वा दात्रेण तूष्णीमेव च्छिनत्ति न नखेन। ततः शुद्धोदकं स्पृष्ट्वा तूष्णीमेव तिलोदकेनोन्मृज्यैवमेवान्यत्पवित्रपञ्चकं कृत्वोन्मृजेत्। एककदर्भमयानि(ण) वा पवित्राणि। ततस्तूष्णीमेव तिलोदकेन पवित्राणि पात्राणि च प्रोक्ष्य पात्राणामुपरि तानि पवित्राणि च्छेदनक्रमेण दक्षिणाग्राण्याग्नेय्यग्राणि वा निधाय समन्यायन्तीति शं नो देवीरिति वा दक्षिणामुख एव पात्रषट्कं क्रमेणापबिलं पूरयेत्। मन्त्रावृत्तिः सर्वत्र। ततस्तत्सवितुरिति गायत्र्या सर्वपात्रस्था अपोऽनुमन्त्रयते। अत्र संभवात्सकृदेव मन्त्रः।

ततः—"तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः।
प्रत्नवद्भिः प्रत्तः स्वधया पितॄनिमाँल्लोकान्प्रीणयाहि नः स्वधा नमः"

इति मन्त्रावृत्त्या पितृतीर्थेन क्रमेण तिलान्निक्षिपेत्। तिलोऽसि पितृदेवत्य इति वा पाठः। प्रीणयाहि न इत्यत्र प्रीणाहीत्यपि पाठः। एवमग्रेऽपि सर्वत्र मन्त्रावृत्तिः। ततो मधु वाता इति त्रिभिर्मन्त्रैस्तेषु मधु निक्षिप्य 'सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात्' इति घृतम्। 'शं नो देवीरभिष्टये। आपो भवन्तु

पीतये । शं योरभि स्रवन्तु नः' इति पुनः किंचिदुदकं प्रक्षिपेत् । मधुघृतोदकक्षेपणं कृताकृतम् । ततः 'गन्धद्वारां दुराधर्षां० श्रियम्' इति चन्दनम् । 'ओषधयः प्रति० मासदत्' इति पुष्पाणि तुलसीपत्राणि च । भृङ्गराजपत्रलाभे तान्यपि सहैव प्रक्षिपेत् । तूष्णीं वैतेषां प्रक्षेपः । ततः सर्वपित्र्यपात्रस्था अपस्तेन तेन पवित्रेण देवो वः सवितोत्पुनात्विति त्रिस्त्रिरुत्पुनाति । सकृत्सकृद्वा । देवो वः सवितोत्पुनात्विति गायत्रीछन्दस्को मन्त्रस्तस्य पादे पाद एकैकमुत्पवनमेवं त्रिरिति मातृदत्तः । पादशः पठितेन गायत्रीछन्दस्केन मन्त्रेणान्ते सकृदुत्पूय तूष्णीं द्विरुत्पुनातीति वैजयन्तीकृत् । सकृत्पक्षे त्वन्त एवोभयमतेऽपि तूष्णीमेव वोत्पवनम् । ततो निरस्तं नमुचेः शिर इतिमन्त्रावृत्त्या तत्तत्पात्रतः किंचिद्बहिर्दक्षिणत उदकमुत्क्षिप्य 'पितृभ्यो नमः, पितामहेभ्यो नमः, प्रपितामहेभ्यो नमः, मातामहेभ्यो नमः, मातुःपितामहेभ्यो नमः, मातुःप्रपितामहेभ्यो नमः' इति षड्भिर्नाममन्त्रैः क्रमेण पात्रषट्के गन्धपुष्पतिलान्प्रक्षिपेत् । ततः पित्र्यपात्राणि संपन्नानीति पित्र्यविप्रान्वदेत् । सुसंपन्नानीति विप्राः । ततः पित्र्यविप्रदक्षिणकरेषु तिलोदकं कूर्चेन दत्त्वा सकुशांस्तिलान्दक्षिणहस्ते गृहीत्वा वामहस्तेन निरङ्गुष्ठेन प्रथमस्य विप्रस्य निरङ्गुष्ठं वामहस्तं धृत्वा, अस्मत्पितरममुकशर्माणममुकगोत्रं वसुरूपं सपत्नीकं त्वय्यावाहयिष्य इति प्रथमपित्र्यविप्रमामन्त्र्य, आवाहयेति तेनानुज्ञातः 'उशन्तस्त्वा हवामह० अत्तवे' अस्मत्पितरममुकशर्माणममुकगोत्रं वसुरूपं सपत्नीकमावाहयामि, इति शिरसि वामस्कन्धे दक्षिणस्कन्धे वामकरे दक्षिणकरे वामजानुनि दक्षिणजानुनि वामपादे दक्षिणपाद इति क्रमेण तांस्तिलान्निक्षिपेत् । शिरसि वामस्कन्धे वामकरे वामजानुनि वामपाद इत्येतेष्वेव वा । इदमावाहनम् । निक्षेपणकाले किंचिदवशेषयन्निक्षिप्यावशेषितांस्तिलान्प्रथमार्घ्यपात्रे निक्षिपेत् । पुनरन्यान्सकुशांस्तिलान्गृहीत्वा पूर्ववद्वामहस्तं धृत्वा, अस्मत्पितामहममुकशर्माणममुकगोत्रं रुद्ररूपं सपत्नीकं त्वय्यावाहयिष्य इत्यूहेनाऽऽवाहनाद्यवशेषिततिलानां तदीयार्घ्यपात्रे निक्षेपणान्तं कृत्वा कुशतिलग्रहणादि निक्षेपणान्तं प्रपितामहादिपात्रेषूहेन कुर्यात् । 'उपहूताः पितरः सोम्यासो० त्वस्मान्' इति पितॄनुपतिष्ठते । ततस्तिलोदकं कूर्चेन दत्त्वा, अस्मत्पितरमुकशर्मन्नमुकगोत्र वसुरूप सपत्नीक संपादितास्ते स्वधाऽर्घ्या इत्याद्यूहेन तत्तदर्घ्यपात्रं तत्तद्विप्रनिकटे निदध्यात् । सन्त्वर्घ्या इति प्रतिवचनम् । ततस्तिलोदकं कूर्चेन दत्त्वा प्रथमपात्रस्थं पवित्रं दक्षिणाग्रं प्रथमविप्रदक्षिणहस्तेऽञ्जलौ वा निधाय गन्धपुष्पाभ्यां तद्धस्तमञ्जलिं वाऽभ्यर्च्य दक्षिणामुख एव 'या दिव्या आपः पयसा० वर्चसा' इति मन्त्रेण 'हिर-

१ क. च. °त्वा, ॐ अ° । २ क. च. °त्वा, ॐ अ° ।

ण्यवर्णाः शुचयः० भवन्तु ' इति मन्त्रेण वा, अस्मत्पित्रेऽमुकशर्मणे सपत्नीकाय स्वधा नम इति राजतेन ताम्रमयेण पर्णपुटेन वाऽऽसादितेनार्घ्यपात्रेण पितृविप्रदक्षिणकरेऽञ्जलौ वा वामकरान्वारब्धदक्षिणहस्तेन पितृतीर्थेन किंचिदवशेषयंस्त्रिः सकृद्वाऽर्घ्यं दद्यात्। प्रत्यर्घ्यं मन्त्रावृत्तिरिति केचित्। अथवा या दिव्या इति हिरण्यवर्णा इत्यन्यतमो(रो) मन्त्रो विप्रहस्तात्स्रवन्तीनामपामनुमन्त्रणम्(णे)। दानं तु अस्मत्पितरित्यादिनैव। अस्मिन्पक्षे गोत्ररूपस्वधानमःशब्दोच्चारणे विकल्पः। अर्घ्यपात्रग्रहणे या दिव्या इति मन्त्र इति वा। त्रिवारमर्घ्यदानमिति पक्षे पक्षद्वयम्। अत्रैव त्रिवारं बहुस्मृतितः। पुरोऽन्नं द्विर्भुक्तवत्सु च तृतीयमिति बौधायनवचनात्। अन्नत्यागात्पूर्वं द्विवारं भुक्तवत्सु तृतीयमित्येवं त्रिवारम्। तत्र गोमयमण्डले चरणक्षालनानन्तरमेकमग्नौकरणात्पूर्वं द्वितीयं भुक्त्वाऽऽचान्तेषु द्विजेष्वक्षय्योदकाख्यं[1] तृतीयमिति हेमाद्रिः। अमुष्मै स्वधाऽमुष्मै स्वधेति पित्रर्थेष्वपि पितुर्नाम गृह्णाति पितामहार्थेषु पितामहस्य प्रपितामहार्थेषु प्रपितामहस्य। एकत्वे तस्यैव हस्ते त्रीण्युदपात्राणि निनयति। त्रयाणां नामानि गृहीत्वेत्यनेनैकमर्चनकालेऽर्घ्यदानमुक्तम्। अङ्गुष्ठोपस्पर्शनात्पूर्वं द्वितीयम्। भुक्तवत्स्वाचान्तेष्वन्नप्रकिरणानन्तरं तथैव तृतीयमित्येवमुक्तं मातृदत्तेन। अर्घ्यपात्रात्पात्रान्तरेणाऽऽदायाऽऽदायार्घ्यदानमित्यप्युक्तम्। संस्थात्मके मासिश्राद्ध एतदेव शिष्टा आचरन्ति। ततः स्वर्घ्यमिति तेनोक्ते कूर्चेन तिलोदकं दद्यात्। अर्घ्यपात्रादुद्धृत्य पात्रान्तरेणार्घ्यदानमिति पक्षे खड्गपात्रेणासंभवेऽन्येन वाऽर्घ्यदानम्। एवं पितामहादिपूर्वेन तत्तदर्घ्योदकं देयम्। ब्राह्मणबहुत्वेऽपि पात्रषट्कमेव। तत्तत्स्थानीयविप्रहस्तेषु तत्तत्पात्रस्थोदकस्य विभज्य दानम्। एकब्राह्मणपक्षे तत्रैव सर्वपात्रस्थोदकदानम्। ततः पुत्रकामो यज्ञोपवीती प्राङ्मुखस्तत्तत्पात्रस्थास्ववशिष्टास्वप्सु स्वमुखमवलोक्याऽऽयुष्कामः किंचित्किंचित्तत्तत्पात्रस्था अपो लोचनयोर्निक्षिप्य दक्षिणामुखः प्राचीनावीती शुन्धन्तां लोकः पितृषदन इतिमन्त्रं सकृज्जपेत्। कामनाभावे न मुखावलोकनादि। ततः प्रपितामहपात्रस्थमपां शेषं पितामहपात्रे निक्षिप्य तज्जलं पितृपात्रे निक्षिप्य मातुःप्रपितामहपात्रशेषं मातुःपितामहपात्रे निक्षिप्य तज्जलं मातामहपात्रे निक्षिप्य पुत्रकामनायां यज्ञोपवीती ताभिर्दक्षिणहस्तेन प्राङ्मुखो मुखमङ्क्त्वा प्राचीनावीती दक्षिणामुखः पितृपितामहप्रपितामहद्विजकरस्थितकुशान्पितृपात्रे मातामहमातुःपितामहमातुःप्रपितामहद्विजकरस्थितकुशान्मातामहपात्रे निधाय शुन्धन्तां लोकः पितृषदन इति पित्र्यविप्रवामभागे तिलोदकेन भूमिं प्रोक्ष्य दक्षिणाग्रान्कुशानास्तीर्य ' पितृभ्यः स्थान-

[1] च. °क्षय्योद°।

मसि ' इतिमन्त्रावृत्त्या पात्रद्वयं दर्भेषु दक्षिणसंस्थं न्युब्जमुत्तानं वा देवपात्रस्थापनानुसारेण स्थापयेत् । उत्तानपक्षे तदुपरि विप्रहस्तस्थान्दर्भान्निक्षिप्यान्यैर्दर्भैर्दक्षिणाग्रैराच्छादनं कार्यं गन्धपुष्पप्रक्षेपणं च । मातामहपात्रस्था अप्यपः पितृपात्र एव निक्षिप्यैकमेव वा पात्रं स्थापयेत् । आश्राद्धसमाप्ति चालनं न कुर्यात् । यष्ट्यादिनाऽपि न स्पृशेत् । ततस्तिलोदकं दत्त्वाऽस्मत्पितः शर्मन्गोत्र वसुरूप सपत्नीकेत्याद्यूहेन 'अमी ते गन्धाः' इत्याद्यैस्तत्तच्छब्दैर्गन्धादीन्प्राचीनावीती पूर्ववद्दद्यात् । सर्वत्र स्वधा न ममेत्यनुषङ्गः । प्रत्युपचारं तिलोदकदानम् । एकब्राह्मणपक्षे त इत्यत्र व इत्यूहः । प्रतिवचनादिकं सर्वमन्यद्देवपूजनवत् । इति पित्रर्चनम् ।

ततः—" यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् " इति पठित्वा,
" देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः " इति त्रिवारं पठेत् ।

ततो यज्ञोपवीत्याचम्य श्राद्धप्रदेशपतितयवतिलादिकमपसार्य हस्तेन देशं संमार्ज्य पूर्वोक्तलक्षणलक्षितगोर्गोमयेन भस्मना गौरमृत्तिकया नीवारचूर्णेन वा प्रादेशमात्रे षडङ्गुले वा मण्डले विधाय तयोरुपरि प्रागग्रान्सयवान्दर्भान्निक्षिप्य प्राचीनावीती पित्र्यविप्रभोजनपात्रस्थानेषु गोमयाद्यन्यतमेन पूर्वोक्तद्रव्येण वर्तुलानि मण्डलानि प्रादेशमात्रविष्कम्भानि(णि) षडङ्गुलविष्कम्भानि(णि) वा विधाय तदुपरि दाक्षिणाग्रान्सतिलान्कुशान्निक्षिपेत् । ततो देवनैवेद्यपात्रस्थाने यज्ञोपवीती पूर्वोक्तगोमयाद्यन्यतमद्रव्येण देवमण्डलवन्मण्डलं विधाय तदुपरि प्रागग्रान्सयवान्दर्भान्निक्षिप्य देवविप्रमण्डलयोरुपरि सौवर्णानि तदभावे कांस्यमयानि तदभावे मध्यमपर्णवल्लीपलाशव्यतिरिक्तपलाशपर्णमधूकाम्रप्लक्षग्राम्यकदल्याद्यन्यतमपात्राणि संस्थाप्य तत्समीपे लघुपात्राणि च संस्थापयेत् । ततः प्राचीनावीती पित्र्यविप्रभोजनपात्राणि लघुपात्राणि च तथैव संस्थापयेत् । पूर्वं पित्र्यविप्रभोजनपात्राणां[1] संस्थापनं पश्चाद्देवविप्रभोजनपात्रयोः।) ततः पितृपात्राणां परितोऽप्रदक्षिणं भस्ममर्यादां कृत्वा यज्ञोपवीती देवपात्रयोः परितः प्रदक्षिणं भस्ममर्यादां कुर्यात्[2] । अत्र पित्र्ये बृहत्सामेति देवे रक्षोहणो वलगहन इति(त्यादि) नाष्ट्राणा५ हन्तेति(त्यन्तं) पठन्ति शिष्टाः । ततः प्राचीनावीती पित्र्यविप्रदक्षिणहस्तप्रक्षालनं[3] कृत्वा यज्ञोपवीती देवविप्रदाक्षिणहस्तप्रक्षालनं[4] कुर्यात् । ततो यज्ञोपवीत्याचम्योपस्तीर्णे पात्रं

१ ङ. °पात्राणां प° । २ ङ. °त् । त° । ३ ङ. °हस्ताञ्जलेन प्रक्षाल्य य° । ४ ङ. °हस्तौ जलेन प्रक्षालयेत् ।

गृहीत्वा 'उद्धरिष्याम्यग्नौ च करिष्यामि' इति पित्र्यविप्रानामन्त्रयते । 'काममुद्ध्रियतां काममग्नौ च क्रियताम्' इति ते विप्राः प्रतिब्रूयुः[1] । आहिताग्निः सर्वाधानी चेद्दक्षिणाग्नौ होमं कुर्यात् । अर्धाधानी केवलस्मार्ताग्निमांश्च गृह्याग्नौ । ब्रह्मचारी स्नातको विधुरो दूरभार्यश्च लौकिकाग्नौ । दर्शश्राद्धसांवत्सरिकादावग्निविच्छेदे सत्येव यदि पत्नी रजस्वला श्राद्धस्य च प्राप्तिस्तत्रापि लौकिकाग्नावेव । तत्रेत्थमुत्पत्तिप्रकारः—देशकालौ संकीर्त्याऽग्नौकरणहोमार्थमग्निमुत्पादयिष्य इति संकल्प्या[3]ऽऽयतनं प्रकल्प्य तत्संस्कारं विधायाग्निं तत्र प्रतिष्ठाप्य परिस्तीर्य होमोपयुक्तानि पात्राण्यासाद्य पवित्रकरणाद्याज्यसंस्कारान्तं कृत्वाऽदित इति परिषिच्यैकां समिधं तूष्णीमभ्याधाय, अयाश्चेत्यनेनैकामाज्याहुतिं हुत्वा[4]ऽऽचारात्प्रायश्चित्तार्थं समस्तव्याहृतिभिर्द्वितीयामाज्याहुतिं हुत्वा परिस्तरणानि विसृज्योत्तरपरिषेकं कुर्यात् । एवं प्रकारेण[5] यज्ञोपवीतिनाऽग्निमुत्पाद्य तस्मिन्नग्नौ होमं[6] कुर्यात् । एवं मासिकश्राद्धादिहोममपि ।

## अथ[7] होमप्रकारः ।

ततः प्राचीनावीती पिण्डदानार्थम् 'अपां मेध्यं यज्ञियꣳ सदेवꣳ शिवमस्तु मे । आच्छेत्ता वो मा रिषम् । जीवानि शरदः शतम्' इति सकृदाच्छिन्नं बर्हिराच्छिद्याप उपस्पृश्य तूष्णीं परिस्तरणाद्यर्थान्समूलानेव दर्भानाच्छिद्याप उपस्पृश्योभयं बद्ध्वाऽनधो निदधाति । सकृदाच्छिन्नद्वयमिति केचित् । ततो होमार्थमग्निं दक्षिणाग्रैर्दर्भैः प्रदक्षिणमेव (* परिस्तृणाति । नात्राधरोत्तरभावनियमः । ततोऽग्नेरुत्तरत एवोत्तराग्रान्दर्भान्संस्तीर्य तेष्वेकैकशः पात्राण्युत्तानान्येव प्रयुनक्ति । स्फ्यमुपस्तीर्णे पात्रं मेक्षणं स्रुवं च प्रयुज्य स्रुवं संमृज्य पचनाग्निस्थमोदनमुपस्तीर्णे पात्रे होमार्थमुद्धृत्य देवपवित्रसंस्कारार्थं पुनरस्मिन्नग्नावधिश्रि[8]त्याभिघार्योद्वास्याग्नेः पश्चान्निदधाति । तूष्णीमेव समन्तमप्रदक्षिणं परिषिच्य यस्मिन्पात्र आज्यं तेनैव पात्रेणाभिघारणमिति पक्षे न स्रुवः । उत्पूतेन नवनीतेनाभिघारणमिति पक्ष उत्पवनोत्तरं प्रहरणम् । अनुत्पूतेनाऽऽज्येनेत्येतस्मिन्पक्षे निर्वापोत्तरमेवाग्नौ प्रहरणम् । अग्न्यायतनस्योत्तरतस्त्यागो वा । तत एक-

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तके 'परिस्तीर्य तूष्णीमेव समन्तमप्रदक्षिणं परिषिच्य स्रुवं संमृज्योत्पूतेन नवनीतेनानुत्पूतेनाऽऽज्येन वा स्रुवेणाभिघार्योद्वास्याग्नेः पश्चान्निधाय" इति वर्तते ।

१ ङ. °युः । ततो होमपर्याप्तमन्नमुद्धृत्याग्निसमीपे निदधाति । आ° । २ ङ. °ग्नौ । त° । ३ ङ. °कल्प्य स्थण्डिलं प्र° । ४ ङ. °त्वा स° । ५ ङ. होमः कार्यः । ए° । ६ ङ. °होमोऽपि । ७ ङ. °थ श्राद्धहोमः । प्रा° । ८ च. °ति । अस्मि° ।

स्फ्यया वेदेर्दक्षिणतः संस्कृते स्थण्डिले 'ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति। परा पुरो निपुरो ये भरन्त्यग्निष्टानस्मात्प्रणुनोक्तु लोकात्' इत्यग्नेरेकोल्मुकं धूपायत्पराचीनं हृत्वा निदधाति। यस्मिन्कस्मिंश्चित्पात्रे निधानमिति पक्षे न स्थण्डिलकरणादि। ततस्तं प्रज्वाल्य पूर्ववत्परिस्तृणाति। एतदतिप्रणयनं पिण्डदानाङ्गं तदभावे नेति वैजयन्तीकारः। ततो ) यज्ञोपवीती दक्षिणं जान्वाच्य मेक्षणेनोद्धृतान्नैकदेशमुपहत्य 'सोमाय पितृपीताय स्वधा नमः' इति प्रथमामाहुतिं जुहोति। सोमाय पितृपीतायेदं०। पुनरुपहत्य 'यमायाङ्गिरस्वते पितृमते स्वधा नमः' इति तृतीयाहुत्यर्थं कानिचित्सिक्थान्यवशेष्य द्वितीयामाहुतिं जुहोति। यमायाङ्गिरस्वते पितृमत इदं०। 'अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः' इति मेक्षणे यान्यवशेषितानि[1] सिक्थानि तैस्तृतीयामाहुतिं जुहोति। अग्नये कव्यवाहनाय स्विष्टकृत इदं०। होमे पितृतीर्थनियमो न। प्रथमाहुतिसंबधिसिक्थानामपि होम इति केचित्। अस्मिन्पक्षे प्रथमाहुतिसंबन्धिमेक्षणसंलग्नानि सिक्थानि पात्रान्तरे निहितानि द्वितीयाहुत्यवशेषितमेक्षणस्थसिक्थेषु प्रक्षिप्य तेन तृतीयाहुतिर्होतव्या। अवशेषणमर्धभागस्येति केचित्। अवशेषितसिक्थाभावे लोप इति केचित्। स्थानात्कानिचित्सिक्थान्यादाय तेन जुहोतीत्यन्ये। उभयपक्षेऽपि प्रायश्चित्तार्थमनाज्ञातत्रयजपविष्णुस्मरणे कर्तव्ये[2]। प्रतिपार्वणं होमावृत्तिः। सकृदेव वा। ततस्तूष्णीं मेक्षणमनुप्रहरति। इति होमः[3]।

दक्षिणाग्नौ होमक्रियायां होमोत्तरमतिप्रणयनम्। ततो हस्तौ प्रक्षाल्य यज्ञोपवीत्येव देवविप्रभोजनपात्रयोरुपस्तीर्य[4] प्राचीनावीती पित्र्यविप्रभोजनपात्रे[5]ऽपूपस्तृणाति शब्दमकुर्वन्। ततो देवपूर्वकं स्वयमन्नपरिवेषणं यज्ञोपवीत्येव कुर्यात्। अशक्तौ पत्न्यादिभिर्वा कारयेत्। तत्राऽऽदावोदनं ततः पायसं भक्ष्यं[6] व्यञ्जनादि घृतं च सूपमन्ते। (*लवणं साक्षाद्धस्तेन न परिवेषणीयम्। घृतपात्रं भोजनपात्राद्बहिर्निधाय घृतं परिवेषणीयम्। आमासु पक्कमैरय इत्योदनपरिवेषणमन्त्रः। पयः पृथिव्यामिति पायसपरिवेषणमन्त्रः। आयुर्दा अग्न इति घृतपरिवेषणमन्त्रः।) परिवेषणे देवपूर्वकत्वनियमः प्रथमे परिवेषण एव न द्वितीयादिषु[7]। मन्त्रेण प्रथममेव परिवेषणम्। घृतं पितृपूर्वकमेव परि-

* धनुश्चिह्नान्तर्गतग्रन्थो नास्ति ङ. पुस्तके।

१ ङ. °दं०। द्वितीयाहुतिसंलग्नसिक्थाभावे लो°। २ ङ. °व्ये। त°। ३ ङ. °मः। ततो य°। ४ ङ. °पात्रे उप°। ५ ङ. °पात्राण्युपस्तृणाति। त°। ६ ङ. °क्ष्यं घृतं व्यञ्जनादि सूपं त्वन्ते। ७ ङ. °षु। घृ°।

वेषणीयमिति केचित्। अत्रैव कस्मिंश्चित्पात्रे पिण्डार्थमपि[1] सव्यञ्जनमन्नं परिवेषणीयम्। हुतशेषं किंचित्पिण्डार्थं परिशेष्यावशिष्टं सर्वं पित्र्यपात्रेषु परिवेषयेत्। ततो यज्ञोपवीत्येव[2] देवपात्रयोः समन्ताद्भस्ममर्यादां कृत्वा प्राचीनावीती पित्र्यविप्राणां समन्तादप्रदक्षिणं भस्ममर्यादां कृत्वा तत्तद्धर्मेणोपस्तीर्योपवीती, ओदनपायसादि सर्वं परिविष्य नैवेद्यं प्रदर्शयेत्। ततो देवपात्रस्थमन्नं गायत्र्या[3] शुद्धोदकेन प्रोक्ष्य घृतपात्रं भोजनपात्रे निधाय दक्षिणहस्ततर्जनीमध्यमाङ्गुष्ठैर्देवपात्रमालभ्य सत्यं त्वर्तेन परिषिञ्चामीति परिषिच्य 'पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमि स्वाहा ब्राह्मणानां त्वा प्राणापानयोर्जुहोम्यक्षितिरसि मा मे क्षेष्ठा अत्रामुष्मिँल्लोके[4]' इति देवपात्रस्थमन्नमभिमृशेत्। मा देवानां क्षेष्ठा इत्यूहमिच्छन्ति केचित्। 'इदं विष्णु॰ सुरे'[5] विष्णो हव्यꣳ रक्षस्व, इति द्विजहस्तमपरिवर्तयन्स्वीयेन दक्षिणेन हस्तेनापरिवर्तितेनैवाङ्गुष्ठमनखमन्ने निवेश्य यवोदकमादाय पुरूरवसंज्ञकाविश्वे देवा देवता, इदमन्नं हव्यमयं[6] ब्राह्मण आहवनीयार्थ इयं भूर्गयाऽयं भोक्ता गदाधर इदमन्नं ब्रह्मेदं सौवर्णपात्रमक्षय्यवटच्छायेयमिति[7], अन्नादीन्पदार्थान्हविरादिभावनया भावयन्पुरूरवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चास्य ब्राह्मणस्याऽऽतृप्तेः स्वाहा हव्यं न मम, इति विप्रदक्षिणभागे यवोदकं विसृजेत्। एवं द्वितीयदेवविप्रे। तत्र पुरूरवशब्दस्थान आर्द्रवशब्दप्रयोगः। ततः 'ये देवा दिव्येकादश स्थ॰ जुषध्वम्' इति देवानुपतिष्ठते। ततः प्राचीनावीती पितृपात्रस्थमन्नं गायत्र्या प्रोक्ष्य[8] घृतपात्रं भोजनपात्रे निधाय पूर्ववत्पात्रमालभ्य 'सत्यं त्वर्तेन परिषिञ्चामि' इति प्रदक्षिणमेव परिषिच्य 'पृथिवी ते पात्रं॰ जुहोमि स्वधा ब्राह्मणानां त्वा प्राणापानयोर्जुहोम्यक्षितिरसि मा मे क्षेष्ठा अत्रामुष्मिँल्लोके[9]' इति[10] पितृपात्रस्थमन्नमभिमृशेत्। मा पितॄणां मा पितामहानां मा प्रपितामहानां क्षेष्ठा इत्यूहमिच्छन्ति केचित्। 'इदं विष्णुर्वि॰ पाꣳसुरे' विष्णो कव्यꣳ रक्षस्व,' इति पूर्ववद्द्विजाङ्गुष्ठमनखमन्ने निवेश्य तिलोदकमादाय, अस्मत्पिताऽमुकशर्माऽमुकगोत्रो वसुरूपः सपत्नीको देवता, इदमन्नं कव्यमयं ब्राह्मण आहवनीयार्थ इयं भूर्गयाऽयं भोक्ता गदाधर इदमन्नं ब्रह्मेदं राजतपात्रमक्षय्यवटच्छायेयमिति[11] अन्नादीन्पदार्थान्हविरादिभावनया भावयन्, अस्मत्पित्रेऽमुकशर्मणेऽमुकगोत्राय वसुरूपाय सपत्नीकायेद-

---

१ ङ. °शिष्टमन्नमपि पित्र्ये परिवेषणीयम्। विधुरेण तु देवविप्रपात्रयोरेव। त°। २ ङ. °वीती देवेभ्यो नै°। ३ ङ. °त्र्या प्रोक्ष्य दक्षिणेन हस्तेन देव°। ४ ङ. च. अमुत्रा°। ५ ङ. द्विजाङ्गुष्ठ°। ६ ङ. हविरयं। ७ ङ. °येयं पुरू°। ८ ङ. °क्ष्य पृ°। ९ ङ. च. अमुत्रा°। १० ङ. इत्यम°। ११ ङ. °येयम्। अस्म°।

मन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चास्य ब्राह्मणस्याऽऽ तृप्तेः स्वधा कव्यं न ममेति विप्रवामभागे तिलोदकं विसृजेत् । एवं पितामहाय प्रपितामहाय मातामहादिभ्यश्चोहेन । एकश्चेद्विप्रस्तदा पितृपितामहप्रपितामहा अमुकशर्माणोऽमुकगोत्रा वसुरुद्रादित्यस्वरूपाः सपत्नीकाः, मातामहमातुःपितामहमातुःप्रपितामहा अमुकशर्माणोऽमुकगोत्रा वसुरुद्रादित्यस्वरूपाः सपत्नीका देवता इदमिदमन्नं कव्यमयं० वटच्छायेयम् । अस्मत्पितृपितामहप्रपितामहेभ्यः, अमुकामुकशर्मभ्यः, अमुकगोत्रेभ्यो वसुरुद्रादित्यस्वरूपेभ्यः सपत्नीकेभ्यः, अस्मन्मातामहमातुःपितामहमातुःप्रपितामहेभ्यः, अमुकामुकशर्मभ्यः, अमुकगोत्रेभ्यो वसुरुद्रादित्यस्वरूपेभ्यः सपत्नीकेभ्य इदमन्नममृतरूपं० स्वधा कव्यं न ममेत्येवं प्रयोगः । ततः ‘ ये चेह पितरो ये० स्वधा नमः ’ इति पितॄनुपतिष्ठते ।

ततः—“ देवताभ्यः पितृभ्यश्च० नमो नमः ।

सप्त व्याधा दशार्णेषु मृगाः कालंजरे गिरौ ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ॥
अमूर्तानां च मूर्तानां पितॄणां दीप्ततेजसाम् ।
नमस्यामि सदा तेषां ध्यायिनां योगचक्षुषाम् ॥
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥
ईशानः पितृरूपेण महादेवो महेश्वरः ।
प्रीयतां भगवानीशः परमात्मा सदाशिवः ” ॥

इति पठित्वा तिलोदकं यवोदकं चाऽऽदाय ‘ ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ० समाधिना । हरिर्दाता हरिर्भोक्ता० भोजयते हरिः । चतुर्भिश्च चतुर्भिश्च० प्रसीदतु । एको विष्णुर्महद्भूतं० विश्वभुगव्ययः ’ इति पठित्वा येषामुद्दिष्टं तेषामक्षय्या तृप्तिरस्तु । पितृस्वरूपी परमेश्वरः प्रीयतां न ममेति भूमौ जलं प्राचीनावीत्येव विसृज्यै पितृभ्यो नम इति पितॄन्नमस्कुर्यात् ।

ततः—“ ईशानविष्णुकमलासनकार्तिकेयवह्नित्रयार्करजनीशगणेश्वराणाम् ।
क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां पादान्नमामि सततं पितृमुक्तिहेतून् ” ॥

इत्युक्त्वा यज्ञोपवीती परिविष्टान्नेषु सर्पिरासिच्य प्रणवं समस्तव्याहृतीर्मधु वाता इति तिस्र ऋचश्चोक्त्वा, एतच्छ्राद्धमच्छिद्रं जायतामिति विप्रान्पृष्ट्वा

१ क. °तु । इ° । २ क. °तु । इत्युक्त्वा ये° । ३ क. °ज्य नमस्कृत्य, ई° । ४ क. °क्त्वा दे° ।

तैर्जायतामित्युक्ते देवान्पितॄंश्चाभिध्यायंस्तत्तद्धर्मेण पितृपूर्वकं पात्रेणोदकं सकृत्सकृद्देवाऽऽपोशनार्थं विप्रहस्तेषु दद्यात् । ततो यज्ञोपवीत्येव श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमीत्याद्यमृतत्वायेत्यन्तं प्रथममनुवाकं वदेत् । ततस्ते विप्रा अन्नपत इत्यभिमन्त्र्य, अमृतोपस्तरणमसीति यजमानदत्तमुदकं पीत्वा वामहस्तेन पात्रान्वारम्भं कुर्युः । नात्र बलिदानम् । ततः कर्ता(र्त्रा) श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि शिवो मा विशाप्रदाहाय प्राणाय स्वाहा ' इत्यादिषु पञ्चसु मन्त्रेषूच्यमानेषु स्वयमप्येतान्मन्त्रान्पठन्तस्तत्तत्स्वाहाकारान्ते प्राणाहुतीर्हुत्वा तूष्णीं प्रजापतिं मनसा ध्यायन्तो भूयो हुत्वा मौनिनो हस्तादिचापलं हुंतुंकाराद्यकुर्वन्तः स्वस्थचित्ता अशब्दं सशेषं भुञ्जीयुः । अत्र भोजने मौनं नियतम् । घृतं पायसं च निःशेषमेव भुञ्जीयुः । यजमानप्रश्नं विना याचनं न कुर्युः । कर्ता तेषां याचनापेक्षामकुर्वन्नेव सर्वान्पदार्थान्संपृच्छ्य संपृच्छ्य प्रदद्यात् । तत्र भक्ष्यपरमान्ने तु प्रश्नपूर्वकमेव परिवेषणीये । लवणस्य शाकादेश्च प्रश्नं विनैव परिवेषणम् । ततः कर्ता यथासुखं जुषध्वमित्युक्त्वा—

" अपेक्षितं याचितव्यं त्याज्यं चैवानपेक्षितम् ।
उपविश्य सुखेनैव भोक्तव्यं स्वस्थमानसैः " ॥

इति विप्रान्संप्रार्थ्य यज्ञोपवीत्येवाभिश्रावणं कुर्यात् । ' कृणुष्व पाजः प्रसितिं० रक्षोहणो० सोमाय पितृमते० उशन्तस्त्वा० भक्षे हि मा विश० प्रजापतिर्मनसाऽन्धो० अग्न उदधे० वन्यः पञ्चमः शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा० असावादित्योऽस्मिँल्लोक आसीत्० संततिर्वा एते ग्रहाः० एकविंश एष भवति० इन्द्रो वृत्रꣳ हत्वा० वैश्वदेवेन वै प्रजापतिः प्रजा असृजत । ता वरुणप्रघासैर्वरुणपाशादमुञ्चत्० अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीत्याह । सुरावन्तं बर्हिषदꣳ सुवीरं० उशन्तस्त्वा हवामह आ नो अग्ने सुकेतुना० अयं वाव यः पवते० उशन्ह वै० तꣳ हैतमेके० यां प्रथमा० ऋचां प्राची० ब्रह्ममेतु मां० ब्रह्म मेधया० ब्रह्म मेधवा० ' इत्यवकाशानुरोधेन श्रावयेत् । अन्यानपि पवित्रमन्त्रान्सत्यवकाशे श्रावयेत् । अध्ययनाभावे ' देवताभ्यः पितृभ्यश्च० नित्यमेव नमो नमः ' इति मन्त्रं वा पठेत् । गायत्रीं वा । देवतानामानि वा श्रावणीयानि । विप्रभोजने जाते पुरूरवसंज्ञका विश्वे देवास्तृप्ताः स्थ । आर्द्रवसंज्ञका विश्वे देवास्तृप्ताः स्थेत्युक्त्वा तृप्ताः स्मे(प्ताः स्म इ)ति प्रतिवचने दत्ते प्राचीनावीती, अस्मत्पितरमुकशर्मन्नमुकगोत्र वसुरूप सपत्नीक तृप्तोऽसि । अस्मत्पितामहामुकशर्मन्नमुकगोत्र रुद्ररूप सपत्नीक० । अस्मत्प्रपितामहामुकशर्मन्नमुकगोत्राऽऽदित्यरूप सपत्नीक

१ क. °दकमापो° । २ क. तत° । ३ क. °युः । घृ° । ४ क. °ताना° ।

तृप्तोऽसीत्याद्यूहेन तत्तद्विप्रं प्रति वदेत् । तृप्तोऽस्मीति स स प्रतिब्रूयात् । एकब्राह्मणपक्षे—अस्मत्पितृपितामहप्रपितामहा अमुकामुकशर्माणः, अमुकगोत्रा वसुरुद्रादित्यस्वरूपाः सपत्नीकाः, अस्मन्मातामहमातुःपितामहमातुःप्रपितामहा अमुकामुकशर्माणोऽमुकगोत्रा वसुरुद्रादित्यस्वरूपाः सपत्नीकास्तृप्ताः स्थेति प्रश्नः । तृप्ताः स्मे(प्ताः स्म इ)ति प्रतिवचनम् । तत उपवीती—'मधु वाता ऋ० भवन्तु नः । अक्षन्नमीमदन्त ह्य० न्विन्द्र ते हरी' इति श्रावयित्वा[1], अस्मत्पितुर्मासिश्राद्धं संपन्नमिति पृष्ट्वा सुसंपन्नमिति सर्वैः प्रत्युक्त[2] उच्छिष्टपिण्डार्थं पायसं विकिरार्थमोदनं च पृथक्पृथक्[3]पात्र उद्धृत्य शेषमन्नं किं क्रियतामिति विप्रानुक्त्वा, इष्टैः सह भुज्यतामिति तैः प्रत्युक्ते 'असोमपाश्च ये देवा० वैश्वदेविकम्' इति प्रथमदेवविप्रपात्रसमीपे विकिरं दत्त्वा यवोदकं तदुपरि दद्यात् । एवं द्वितीयदेवविप्रपात्रसमीपे । ततः प्राचीनावीती 'असंस्कृतप्रमीता ये त्यागिन्यो याः कुलस्त्रियः । दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम्' इति मन्त्रावृत्त्या तत्तत्पित्र्यविप्रपात्रसमीपे विकिरं दत्त्वा तत्तदुपरि तिलोदकं दद्यात् । ततः पित्रुच्छिष्टपात्रसमीपे दर्भत्रयं दक्षिणाग्रं निधाय तत्र तिलोदकं दत्त्वा[4]ऽन्यत्तिलोदकं किंचिदुद्धृत्य स्वसमीपे निधाय[5] विकिरशिष्टौदनमिश्रितं पायसं केवलं पायसमेव वाऽऽदाय 'ये अग्निदग्धा येऽनग्निदग्धा जीवा जाताः कुले मम । भूमौ दत्तेन पिण्डेन तृप्ता यान्तु परां गतिम्' इति तदन्नं दर्भोपरि दत्त्वोद्धृतं तिलोदकं तदुपरि दत्त्वा कमपि पदार्थमस्पृशन्बहिर्गत्वा पवित्रे ग्रन्थिं मुक्त्वा त्यक्त्वा हस्तौ पादौ च प्रक्षाल्याऽऽचम्या[6]न्ये पवित्रे धृत्वोच्छिष्टभाग्भ्योऽन्नं दीयतामिति वदेत् । ते च—'यजमानकुले जाता० भूतले' इत्युच्छिष्टमन्नं वामभागे भूमौ निक्षिपेयुः[7] । देवविप्रौ दक्षिणभागे । ततः पूर्ववत्पितृपूर्वकमापोशनार्थं जलं दद्यात् । ततो द्विजा अमृतापिधानमसीति तदुदकं पीत्वा[8] कर्त्राऽऽचाराच्छ्रद्धायां प्राणे निविश्येत्यनुवाक उक्ते मुखहस्तपादक्षालनाद्याचमनान्तं कर्म कुर्युः[9] । अत्र वामदेव्यं साम जपेयुः । सामाध्ययनाभावे तदीया ऋचस्तदीयाध्ययनधर्मेण पठेयुः । विसर्जनोत्तरं वाऽयं पाठः । ततः कर्तोच्छिष्टसंनिधौ प्राचीनावीती दक्षिणामुखो[10] दक्षिणदिक्संस्थं रेखाकरणादि कर्म कुर्यात् । आग्नेयीसंस्थत्वपक्ष आग्नेयीमुखता । 'अपहता असुरा रक्षाꣳसि वेदिषदः' इत्युच्छिष्टसंनिधौ वेद्यां दक्षिणापवर्गामाग्नेय्यपवर्गां वैकां

---

१ ङ. °त्वा श्रा° । २ ङ. °त्युक्ते सर्वस्मादन्नादुच्छि° । ३ ङ. °थगुद्धृ° । ४ ङ. °त्वा तिलो° । ५ ङ. °य पायसान्नमादाय । ६ ङ. °चम्योच्छि° । ७ ङ. °युः । त° । ८ ङ. °त्वा मु° । ९ ङ. °युः । ततो यजमान उच्छि° । १० ङ. °ग्नेय्यभिमुखः 'अ° ।

रेखां पितृवर्गार्थमुल्लिख्य पुनस्तेनैव मन्त्रेण तथैव मातामहवर्गार्थमेकां रेखां तद्दक्षिणतस्तत्प्रत्यग्वोल्लिखेत् । स्फ्याभावे दर्भमूलेनोल्लिख्य तं दर्भं प्रज्ञातं निदध्यात् । ततः ‘ उदीरतामवर० हवेषु ’ इत्यद्भी रेखाद्वयं प्रोक्षेत् । प्रतिरेखं मन्त्रावृत्तिः । ‘ सकृदाच्छिन्नं बर्हिरू० नुगैः सह ’ इति सकृदाच्छिन्नेन[3] पूर्वाहृतेन बर्हिषा वेदिं स्तृणाति । यथा द्वयो रेखयोरास्तरणं भवेत्तथा । दर्भाभावे सकृदाच्छिन्नैः काशैस्तथाभूताभी राजदूर्वाभिरन्यैर्वा[4] तृणैः स्तरणम् । आञ्जनं कज्जलम् । अभ्यञ्जनं तैलम् । दध्न उपरितनः स्नेहो वा । कशिपु मञ्चः सतूलिकः । उपबर्हणं शिरउपधानम् । उदकेन पूर्णः कुम्भ उदकुम्भः । ( * आस्तृते सकृदाच्छिन्ने दक्षिणत आञ्जनमभ्यञ्जनं कशिपूपबर्हणमुदकुम्भं च प्रतिष्ठापयति । कशिपु, उपबर्हणमित्येकवचनादेकमेव । तूलिकोपधाने सबीजकार्पासगर्भिते । तच्च बीजमेकमेव परिशेषणीयं न तु बहूनि परिशेषणीयानि । अन्यथा मृदुत्वहान्यापत्तेः । बीजपरिशेषणं स्पर्शयोग्यतार्थमिति शिष्टाः । ) ‘ मार्जयन्तां पितरः सपत्नीकाः सोम्यासः । मार्जयन्तां पितामहाः सपत्नीकाः सोम्यासः । मार्जयन्तां प्रपितामहाः सपत्नीकाः सोम्यासः ’ इत्यास्तृते[5] सकृदाच्छिन्ने पितृवर्गार्थरेखामनुलक्षीकृत्य न्यश्चितसव्यजानुरवाचीनपाणिर्दक्षिणापवर्गानाग्नेय्यपवर्गान्वा[6] रेखालेखनानुसारेण त्रीनुदकाञ्जलींस्त्रिभिर्मन्त्रैर्निनयति । चतुर्थपिण्डदानपक्षे तदर्थमपि तत्स्थाने तूष्णीं निनयनम् । एवं मातामहवर्गार्थां रेखामनुलक्षीकृत्य[7] पूर्ववन्मातामहाद्यर्थांस्त्रीनुदकाञ्जलीनूहेन तथैव निनयति । ततः पिण्डार्थं पूर्वोद्धृतमन्नं व्यञ्जनैर्मिश्रितं कृत्वाऽग्नौकरणशेषं तिलांश्च तस्मिन्नन्ने प्रक्षिप्य तेन षट्पिण्डान्कुक्कुटाण्डप्रमाणाञ्शक्तौ सत्यां नारिकेलप्रमाणान्कुर्यात् । चतुर्थपिण्डदानपक्षे चतुरश्चतुरः पिण्डान्कुर्यात् । अत्र माषान्केचिद्वर्जयन्ति ।

ततः—“ शुक्लाम्बराः शुक्लगन्धाः शुक्लयज्ञोपवीतिनः ।
आत्माभिमुखमासीना ज्ञानमुद्रा निरायुधाः ॥
वसवः पितरो ज्ञेया रुद्रास्तत्र पितामहाः ।
पितुः पितामहाः प्रोक्ता आदित्या बर्हिषि स्थिताः ” ॥

इति पितॄन्ध्यात्वा निनयनक्रमेणाऽऽस्तृते[8] सकृदाच्छिन्ने पत्न्या[9] कृतांस्तदभावे स्वयमेव कृतान्रेखामनुलक्षीकृत्यावाचीनपाणिस्त्रीन्पिण्डान्ददाति । पत्नी यदा

* धनुश्चिह्नान्तर्गतग्रन्थो नास्ति ङ. पुस्तके ।

१ ङ. तद्वामतः प्रत्य° । २ ङ. °न वे° । ३ ङ. °वेत् । द° । ४ ङ. °भिर्वा स्त° । ५ ङ. इति तस्मिन्नास्तृते बर्हिषि न्य° । ६ ङ. °न्वा त्री° । ७ ङ. °त्य बर्हिषि मातामहाद्यर्थमूहेन । ततः । ८ ङ. °मेण बर्हिषि प° । ९ ङ. °ति । ए° ।

पिण्डान्करोति तदा तद्धस्तात्कृतं कृतमादायाऽऽदायैव देयाः । 'एतत्ते तताऽमुकशर्मन्ये[1] च त्वामनु' इति पित्रे पिण्डं ददाति । 'एतत्ते पितामहामुकशर्मन्ये च त्वामनु' इति पितामहाय । 'एतत्ते प्रपितामहामुकशर्मन्ये च त्वामनु' इति प्रपितामहाये[2] । सपत्नीकत्वाभिध्यानमात्रमत्र न तु तच्छब्दोच्चारणमपि । चतुर्थपिण्डदानपक्षे ततस्तमपि प्रपितामहपिण्डपुरोभागे प्रपितामहात्परांस्त्रीन्[3]पितॄनभिध्यायंस्तूष्णीमेव दद्यात् । चतुर्थपिण्डदानाभावपक्षे प्रपितामहपिण्डपुरोभागे प्रपितामहात्परांस्त्रीनुद्दिश्या[4]ऽऽस्तृते सकृदाच्छिन्ने हस्तगतं लेपं तूष्णीमेव निमृजेत् । हस्तलेपाभावेऽपि हस्तनिमार्जनमात्रं कार्यमेव । एवं मातामहाद्यर्थांस्त्रीन्पिण्डांस्तदीयरेखामनुलक्षीकृत्य तथैव दद्यात्तत्तच्छब्दोहेन । चतुर्थपिण्डदानविकल्पः पूर्ववत् । पिण्डदाने गोत्ररूपोच्चारणमपि केचित्कुर्वन्ति । (* अत्र नामाज्ञाने 'स्वधा पितृभ्यः पृथिविषद्भ्यः' इति पित्रे पिण्डं ददाति । 'स्वधा पितृभ्योऽन्तरिक्षसद्भ्यः' इति पितामहाय । 'स्वधा पितृभ्यो दिविषद्भ्यः' इति प्रपितामहाय । एवं मातामहादिष्वपि पितृशब्देनैव तं तं संबन्धमभिध्यायन्दद्यात् । एतस्य पितृशब्दस्य सपिण्डीकरणश्राद्धजन्यपितृभावापन्नपरत्वात् । पितृवर्गे मातामहवर्गे च यद्येकस्य द्वयोर्वा नामाज्ञातं तदा मन्त्रस्तदीयस्तदीयः स्वधा पितृभ्य इत्येव । यस्य नाम ज्ञातं तावन्मात्रस्य त्वेतत्त इति द्रष्टव्यम् । यदि दत्तक्रीतादिर्द्विपिता तत्रापि पूर्वस्य पितुरपुत्रत्व एकस्मिन्पिण्डे द्वौ द्वौ पितरावुपलक्षयेत् । तत्प्रयोगस्तु पिण्डपितृयज्ञप्रयोगे द्रष्टव्यः ।) एवं पिण्डदानं कृत्वा[5] स्थापितकुम्भोदकचतुर्थभागं पात्रान्तरे गृहीत्वा तेनैव वा 'आपो देवीः स्वधया वन्दमानास्ता० मे पितॄन्' इति त्रीनुदपातान्निनयति । प्रत्येकं त्रिरिति केचित् । प्रत्येकं सकृदित्यन्ये । चतुर्थे[6] पिण्डे तूष्णीमिति केचित् । ततः स्थापितकुम्भोदकतृतीयभागं[7] तथैव गृहीत्वा तेन यथावस्थितेनैव मन्त्रेण मातामहादिषु 'अत्र पितरो यथाभागं मन्दध्वमनुस्वधमावृषायध्वम्' इत्युक्त्वाऽप्रदक्षिणं पराङावर्तते[8] । 'स्वाहोष्मणोऽव्यथिष्यै' इति त्रिभवात्सकृदेवोष्माणमुद्यन्तमनुमन्त्रयते । ऊष्माभावे मन्त्रलोपः । व्यावृत्त ऊष्मण्यव्यावृत्ते वा 'अमीमदन्त पितरोऽनुस्वधमावृषायिषत' इत्युक्त्वा यथेतं पिण्डसंमुखो भवेत् । ततो यः स्थाल्यां शेषस्तमवघ्रायाप उपस्पृशेत्[9] । तस्योपस्पर्शनपक्षे नोदकस्पर्शः । ततः पवित्रे ग्रन्थि मुक्त्वा विसृज्य हस्तौ पादौ च प्रक्षाल्याऽऽचम्यान्ये पवित्रे धृत्वाऽत्राऽऽञ्ज-

* धनुश्चिह्नान्तर्गतग्रन्थो नास्ति ङ. पुस्तके ।

१ ङ. °र्मन्सपत्नीक ये च । २ ङ. °य । च° । ३ ङ. °स्त्रीनु° । ४ ङ. °द्दिश्य बर्हिषि ह° । ५ ङ. °त्वा 'आ° । ६ ङ. च. °र्थेऽपि पि° । ७ ङ. °गं गृ° । ८ ङ. °ते । व्या° । ९ ङ. °त् । उपस्पृशति वा । अस्मिन्पक्षे नो° ।

नाभ्यञ्जने वासश्चानुपिण्डं ददाति । आङ्क्ष्व पितरमुकशर्मन्निति[1] पितृपिण्डे तदाञ्जनं दर्भशलाकया योजयति । आङ्क्ष्व पितामहामुकशर्मन्निति[2] पितामहपिण्डे । आङ्क्ष्व प्रपितामहामुकशर्मन्निति[3] प्रपितामहपिण्डे । प्रत्येकं त्रिः । सकृन्मन्त्रेण द्विस्तूष्णीम् । एवं प्रत्येकमिति भाष्यकृत् । अस्मिन्मते चतुर्थपिण्डेऽपि[4] तूष्णीम् । त्रिर्ग्रहणं चतुर्थपिण्डनिवृत्त्यर्थमित्यन्ये । तदा सकृत्सकृदेव । एवं मातामहादिपिण्डेष्वप्याञ्जनमूहेन दद्यात् । अभ्यङ्क्ष्व पितरित्याद्यूहेन वर्गद्वयपिण्डेषु तदभ्यञ्जनमाञ्जनवद्दद्यात्[5] । उभयत्रापि सपत्नीकत्वस्याभिध्यानमात्रम् । अत्रापि गोत्ररूपोच्चारणं केचित्कुर्वन्ति । 'एतानि वः पितरो० यूहत्वम्' [इति] दशामूर्णास्तुकां वा छित्त्वा छित्त्वा पिण्डेषु क्षिपति पूर्वे वयसि । प्रतिवर्गं मन्त्रावृत्तिः । सकृदेव वा मन्त्रः । छित्त्वेतिवचनाद्दलितयोर्न ग्रहणम् । पञ्चाशद्वर्षात्पूर्वं पूर्वं वयः । तत ऊर्ध्वमुत्तरम् । उत्तरे वयसि स्वदक्षिणप्रकोष्ठस्थं हृदयस्थं वा लोम च्छित्त्वा छित्त्वा तेनैव मन्त्रेण न्यस्यति । न दशा नोर्णास्तुका । सर्वथा लोमाभावे दशैव वोर्णास्तुकैव वा । ततः पितृभ्यो नम इति गन्धपुष्पधूपदीपनैवेद्यफलताम्बूलदक्षिणाभिः पिण्डपूजनं कुर्यात् । इदं च शिष्टाः सव्येन कुर्वन्ति[6] । सव्येन पूजनक्रियापक्षे प्राचीनावीती 'नमो वः पितरो रसाय पितरो नमो० नमो वः पितरः शुष्माय पितरो० नमो वः पितरो जीवाय पितरो० नमो वः पितरः स्वधायै पितरो० नमो वः पितरो मन्यवे पितरो० नमो वः पितरो घोराय पितरो० नमो वो य एतस्मिँल्लोके स्थ युष्मांस्तेऽनु येऽस्मिँल्लोके मां तेऽनु य एतस्मिँल्लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिँल्लोकेऽहं तेषां वसिष्ठो भूयासम्' इति सानुषङ्गैः षड्भिर्मन्त्रैः सर्वान्पितृननभिध्यायन्नुपतिष्ठते । सप्तभिरिति पिण्डपितृयज्ञे वैजयन्तीकारः । अस्मिन्पक्षे सानुषङ्गाः षण्मन्त्राः । यथापाठपठितः सप्तम इति द्रष्टव्यम्[7] । वस्तुतोऽत्र मूलं चिन्त्यम् । यथापाठपठित एक एव मन्त्र इति केचित् । ततः पूर्ववदवशिष्टकुम्भोदकेन[8] त्रीनुदपातान्निनयति 'ऊर्जस्वतीः स्वधया वन्दमाना० पितॄन्' इति मन्त्रेण ।[9] 'उत्तिष्ठत पितरः प्रेतपूर्वे० देवतासु' इति सर्वेषां पितृणामुत्थानं भावयन्नुपति । अत्र पवित्रत्यागः कृताकृतः । 'परेत पितरः सोम्या० मदन्ति' [इति] सर्वेषां प्रवाहणं भावयन्नुपति । प्रवाहणं समीचीनैर्यानैः पितॄणां पितृलोकं प्रति नयनम् । 'यन्तु पितरो मनसा जवेन[10]' इति सर्वेषां पितृलोकप्रापणं भावयन्नुपति ।

---

१ ङ. °मन्सपत्नीकेति । २ ङ. °मन्सपत्नीकेति । ३ ङ. °मन्सपत्नीकेति । ४ च. °ण्डे तू° । ५ ङ. °त् । अ° । ६ ङ. °न्ति । ततः 'नमो । ७ ङ °म् । य° । ८ ङ. °वदुदकु° । ९ ङ. °ति । 'प° । १० क. °न' पितृन्सꣳसाधयति । इ° ।

'मनो न्वा हुवामहे नाराशꣳसेन स्तोमेन० आ न एतु मनः पुनः क्रत्वे० पुनर्नः पितरो० सचेमहि' इति तिसृभिर्मनस्वतीभिः स्वलोकस्थाः पितर इति भावयन्नु-पतिष्ठते[1]। ततो यज्ञोपवीती भूत्वा 'अक्षन्नमीमदन्त० हरी । प्रजापते न त्वदे० रयीणाम्' इति पङ्क्तिप्राजापत्याभ्यां गार्हपत्यस्य पश्चाद्गच्छति। 'यदन्तरिक्षं पृथि-वीमुत द्यां० करोतु मामनेनसम्' इति गार्हपत्यमुपतिष्ठते। औपासने लौकि-काग्नौ वा होमक्रियायां यस्मिन्नग्नौ होमस्तस्योपस्थानम्। तत्र गार्हपत्यपदस्य लोपः। ततः 'अभून्नो दूतो० देवान्' इत्यतिप्रणीतमग्निं यस्मादतिप्रणीतस्त-स्मिन्नग्नौ मेलयति। ततः पात्राण्यद्भिरभ्युक्ष्य[2] द्वे द्वे आसादनस्थानाच्चालयति। स्फ्यपिण्डार्थोद्धृतान्नपात्रे मेक्षणस्रुवाविति। स्रुवासादनाभावे येन पात्रेणाभि-घारणं कृतं तत्पात्रं वा तृणं वा। यदि दर्भेणोल्लेखनं कृतं तदा प्रज्ञातस्थापितो-ल्लेखनदर्भपिण्डार्थोद्धृतान्नपात्रे इति द्वंद्वं द्रष्टव्यम्। अत्र वा विकिरान्नदानम्। ततो यज्ञोपवीती देवविप्रहस्तयोः शिवा आपः सन्त्विति यवोदकं दद्यात्। सौमनस्यमस्त्विति पुष्पम्। अक्षतं चारिष्टं चास्त्विति यवान्। दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्त्विति पुनर्जलं दद्यात्। विप्रौ—सन्तु शिवा आपः। अस्तु सौमनस्यम्। अस्त्वक्षतमरिष्टं च। अस्तु दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टि-श्चेति यथायथं प्रतिवदेताम्। ततः प्राचीनावीती शिवा आपः सन्त्विति जलं दद्यात्। सौमनस्यमस्त्विति पुष्पम्। अक्षतं चारिष्टमिति तिलान्। दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्त्विति पुनर्जलं दद्यात्। पूर्ववद्विप्राणां प्रतिवचनानि। सर्वैर्विप्रैः स्वहस्तस्थपुष्पाक्षतानां भूमौ त्यागे कृत उपवीत्येवान्यान्यवान्देववि-प्रहस्तयोर्दत्त्वाऽन्यांस्तिलान्पित्र्यविप्रहस्तेषु दद्यात्। ततोऽमुकगोत्रोऽमुकशर्माऽहं भो युष्मानभिवादय इति सर्वान्विप्रानभिवाद्याऽऽयुष्मान्भवेति तैरुक्तेऽमुकगोत्रं वर्धतामिति विप्रान्संप्रार्थयेत्। ते च वर्धतामित्युक्त्वा हस्ताक्षतान्कर्तुरञ्जलौ निक्षिपेयुः। ततः कर्ता तानक्षतान्स्वमस्तके निक्षिप्य भोजनपात्राणि सुतेन शिष्येण येन केनचित्सजातीयेन वा निष्काशयेत्[3]। न बालैः स्त्रीभिः पात्राणि निष्काशनीयानि। भुक्तोच्छिष्टं तत्पात्राणि च भूमौ निखनेत्। ततः प्राची-नावीती पूर्वस्थापितं पितृवर्गार्घ्यपात्रमादाय तत्र तिलोदकमानीयास्मत्पितुरमु-कशर्मणोऽमुकगोत्रस्य वसुरूपस्य सपत्नीकस्य यद्दत्तं मासिश्राद्धीयमन्नमुदकादि तदक्षय्यमस्त्विति भवन्तो ब्रुवन्तु इति पितृविप्रदक्षिणहस्ते जलं दद्यात्। अस्त्व-क्षय्यमिति विप्रः। एवं पितामहप्रपितामहयोस्तत्तन्नाम्ना। ततो मातामहवर्गा-र्घ्यपात्रमादाय तत्र तिलोदकमानीय तत्तन्नाम्ना पूर्ववत्तत्तद्विप्रदक्षिणहस्ते जलं दद्यात्। यदि पूर्वमेकमेव पात्रं स्थापितं तदा तेनैव देयम्। एकविप्रपक्षे—

---

१ ड. °ते। औ°। २ ङ. °ति। य°। ३ ङ. °त्। प्रा°।

अस्मत्पितृपितामहप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानाम्, अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानां यद्दत्तं मासिश्राद्धीयमन्नमुदकादि तदक्षय्यमस्त्विति भवन्तो ब्रुवन्तु इति पात्रद्वयस्थमुदकं[1] सहैव दद्यात्पृथक्पृथग्वा। तत उपवीती पुरूरवसंज्ञकानां विश्वेषां देवानां यद्दत्तं मासिश्राद्धीयमन्नमुदकादि तदक्षय्यमस्त्विति भवन्तो ब्रुवन्त्विति प्रथमदेवविप्रहस्ते यवोदकं दद्यात्। आर्द्रवसंज्ञकानां विश्वेषां देवानां यद्दत्तं मासिश्राद्धीयमन्नमुदकादि तदक्षय्यमस्त्विति भवन्तो ब्रुवन्त्विति द्वितीयदेवविप्रहस्ते। एकविप्रपक्षे—पुरूरवार्द्रवसंज्ञकानां विश्वेषां देवानामिति सहैवोत्कीर्तनम्। तत उपवीत्येव ताम्बूलपूर्वकं दक्षिणाः पान्तु इति[2] देवविप्राभ्यां दक्षिणां दत्त्वा[3] प्राचीनावीती तथैव पित्र्यविप्रेभ्यो दक्षिणां दद्यात्। तत्र[4] देवानां सुवर्णं[5] वस्त्रधान्यादि च संभवे। पितॄणां रजतं[6] वस्त्रधान्यादि च संभवे। एकमेव यदि द्रव्यं दीयते तदा दक्षिणा पातु इत्येकवचनप्रयोगः। द्रव्यद्वित्वे दक्षिणे पातामिति। सर्वत्र बहुवचनान्तमेव वा। इति सर्वेभ्यो दक्षिणां दत्त्वा पान्तु दक्षिणा इत्यादि[7] प्रश्नोहानुसारेण प्रत्युक्ते[8] पवित्रे अत्यक्त्वा त्यक्त्वा वा स्वधा संपद्यतामिति भवन्तो ब्रुवन्तु इति प्राचीनावीत्युक्त्वा संपद्यतां स्वधेति तैरुक्ते [9]पिण्डसमीपे किंचिज्जलं निनीय पितृपितामहप्रपितामहेभ्यः, अमुकामुकशर्मभ्यः, अमुकगोत्रेभ्यः, वसुरुद्रादित्यस्वरूपेभ्यः, सपत्नीकेभ्यः, अस्मन्मातामहमातुःपितामहमातुःप्रपितामहेभ्यः, अमुकामुकशर्मभ्यः, अमुकगोत्रेभ्यो वसुरुद्रादित्यस्वरूपेभ्यः सपत्नीकेभ्यः स्वधोच्यतामित्युक्त्वा, अस्तु[10] स्वधेति तैरुक्ते—अघोराः पितरः सन्त्विति वदेत्। सन्त्वघोराः पितर इति पित्र्यविप्राः प्रतिब्रूयुः। ततो[11] विप्रैः शोभनं हविरिति हविर्गुणेषूक्तेषूपवीती—'दातारो नोऽभिवर्धन्ताम्। वेदाः संततिरेव नः। श्रद्धा च नो मा व्यगमत्। बहु देयं[12] च नोऽस्तु। अन्नं च नो बहु भवेत्। अतिथींश्च लभेमहि। याचितारश्च नः सन्तु। मा च याचिष्म कंचन' इति विप्रेभ्य आशिषः प्रार्थयेत्। ततो विप्राः 'दातारो वोऽभिवर्धन्ताम्। वेदाः संततिरेव वः। श्रद्धा च वो मा व्यगमत्। बहु देयं च वोऽस्तु। अन्नं च वो बहु भवेत्। अतिथींश्च लभध्वम्। याचितारश्च वः सन्तु। मा च याचिद्ध्वं कंचन' इति आशिषो दद्युः[13]। अत्र वा भोजनपात्रनिष्काशनम्। ततो

१ ङ. °कं दद्यात्। त°। २ ङ. °ति द°। ३ ङ. दद्या°। ४ ङ. तत्राऽऽदौ दे°। ५ ङ. °र्णं ततः पि°। ६ ङ. °जतम्। इति सर्वे°। ७ ङ. इति प्र°। ८ ङ. °क्ते स्व°। ९ ङ. पिण्डान्ते। १० ङ. °ति प्र°। ११ ङ. तत उप°। १२ क. धेयं। १३ ङ. °द्युः। ततः पिण्डा°।

देवाः स्वस्तीति ब्रूत, इत्युपवीती देवविप्रौ वदेत्। तौ स्वस्तीति प्रतिवदेताम्। तत उपवीत्येव पितरः स्वस्तीति ब्रूत, इति पित्र्यविप्रान्वदेत्। ते च स्वस्तीति प्रतिवदेयुः। ततः पिण्डानुद्धृत्य[1] स्थाल्यां निक्षिपति। पार्वणद्वयद्वितीयपिण्डौ मध्यमौ निक्षिपति। चतुर्थपिण्डपक्षे तयोरपि क्षेपणम्। ततः स्थालीतो मध्यमं पिण्डद्वयमादाय 'अपां त्वौषधीना५० मे धत्स्व' इति पत्न्यै प्रयच्छति। पत्न्यनेकत्वे पिण्डद्वयं विभज्य प्रतिपत्नि देयमिति[2] याज्ञिकाः। 'आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्। यथेह पुरुषोऽसत्' इति सा प्राश्नाति। सर्वा अपि पत्न्योऽनेनैव मन्त्रेण प्राश्नीयुः। पत्न्या रजस्वलायाः प्रसूताया आशौचवत्या वा न भक्षणम्। भक्षणाभावाद्दानमपि न। अजातरजस्कायै च पत्न्यै न दद्यादिति रुद्रदत्तः[3]। 'ये समानाः समनसः० कल्पताम्। ये सजाताः समनसो० शत५ समाः' इति द्वाभ्यां सकृदाच्छिन्नमभ्युक्ष्याग्नौ प्रहरति। सकृदाच्छिन्नद्वित्वे द्वयोः प्रहरणम्। संभवात्सकृदेव मन्त्रः। तत इतरपिण्डानप्सु क्षिपति ब्राह्मणं वा भोजयत्यजाय गवे वा दद्यादग्नौ वा क्षिपेत्। पत्न्यां रजस्वलायां[4] रोगिण्यां[5] च प्राशनार्थौ मध्यमौ पिण्डौ जीर्णवृषभाय च्छागाय वा देयौ[6]। अत्र[7] पिण्डप्राशनं कृताकृतम्[8]। ततः पिण्डस्थाने जलमासिच्य 'वाजे वाजे० यानैः'। उत्तिष्ठत पितरो विश्वैर्देवैः सहेति सव्येनैव पितृपूर्वकं विसर्जनं कुर्यात्। ततः कूर्चद्वयं विस्रस्य 'आ मा वाजस्य प्रसवो जगम्यादा द्यावापृथिवी विश्वशंभू। आ मा गन्तां पितरा मातरा चाऽऽ मा सोमो अमृतत्वाय गम्यात्। स्वादुष५० ब्राह्मणासः पितरः०' इति वदेत्। ततो विप्राः 'इहैव स्तं० स्वे गृहे। आयुः प्रजां धनं०। प्रयच्छन्तु तथा राज्यं प्रीतास्तुभ्यं पितामहाः' इत्याशिषो दद्युः। कर्ता—

"अद्य मे सफलं जन्म भवत्पादाब्जवन्दनात्।
अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम्॥
पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः।
तत्क्लेशजातं चित्ते तु विस्मृत्य क्षन्तुमर्हथ" इति॥

क्षन्तुमर्हाः स्म इति विप्राः। ततः कर्ता—

"मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः।
श्राद्धं संपूर्णतां यातु प्रसादाद्भवतां मम" इति विप्रान्प्रार्थयेत्॥

विप्राः श्राद्धं संपूर्णतां यात्विति वदेयुः।

---

१ क. च. °क्षेऽपि तयोः क्षे°। २ ङ. °यम्। 'आ°। ३ ङ. °त्तः। इतरपि°। ४ ङ. °यां दूरदेशगतायां रो°। ५ ङ. च. च मध्यमं पिण्डद्वयं जी°। ६ ङ. देयम्। ७ ङ. °त्र प्रा°। ८ ङ. °तम्। ये समानाः०। ये सजाताः० इति द्वाभ्यां सकृदाच्छिन्नद्वयं सहैवाभ्युक्ष्याग्नौ प्रहरति। त°। ९ ङ. °थ। मन्त्र°।

( * ततः कर्ता—" जपच्छिद्रं तपश्छिद्रं यच्छिद्रं श्राद्धकर्मणि।
सर्वं भवतु मेऽच्छिद्रं ब्राह्मणानां प्रसादतः " ॥

इति पुनः प्रार्थयेत्। विप्राः सर्वमच्छिद्रं भवत्विति वदेयुः। ततो विप्रान्प्रदक्षिणीकृत्य तदाशिषो गृह्णीयात्। ततः कर्मपूर्णतासिद्ध्यर्थमनाज्ञातमितिमन्त्रत्रयमिदं विष्णुरिति व्याहृतीश्च जपेत्। आभिर्गीर्भिरिति ततः पठित्वा।) यस्य स्मृत्येत्यादि[१][पठेत्]। अनेन[२] मासिश्राद्धाख्येन कर्मणा श्रीपरमेश्वरः प्रीयतां न ममेति[३] कर्मेश्वरायार्पयित्वा विष्णुं संस्मृत्य पवित्रे ग्रन्थिं विसृज्य त्यक्त्वा[४] द्विराचमनं कुर्यात्। ततो बन्धुभिः सह श्राद्धशेषं भुञ्जीतेति। सर्वत्र[५] श्राद्धाङ्गेषु यत्किंचिद्वैगुण्ये[६]ऽनाज्ञातमन्त्रत्रयवैष्णव्यृक्स(वर्क्स)मस्तव्याहृतिजपः प्रायश्चित्तं द्रष्टव्यम्। आहिताग्निश्चेच्छ्रौतपितृयज्ञविधिवत्कुर्यात्। अनाहिताग्निश्चेत्सोऽयमेवं विहितोऽनाहिताग्नेरित्यादिविधिना कुर्यात्। ब्रह्मचारिस्नातकयोरपि सोऽयमेवं विहित इत्यादिविधिरेव। विवाहे कृते तस्यैव प्रायः प्रथमोपस्थितत्वात्। दूरभार्यस्याऽऽहिताग्नित्वानाहिताग्नित्वानुसारेण। विधुरस्याप्येवम्। न च प्रकृतिभूतस्य पिण्डपितृयज्ञस्यैवानारम्भात्कथं तद्विकृतिभूतानुष्ठानमिति वाच्यम्। एतस्य नियमस्य प्रकृत्युत्तरोत्पन्नविकृतिविषय एवान्यथाऽनुपपत्त्याऽङ्गीकारात्। यथाऽऽग्रयणेष्ट्यादौ। पावमानेष्ट्यादौ तु प्रकृत्युत्तरोत्पन्नत्वाभावेन न प्रकृत्यनुष्ठानोत्तरमेव विकृत्यनुष्ठानमिति नियमः। एवं सांवत्सरिकादिश्राद्धानां प्रकृतिभूतपिण्डपितृयज्ञात्पूर्वं प्रकृते[७] उत्पन्नत्वेन नायं नियम इति सिद्धं प्रकृत्यनुष्ठानाभावे विकृत्यनुष्ठानम्[८]। अत्र भोक्तुः प्रायश्चित्तं षट्प्राणायामाः। बुद्ध्या श्राद्धलोपे प्राजापत्यं प्रायश्चित्तं प्रमादाल्लोपे तूपवास इति द्रष्टव्यम्।

इति संस्काररत्नमालायां दर्शश्राद्धापरपर्यायमासिकश्राद्धप्रयोगः ॥

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायाः सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालाया उत्तरार्धेऽष्टमं प्रकरणम् ॥ ८ ॥

* धनुश्चिह्नान्तर्गतं ङ॰ पुस्तके नास्ति।

१ ङ. °स्मृ०। अ°। २ ङ. °न दर्शश्रा°। ३ ङ. °ति जलं विसृज्य वि°। ४ ङ. °क्त्वाऽऽच°। ५ ङ. °र्वश्राद्धे य°। ६ ङ. °ण्ये वैशेषिकप्रायश्चित्तानुक्तावनाज्ञातादिम°। ७ क. च. °कृतेरुत्प°। ८ ङ. °म्। इत्यो°।

अथ नवमं प्रकरणम् ।

# अथ सद्यःपक्षमाश्रित्य मासिकश्राद्धस्य प्रयोगः ।

कर्ता कृतनित्यक्रियो हस्तं(स्तौ)पादौ प्रक्षाल्योदङ्मुखो द्विराचम्य वर्गद्वयस्य तिलतर्पणं विधाया[2]ऽऽचम्य मासिश्राद्धोक्ते देश आसन उपविश्य सर्वदृग्दोषनिबर्हणार्थं समीपे छागं तदभावे कृष्णाजिनं बद्ध्वा तस्याप्यभावे[3] तिलांस्तूष्णीं चतुर्दिक्षु विकीर्याऽऽचम्य 'निहन्मि सर्वं० सर्वे' इति सर्वदोषनिबर्हणार्थं सकुशान्यवान्प्रदक्षिणं श्राद्धस्थले विकिरेत् । 'तिला रक्षन्त्वसुरा० सर्वरक्षकः' इति तिलानप्रदक्षिणं प्राचीनावीती प्रदक्षिणं यज्ञोपवीती वा विकिरेत् ।

ततः—(*" ये राक्षसाः श्रिता दिक्षु श्राद्धकर्मविघातकाः ।
तिलप्रकिरणात्सर्वे तेऽपगच्छन्तु दूरतः " ॥

इति दिग्बन्धार्थं तिलांस्तथैव विकिरेत् ।) ततः प्रमादकृताशुचित्वनिवृत्त्यर्थं शुचित्वातिशयार्थं वा पुण्डरीकाक्षं स्मरेत् । ततो गयायै नमो गदाधराय नमो वस्वादिभ्यः पितृभ्यो नम इति ध्यानपूर्वकमेतान्नमस्कृत्योदङ्मुखो द्विराचम्य प्राणानायम्य देशकालौ संकीर्त्य पुरूरवार्द्रवसंज्ञकानां विश्वेषां देवानामित्युक्त्वा प्राचीनावीती भूत्वा दक्षिणामुखोऽस्मत्पितृपितामहप्रपितामहानाममुं[4]कामुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानाम्, अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानाममुं[5]कामुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानां तृप्त्यर्थमन्नेन हविषा मासिकश्राद्धं सद्यः करिष्य इति संकल्पं कुर्या[6]त् ।

पितृभ्योऽन्नं संस्कृत्येत्येतज्ज्ञापकं देवप्रापकपात्रम् । स्मृत्युक्तोपसंहारोऽनावश्यक इतिपक्षे मातामहपार्वणं न । पूर्वं गोत्रोच्चारणं पश्चान्नामोच्चारणमित्येवं वा । एवं सर्वत्र ।

नामाज्ञाने पिण्डदानव्यतिरिक्तकर्मसु ब्रह्मविष्णुशिवशब्दैर्व्यवहारः । गोत्राज्ञाने काश्यपगोत्रम् ।

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—" जीवत्पितृकस्य प्रकोष्ठपर्यन्तं प्राचीनावीतम् " इति ।

---

१ क. ङ. °स्तपादान्प्रक्षा° । २ ङ. °धाय प्रसन्नमनाः श्राद्धमारभेत । निह° । ३ ङ. °ति सकु° । ४ ङ. °मुक° । ५ ङ. °मुक° । ६ ङ. °त् । पू° ।

ततः स्वयमेव ब्राह्मणगृहं गत्वा दक्षिणहस्तेन ब्राह्मणस्य[1] दक्षिणं जान्वालभ्य, अद्य करिष्यमाणे मत्पितुर्मासिकश्राद्धे पुरूरवसंज्ञकदेवार्थे त्वां निमन्त्रय इति निमन्त्र्य दैवे क्षणः क्रियतामिति ब्रूयात् । ॐ तथेति स प्रतिजानीयात् । एवं द्वितीयं ब्राह्मणं निमन्त्रयेत् । तत्राऽऽर्द्रवसंज्ञकदेवार्थे त्वां निमन्त्रये दैवे क्षणः क्रियतामिति विशेषः ।

उभयत्रापि पुरूरवार्द्रवसंज्ञकदेवार्थे त्वां निमन्त्रये दैवे क्षणः क्रियतामित्येवं वा । इदं च पक्षद्वयं सर्वत्र ज्ञेयम् ।

मातामहार्थं पृथग्वैश्वदेवपक्षे तदर्थमपि द्वौ विप्रौ[2] पूर्ववन्निमन्त्रयेत्[3] । अत्र देवविप्रौ 'आ ब्रह्मन्' इत्यनुवाकं जपेताम् ।

ततः प्राचीनावीती पित्रर्थब्राह्मणगृहं गत्वा तस्य सव्यजानुन आलम्भनं कृत्वाऽद्य करिष्यमाणे[4]ऽस्मिन्मासिकश्राद्धे[5] सपत्नीकपित्रर्थे त्वां निमन्त्रय इति निमन्त्र्य पित्र्ये क्षणः क्रियतामिति ब्रूयात्[6] । ॐ तथेति विप्रः । अस्मिन्मासि[7]कश्राद्धे[8] सपत्नीकपितामहार्थे त्वां निमन्त्रये पित्र्ये क्षणः क्रियतामिति पितामहार्थविप्रनिमन्त्रणे । अस्मिन्मासिकश्राद्धे[9][10] सपत्नीकप्रपितामहार्थे त्वां निमन्त्रये पित्र्ये क्षणः क्रियतामिति प्रपितामहार्थविप्रनिमन्त्रणे ।

एवं मातामहपार्वण ऊहेन विप्रत्रयं निमन्त्रणीयम्[11] । अत्र पितृविप्रा आ ब्रह्मन्नित्यनुवाकं जपेयुः ।

एवं च पृथग्वैश्वदेवपक्षे दश ब्राह्मणाः । तन्त्रपक्षेऽष्टौ । अत्यशक्तौ देवार्थ एकः पितृपार्वणार्थ एको मातामहपार्वणार्थ एक इत्येवं विप्रत्रयम् । पृथग्वैश्वदेवपक्षे चत्वारो ब्राह्मणाः । यदा त्वेक एव ब्राह्मणस्तदा तत्रैव पार्वणद्वयम् । देवस्थाने शालग्रामशिलादि संस्थाप्य देवकार्यं कर्तव्यम् । तदीयप्रतिवचनानि तु स्वयमेव वदेल्लोपो वा[12] । श्राद्धसमाप्तौ तदीयमन्नमग्नौ प्रक्षिपेत्, ब्रह्मचारिणे वा दद्यात् । यदि सर्वथा ब्राह्मणालाभस्तदा दर्भबटूंस्तत्तत्स्थाने निधाय प्रतिवचनयुक्तं सर्वं श्राद्धं कर्तव्यम् ।

स्वस्य निमन्त्रणासामर्थ्ये सुतेन शिष्येण सजातीयेन येन केनचित्साधुनाऽऽप्तेन वा कारयेत् ।

ततो यज्ञोपवीत्येव महानसे रेखालेखनावोक्षणे कृत्वो[13]त्तरतः पुरतोऽन्वो[14]क्षं-

---

१ ङ. °स्य जानुद्वयमाल° । २ च. °प्रौ निम° । ३ ङ. °त् । ततः । ४ ङ. °णेऽस्मत्पितुर्मासि° । ५ ङ. °द्धे पि° । ६ ङ. °ति पित्रर्थं विप्रं निमन्त्रयेत् । ७ ङ. अस्मत्पितामहस्य मासि° । ८ ङ. °द्धे पित्र्ये । ९ ङ. अस्मत्प्रपितामहस्य मासि° । १० ङ. °द्धे पित्र्ये । ११ ङ. °म् । ए° । १२ ङ. वा । सर्वं° । १३ ङ. कृत्वा तदुत्त° । १४ ङ. °क्षणशेषोत्से° ।

णोदकोत्सेचनं स्वसमीप उदकनिधानं च कृत्वा लौकिकाग्निं महानसे प्रतिष्ठाप्य पितृभ्यो होमभोजनार्थं तस्मिन्नग्नौ स्वयमेव पाकं कुर्यात्। स्वस्याशक्तौ पत्न्यादिभिः। स्त्रीकर्तृके पाके रेखालेखनादि न।

तत उपलिप्ते श्राद्धस्थले प्रागग्रान्दर्भान्वैश्वदेवब्राह्मणासनार्थं परिकल्प्य पित्र्यब्राह्मणासनार्थं दक्षिणाग्रान्दर्भान्परिकल्पयेत्। अत्र द्वितीयं[1] निमन्त्रणं पाकः सिद्ध आगम्यतां दैवे क्षणः क्रियतां पित्र्ये क्षणः क्रियतामिति यथायथं दैवपित्र्यधर्मेण पूर्ववत्।

तत औपासनाग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा मासिकश्राद्धहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा प्राचीनावीती प्रधानहोमे सोमं पितृमन्तमाज्या*हुत्या १, यममङ्गिरस्वन्तं पितृमन्तमा० २, पितरमा० ३, पितामहमा० ४, प्रपितामहमा० ५, अमुकशर्माणमा० ६, अमुकशर्माणमा० ७, अमुकशर्माणमा० ८ पितरमा० ९, पितामहमा० १०, प्रपितामहमा० ११, पितृ[2]न्द्राभ्यामाज्याहुतिभ्यां यक्ष्ये १२–१३, पितृनाज्याहुत्या० १४, पितामहानाज्याहुत्या० १५, प्रपितामहाना[3]ज्याहु० १६, इति वदेत्। एवमन्नेन षोडश। तत्रा[4]ऽऽज्याहुत्येत्येतस्य स्थाने[5]ऽन्नाहुत्येति वदेत्। त्रीनन्तिमान्वेतिपक्षे पितॄनन्ना+हुत्या पितामहानन्नाहुत्या प्रपितामहानन्नाहुत्येत्येता एवो[6]ल्लिखेत्, नान्याः। सोमं पितृमन्तमाज्या*हुत्या यममङ्गिरस्वन्तं पितृमन्तमा० मातामहमा० मातुःपितामहमा० मातुःप्रपितामहमा० । अमुकशर्माणमा० । अमुकशर्माणमा० । अमुकशर्माणमा० । मातामहमा० मातुःपितामहमा०। मातुःप्रपितामहमा०। पितृ[6]न्द्राभ्यामाज्याहुतिभ्यां० । मातामहाना० । मातुःपितामहाना०। मातुःप्रपितामहाना[7]ज्याहुत्या यक्ष्य इति मातामहपार्वण उल्लेखः। एवमन्नेन षोडश। आ[8]ज्याहुत्येत्यत्रान्ना+हुत्येति। त्रीनन्तिमान्वेतिपक्षे मातामहानन्नाहुत्या। मातुःपितामहानन्नाहुत्या। मातुःप्रपितामहानन्नाहुत्येत्येता एवोल्लिखेन्नान्याः। ततोऽग्निं कव्यवाहनं स्विष्टकृतमन्नाहुत्या यक्ष्य इत्युक्त्वा यज्ञोपवीती—प्रायश्चित्त[9]होमकर्तव्यतापक्षे प्रायश्चित्तहोमे—अग्नि[10] तिसृभिराज्याहुतिभिरित्यादि। परिस्तरणकाले पुरस्ताद्दक्षिणाग्रैर्दर्भैः परिस्तीर्य दक्षिणतः

---

* अत्र ङ. पुस्तक आज्येनेति। एवमग्रेऽपि। + ङ. पुस्तकेऽन्नेनेति। एवमग्रेऽपि। * ङ. पुस्तक आज्येनेति। एवमग्रेऽपि। + ङ. पुस्तकेऽन्नेनेति। एवमग्रेऽपि।

---

१ ङ. च. तृतीयं। २ ङ. °तृन्द्विरा०। पितृनाज्येन पितामहाना०। ३ ङ. °नाज्येन यक्ष्य इ०। ४ ङ. °त्राऽऽज्येनेत्येत°। ५ ङ. °नेऽन्नेनेति। ६ ङ. °तृन्द्विरा०। माता°। ७ ङ. °नाज्येन य°। ८ ङ. आज्येनेत्यत्रान्नेनेति। ९ ङ. °होमे। १० ङ. °ग्निं त्रिरि°।

प्रागग्रैः पश्चाद्दक्षिणाग्रैरुत्तरतः प्रागग्रैरित्येवं परिस्तृणाति । अत्रोत्तरदिक्स्थाः परिस्तरणदर्भाः पूर्वपश्चिमदर्भाणामुपरि दक्षिणदिक्स्थास्तदधोभाग इति केचित् ।

ततोऽग्नेरुत्तरत एव दर्भान्संस्तीर्य तेषु युगपदेकैकशो वा पात्राणि प्रयुनक्ति-औदुम्बरीं दर्वीमौदुम्बरं स्रुवमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं ब्राह्मभोजनपात्राणि तिलान्यवांस्तैजसं मृन्मयं वाऽर्घ्यपात्रद्वयमौदुम्बरमिध्मं बर्हिः संमार्गदर्भानवज्वलनदर्भानाज्यमिति ।

अत्र परिधयोऽप्यौदुम्बरा एव । समूलमेव बर्हिः । एतच्चार्घ्यपात्रद्वयस्याऽऽसादनमाज्यसंस्कारोत्तरं ब्राह्मणोपवेशनादीति पक्षे । उपसमाधानात्प्राक्कर्तव्यतापक्षे तु न ।

ततो देवार्घ्यपात्रार्थं दर्भद्वयात्मकं पित्रर्घ्यपात्रार्थमेकदर्भमयमिति पवित्रद्वयं कृत्वा प्रज्ञातं निधायान्यदेकदर्भमयं पवित्रं कृत्वा तेनैव प्रणीताः संस्कृत्याग्नेरुत्तरतो निधाय प्रोक्षणीरप्येतेनैव पवित्रेण संस्कृत्य पात्राणि प्रोक्ष्य स्रुवं दर्वीं च संमृज्य तेनैव पवित्रेणाऽऽज्यं संस्कृत्य पवित्रमग्नावादध्यात् । अत्राप्यङ्गारनिरूहणाज्योद्वासनयोरुत्तरत एव क्रिया न दक्षिणतोऽवचनात् । पर्यग्निकरणं प्रदक्षिणमेव परिषेकवदत्र विधानाभावात् ।

ततः कुतपकाले ब्राह्मणान्प्रदक्षिणी कुर्वन् 'समस्तसंप० पादपांसवः' इति श्लोकान्पठेत् ।

ततः—'अक्रोधनैः शौच० श्राद्धकारिणा' इति विप्रान्प्रार्थयेत् । भवाम(म इ)ति विप्राः । ततः पुरूरवसंज्ञका विश्वे देवाः स्वागतम्, आर्द्रवसंज्ञका विश्वे देवाः स्वागतमिति देवविप्रयोः स्वागतं कृत्वा पितः स्वागतं पितामह स्वागतं प्रपितामह स्वागतं मातामह स्वागतं मातुःपितामह स्वागतं मातुःप्रपितामह स्वागतमिति यथायथं पित्रादिविप्रस्वागतं सव्येनैव कुर्यात् । ततः पुरूरवसंज्ञका विश्वे देवा इदं वः पाद्यम्, आर्द्रवसंज्ञका विश्वे देवा इदं वः पाद्यम्, इति देवविप्रपादोपरि द्विवारं पाद्यं गृहाङ्गण एव दत्त्वा पादप्रक्षालनं कुर्यात् । ततः प्राचीनावीती पितरमुकशर्मन्नमुकगोत्र वसुरूपेदं ते पाद्यमित्याद्यूहेन पितृतीर्थेन पित्रादिविप्रपादोपरि त्रिवारं पाद्यं गृहाङ्गण एव दत्त्वा पादप्रक्षालनं कुर्यात् । ततो विप्रा आचमनं कुर्युः । कर्ता यज्ञोपवीती भूत्वाऽऽचमनं कुर्यात् । सर्वाण्याचमनानि सव्येनैव कार्याणि ।

१ ङ. 'थं द' । २ ङ. 'थं द' ।

ततः पुरूरवसंज्ञका विश्वे देवाः समाध्वम्, आर्द्रवसंज्ञका विश्वे देवाः समाध्वमिति देवविप्रावु[1]क्त्वा सुसमास्मह इति ताभ्यां प्रतिवचने दत्त आसनसमीप उपवेश्य प्राचीनावीती पितरमुकशर्मन्नमुकगोत्र वसुरूप समास्स्वेत्याघूहेन पित्रादिविप्रानु[2]क्त्वा सुसमास्मह इति प्रतिवचने दत्त आसनसमीप उपवेशयेत् ।

ततो यज्ञोपवीती पाकस्य पूजोपचारादीनां च गायत्र्या प्रोक्षणं कृत्वा पा[3]कस्य पवित्रताऽस्त्विति ब्रूयात्[4] । अस्तु पवित्रतेति विप्राः । सर्वे पदार्थाः शुचयो भवन्त्विति कर्ता वदेत् । भवन्तु शुचय इति विप्राः प्रतिब्रूयुः ।

ततो दक्षिणं जान्वाच्य पुरूरवसंज्ञकानां विश्वेषां देवानामिदमासनम् । आर्द्रवसंज्ञकानां विश्वेषां देवानामिदमासनम् । इत्युपक्रम्य आसने देवविप्राभ्यां प्रदायात्राऽऽस्यतामिति तयोरासनयोः प्राङ्मुखावाचान्तौ देवविप्रावुपवेशयेत् । धर्मोऽसीति विप्रयोः प्रतिवचनम् ।

ततः प्राचीनावीती पितुरमुशर्मणोऽमुकगोत्रस्य वसुरूपस्येदमासनमित्याघूहेनोपकल्पितान्यासनानि पित्रा[5]द्यर्थविप्रेभ्यो यथायथं प्रदाय, अत्राऽऽस्यतामिति तेष्वासनेषूदङ्मुखानाचान्तान्पित्रा[6]द्यर्थान्विप्रानुपवेशयेत् । धर्मोऽसीति विप्राणां प्रतिवचनम् ।

तत आसादितार्घ्यपात्रद्वयं[7]त एकं पात्रं गृहीत्वा देवविप्रपुरतो निधाय तस्मिन्पूर्वकृतं दर्भद्वयात्मकं पवित्रं प्रागग्रं निधाय तत्पात्रं शुद्धोदकेन संपूर्य 'यवोऽसि यवयास्मद्द्वेषो यवयारातीः' इति यवान्प्रक्षिप्य 'गन्धद्वाराम्' इति गन्धम्, 'ओषधयः प्रतिमोदध्वम्' इति पुष्पाणि निक्षिप्याग्नेरुत्तरतस्तत्पात्रं दर्भेषु निधाय तस्मादर्घ्यार्थं सर्वमुदकमुद्धृत्य तदीयं पवित्रं देवविप्रदक्षिणहस्ते धृत्वा पुरूरवसंज्ञका विश्वे देवा इदमर्घ्यं स्वाहा न ममेत्यर्धमर्घ्योदकं द्विवारं दद्यात् । अस्त्वर्घ्यमिति विप्रः । ततः शुद्धोदकं विप्रहस्ते दद्यात् । ततस्तत्पवित्रं द्वितीयदेवविप्रदक्षिणहस्ते दत्त्वाऽऽर्द्रवसंज्ञका विश्वे देवा इदमर्घ्यं स्वाहा न ममेति द्वितीयविप्रहस्त उद्धृतावशिष्टमर्घ्योदकं द्विवारं दद्याच्छुद्धोदकं च । द्वितीयविप्राभावे तस्यैव हस्ते चतुर्वारं देयम् ।

ततो मध्यमयाऽङ्गुल्या 'गन्धद्वारां दुराधर्षां० श्रियम्' पुरूरवसंज्ञका विश्वे देवा एष गन्ध इति प्रथमदेवविप्रहस्ते द्विवारं दत्त्वा, आर्द्रवसंज्ञका विश्वे

---

१ ङ. °वुक्त्वाऽऽसन° । २ ङ. °नुक्त्वाऽऽस° । ३ ङ. पाकादीनां । ४ ङ. °त् । सर्वे पाकादयः पदार्थाः शुचयो भवन्त्विति विप्राः प्र° । ५ ङ. °त्रादिवि° । ६ ङ. °त्रादिविप्रा° । ७ च. °यमेकं वा पा° । ८ च. °वाभिक्षि° ।

देवा एष वो गन्ध इति द्वितीयदेवविप्रहस्ते पूर्ववद्दद्यात् । 'ओषधयः प्र० दत्' पुरूरवसंज्ञका विश्वे देवा इमानि वः पुष्पाणि, इति यथायथमूहेन पुष्पाणि द्विवारं दद्यात् । धूरसीति धूपम् । उद्दीप्यस्वेति दीपम् । युवा सुवासा इति वस्त्रम् । सुगन्धोऽस्तु सुपुष्पाणि सन्तु सुधूपोऽस्तु सुदीपोऽस्तु सुवस्त्रमस्त्विति प्रतिवचनानि । सति संभवेऽन्येऽप्युपचारा देयाः । प्रत्युपचारं जलदानम् । 'ये देवा दिवि' इति देवानुपतिष्ठते । अत्र स्थलत्रयेऽर्घ्यदानमिति भाष्यकारोक्तकल्पे तु न । सर्वस्यार्घ्यार्थमुदकोद्धरणं किं त्वन्तिमार्घ्यदान एव ।

## अथ पित्राद्यर्चनम् ।

कर्ता प्राचीनावीती सव्यं जान्वाच्य, अस्मत्पितुरमुकशर्मणोऽमुकगोत्रस्य वसुरूपस्येदमासनमस्मत्पितामहस्यामुकशर्मणोऽमुकगोत्रस्य रुद्ररूपस्येदमासनमस्मत्प्रपितामहस्यामुकशर्मणोऽमुकगोत्रस्याऽऽदित्यरूपस्येदमासनमित्यूहेन कृतपादशौचानाचान्तान्विप्रान्दक्षिणाग्रेष्वासनेषूदङ्मुखानुपवेशयेत् । एवमूहेन मातामहाद्यर्थविप्रांस्तद्दक्षिणभागे ।

ततः पूर्वासादितं पित्रर्थमर्घ्यपात्रं पितृविप्रपुरतो दर्भेषु निधाय तस्मिन्प्रज्ञातं निहितमेकदर्भमयं पवित्रं दक्षिणाग्रं निधाय तस्मिन्पात्रे शुद्धोदकमानीय 'तिलोऽसि सोम० नः स्वधा नमः' इति तिलांस्तस्मिन्निक्षिप्य, 'गन्धद्वाराम्' इति गन्धम्, 'ओषधयः प्रति' इति पुष्पाणि च निक्षिप्य तत्पात्रमग्नेर्दक्षिणतो दक्षिणाग्रेषु दर्भेषु निधाय तस्मादर्घ्योदकादेवार्घ्यकल्पानुसारेण किंचित्सर्वं वोद्धृत्य तत्पवित्रं विप्रहस्ते दत्त्वाऽस्मत्पित्रेऽमुकशर्मणेऽमुकगोत्राय वसुरूपायेदमर्घ्यं स्वधा न ममेति पितृविप्रहस्ते पितृतीर्थेन त्रिवारमेकवारं वा दद्यात् । अत्रैवार्घ्यदानपक्षे त्रिवारं स्थलत्रयेऽर्घ्यदानपक्ष एकवारमिति व्यवस्था बोध्या । अस्त्वर्घ्यमिति विप्रः । ततः कर्ता शुद्धोदकं दद्यात् । एवमितरेषु । अस्मत्पितामहायेत्याद्यूहेन तत्तन्नाम्ना रूपेण च मातामहादिषु नामगोत्ररूपोहः । यदि द्वावेव विप्रौ तदा पितृपार्वणस्थानीयविप्रदक्षिणहस्ते त्रिवारं नववारं वा दत्त्वा द्वितीयविप्रदक्षिणहस्ते तथैव दद्यात् । यदि त्वेक एव विप्रस्तदा तस्य हस्ते षड्वारमष्टादशवारं वा देयम् ।

ततो गन्धद्वारामित्यादिपूर्वोक्तैर्मन्त्रैरस्मत्पितरमुकशर्मन्नमुकगोत्र वसुरूपैष गन्ध इमानि पुष्पाणीत्याद्यूहेन गन्धपुष्पधूपदीपवस्त्रादि दद्यात् । पूर्ववत्प्रति-

---

१ ङ. इदं वः पुष्पम्, इ° । २ ङ. सुपुष्पमस्तु । ३ क. °नमित्याद्यूहे° । ४ क. ङ. °धा नम इति । ५ ङ. च. ततः पूर्वोक्तैरेव मन्त्रै° ।

वचनानि। तत आचम्य देवविप्रयोः पुरतो गोमयेन चतुरश्रे मण्डले कृत्वा प्राचीनावीती पित्र्यविप्राणां पुरतो गोमयेन वर्तुलानि मण्डलानि कुर्यात्। एतानि षडङ्गुलानि प्रादेशमात्राणि वा कार्याणि। ततस्तेषु मण्डलेषु दैवपित्र्यधर्मेण पितृपूर्वकं पात्राणि संस्थाप्य प्रतिपात्रं दैवपित्र्यधर्मेण पितृपूर्वकमेव परितो भस्मरेखां करशुद्धिं च कुर्यात्। ततो भोजनपात्रेषूपस्तरणं कुर्यात्। ततः प्राचीनावीत्येव 'उद्धरिष्याम्यग्नौ च करिष्यामि' इति पित्र्यविप्रानामन्त्रयते। 'काममुद्ध्रियतां काममग्नौ च क्रियताम्' इति विप्रा अनुज्ञां दद्युः। उद्धरणपात्रमादायाऽऽमन्त्रणमिति शिष्टाः। ततोऽन्नमुद्धृत्य पात्रान्तरे मातामहवर्गार्थमर्धं पृथक्कृत्योभयमग्निसमीपे निधाय यज्ञोपवीती परिधीन्परिदधाति। तत्र मध्यमपरिधिरुत्तराग्र एव। ततोऽन्नस्य देवपवित्रसंस्कारं विधायाग्नेः पश्चाद्बर्हिष्यासाद्य 'अदितेऽनुमन्यस्व' इत्यादिभिः परिषेकत्रयं यथावस्थितमेव कृत्वा 'देव सवितः' इत्यनेन यः परिषेकस्तं प्रसव्यं परिषिच्यौदुम्बरेध्माभ्याधानादि औदुम्बर्या दर्व्याऽऽज्यभागान्तं कृत्वा 'ये देवा० जुषध्वम्' पुरूरवसंज्ञकान्विश्वान्देवानावाहयामीति प्रथमे देवविप्र आवाह्य पुनर्मन्त्रमुक्त्वाऽऽर्द्रवसंज्ञकान्विश्वान्देवानावाहयामीति द्वितीये देवविप्र आवाहयेत्। ततः प्राचीनावीती—

"आयात पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः।
प्रजामस्मभ्यं ददतो रयिं च दीर्घायुत्वं च शतशारदं च"।

अस्मत्पितरमावाहयामीति दक्षिणां दिशमनुलक्षीकुर्वन्विप्र आवाहयति। एवमेवोहेनेतरेषु।

"आपो देवीः प्रहिणुताग्निमेतं यज्ञं पितरो नो जुषन्ताम्।
मासीमामूर्जमुत ये भजन्ते ते नो रयिꣳ सर्ववीरं नियच्छतु"।

इति दक्षिणदिश्येव तिलसहितं जलं प्रक्षिपेत्। ततो यज्ञोपवीती[1] युक्तो वहेत्यादि व्याहृतिहोमान्तं कृत्वा प्राचीनावीती प्रधानहोमं[2] पितृतीर्थेन कुर्यात्। सोमाय पितृमते स्वधा नमः। सोमाय पितृमत इदं०। यमायाङ्गिरस्वते पितृमते स्वधा नमः। यमायाङ्गिरस्वते पितृमत इदं०।

"याः प्राचीः संभवन्त्याप उत्तरतश्च याः। अद्भिर्विश्वस्य भुवनस्य धर्त्रीभिरन्तरन्यं पितुर्दधे स्वधा नमः" पित्र इदं०।

---

१ च. °वीती 'उ'। २ ङ. °मं कु°।

"अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या । दिवा दिग्भिरनन्ताभिरूतिभिरन्तरन्यं पितामहाद्दधे स्वधा नमः" पितामहायेदं० ।

"अन्तर्दध ऋतुभिरहोरात्रैः सुसंधिभिः । अर्धमासैश्च मासैश्चान्तरन्यं प्रपितामहाद्दधे स्वधा नमः" ।

प्रपितामहायेदं० । इति पश्चाऽऽहुतीर्हुत्वाऽमुकशर्मणे स्वधा नम इति पितृनाम्ना जुहोति । अमुकशर्मण इदं० । अमुकशर्मणे स्वधा नम इति पितामहनाम्ना । अमुकशर्मण इदं० । अमुक० प्रपितामहनाम्ना । अमुकशर्मण इदं० इत्याहुतित्रयं नामधेयैर्हुत्वा—

"यन्मे माता प्रलुलोभ चरत्यननुव्रता । तन्मे रेतः पिता वृङ्क्तामा भुरन्योपपद्यताᳬ स्वधा नमः" पित्र इदं० । 'यन्मे पितामही प्र० रेतः पितामहो वृ० स्वधा नमः' पितामहायेदं० । 'यन्मे प्रपितामही प्र० रेतः प्रपितामहो वृ० स्वधा नमः' । प्रपितामहायेदं०[1] । आभूरन्योपपद्यतामिति वा पाठः ।

"ये चेह पितरो ये च नेह याᳬश्च विद्मᳬ उ च न प्रविद्म । अग्ने तान्वेत्थ यदि ते जातवेदस्तया प्रत्तᳬ स्वधया मदन्तु स्वधा नमः"

पितृभ्य इदं न मम ।

"यद्वः क्रव्यादङ्गमदहल्लोकानयं प्रणयन्जातवेदाः । तद्वोऽहं पुनरावेशयाम्यरिष्टाः सर्वैरङ्गैः संभवत पितरः स्वधा नमः" पितृभ्य इदं० ।

"वहाऽऽज्यं जातवेदो यत्रैतान्वेत्थ निहितान्पराके । आज्यस्य कुल्या उप तान्क्षरन्तु सत्या एषामाशिषः सन्तु कामैः स्वधा नमः" पितृभ्य इदं० ।

"वहाऽऽज्यं जातवेदः पितामहेभ्यो य० कामैः स्वधा नमः" पितामहेभ्य इदं० ।

"वहाऽऽज्यं जातवेदः प्रपितामहेभ्यो यत्रैतान्वेत्थ० कामैः स्वधा नमः" प्रपितामहेभ्य इदं० । अथ षोडशाहुतीरवदानधर्मेणाऽऽसादितेन पितृवर्गार्थांशेन तैरेव मन्त्रैर्जुहुयात् । वहाऽऽज्यमित्यत्र वहान्नमित्यूहः । अन्त्यास्तिस्र एव वाऽन्नाहुतयः । सोमाय पितृमते० । यमायाङ्गि० । "याः प्राचीः सं० मातामहाद्दधे स्वधा नमः" मातामहायेदं० । "अन्तर्दधे पर्वतै० रन्यं मातुःपितामहाद्दधे स्वधा नमः" मातुःपितामहायेदं० । 'अन्तर्दध ऋ० रन्यं मातुःप्रपितामहाद्दधे स्वधा नमः' मातुःप्रपितामहायेदं० इति जुहोति । अथ तत्तन्नाममन्त्रैः पूर्ववदाहुतित्रयं हुत्वा 'यन्मे मातामही प्र० रेतो मातामहो वृ०' मातामहायेदं० ।

---

१ ङ. °दं । ये ।

'यन्मे मातुःपितामही प्र० रेतो मातुःपितामहो वृ०' मातुःपितामहायेदं न मम। 'यन्मे मातुःप्रपितामही प्र० रेतो मातुः प्रपितामहो वृ०' मातुःप्रपितामहायेदं०। 'ये चेह पि०' पितृभ्य इदं० 'यद्वः कव्या०' पितृभ्य इदं० 'वहाऽऽज्यं जातवेदो मातामहेभ्यो य०' मातामहेभ्य इदं० 'वहाऽऽज्यं जातवेदो मातुःपितामहेभ्यो०' मातुःपितामहेभ्य०। 'वहाऽऽज्यं जातवे० मातुःप्रपितामहेभ्यो०' मातुःप्रपितामहेभ्य इदं०। पूर्ववत्षोडश मातामहवर्गार्थान्नस्योहेन। अन्त्यास्तिस्र एव वा।

न प्रकृतावूहो विद्यत इति निषेधात्प्रकृतौ दर्शपूर्णमासयोरनेकपत्नीकस्यापि पत्नी१ संनह्येत्यस्मिन्प्रैषे यथा नोहस्तथा द्विपितृकस्य द्विपितृशब्दादौ नोहः।

प्रकृतावेव द्वादशाहेऽद्य सुत्यामित्यालेखन इत्यूहदर्शनादत्राप्यूह इति केचित्। अस्मिन्पक्षे—'पितृभ्यां दधे पितामहाभ्यां दधे प्रपितामहाभ्यां दधे। यन्मे मातरौ प्रलुलुभतुश्चरतोऽननुव्रते तन्मे रेतः पितरौ वृञ्जाथामा०। यन्मे पितामह्यौ प्रलु० तन्मे रेतः पितामहौ वृ० यन्मे प्रपितामह्यौ प्रलु० रेतः प्रपितामहौ वृ०'। नामधेयैर्जुहोतीत्यत्र नामद्वयमविभक्तिकमुक्त्वा शर्मभ्यां स्वधा नम इति, यथा देवदत्तयज्ञदत्तशर्मभ्यामिति।

तत उपस्तीर्यान्नद्वयात्सकृत्सकृदवदायाभिघार्य, अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नम इति स्विष्टकृतं जुहुयात्। अग्नये क० त इदं०। एवमन्नस्येत्यनुवर्तनादन्नेन स्विष्टकृतम्। आज्येनेत्येके। अत्र वारुण्यादीनामभाव एव। अथ सौविष्टकृतीं जुहोतीत्यथशब्दाज्ज्ञापकात्। (* सर्वदर्विहोमाणामेष कल्प इतिसूत्रे ह्येतच्छब्देनानुक्रान्तस्यैव विधेर्ग्रहणमितिकल्पस्वीकारे तदा वारुण्यादीनामत्रार्थप्राप्तेरथशब्दस्य वारुण्याद्यभावार्थतेति वक्तुं न शक्यत इति यद्युच्यते तदाऽथशब्दोऽनेन स्विष्टकृत्कर्तव्यमित्येतादृशार्थबोधनार्थः। अस्मिन्कल्प एवमन्नस्येति नानुवर्तनीयम्।)

ततो यज्ञोपवीती शुल्बप्रहरणादि पूर्णपात्रदानान्तं कुर्यात्। प्रसव्यमेवोत्तरोऽपि परिषेकः।

ततो यज्ञोपवीती स्वयमन्नपरिवेषणं कुर्यात्। स्वस्याशक्तौ भार्ययाऽन्यैर्बान्धवैर्वा कारयेत्। आदौ दैवं परिवेषणं पश्चात्पित्र्यम्। घृतं तु पितृपूर्वकमेव परिवेषणीयमिति केचित्। प्रथमपरिवेषण एवायं नियमो न द्वितीयादिषु।

---

१ ङ. च. 'त्। ए'।

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ पुस्तके।

हुतशेषमन्नमपि पित्र्ये परिवेषणीयम्[१] । विधुरेण तु देवविप्रपात्रयोरेव । ततो यज्ञोपवीती विष्णवादिदेवताभ्यो नैवेद्यं[२] प्रदर्शयेत् । ततो दक्षिणहस्तेन देवपात्रमालभ्य ' सत्यं त्वर्तेन परिषिञ्चामि ' इति परिषिच्य ' पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि० सि मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोके ' इति देवपात्रस्थमन्नमभिमृशेत् । मा देवानां क्षेष्ठा इत्यूहं वदन्ति केचित् । पृथिवी समेत्यादिकस्य शेषभूतमन्त्रत्रयस्य[३] लोप एवान्वयासंभवात् । एवं द्वितीयदेवविप्रे । ततः प्राचीनावीती पूर्ववत्पात्रालम्भनं परिषेकं च कृत्वा ' पृथिवी ते पात्रं० मा पितॄणां क्षेष्ठा अ० । पृथिवी समा० दाय ' इति पितृपात्रस्थमन्नमभिमृशेत् । एवमितरेषु । मा पितामहानां क्षेष्ठा० अन्तरिक्षꣳ समं त० येति द्वितीये विशेषः । मा प्रपितामहानां क्षेष्ठाः० द्यौः समा तस्याऽऽदि० येति तृतीये । एवं मातामहादित्रये[४] मन्त्रत्रयमूहेन । शेषभूतं[५] मन्त्रत्रयं तु यथावस्थितमेव । पितृपार्वण एकविप्रपक्षे पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि० मा पितॄणां क्षेष्ठा अ० पृथिवी समा तस्याग्निरु० य । पृथिवी ते पा० मा प्रपितामहानां क्षेष्ठा० अन्तरिक्षꣳ समं तस्य वायु० य । पृथिवी ते पा० मा प्रपितामहानां क्षेष्ठा० द्यौः समा तस्याऽऽदित्य उप० दायेति सर्वान्मन्त्रानुक्त्वाऽन्त उपस्पर्शः कार्यः । एवं मातामहपार्वणे । यदि तु पितृमातामहपार्वणार्थं एक एव विप्रस्तदोहेन षण्मन्त्रानुक्त्वाऽन्त उपस्पृशेत् । ततो यज्ञोपवीती दैवार्घ्योदकात्किंचिदादाय देवविप्रहस्तयोः पूर्ववदर्घ्योदकं शुद्धोदकं च दत्त्वा प्राचीनावीती पित्र्यार्घ्योदकात्किंचिदादाय पित्र्यविप्रहस्ते पूर्ववद्दद्यात् । शुद्धोदकं च । ( + यद्यर्घ्योदकमवशेषितं भवेत्तदैतदर्घ्यदानम् । ) ततो यज्ञोपवीती भोजनपात्रं सव्यहस्तेन धृत्वा प्राणे निविश्यामृतं जुहोमीत्यनखेन ब्राह्मणहस्ताङ्गुष्ठेनान्नमुपस्पर्शयति । पुरूरवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदमन्नं सोपस्करं परिविष्टं परिवेक्ष्यमाणं चास्य ब्राह्मणस्याऽऽतृप्ति, अमृतरूपेण संपद्यतां स्वाहा हव्यं न ममेत्युक्त्वा यवमिश्रमुदकं पात्रस्य[६] दक्षिणे भागे भूमावेव क्षिपेत् । एवं द्वितीये । ततः प्राचीनावीती पित्र्यविप्राभिमुखः सव्यहस्तेन पात्रं धृत्वा प्राणे निविश्यामृतं जुहोमीत्यनखेन ब्राह्मणहस्ताङ्गुष्ठेनान्नमुपस्पर्शयति । अस्मत्पित्रेऽमुकशर्मणेऽमुकगोत्राय वसुरूपायेदमन्नं सोप० अमृतरूपेण संपद्यतां स्वधा कव्यं

+ धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—" न वाऽत्रार्घ्यदानम् । " इति ।

१ क. च. °म् । ततो । २ ङ. °ती नै° । ३ च. °यस्यापि लो° । ४ च. °दिपात्रत्र° । ५ क. च. °तं य° । ६ ङ. °स्य वामभा° ।

न ममेत्युक्त्वा तिलमिश्रमुदकं पात्रस्य वामभागे भूमावेव क्षिपेत् । एवमितरेषु—अस्मत्पितामहायामुकशर्मण इत्याद्यूहेन । ततः प्राचीनावीत्येवानेनास्मिन्मासिकश्राद्धयज्ञे ब्राह्मणभोजनेन पितृपितामहप्रपितामहसपत्नीकमातामहमातुःपितामहमातुःप्रपितामहसपत्नीकस्वरूपी परमेश्वरः प्रीयतां न ममेति जलमुत्सृजेत् । अत्र विप्रा बलीन्न दद्युः । परिषेकं च न कुर्युः । ततः कर्ता यज्ञोपवीती प्राणाहुतिमन्त्रान्पठेत् । विप्राः पञ्चसु स्वाहाकारान्तेषु पञ्च प्राणाहुतीर्जुहुयुः ।

ततः कर्ता 'ब्रह्मणि म आत्माऽमृतत्वाय' इति सर्वान्विप्रान्भुञ्जानान्समीक्षते । 'अपेक्षितं याचित० सैः' इति विप्रान्प्रार्थयेत् ।

विप्राणां भोजनकाले 'युञ्जते मनः' इत्यादीन्पूर्वोक्तानभिश्रावणीयाननुवाकान्विप्राञ्श्रावयेत् । अनुवाकाध्ययनाभावे गायत्रीजपो विप्रभोजनपर्यन्तं कर्तव्यः । देवतानामानि वा श्रावणीयानि । ततस्तृप्तान्विप्राञ्ज्ञात्वा 'मधु वाताः' इति तिस्र ऋचः श्रावयेत् । ततः प्राचीनावीती—'अक्षन्नमीमदन्त' इति श्रावयेत् । ततः पिण्डार्थमन्नं पृथक्कृत्य प्रज्ञातं निधायावशिष्टादन्नाद्विकिरपर्याप्तं सव्यञ्जनमन्नं गृहीत्वा देवविप्रभोजनपात्रसमीपे—*

"असोमपाश्च ये देवा यज्ञभागविवर्जिताः ।
तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम्" ॥

इति मन्त्रावृत्त्या गृहीतान्नैकदेशं विकिरेत् । तदुपरि शुद्धोदकं दद्यात् ।

ततः प्राचीनावीती पित्र्यविप्रभोजनपात्रसमीपे—'असंस्कृतप्रमीता ये० पैतृकम्' इतिमन्त्रावृत्त्या गृहीतान्नैकदेशं विकिरेत् । तदुपरि शुद्धोदकं दद्यात् । ततः पितृविप्रभोजनपात्रस्य पुरतः षडङ्गुलं स्थलं विहाय तत्र दर्भं दक्षिणाग्रं निधाय तत्र तिलोदकमासिच्यान्यदुदकमुद्धृत्य समीपे स्थापयित्वा ग्रासमात्रं पायसमोदनं च मिश्रितं केवलं पायसं वाऽऽदाय 'ये अग्निदग्धा० परां गतिम्' अग्निदग्धेभ्योऽनग्निदग्धेभ्यश्चोच्छिष्टपिण्डोऽयं स्वधा नम इति दत्त्वोद्धृतमुदकमुपरि दत्त्वा किमपि पदार्थमस्पृशन्यज्ञोपवीती हस्तपादप्रक्षालनं कृत्वा पवित्रे ग्रन्थिं मुक्त्वा विसृज्याऽऽचम्यान्ये पवित्रे धृत्वा श्रद्धायां प्राणे निविश्येत्यनुवाकं श्रावयेत् । तत आचान्तेभ्यः पूर्ववदर्घ्यं दद्याच्छुद्धोदकं च ।

* एतदग्रे यज्ञोपवीतीत्यपेक्षितम् ।

१ ङ. °स्य दक्षिणतो भू° । २ ङ. °गुः । त° । ३ ङ. °दीन° । ४ क. च. °त् । दे° । ५ ङ. °नि वोच्चारणी° । ६ च. पृथक्कृत्वा । ७ च. न ममेति । ८ ङ. °त्वा यज्ञो° । ९ ङ. °त्रे वि° ।

अत्र सर्वस्यैवार्घ्योदकस्य प्रतिपत्तिः । यदि प्रथमार्घ्येऽवशेषितं भवेत्तदैतदर्घ्यदानं नान्यथा । पित्रर्घ्योदकमर्धमवशेषणीयं तस्याक्षय्योदकदाने प्रतिपत्तिरिति केचित् । तत्र मूलं मृग्यम् ।

ततो यज्ञोपवीत्येव सर्वविप्रहस्तेष्वक्षताः पान्त्वित्यक्षतान्दत्त्वा दक्षिणाः पान्त्विति यथाशक्ति दक्षिणां दद्यात् । तत्र देवविप्राभ्यां सुवर्णं पित्र्यविप्रेभ्यो रजतम् । उभयत्र वस्त्रधान्यादिदानं समानम् ।

ततः प्राचीनावीती—अस्मत्पितृपितामहप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानाम्, अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानां यद्दत्तं मासिकश्राद्धीयमन्नमुदकादि तदक्षय्यमस्त्विति भवन्तो ब्रुवन्त्विति पित्र्यविप्रदक्षिणहस्त उदकं दद्यात् । अस्त्वक्षय्यमिति विप्राः । ततो यज्ञोपवीती पुरूरवसंज्ञकानां विश्वेषां देवानामार्द्रवसंज्ञकानां विश्वेषां देवानां यद्दत्तं मासिकश्राद्धीयमन्नमुदकादि तदक्षय्यमस्त्विति भवन्तो ब्रुवन्त्विति यथायथमूहेन देवविप्रदक्षिणहस्तयोर्यवसंमिश्रमुदकं दद्यात् । अस्त्वक्षय्यमिति विप्रौ । स्वधाऽस्त्विति प्राचीनावीती कर्ता ब्रूयात् । अस्तु स्वधेति पित्र्यविप्राः प्रतिब्रूयुः । ततो यज्ञोपवीत्येव पितृविप्रान्पूर्वमुत्थाप्य देवविप्रौ पश्चादुत्थापयेत् । ततस्तानद्य मे सफलं जन्मेति प्रसाद्य पादानवमृज्य भुक्तवतो गच्छतो विप्रानासीमान्तमष्टौ पदानि वाऽनुव्रज्य शेषमन्नमनुज्ञाप्य विप्रान्प्रदक्षिणीकृत्य प्रत्येत्योदकुम्भं दर्भमुष्टिमञ्जनादिसामग्रीं चाऽऽदायौपासनाग्नेर्दक्षिणपूर्वमवान्तरदेशं गत्वा तत्र प्राचीनावीती दक्षिणाग्रान्दर्भानास्तीर्य तेष्ववाचीनपाणिर्दक्षिणापवर्गं त्रिभिर्मन्त्रैस्त्रीनुदकाञ्जलीन्निनयति । 'मार्जयन्तां पितरः सोम्यासः' इति प्रथमम्, 'मार्जयन्तां पितामहाः सोम्यासः' इति द्वितीयम्, 'मार्जयन्तां प्रपितामहाः सोम्यासः' इति तृतीयम् । असाववनेनिङ्क्ष्वेति मन्त्रेण वा । प्रतिपिण्डं तत्तन्नामोहेन मन्त्रावृत्तिः । असावित्यत्र शर्मान्तं संबुद्ध्या पित्रादिनाम ग्राह्यम् । चतुर्थपिण्डदानपक्षे तदर्थमपि तृतीयपिण्डस्य पुरोभागे तूष्णीं निनयनम् । एवं मातामहादीनाम् । ततो निनयनस्थलेषु पिण्डार्थं स्थापितेन माषव्यतिरिक्तव्यञ्जनसर्पिस्तिलमिश्रेणान्नेन स्वयं कपित्थप्रमाणानशक्तावामलकप्रमाणान्वा पिण्डान्कृत्वा स्वस्याशक्तौ पत्न्याऽन्येन वा कारयित्वा तान्पिण्डानवाचीनपाणिना ददाति । एतत्ते ततामुकशर्मन्ये च त्वामन्विति पित्रे

१ ङ. 'त्तिः । पित्र' । २ च. 'पित्र्यार्घ्यो' । ३ ङ. 'म् । न वाऽत्रार्घ्यदानम् । त' । ४ ङ. 'त् । ततः ।

पिण्डं ददाति। एतत्ते पितामहामुकशर्मन्ये च त्वामन्विति पितामहाय । एतत्ते प्रपितामहामुकशर्मन्ये च त्वामन्विति प्रपितामहाय। तूष्णीं चतुर्थः पिण्डः प्रपितामहात्परांस्त्रीन्मनसोद्दिश्य प्रपितामहपिण्डपुरोभागे देयः । अयं च कृताकृतः। एतत्ते मातामहामुकशर्मन्नित्याद्यूहेन मातामहादिभ्यः। चतुर्थः पिण्डोऽत्रापि कृताकृतः। पित्रादिपिण्डदक्षिणतः पश्चाद्वा मातामहादिपिण्डदानम् । पित्रादिनामाज्ञाने स्वधा पितृभ्यः पृथिविषद्भ्य इति मन्त्रः पितृपिण्डदाने। स्वधा पितृभ्योऽन्तरिक्षसद्भ्य इति पितामहपिण्डदाने। स्वधा पितृभ्यो दिविषद्भ्य इति प्रपितामहपिण्डदाने। मातामहादीनां नामाज्ञानेऽप्येत एव मन्त्राः। दत्तक्रीतादिर्द्विपिता+, एकस्मिन्पितृपिण्डे[1] द्वौ पितरौ[2] पितामहपिण्डे द्वौ पितामहौ प्रपितामहपिण्डे द्वौ प्रपितामहावूहेनोपलक्षयेत्। एतद्वां तातावमुकशर्माणौ ये च युवामनु, एतद्वां पितामहावमुकशर्माणौ ये च युवामनु, एतद्वां प्रपितामहावमुकशर्माणौ ये च युवामनु, इत्येवमूहः । अत्रापि नामाज्ञाने स्वधा पितृभ्य इत्यादय एव मन्त्राः। एवं मातामहादिष्वप्यूहेन। चतुर्थपिण्डाभावपक्षे—अत्र पितरो यथाभागं मन्दध्वमिति प्रपितामहात्परांस्त्रीनुद्दिश्य बर्हिषि हस्तं निमृज्यात्।

तत आङ्क्ष्वामुकशर्मन्निति पितृपिण्डोपरि दर्भशलाकया त्रैककुदकज्जलान्यतरद्द्रव्यं त्रिवारं दद्यात् । एवमितरेष्वूहेन। नामाज्ञाने—आङ्क्ष्व तत ब्रह्मन्,[3] आङ्क्ष्व पितामह विष्णो, आङ्क्ष्व प्रपितामह शिव, आङ्क्ष्व मातामह ब्रह्मन्, आङ्क्ष्व मातुःपितामह विष्णो, आङ्क्ष्व मातुःप्रपितामह[4] शिवेत्येवं दद्यात्। सूत्रे त्रिर्ग्रहणं चतुर्थपिण्ड[5] आञ्जनादिनिवृत्त्यर्थमिति वैजयन्तीकृन्मतम् । अस्मिन्मते सकृदेव प्रतिपिण्डमाञ्जनम्। प्रत्येकं त्रिः, सकृन्मन्त्रेण द्विस्तूष्णीम्, एवं प्रत्येकमिति भाष्यकृन्मतम्। अस्मिन्मते चतुर्थपिण्डेऽपि त्रिवारं तूष्णीम्। एवमभ्यञ्जनेऽपि । यद्यप्येतस्मिन्प्रकरणे वैजयन्तीकृद्व्याख्यानं नास्ति तथाऽपि समानार्थत्वात्पिण्डपितृयज्ञस्थमप्यत्र ग्रहीतुं शक्यमिति । ततोऽभ्यङ्क्ष्वामुकशर्मन्निति पितृपिण्डोपरि दर्भशलाकया तैलदध्युपरितनस्नेहान्यतरद्[6]द्रव्यं दद्यात्। एवमितरेष्वप्यूहेन। एतानि वः पि० यूद्वम्, [इति] सकृदेव मन्त्रमुक्त्वा प्रतिपिण्डं पूर्वे वयसि वस्त्रस्य दशां छित्त्वा छित्त्वा न्यस्यति। कम्बलस्योर्णास्तुकां छित्त्वा छित्त्वा न्यस्येद्वा । सूत्रे छित्त्वेति वचनं गलितयोरेतयोर्ग्रहणं मा भूदित्येतदर्थम् । उत्तरे वयसि तु दक्षिणप्रकोष्ठस्थमुरस्थं[7] वा लोमैव न

+ द्विपितृक इति तु पठितुं युक्ततरम्।

१ क. एकैकं। २ च. 'न्पिण्डदाने द्वौ द्वौ पित'। ३ ङ. रुद्र। ४ ङ. 'ह रुद्रेत्ये'। ५ क. च. 'पिण्डेऽञ्ज'। ६ क. 'रद्द्रव्यं। ७ ङ. च. 'मुत्तर'।

दशोर्णास्तुके । पूर्वं वयः पञ्चाशद्वर्षाणि, तत ऊर्ध्वमुत्तरं वयः । तूष्णीं चतुर्थे पिण्डे ।

अथौदनं स्थालीगतं निष्काश्य प्रज्ञातं निधाय स्थालीं प्रक्षाल्य—'पुत्रान्पौत्रानभि० क्षरन्तु' इति प्रसव्यं तेन प्रक्षालनोदकेन पिण्डान्परिषिच्य पिण्डानां पुरतस्तत्पात्रं न्युब्जं निदधाति । अत्रोपवीती पिण्डपूजनं कुर्यादिति शिष्टाः । युक्तं तु प्राचीनावीतमेव । ततः प्राचीनावीत्येव दक्षिणं पाणिमुत्तरमुत्तरं च दक्षिणं कृत्वैवंभूतेनाञ्जलिना पितॄनुपतिष्ठते 'नमो वः पितरो रसाय' इत्येतैः षड्भिर्नमस्कारैः सानुषङ्गैः । सप्तभिरिति पिण्डपितृयज्ञे वैजयन्तीकारः । अस्मिन्मते यथापाठपठितः सप्तमो मन्त्रः । यथापाठ एवेति केचित् ।

तत उदकसमीपं गत्वा 'एष ते तत मधुमा॰ ऊर्मिः सरस्वान्यावानग्निश्च पृथिवी च तावत्यमात्रा तावानस्य महिमा तावन्तमेनं भूतं ददामि यथाऽग्निरक्षितोऽनुपदस्त एवं मह्यं पित्रेऽक्षितोऽनुपदस्तः स्वधा भवता॰ स्वधामक्षितौः सहोपजीवासावृचस्ते महिमा' इति पित्र उदकाञ्जलिं निनयति । 'एष ते पितामह म० यावान्वायु० यजू॰षि ते महिमा' इति पितामहाय । 'एष ते प्रपितामह मधु० यावानादि० सामानि ते महिमा' इति प्रपितामहाय । 'एष ते मातामह मधु० यावानग्नि० चस्ते महिमा' इति मातामहाय । 'एष ते मातुःपितामह म० यावान्वायु० यजू॰षि ते महिमा' इति मातुःपितामहाय । 'एष ते मातुःप्रपितामह म० यावानादि० सामानि ते महिमा' इति मातुःप्रपितामहाय ।

ततः प्रत्येत्य स्थापितं स्थालीनिष्कासमुदके प्रक्षिप्य 'परा यात पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः । अथ पुनरायात नो गृहान्हविरत्तुं सुप्रजसः सुवीराः' इति पिण्डानां समीपे दक्षिणापवर्गं तदुदकं निनयति । अत्र 'अपः पिण्डानभ्यवहरति ब्राह्मणं वा भोजयति' इति पिण्डपितृयज्ञसूत्रोक्ता पिण्डप्रतिपत्तिर्ज्ञेया । स्मृतौ तु 'गवे अजाय वा दद्यात्' इत्यप्युक्तत्वात्तथा वा प्रतिपत्तिः कार्या ।

ततः प्रमादादिति विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत् । अत्राऽऽहिताग्नेर्वैश्वदेवः पिण्डपितृयज्ञात्पूर्वमेव भवति । ( + गृह्याग्निमता पिण्डपितृयज्ञात्पूर्वं श्राद्धान्ते वा कार्यः । 'श्वोभूते स्थालीपाके' इति धर्मसूत्राद्यदा पर्वदिने परि-

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके ।

---

१ ङ. °व्यं पि° । २ ङ. °तश्चेत् । त° । ३ ङ. °ङ्गैः । यथापाठं वा । तत । ४ च. °त् । तत्राऽऽ° ।

स्तरणान्तं क्रियते तदा परिस्तरणोत्तरमेव वैश्वदेवं कृत्वा पिण्डपितृयज्ञः कर्तव्य इति द्रष्टव्यम् । ) सांवत्सरिकादिश्राद्धेषु वैश्वदेवो[1] विधुरादिभिरग्नौकरणानन्तरमुच्छिष्टपिण्डदानोत्तरमेव वा पृथक्पाकेनैव कार्यः[2] । श्रौताग्निमद्भ्यामग्निमद्भ्यां च श्राद्धारम्भात्प्रागेव पृथक्पाकेनैव कर्तव्यः । ऐकादशाहिके त्वेतयोरप्यन्ते[3] एव । अग्नौकरणानन्तरं बलिदानोत्तरं वा वैश्वदेवानुष्ठानपक्षे पृथक्पाकेन[4] वैश्वदेवहोममात्रं कृत्वा श्राद्धसमाप्त्यनन्तरं वैश्वदेवार्थान्नेनैव बलिहरणादि कर्तव्यम् । यदा त्वन्ते तदा श्राद्धशेषेणैव[5] । स च वैश्वदेवो मासिश्राद्धमध्ये[6] मासिकश्राद्धमध्ये वा कार्यः । एतदन्यतरान्ते वा । समवदायाश्नीयादित्यनेन शेषस्याशनं विहितं तच्च दिवैव कार्यं न रात्रौ । तस्मिन्दिन आवश्यकोपवासप्राप्तौ शेषाघ्राणं कार्यम् । शेषनाशे भोजनलोप इति केचित् । प्रतिनिधिभूतेनान्नेन भोजनं कार्यमित्यन्ये ।

" दन्तधावनताम्बूलं तैलाभ्यङ्गमभोजनम् ।
रत्यौषधपरान्नानि श्राद्धकर्ता विवर्जयेत् ॥
पुनर्भोजनमध्वानं भारमध्यायसंगमम्[7] ।
दानं प्रतिग्रहो(हं) होमः(मं) श्राद्धभुग्वर्जयेद्द्विजः " ॥

इत्यादयः कर्तृभोक्तृनियमाः श्राद्धरत्नमालातोऽवगन्तव्याः । अत्र भोक्तुः प्रायश्चित्तं षट्प्राणायामाः । बुद्ध्या श्राद्धलोपे प्राजापत्यं प्रायश्चित्तं प्रमादाल्लोपे तूपवास इति । इदमेव नित्यनैमित्तिकश्राद्धलोपे प्रायश्चित्तं द्रष्टव्यम् ।

इति मासिकश्राद्धप्रयोगः ।

## अथाशक्तविषये सांकल्पिकविधिना दर्शश्राद्धप्रयोगः ।

उक्तापराह्णे यथाधिकारं कृतनित्यक्रियस्तिलतर्पणं विधाय देशकालौ संकीर्त्य प्राचीनावीती पितृवर्गस्य सपत्नीकस्य मातामहवर्गस्य सपत्नीकस्य षष्ठ्यन्तप्रयोगेणोत्कीर्तनं कृत्वा दर्शश्राद्धं सांकल्पिकविधिना[8] करिष्य इति संकल्प्य पूर्ववद्विप्रनिमन्त्रणं पादप्रक्षालनं च कृत्वा पूर्ववदुपवेश्याऽऽवाहनार्घ्यदानवर्जमासनाद्याच्छादनान्तैरुपचारैः पूजयेत् । अथवा तूष्णीमावाहनम् । ततोऽग्नौकरणवर्जमपोशा(मापोश)नदानान्तं कुर्यात् । ब्राह्मणा बलिदानवर्जं विधिना

१ ङ. °देवोऽनाहिताग्निना विकिरदानोत्तरं बलिदानोत्तरं वा श्राद्धसमाप्त्यनन्तरं वा । २ ङ. °र्यः । अ° । ३ च. °न्तर ए । ४ च. °केनैव वै° । ५ ङ. °व । आहिताग्निना त्वैकादशाहिकं मुक्त्वा श्राद्धारम्भात्प्रागेव पृथक्पाकेनैव कार्यः । सम° । ६ च. °ध्ये का° । ७ च. °मभ्याय° । ८ क. ङ. °कल्पवि° ।

भुञ्जीयुः। भोजनान्ते तृप्तिप्रश्नं कृत्वा मधुमतीरक्षन्नमीमदन्तेति च श्रावयित्वा संपन्नप्रश्नं कृत्वा शेषमन्नं किं क्रियतामित्याद्युच्छिष्टभाग्भ्योऽन्नदापनान्तं कृत्वाऽऽचान्तेषु विप्रेषु शिवा आपः सन्त्वित्यादिभिर्जलादि दत्त्वा तिलोदकयवोदकाभ्यामक्षय्यं यथायथं प्रदाय ताम्बूलदक्षिणे दत्त्वा 'अघोराः पितरः सन्तु' इत्यादि। नात्रोच्छिष्टपिण्डपिण्डदाने। न चात्र स्वधा संपद्यतामिति भवन्तो ब्रुवन्त्विति स्वधोच्यतामिति च स्वधावाचनम्। ततो वाजे वाज इत्यादि, कर्मण ईश्वरार्पणान्ते संकल्पात्सिद्धिरस्त्विति भवन्तो ब्रुवन्त्विति विप्रान्प्रति वदेत्। तथाऽस्त्विति तैरुक्ते विष्णुं संस्मृत्य पवित्रे ग्रन्थिं विसृज्य त्यक्त्वाऽऽचमनं कृत्वा बन्धुभिः श्राद्धशेषं भुञ्जीत। इत्थमपि करणाशक्तौ संकल्पं कृत्वा देवपितृपूजां विधायान्नत्यागमात्रं कृत्वा भुक्तवद्भ्यस्ताम्बूलं दक्षिणां च दत्त्वा संकल्पात्सिद्धिरस्त्विति भवन्तो ब्रुवन्त्विति वाचयित्वा कर्मेश्वरायार्पयेत्[१]। वैश्वदेवकालव्यवस्था पूर्ववदेव। इति सांकल्पिकप्रयोगः।

## अथान्नाभावे कर्तव्य आमश्राद्धप्रयोगः।

यथाधिकारं प्रातः कृतनित्यक्रियः श्रौताग्निमान्गृह्याग्निमान्वा चेद्येन केनचिद्द्रव्येण कृतवैश्वदेवो[२] वर्गद्वयस्य तिलतर्पणं कृत्वा पूर्वाह्ण एव देशकालकथनान्ते प्राचीनावीती पितृवर्गस्य सपत्नीकस्य मातामहवर्गस्य सपत्नीकस्य षष्ठ्यन्तमुत्कीर्तनं विधाय दर्शश्राद्धमामद्रव्येण करिष्य इति संकल्प्य पूर्ववद्विश्वदेवार्थं[३] पितृवर्गार्थं मातामहवर्गार्थं च विप्रान्निमन्त्र्य पादप्रक्षालनाद्याच्छादनान्तं पूर्ववत्*।

तत्राऽऽवाहनमन्त्र ऊहः कार्यः, यथा—'उशन्तस्त्वा० पितॄन्हविषे स्वीकर्तवे' इति विशेषः। अग्नौकरणकाले सकृदाच्छिन्नच्छेदनादि पिण्डपितृयज्ञवत्तण्डुलाद्यन्यतमेन संप्रदेयेन हविष्यद्रव्येण हुत्वा पात्रेष्वामं द्विगुणं समं वा निधाय गायत्र्या प्रोक्ष्य पृथिवी ते पात्रमित्यादिलोक इत्यन्ते 'विष्णो, आमं रक्षस्व' इत्युक्त्वा पुरूरवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदमामं सोपस्करं स्वाहा न ममेति दद्यात्। एवमार्द्रवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इत्यूहेन द्वितीयदेवविप्रे।

ततः पितृवर्गे मातामहवर्गे चाऽऽमत्यागं तत्तन्नामाद्यूहेन कुर्यात्। ततो मधुमतीश्रावणं संपन्नप्रश्नं च कृत्वा पूर्ववत्पिण्डदानं कृत्वाऽऽपो देवीरित्याद्य-

* एतदनन्तरं कार्यमिति शेषः

१ ङ. 'त्। अनाहिताग्निश्चेद्वैश्वदेवमत्र कुर्यात्। ई'। २ क. 'त्वा दे'। ३ ङ. च. 'द्विश्वेदे'।

ग्न्युपस्थानान्तं कृत्वाऽतिप्रणीताग्निमेलनादि सकृदाच्छिन्नप्रहरणान्तं कुर्यात् । 'नमो वः पितरो रसाय' इत्यत्राऽऽमायेत्यूहः । अङ्गुष्ठनिवेशनं यथासुखं जुषध्वमितिवचनमपोशा(मापोश)नं तृप्तिप्रश्नश्च न । ततः शिवा आपः सन्त्वित्यादि यद्दत्तममुकश्राद्धीयमाममुदकादि तदक्षय्यमस्त्विति भवन्तो ब्रुवन्त्वित्यक्षय्य ऊहः । वाजे वाज इत्यस्मिन्मन्त्रे मादयध्वं + तप्स्यथ यात पथिभिरित्यूहः । अन्यत्सर्वं प्रकृतिवत् । विधुरादिश्चेदत्र वैश्वदेवं कुर्यात् ।

## अथाऽऽमाभावे हिरण्यश्राद्धप्रयोगः ।

दर्शे प्रातः कृतनित्यक्रियो देशकालकथनान्ते वर्गद्वयस्य षष्ठ्यन्तमुत्कीर्तनं कृत्वा दर्शश्राद्धं हिरण्येन सांकल्पविधिना करिष्य इति संकल्प्य पूर्वोक्तसांकल्पिकामश्राद्धवत्सर्वं कुर्यात् । अत्र पिण्डदाने विकल्पः । 'नमो वः पितरो रसाय' इत्यत्र हिरण्यायेत्यूहः । अत्र श्राद्धोत्तरं तत्काल एव तिलतर्पणं कृत्वा काले वैश्वदेवादि कृत्वा भुञ्जीत । इति हिरण्यश्राद्धप्रयोगः ।

## अथाऽऽब्दिकश्राद्धम् ।

तत्र पितृमृताहे पितृपितामहप्रपितामहांस्त्रीनुद्दिश्य पार्वणविधिना श्राद्धं कुर्यात् । मातृमृताहे मातृपितामहीप्रपितामहीरुद्दिश्य कुर्यात् । सापत्नमातृमृताहे सा चेदपुत्रा तस्या अप्येकोद्दिष्टविधिना । तथाऽपुत्रमातामहस्य तन्मृताहे तद्वर्गमात्रस्य । एवं मातामह्यास्तन्मृताहे तद्वर्गमात्रस्य । तथाऽपुत्रपितृव्यमातुलभ्रातॄणां मृताहे तस्य तस्यैकोद्दिष्टविधिना । [3]तत्रायं प्रयोगः—[4]मृतदिने कृतनित्यक्रियः[5] श्रौताग्निमान्स्मार्ताग्निमान्वा चेत्कृतवैश्वदेवो देशकालकीर्तनान्ते—अस्मत्पितृपितामहप्रपितामहानां शर्मणां गोत्राणां वसुरुद्रादित्यस्वरूपाणामाब्दिकश्राद्धं पार्वणविधिना[6]ऽद्य करिष्य इतिसंकल्पपूर्वकं दर्शश्राद्धोक्तविधिना तद्वर्गमात्रस्यैव कुर्यात् । अस्मिञ्श्राद्धदिने नित्यतर्पणं तिलरहितं कार्यम् । श्राद्धाङ्गतर्पणं तु परेद्युः[7] स्नानं प्रातःसंध्यां च कृत्वा सतिलमेव । श्राद्धेज्यवर्गस्य तिलतर्पणं कृत्वा पुनः सर्वकर्मार्थं स्नानं कृत्वा ब्रह्मयज्ञादि कुर्यात् । एवं मात्रादीनामपि तत्तन्मृताहदिने श्राद्धं कृत्वा श्वोभूते प्रातः स्नात्वा संध्यां च

---

+ अत्र क. पुस्तकटिप्पण्याम् "मूले तृप्ता इत्यस्य सुबन्तत्वात्तप्स्यन्त इति सुबन्ततयैवोहस्य न्याय्यत्वेन तिङन्तपदोहश्चिन्त्य एव । तेन तप्स्यन्तो यात पथिभिरित्येवोहः साधुः" । इत्येवं लिखितमस्ति ।

१ ङ. °त् । अनाहिताग्निश्चे° । २ च. °महानु° । ३ च. अत्रायं । ४ ङ. तद्दिने । ५ ङ. °क्रिय आहिताग्निश्चेत्कृ° । ६ च. °धिना सद्यः क° । ७ ङ. °द्युः स° । ८ ङ. °व । ए° ।

कृत्वा श्राद्धेऽन्यवर्गस्य तिलतर्पणं कृत्वा[1] पुनः सर्वकर्मार्थं स्नात्वा ब्रह्मयज्ञादि कुर्यादिति । ( * मार्जयन्तां मातरः सोम्यासः, मार्जयन्तां पितामह्यः सोम्यासः, मार्जयन्तां प्रपितामह्यः सोम्यासः, इति बहुवचना[2]न्तपितृपितामहप्रपितामहशब्दवन्मन्त्रेषूहः । एवं मार्जयन्तां मातामहाः सोम्यासो मार्जयन्तां मातामह्यः सोम्यास इत्यादिर्यथायथं मातामहपार्वणमातामहीपार्वणयोरूहः । मार्जयन्तां पितृव्याः सोम्यास इत्यादिरेकोद्दिष्टेषु पितृव्यादिषु ) पितृव्यभ्रातृसापत्नमात्रादीनां श्राद्ध एकोद्दिष्टविधेः कर्तव्यत्वा[3]त्प्रयोगे[4]ः । मध्याह्न एव देशकालकीर्तनान्ते—अस्मत्पितृव्यस्य शर्मणो गोत्रस्य वसुरूपस्याऽऽब्दिकश्राद्धमेकोद्दिष्टविधिनाऽद्य करिष्य इति संकल्प्य पित्रर्थमेव विप्रान्विप्रं वा निमन्त्र्य तत्पा[5]दे प्रक्षालनाद्यर्घ्यपात्रासादनात्प्राकृत्वा, एकमर्घ्यपात्रं संस्थाप्यैकदर्भयुते तस्मिन्पात्रे जलमासिच्येत्याद्यावाहनवर्जमर्घ्यदानान्तं कृत्वा तत्पात्रस्थापनाद्यग्नौकरणवर्जमन्नत्यागान्तं कृत्वा यस्यो[6]देशस्तस्याक्षय्या तृप्तिरस्त्वित्युक्त्वाऽपोशा(ऽऽपोश)नोदकदानादि । पिण्डदानकाल एक एव पिण्डः । अन्यत्सर्वं पूर्ववत् । द्वितीयेऽहनि श्राद्धाङ्गं सतिलमेव तर्पणम् । एवं भ्रात्रादिष्वप्यूहेन प्रयोगो ज्ञेयः । पार्वणश्राद्धकरणप[7]क्षेऽपराह्ण एव दर्शश्राद्धविधिवत्सर्वं कुर्यात् । तत्र पितृव्यश्राद्धे पि[8]तृव्यपितामहप्रपितामहानामित्येवमुच्चारणम् । अजीवत्पितृकस्य भ्रातृश्राद्धे भ्रातृपितृपितामहानामित्युच्चा[9]रणम् । जीवत्पितृकस्य त्वेकोद्दिष्टमेवं[10] । सापत्नमातुरपुत्रत्वे तच्छ्राद्धं चेत्पार्वणधर्मेण क्रियेत तदा सापत्नमातृपितामहीप्रपितामहीनामित्येवमुल्लेखः । मातु[11]लस्यापुत्रत्वे तत्सांवत्सरिकश्राद्धे पार्वणधर्मश्चेत्क्रियेत तदा मातुलमातामहमातुःपितामहाना[12]मित्येवमूहः । स्त्रिया[13]स्तु सांवत्सरिकश्राद्धे पार्वणपक्षे पत्नीमातृपितामहीनामित्युच्चारणम्+ । कनिष्ठभ्रात्रादीनां ब्रह्मचारिस्नातकावस्थायां मृतौ तदाब्दिकश्राद्ध एकोद्दिष्टप्रयोग एव ।

इत्येकोद्दिष्टश्राद्धप्रयोगः ।

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके । + एतदनन्तरं च. पुस्तके " पितृव्यस्य सांवत्सरिके श्राद्धे पार्वणपक्षे पितृव्यपितामहप्रपितामहानामिति " इत्यधिकम् ।

---

१ ङ. °त्वा नित्यस्नानादि । २ च. °नान्तं पि° । ३ ङ. च. °त्वात्तत्प्र° । ४ ङ. °गः । उक्तापराह्ले दे° । ५ ङ. च. °दक्षा° । ६ ङ. °स्योद्दिष्टं तस्या° । ७ ङ. °पक्षे द° । ८ ङ. °तृस्थाने पितृव्यस्योच्चा° । ९ क. °रणीयम् । १० ङ. °व । मातुल° । ११ ङ. °लश्राद्धे मातु° । १२ ङ. °नामुच्चारणम् । पितृव्यपितामहप्रपितामहानाम् । भ्रातृपितृपितामहानाम् । सापत्नमातृपितामहीप्रपितामहीनाम् । मातुलमातामहमातुःपितामहानामित्यादिरूपो ज्ञेयः । स्त्रि° । १३ ङ. °यास्त्वेकोद्दिष्टमेव । कनि° ।

# अथान्वारोहणश्राद्धप्रयोगः ।

उक्तापराह्ण ओदनवर्जं भक्ष्यादिकमेकत्रैव श्रपयित्वाऽनापन्नश्चेद[1]तदपि पृथक्कृत्वा प्राचीनावीती देशकालकथनान्ते— अस्मत्पितृपितामहप्रपितामहानां शर्मणां गोत्राणां वसुरुद्रादित्यस्वरूपाणाम् , अस्मन्मातृपितामहीप्रपितामहीनाममुकदानां गोत्राणां वसुरुद्रादित्यस्वरूपाणामेतेषां तृप्त्यर्थमाब्दिकश्राद्धं तन्त्रेण करिष्य इति संकल्प्य पितृवर्गमातृवर्गाब्दिकश्राद्धद्वये पुरूरवसंज्ञकदेवस्थाने क्षणः करणीय इत्यादिप्रकारेण तन्त्रेणैव वैश्वदेवविप्रनिमन्त्रणं कृत्वा पितृवर्गार्थं विप्रत्रयं मातृवर्गार्थं च विप्रत्रयं प्रतिवर्गमेकैकं वा निमन्त्र्य यवमिश्रितमुदकं कृत्वेत्यादिपूजान्तं दर्शवत्कुर्यात् । संभवेऽत्र विप्रपङ्क्तौ मातृवर्गार्थं सुवासिनीमुपवेश्य पूजयेत् । ततो दर्शश्राद्धोक्तप्रकारेणाग्नौकरणं कृत्वा परिवेषणं विधाय पित्र्यविप्रेभ्योऽन्नदानान्तं कृत्वा, अस्मन्मात्रे दायै गोत्रायै वसुरूपाया इदमन्नं स्वधा कव्यं न ममेति सुवासिन्यै दद्यादिति विशेषः । तिथिभेदे पृथक्पिण्डदानम् । तिथ्यैक्ये तु द्वयोर्द्विवचनोहेनैक एव पिण्डो देयः । संभवेऽत्रापि पृथगेव पिण्डदानम्[2] । अन्यत्समानम् । परेऽहनि वर्गद्वयस्य तिलतर्पणम् ।

# अथ वर्गचतुष्टयस्यैकदिनमरणेन श्राद्धसंपाते पृथक्पा[3]ककरणाशक्तावेकपाकेन तन्त्रेण श्राद्धप्रयोगः ।

( * यद्यपि वर्गचतुष्टयस्य श्राद्धं पृथक्पृथगेव कर्तव्यं तथाऽप्येकस्मिन्दिने मुख्यकाले पृथक्पृथक्कर्तुमशक्यत्वात्तन्त्रमेव । ) देशकालकथनान्ते पितृवर्गस्य मातृवर्गस्य, अपुत्रश्चेन्मातामहस्तद्वर्गस्य मातामहीवर्गस्य च षष्ठ्यन्तमुच्चारणं कृत्वैतेषामाब्दिकश्राद्धं दर्शश्राद्धविधिनाऽद्य करिष्य इति संकल्प्य वर्गचतुष्टयार्थं तन्त्रेणैव वैश्वदेवविप्रनिमन्त्रणं कृत्वा प्रतिवर्गं त्रयं त्रयमेकमेकमेव वा विप्रं निमन्त्र्य पादप्रक्षालनादि सर्वं दर्शवत्कुर्यात् । श्वोभूते तिलतर्पणम् । पितृव्यादीनामप्येतस्मिन्दिवसे चेन्मरणं तदा तेषामेकोद्दिष्टविधिपक्षे पृथगेव मरणक्र[4]मेण तदज्ञाने संबन्धासत्तिक्रमेणोल्लेखं कृत्वा[5] तन्त्रेणैव श्राद्धं मध्याह्नकालत्वात्पित्रादिश्राद्धात्पूर्वमेव कार्यम् । पार्वणपक्षे तु वर्गचतुष्टयेन सहै[6]व । अत्र पित्रा-

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके ।

१ ङ. °देतानपि । च. °देतावपि । २ ङ. °षः । अन्य° । ३ ङ. °थक्पृथक्पाकेन पृथक्पृथक्श्राद्धकर° । ४ ङ. च. °सति क्र° । ५ ङ. °त्वा श्राद्धं कार्यं° । ६ ङ. °व । त्रि° ।

द्विवर्गचतुष्टयोल्लेखोत्तरमेव सर्वत्रोल्लेखः । स्त्रिया अप्येतद्दिने मरण एकोद्दिष्टपक्षे पृथगेव । पितृव्यादीनामप्येतस्मिन्दिने श्राद्धं चेत्तेषामप्येकोद्दिष्टपक्षे तैः साकमेव पत्न्या अप्येकोद्दिष्टं कार्यम् । पार्वणपक्षे सर्वेषां सहैवेति द्रष्टव्यम् । यदि समतन्त्राणां श्राद्धानामेकस्मिन्दिने संपातस्तदा तानि सर्वाण्युत्कीर्त्य तन्त्रेण करिष्य इत्युल्लिखेत् । यदि महातन्त्राल्पतन्त्रयोः समासस्तदा महातन्त्रस्यैवोल्लेखं कृत्वा श्राद्धं कुर्यात् । अल्पतन्त्रस्य तु तेनैव सिद्धिः । प्रसङ्गसिद्धस्य[2] न तर्पणम् । विरोधे समसंख्यत्व आदावन्ते वा विषमसंख्यत्वे बह्वनुरोधः ।

इति संपातश्राद्धप्रयोगः ।

## [ अथातिक्रान्तश्राद्धप्रयोगः । ]

आशौचादिना मृताहातिक्रमे तदन्ते, तत्राप्यतिक्रमे कृष्णाष्टम्यामेकादश्यां द्वादश्याममावास्यायां वाऽतिक्रान्तं श्राद्धं कुर्यात् । तस्य प्रयोगः— देशकालकथनान्ते तत्तद्वर्गस्य षष्ठ्यन्तमुच्चारणं कृत्वाऽतिक्रान्तमाब्दिकश्राद्धं करिष्य इति संकल्प्य[3] सर्वं पूर्वोक्तवत्कृत्वा श्वोभूते तिलतर्पणं कुर्यात् ।

इत्यतिक्रान्तश्राद्धप्रयोगः ।

## अथानुपनीतस्त्रीकर्तृकश्राद्धप्रयोगः ।

देशकालकथनान्ते-अस्मद्भर्तृतत्पितृतत्पितॄणां शर्मणां गोत्राणां वसुरुद्रादित्यस्वरूपाणामाब्दिकश्राद्धमद्य[4] करिष्य इति स्वयं संकल्पं कृत्वा कंचिद्ब्राह्मणमृत्विक्त्वे[5] परिकल्प्य तं प्रति ब्रूयात्— ममाऽऽज्ञया त्वमिदं कर्म कुर्विति । कर्तोमित्यङ्गीकृत्य सर्वमपि विधिं कुर्यात् । तत्र विशेषः— अनुज्ञात्र्या[6] भर्तुः शर्मणो गोत्रस्य वसुरूपस्य, अनुज्ञात्र्या[7] भर्तृपितुः शर्मणो गोत्रस्य रुद्ररूपस्य, अनुज्ञात्र्या[8] भर्तृपितामहस्य शर्मणो गोत्रस्याऽऽदित्यरूपस्य, इत्यादितत्तद्विभक्त्यूहेन प्रयोगः । ( * यत्र यत्र पितृशब्दवत्पितामहादिशब्दोऽपि बहुवचनान्तो दृश्यते तत्रैव पितृशब्देऽप्यूहो नान्यत्र । स च बहुवचनान्त एव । यथा मार्जयन्तां पितरः सोम्यास इत्यादिषु[9] ।) आपो देवीः स्वधया, अत्र पितरो यथाभागं मन्दध्वम्, अमीमदन्त पितरः, एतानि वः पितरः, नमो वः पितरो रसाय,

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—" मार्जयन्तां(तां) यजमान्या भर्ता सोम्यः । मार्जयन्तां(तां) यजमान्या भर्तृपिता सोम्यः । मार्जयन्तां(तां) यजमान्या भर्तृपितामहः सोम्यः । इत्याद्यूहस्तत्र तत्र द्रष्टव्यः । तत्र- " इति ।

---

१ ङ. °व । तत्रैकोद्दिष्टस्यैव नियतत्वात् । यदि । २ च. °स्य त° । ३ क. °ल्प्य पू° । ४ च. °श्राद्धं सद्यः क° । ५ ङ. °क्त्वेन विभाव्य तं । ६ ङ. यजमान्या । ७ ङ. यजमान्या । ८ ङ. यजमान्या । ९ क. °षु मार्जनमन्त्रादिषु । आ° ।

ऊर्जस्वतीः स्वधया, उत्तिष्ठत पितरः[1], परेत पितरः, यन्तु पितरः, मनोऽन्वाहुवामहे[2], पुनर्नः पितरः, अभून्नो दूतः, ये समानाः समनसः पितर इत्येतेषु मन्त्रेषु तु नोहः । ( + बहुवचनान्तं(न्त)पितामहादिशब्दप्रयोगदर्शनाभावात् । एकोद्दिष्टपक्षे तद्धर्मेण श्राद्धं कुर्यात् । आचाराद्व्यवस्था ) ।

इति स्त्र्यनुज्ञाते विशेषः ।

अथवा स्वयमेव वैदिकमन्त्रवर्जं[3] विधिं कुर्यात् । मन्त्रसाध्यकर्मापि तूष्णीं कर्तव्यमेव । ब्राह्मणद्वारा श्राद्धप्रयोगेऽपि मन्त्रवर्जमेव प्रयोग इति बहवः ।

अनुपनीतानुज्ञातेऽप्येवम् । शूद्रानुज्ञाते तु मन्त्रवर्जमेव[4] विधिः । ज्वरादिना कर्तुरसामर्थ्येऽप्येष एव विधिः* । श्राद्धकर्तृनियमास्तु ऋत्विग्यजमानयोरुभयोरपि समानाः । (+उत्तरीयवस्त्रेण यज्ञोपवीतप्राचीनावीते अनुज्ञात्राऽनुपनीतेनानुज्ञात्र्या स्त्रिया च कर्तव्ये । तर्पणं त्वनुज्ञातृकर्तृकमेव ।)

इत्यनुपनीताद्यनुज्ञया श्राद्धकरणप्रयोगः ।

# अथ प्रोष्ठपदीश्राद्धप्रयोगः ।

भाद्रपदपौर्णमास्यां कृतनित्यक्रिय उक्तापराह्णे प्रपितामहात्परांस्त्रींस्तिलमिश्रोदकेन तर्पयित्वा देशकालौ संकीर्त्य धुरिलोचनसंज्ञकानां विश्वेषां देवानामित्युत्कीर्त्य प्राचीनावीती—अस्मत्प्रपितामहपितृपितामहप्रपितामहानां शर्मणां गोत्राणां वसुरुद्रादित्यस्वरूपाणां प्रोष्ठपदीश्राद्धमद्य करिष्य इति संकल्प्य धुरिसंज्ञकविश्वदेवार्थं लोचनसंज्ञकविश्वदेवार्थं च विप्रद्वयमेकं वा निमन्त्र्य, अस्मत्प्रपितामह[5]पितुः शर्मणो गोत्रस्य वसुरूपस्य स्थाने त्वां * निमन्त्रय इति निमन्त्र्य त्वया क्षणः करणीय इति ब्रूयात् । अस्मत्प्रपितामह[6]पितामहस्य शर्मणो गोत्रस्य रुद्ररूपस्य स्थाने त्वां निमन्त्रय इति निमन्त्र्य त्वया क्षणः करणीय इति ब्रूयात् । अस्मत्प्रपितामह[7]प्रपितामहस्य[8] शर्मणो गोत्रस्याऽऽदित्यरूपस्य स्थाने त्वां निमन्त्रय इति निमन्त्र्य त्वया क्षणः करणीय

+ धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—" एवमन्येष्वपि केवलबहुवचनान्ते पितृशब्देऽप्यूहो भवत्येव (?) " इति । * एतदग्रे क. पुस्तके " ऋत्विक्करणपक्षे तस्मै हिरण्यं दक्षिणां दद्यात् " इत्यधिकम् । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके । * ङ. पुस्तके " त्वां निमन्त्रय इति निमन्त्र्य " इति " इति ब्रूयात् " इति च नास्ति । एवमग्रेऽपि ।

---

१ क. च. °रः, यन्तु । २ ङ. °हे, आ न एतु पु° । ३ ङ. °र्जं सर्वं वि° । ४ क. च. °वर्जं एव । ५ ङ. °हस्य पि° । ६ ङ. °हस्य पि° । ७ ङ. °हस्य पि° । ८ ङ. °हस्य प्र° ।

इति ब्रूयात् । इति विप्रत्रयमेकं वा निमन्त्रयेत् । विप्रैकत्वपक्षे धुरिलोचनसंज्ञकानां विश्वेषां देवानामिति देवविप्रनिमन्त्रणे तत्तत्कर्मणि तत्तद्विभक्त्योहः । अस्मत्प्रपितामहपितृपितामहप्रपितामहानां शर्मणां गोत्राणां वसुरुद्रादित्यस्वरूपाणामित्यादि[ः] पितृकर्मणि तत्तद्विभक्त्योहः । "मार्जयन्तां प्रपितामह+-पितरः सोम्यासो मार्जयन्तां प्रपितामहपितामहाः सोम्यासो मार्जयन्तां प्रपितामहप्रपितामहाः सोम्यासः । एतत्ते प्रपितामहपितरमुकशर्मन्ये च त्वामनु । एतत्ते प्रपितामहपितामहामुकशर्मन्ये च त्वामनु । एतत्ते प्रपितामहप्रपितामहामुकशर्मन्ये च त्वा मनु । आङ्क्ष्व प्रपितामहपितरमुकशर्मन् । आङ्क्ष्व प्रपितामहपितामहामुकशर्मन् । आङ्क्ष्व प्रपितामहपितामहामुकशर्मन् । अभ्यङ्क्ष्व प्रपितामहपितरमुकशर्मन् । अभ्यङ्क्ष्व प्रपितामहपितामहामुकशर्मन् । अभ्यङ्क्ष्व प्रपितामहप्रपितामहामुकशर्मन्" इति मन्त्रेषूहः । नात्र चतुर्थः पिण्डो लेपमार्जनं वा । अन्यत्सर्वं दर्शश्राद्धवत् । इति प्रोष्ठपदीश्राद्धप्रयोगः ।

## अथ महालयप्रयोगः ।

प्रोष्ठपदीश्राद्धोत्तरं प्रतिपदादि पञ्चम्यष्टम्यादि दशम्यादि वा चतुर्द[शीवर्जं द]र्शान्तमहरहः श्राद्धं दर्शवत्कुर्यात् । प्रतिपदादिदर्शान्तपक्षे न चतुर्दशीनिषेधः । एवं करणाशक्तौ मरणदिवसमात्रे कार्यम् । चतुर्दश्यां मृतौ तन्महालयश्राद्धममावास्यायां कर्तव्यम् । एवं पौर्णमास्यां मृतस्यापि । अपराह्णे श्रौताग्निमान्गृह्याग्निमान्वा कृतवैश्वदेवो देशकालकीर्तनान्ते पुरूरवार्द्रवसंज्ञकानां विश्वेषां देवानामित्युक्त्वा प्राचीनावीती— अस्मत्पितृपितामहप्रपितामहानां शर्मणां गोत्राणां वसुरुद्रादित्यस्वरूपाणाम् । अस्मन्मातृपितामहीप्रपितामहीनां गोत्राणां दानां वसुरुद्रादित्यस्वरूपाणाम् । अस्मत्सापत्नमातुः, दाया गोत्राया वसुरूपायाः । अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानां शर्मणां गोत्राणां वसु० । अस्मन्मातामहीमातुःपितामहीमातुःप्रपितामहीनां दानां गोत्राणां वसु० । अस्मत्पत्न्याः, दायाः, गोत्रायाः, वसुरू० । अस्मत्पुत्रस्य शर्मणो गोत्रस्य वसुरूपस्य । अस्मद्दुहितुः, दायाः, गोत्रायाः, वसुरू० । अस्मत्पितृव्यस्य शर्मणो गोत्रस्य व० सपत्नीकस्य । तत्पत्न्याः पृथगुद्देशे

+ ङ. पुस्तके प्रपितामहस्य पितर इत्यादि व्यस्तमेवात्राग्रेऽपि ।

१ ङ. °हस्य पि°। २ क. ङ. पिण्डले°। ३ ङ. °दिदर्शान्तं पञ्चम्यादि वा चतुर्दशीवर्जं दर्शा° । ४ च. °म्यादि । ५ क. वा दर्शा° । ६ ङ. °त् । ए° । ७ ङ. °वसे का°। ८ ङ. °तौ तु तदीयश्रा° । ९ ङ. °र्श्यां मरणेऽपि । १० ङ. °पि । उक्तापराह्ण आहिताग्निश्चेत्कृत° ।

तु—अस्मत्पितृव्यपत्न्याः, दायाः, गोत्रायाः, वसुरूपायाः। अस्मन्मातुलस्य शर्मणो गोत्रस्य व० सपत्नीकस्य। [1]तत्पत्न्याः पृथगुद्देशे तु—अस्मन्मातुलपत्न्याः, दायाः, गोत्रायाः व०। अस्मद्भ्रातुः शर्मणो गो० व० सप०। तत्पत्न्याः पृथगुद्देशे तु—अस्मद्भ्रातृपत्न्याः, दा० गो० व०। अस्मत्पितृभगिन्याः, दायाः, गोत्रायाः व० सभर्तृकायाः सापत्यायाः। अस्मन्मातृभगिन्याः, दा० गो० व० सभ० साप०। अस्मदात्मभगिन्याः, दा० गो० व० सभ० साप०। अस्मच्छ्वशुरस्य शर्मणो गो० व० सप० सापत्यस्य। अस्मद्गुरोः शर्मणो गो० व० सप० सापत्यस्य। अस्मच्छिष्यस्य शर्मणो गो० वसु० सप०। अस्मदाप्तस्य शर्मणो गो० वसु० सप०। एतेषां [2]तृप्त्यर्थं महालयापरपक्षिकं श्राद्धं यथायथं पार्वणैकोद्दिष्टेन विधिनाऽन्नेन हविषाऽद्य करिष्य इति संकल्पं कुर्यात्। सकृत्करणे सकृन्महालयापरपक्षिकश्राद्धमित्यूहः।

अत्र सपत्नीकसापत्यत्वविशेषणयोर्यथायोग्यं प्रयोगः कार्यः। एवमग्रेऽपि।

ततः—( + पुरूरवसंज्ञकविश्वदेवार्थमेकमार्द्रवसंज्ञकविश्वदेवार्थमेकमित्येवं विप्रद्वयं निमन्त्रयेत्। एकमेव वा। अस्मिन्पक्षे सहैवोत्कीर्तनम्। )

प्राचीनावीती—पितृवर्गार्थं विप्रत्रयमेकं वा मातृवर्गार्थं विप्रत्रयमेकं वा सापत्नमात्रर्थमेकं मातामहवर्गार्थं विप्रत्रयमेकं वा मातामहीवर्गार्थं विप्रत्रयमेकं वा ( * पत्न्याद्याप्तान्ता या व्यक्तयो यावत्संख्याकास्तावत्संख्यान्विप्रान्निमन्त्रयेत्।

यदा द्वावेव विप्रौ लभ्येते तदैको देवस्थान एकः पितृस्थाने। यदा तु त्रयस्तदैको देवस्थान एकः पार्वणेषु सापत्नमातरि च। एकः पत्न्यादीनां

+ धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—" अस्मिन्महालयश्राद्धे वर्गचतुष्टयार्थं धूरिसंज्ञकविश्वे(श्व)देवार्थं त्वया क्षणः करणीयः। लोचनसंज्ञकविश्वे(श्व) देवार्थं त्वया क्षणः करणीयः। इति यथायथं द्वौ विप्रौ निमन्त्रयेत्। एकपक्षे धूरिलोचनसंज्ञकविश्वे(श्व)देवार्थमिति सहैवोत्कीर्त्य निमन्त्रयेत् " इति। * धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—" पत्न्यर्थं पुत्रार्थं दुहित्रर्थं पितृव्यार्थं पितृव्यपत्न्याः पृथगुद्देशे तदर्थं मातुलार्थं मातुलपत्न्याः पृथगुद्देशे तदर्थं भ्रात्रर्थं भ्रातृपत्न्याः पृथगुद्देशे तदर्थं पितृभगिन्यर्थं मातृभगिन्यर्थमात्मभगिन्यर्थं श्वशुरार्थं गुर्वर्थं शिष्यार्थमाप्तार्थं चैकैकं विप्रं निमन्त्रयेत्। यदि त्वेकोद्दिष्टार्थं चत्वार एव विप्रास्तदैकः पत्नीस्थाने द्वितीयः पुत्रदुहितृस्थाने तृतीयः पितृव्यात्मभगिन्यन्तानां स्थाने चतुर्थः श्वशुराद्याप्तान्तानां स्थाने। यदि द्वौ तदा पत्न्याः स्थान एको द्वितीयोऽवशिष्टस्थाने। यद्येकस्तदा पत्न्यादीन्सर्वपितृंस्तत्रैव " इति।

१ क. तस्य प°। २ च. °विषा सद्यः क°।

स्थाने । यदा तु चत्वारस्तदैको देवस्थाने पितृमातृपार्वणयोः सापत्नमातरि चैकः । मातामहमातामहीपार्वणयोरेक एकोद्दिष्टेष्वेकः । पञ्चपक्षे देवस्थान एकः पितृपार्वण एको मातृपार्वणे सापत्नमातरि चैको मातामहमातामहीपार्वणयोरेकः पत्न्यादिष्वेकः । षट्पक्षे सापत्नमात्रर्थे पृथक् । सप्तपक्षे पत्न्यर्थमेकः पुत्राद्यर्थमेक इत्यादि यथासंभवं समावेशो ज्ञेयः ।

अत्र देवाद्यन्तताऽपि पक्षे । स च देवो गदाधरशब्देन व्यवह्रियत इदानीं शिष्टैः । )

ततो यवमिश्रितमुदकं कृत्वेत्याद्याच्छादनान्तं समानम् ।

तत्रार्घ्ये विशेषः । पितृवर्गार्थं पात्रत्रयं मातृवर्गार्थं पात्रत्रयं दर्भत्रयात्मकपवित्रयुक्तं संस्थाप्य सापत्नमात्रर्थमेकदर्भमयपवित्रयुक्तमेकं पात्रं मातामहवर्गार्थं पात्रत्रयं दर्भत्रयात्मकपवित्रयुक्तं तथैव मातामहीवर्गार्थं च निधाय पत्न्याद्यर्थं प्रत्येकमेकैकं पात्रमेकदर्भमयपवित्रयुक्तं संस्थापयेत् । तत्क्रमेणैव पूरणादि । प्रतिपितृव्यक्त्यूहेनार्घ्यदानम् । एवं गन्धादिष्वपि यथायथं नामविभक्त्यूहो द्रष्टव्यः । पितृपात्र एव सर्वपात्रस्थशेषमासिच्य तदेव न्युब्जं स्थापयेत् । गदाधरसत्त्वे पितृपूजनोत्तरं देववत्तस्यापि पूजनम् ।

ततो वर्गचतुष्टयपितॄनभिध्यायन्सकृदाच्छिन्नच्छेदनादि होमतन्त्रं पिण्डपितृयज्ञवत्कुर्यात् । ततश्चतुर्थ्यन्ततत्तन्नामभिरन्नदानम् ।

पिण्डदाने पितृवर्गार्थं रेखां कृत्वा तत्पश्चिमतः किंचित्स्थलं त्यक्त्वा तत्र पितृवर्गाद्दक्षिणतो वा मातृवर्गार्थं तत्पश्चाद्दक्षिणतो वा सापत्नमात्रर्थं मातृवर्गस्य पश्चिमतो दक्षिणतो वा व्यवहिते देशे सापत्नमातुर्दक्षिणतो मातामहवर्गार्थं तद्दक्षिणतो मातामहीवर्गार्थमित्येवं रेखा लिखित्वा मातामहीवर्गाद्दक्षिणतः पत्न्यादिसर्वपितॄणां संनिवेशो यथा भवति तथा दीर्घां रेखां लिखेत् । अथवा प्रत्येकोद्दिष्टपितृव्यक्तिपङ्क्त्याकारेण रेखा लेखनीयाः । तत्र सकृदाच्छिन्नं महद्बर्हिरास्तीर्य तत्तद्रेखास्थबर्हिःप्रदेशे तत्तन्नाम्ना तत्तत्पिण्डान्दद्यात् । तत्र मार्जने मातृवर्गोत्तरं मार्जयन्तां सापत्नमातरः सोम्यासः । मार्जयन्तां मातामहाः सो० । मा० मातुःपितामहाः सो० । मा० मातुःप्रपितामहाः सो० । मा० मातामह्यः सो० । मा० मातुःपितामह्यः सो० । मा० मातुःप्रपितामह्यः सो० । मा० पत्न्यः सो० । मा० पुत्राः सो० । मा० दुहि-

---

१ ङ. °त्न्यादिपित्रर्थं । २ ङ. तस्यैव न्युब्जं स्थापनं कुर्यात् । वर्ग° ।

तरः सो० । + मा० पितृव्याः सो० । मन्त्रेषु सपत्नीकशब्दस्य न प्रयोगः किं त्वभिध्यानमात्रम् । एवं सर्वत्र । पितृव्यपत्न्याः पृथक्पक्षे—[मा०] पितृव्यपत्न्यः सो० । मा० मातुलाः सो० । पृथक्पक्षे—मा० मातुलपत्न्यः सो० । मा० भ्रातरः[3] सो० । पृथक्पक्षे—मा० भ्रातृपत्न्यः सो० । मा० पितृभगिन्यः सो० । मा० मातृभगिन्यः सो० । मा० आत्मभगिन्यः सो० । मा० श्वशुराः सो० । मा० गुरवः सो० । मा० शिष्याः सो० । मा० आप्ताः सो० । सपत्नीकत्वसभर्तृकत्वसापत्यत्वविशेषणाभिध्यानं संभवानुसारेण कर्तव्यम् । एवमग्रेऽपि यथायथमूहो योज्यः । सर्वेऽपि पिण्डा आग्नेय्यपवर्गा दक्षिणापवर्गा वा रेखालेखनानुसारेण देयाः ।

ततः—'आ ब्रह्मणो० तेभ्यः स्वधा पिण्डमहं ददामि ॥ १ ॥ पितृवंशे मृता० इमं पिण्डं ददाम्यहम् ॥ २ ॥ असिपत्रे० ददाम्यहम् ॥ ३ ॥ उच्छिन्नकु० ह्यक्षय्यमुपतिष्ठतु ॥ ४ ॥' इति चतुर्भिश्चतुर इतरान्मन्त्रलिङ्गोक्तान्पितॄनुद्दिश्याऽऽप्तपिण्डस्य पुरस्ताद्दद्यात् । पिण्डदान आञ्जनाभ्यञ्जनयोश्च संबुद्ध्यन्तानि नामानि ।

तत आपो देवीरित्यादि यथायथमूहेन सकृदाच्छिन्नप्रहरणान्तं कुर्यात् ।

अत्रापि पत्नीकर्तृकं पिण्डप्राशनं कृताकृतम् । करणपक्षे वर्गचतुष्टयमध्यपिण्डप्राशनमिति विशेषः । ततः शिवा आपः सन्त्वित्यादि समानम् । सकृन्महालये परेद्युः सर्वान्पितॄंस्तिलोदकेन तर्पयेत् । इतरत्र तु तदहरेवानुव्रज्यानन्तरम् । इति महालयश्राद्धप्रयोगः ।

## अथ विधवाकर्तृकश्राद्धप्रयोगः ।

अस्मद्भर्तृ[6]सपत्नीकतत्पितृतत्पितॄणां शर्मणां गो० व० । अस्मत्पितृपितामहप्रपितामहानां शर्मणां गो० व० । अस्मन्मातृपितामहीप्रपितामहीनां दानां गो० व० । अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानां शर्मणां गो० व० सपत्नीकानामित्युत्कीर्त्य महालयश्राद्धं करिष्य इति संकल्पं कुर्यात् । विभवे सति भर्तृपार्वणोत्तरं श्वश्रूतच्छ्वश्रोर्देयागोत्रयोर्वसुरुद्रस्वरूपयोः, इत्यवं पृथक्पृथगेकोद्दिष्टवद्वा संकीर्त्य मातामहो(हपार्वणो)त्तरं मातामहीपार्वणं च संकीर्तयेत् ।

+ " मा० इति क. ङ. पुस्तकयोर्नास्ति । एवमग्रेऽपि तत्र तत्र ।

---

१ ङ. °व्याः सपत्नीकाः सो० । पितृव्यप° । २ ङ. °लाः सपत्नीकाः सो° । ३ ङ. °रः सपत्नीकाः सो° । ४ ङ. °णानि सं° । ५ ङ. योज्यानि । ६ ङ. °र्तृत° । ७ ङ. °तच्छ्वश्रूतच्छ्वश्रूणां दानां गो. व. इति सं° । ८ च. °द्वा । भ° । ९ ङ. °तृ । अ° ।

भर्तुरेकोद्दिष्टत्वपक्षे[1] श्वशुरादित्रयोद्देशानन्तरं श्वश्रूतच्छ्वश्रूतच्छ्वश्रूणामिति तिसृणामुद्देशः । सपत्नीकत्वोल्लेखपक्ष एवर्जुरिति स एव कर्तव्यः । अस्मिन्कल्पे[2] भर्तृशब्दोत्तरं[3] श्वशुरपार्वणे मातामहपार्वणे च सपत्नीकशब्दोच्चारणम्[4] । ततः स्वपितृव्यादीनामपि शक्तौ सत्यां कीर्तनम् । एवं यथाधिकारं संकल्पं कृत्वा कंचिद्ब्राह्मणमृत्विक्त्वेन विभाव्य तद्द्वारा सर्वं कारयेत् । तदभावे स्वयमेव वैदिकमन्त्रवर्जं सर्वं विधिमाचरेत्[5] । स्वमात्रादिपार्वणचतुष्टयमपुत्रविषयकमिति नवीनाः । परेद्युस्तर्पणम् । इति विधवाकर्तृकश्राद्धप्रयोगः ।

## अथ नवमीश्राद्धप्रयोगः ।

उक्तापराह्णे[6] श्रौताग्निमान्स्मार्ताग्निमान्वा चेत्पृथक्पाकेन वैश्वदेवं कृत्वाऽऽप्रकोष्ठात्प्राचीनावीतं कृत्वाऽस्मन्मातृपितामहीप्रपितामहीनां दानां गो० वसुरु०, अस्मत्सापत्नमातुः, दायाः, गोत्राया वसु० नवमीश्राद्धमहं[7] करिष्य इति संकल्प्य वैश्वदेवार्थं द्वावेकं वा विप्रं निमन्त्र्य मातृपार्वणार्थं विप्रत्रयं सापत्नमात्रर्थमेकं सर्वार्थमेकं वा निमन्त्र्य पादप्रक्षालनादि सर्वं मातृवर्गपार्वणवत् । सापत्नमातर्येकोद्दिष्टवत् ।

प्रपितामह्यनन्तरं सापत्नमातुः कीर्तनमासनादिपिण्डदानान्तेषु पदार्थेष्वित्येकः पक्षः ।

अपरस्तु मात्रा सहैव सापत्नमातरमुत्कीर्त्य पितामहीप्रपितामह्योरुत्कीर्तनमिति ।

अस्मिन्पक्षेऽस्मन्मात्रोरमुकामुकद्योर्गोत्रयोर्वसुरूपयोः पितामहीप्रपितामह्योर्दयोर्गोत्रयो रुद्रादित्यरूपयोरिति । अस्मन्मातृसापत्नमातृपितामहीप्रपितामहीनां दानां गोत्राणां वसुरुद्रादित्यस्वरूपाणामित्येव वोत्कीर्तनं सर्वत्र । अस्मिन्पक्षे सापत्नमातर्यपि पार्वणविधिरेव ।

अस्मन्मात्रोः स्थाने[8] त्वां निमन्त्रये क्षणः करणीयः । पितामहीस्थाने प्रपितामहीस्थाने[9] त्वां निमन्त्रये क्षणः करणीय इति निमन्त्रणादिषु प्रयोगः । अर्घ्यदानं तु मात्रे सापत्नमात्रे च पृथगेव ।

गन्धादिप्रदानेषु—अस्मन्मातरौ दे गोत्रे वसुरूपे एष युवां गन्ध इत्याद्यूहः ।

१ च. °क्षे श्वश्रूतच्छ्वश्रूणा° । २ ङ. °ल्पे मातामहपार्वणे स° । ३ च. °रं मा° । ४ ङ° च. °रणं न । त° । ५ ङ. °त् । इ° । ६ ङ. °राह्ण आ प्र° । ७ ङ. °श्राद्धं क° । ८ ङ. °ने क्ष° । ९ ङ. °ने क्ष° ।

अन्नदाने—अस्मन्मातृभ्यां दाभ्यां गोत्राभ्यां वसुरूपाभ्यामिदमन्नमित्याघूहः। पितामहीप्रपितामह्योस्तु गन्धाद्यन्नदानान्तं पूर्ववत्। एवं सुवासिनीभोजनेऽपि।

पिण्डदाने—एतद्वामस्मन्मातरौ दे ये च युवामनु इति, याश्चेति केचिदूहमिच्छन्ति।

आञ्जाथां मातरौ दे इत्यञ्जने। अभ्यञ्जाथां मातरौ दे इत्यभ्यञ्जने।

बहुमातृत्वे तु—अस्मन्मातॄणां दानां गोत्राणां वसुरूपाणाम्, अस्मत्पितामहीप्रपितामह्योश्च दयोर्गोत्रयो रुद्रादित्यरूपयोर्नवमीश्राद्धं करिष्य इति। अस्मन्मातृसापत्नमातृपितामहीप्रपितामहीनां दानां गोत्राणां वसुरुद्रादित्यस्वरूपाणामित्येव वा संकल्प उत्कीर्तनम्।

तथैवाऽऽसनक्षणयोः, गन्धादिप्रदानेषु च—अस्मन्मातरः, दाः, गोत्राः, वसुरूपा एष वो गन्ध इत्यादिरूहः।

अन्नप्रदाने मातृभ्यो दाभ्यो गोत्राभ्यो वसुरूपाभ्य इदमन्नमित्यादिरूहः। एवं सुवासिनीभोजनेऽपि। ततः पितामह्यै प्रपितामह्यै च। एतद्वोऽस्मन्मातरो दा ये च वोऽनु इति पिण्डदाने। अङ्ग्ध्वं मातरो दा इत्यञ्जने। अभ्यङ्ग्ध्वं मातरो दा इत्यभ्यञ्जने। अन्यत्समानम्।

श्राद्धोत्तरं तदहरेव शुक्लतिलैः श्राद्धेज्यपितॄणां तर्पणं विधाय[1], अनाहिताग्निश्चेदत्र[2] श्राद्धान्नेन वैश्वदेवं कृत्वा बन्धुभिः सह भुञ्जीतेति। सापत्नमात्रभावे केवलं स्वमातृवर्गस्यैवैतत्कार्यम्। अजीवत्पितृकेण तु पितुर्महालय एव मातृतृप्तेरपि संपादितत्वान्नैतत्कार्यमिति केचित्। इति नवमीश्राद्धप्रयोगः।

## अथ द्वादश्यां कर्तव्यसंन्यस्तपित्रुद्देश्यश्राद्धप्रयोगः।

उक्तापराह्णे—अस्मत्पितृपितामहप्रपितामहानां ब्रह्मीभूतानाममुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणामित्येवमुच्चारणेन सर्वं संकल्पप्रभृति सकृन्महालयवत्[3]कुर्यात्। मन्त्रव्यतिरिक्तस्थले सर्वत्र ब्रह्मीभूतपदोच्चारणमधिकं मन्त्रेषु त्वभिध्यानमात्रम्। इति द्वादश्यां कर्तव्यसंन्यस्तपित्रुद्देश्यश्राद्धप्रयोगः।

## अथ मघात्रयोदशीश्राद्धप्रयोगः।

* पितृवर्गस्य सपत्नीकस्य मातामहवर्गस्य सपत्नीकस्योत्कीर्तनं कृत्वा मघात्रयोदशीश्राद्धं सांकल्पविधिना करिष्य इति संकल्प्य पूर्वोक्तसांकल्पवि-

* एतस्मात्पूर्वं ङ. पुस्तके मघात्रयोदश्यामित्यधिकम्।

१ क. च. 'य वं'। २ ङ. 'ति। इ'। ३ ङ. 'धिकम्।

धानेन सर्वं कुर्यात् । ततो वर्गद्वयस्य तिलतर्पणम् । इति मघात्रयोदशीश्राद्धप्रयोगः ।

## अथ शस्त्रहतचतुर्दशीश्राद्धप्रयोगः ।

मध्यांह्ने श्रौताग्निमान्स्मार्ताग्निमान्वा चेत्कृतवैश्वदेवो देशकालकीर्तनान्ते—अस्मत्पितुः शर्मणो गोत्रस्य वसुरूपस्य शस्त्रहतस्य चतुर्दश्यां श्राद्धमेकोद्दिष्टविधिनाऽद्य करिष्य इति संकल्प्य वै( वि )श्वदेवार्थमेकं विप्रं निमन्त्र्य पित्रर्थमेकं निमन्त्रयेत् ।

ततः पादप्रक्षालनाद्याच्छादनान्तं वैश्वदेविकं कर्म विधायैकोद्दिष्टविधिना पित्र्यं कुर्या[२]द्दैवरहि[३]तं वा । पिण्डदान एक एव पिण्डः । तदहरेव तिलैरहितं तर्पणम् ।

पितृपितामहौ यदि शस्त्रहतौ तदा द्वयोरप्येकोद्दिष्टविधिरेव ।

यदि त्रयोऽपि शस्त्रहतास्तदा पार्वणैकोद्दिष्टयोर्विकल्पः । पार्वणपक्षेऽपराह्ण एव श्राद्धम् ।

सर्वपितृतृप्त्यर्थममावास्यायां भिन्नो महालयः कर्तव्य एव । इति शस्त्रहतचतुर्दशीश्राद्धप्रयोगः ।

## अथ दौहित्रप्रतिपच्छ्राद्धप्रयोगः ।

आश्विनशुक्लप्रतिपद्युक्तापराह्णे संगवे वा श्रौताग्निमान्स्मार्ताग्निमान्वा चेत्पृथक्पाकेन वैश्वदेवं कृत्वाऽस्मन्मातामहमातुःपितामहमातुःप्रपितामहानां शर्मणां गोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानां तृप्त्यर्थमाश्विनशुक्लप्रतिपच्छ्राद्धं सांकल्पविधिना करिष्य इति संकल्प्य पूर्वोक्तसांकल्पविधानेन सर्वं कृत्वा तद्वर्गमात्रस्य शुक्लतिलैस्तदहरेव तर्पणं कृत्वा[६], अनाहिताग्निश्चेद्वैश्वदेवं कृत्वा श्राद्धशेषमिष्टैः सह भुञ्जीत । इति दौहित्रप्रतिपच्छ्राद्धप्रयोगः ।

## अथ तीर्थश्राद्धप्रयोगः ।

काश्यादितीर्थप्राप्तौ स्नानादिकं विधाय तिलतर्पणं कृत्वा देशकालौ संकीर्त्य पुरूरवार्द्र० प्राची० पित्राद्याप्तान्तान्महालयवदुच्चार्य तीर्थश्राद्धं करिष्य इति संकल्प्य क्षेत्रवासिनोऽन्यान्वा ब्राह्मणान्महालयवन्निमन्त्र्यार्घ्यावाहनाङ्गुष्ठनिवेशनतृप्तिप्रश्नविकिरविसर्जनवर्जं महालयश्राद्धवत्सर्वं कुर्या[७]त् । दग्दो-

---

१ ङ. °ध्याह्न आहिताग्निश्चेत्कृ° । २ ङ. °र्यात् । पि° । ३ च. °हितमेव वा । ४ क. °लत° । ५ ङ. °वे वाऽस्म° । ६ क. च. °त्वा श्रा° । ७ ङ. °त् । अ° ।

षदिग्बन्धावप्यत्र न स्त इति केचित् । अत्राग्नौकरणं कृताकृतम् । तत्र करणपक्षेऽग्नावेव होमः । पिण्डांस्तु तीर्थजल एव क्षिपेत् । महालयपदस्थाने तीर्थश्राद्धपदोच्चारणम् । एवं गयाश्राद्धादावपि यथायथमूहो द्रष्टव्यः । इति तीर्थश्राद्धप्रयोगः ।

## अथ यात्रागमनकाले घृतश्राद्धप्रयोगः ।

उक्तापराह्णे[2] श्रौताग्निमान्स्मार्ताग्निमान्वा चेत्पृथक्पाकेन वैश्वदेवं कृत्वा तिलतर्पणं विधाय देशकालकीर्तनान्ते महालयवत्पितॄनुद्दिश्यामुकतीर्थयात्रां कर्तुमादौ तदङ्गत्वेन विहितं समस्तपितॄनुद्दिश्य घृतश्राद्धं करिष्य इति संकल्प्य क्षणाद्यर्घ्यावाहनवर्जं परिवेषणान्तं कुर्यात् ।

[3]अग्नौकरणं कृताकृतम् । करणपक्षे घृतेनाग्नौकरणं तस्यैव मुख्यत्वात् ।

अत्र पात्रे घनीभूतं घृतं प्रधानं भक्ष्यभोज्यादिकं व्यञ्जनत्वेनेति द्रष्टव्यम् । अन्नशब्दस्थाने घृतशब्दप्रयोगो दाने कार्यः । अन्यत्सर्वं तीर्थश्राद्धवत् ।

[4]ततोऽनाहिताग्निश्चेद्वैश्वदेवं कृत्वा बन्धून्संभोज्य घृतशेषमादाय ग्रामं प्रदक्षिणीकृत्य क्रोशमात्रं गत्वा तत्र पाकं [5]विधाय सर्वस्मादन्नात्किंचित्किंचिद्ग्रासमात्रमवदाय घृतप्लुतमग्नौ किंचित्प्रक्षिप्याऽऽनीतश्राद्धशिष्टघृतेन सह भोजनं कुर्यात् । इति यात्रारम्भे घृतश्राद्धम् ।

## अथ यात्रोत्तरश्राद्धम् ।

यात्रां कृत्वा गृहप्रवेशे श्राद्धं पूर्वोक्तवत्सर्वं कुर्यात् । तत्र सर्वान्पितॄनुद्दिश्या[6]मुकतीर्थप्रत्यागमननिमित्तं घृतश्राद्धं करिष्य इति संकल्पवाक्ये विशेषः । अन्यत्समानम् । केचिद्दधिश्राद्धमित्याहुः । तत्पक्षे दधिश्राद्धं करिष्य इति संकल्पः । प्राधान्यं दध्न इतरद्व्यञ्जनत्वेनेति । इति यात्रोत्तरश्राद्धम् ।

## अथ युगा[द्या]दिश्राद्धप्रयोगः ।

[7]उक्तापराह्णे[8] श्रौताग्निमान्स्मार्ताग्निमान्वा चेद्वैश्वदेवं कृत्वा सपत्नीकपितृवर्गस्य सपत्नीकमातामहवर्गस्य च तिलतर्पणं कृत्वा देशकालकीर्तनान्ते पुरूरवार्द्रव० प्राचीनावीती—अस्मत्पितृपितामहप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानाम् , अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानां युगा-

---

१ ङ. 'त् । इ' । २ ङ. 'ह्णे ति' । ३ ङ. अत्र । ४ क. च. ततो व' । ५ ङ. पूर्वान्नि' । ६ च. 'तीर्थात्प्रत्या' । ७ ङ. च. उक्तदिनेऽप' । ८ ङ. 'राह्ण आहिताग्निश्चेद्वै' ।

दिनिमित्तं श्राद्धं[1] सांकल्पविधिनाऽद्य करिष्य इति संकल्प्य[2] पूर्वोक्त[3]सांकल्पविधिना सर्वं कुर्यात्।

एवं मन्वाद्ययनद्वयसंक्रमणव्यतीपातवैधृत्यादिषु मन्वादिनिमित्तं श्राद्धं करिष्ये। अयननिमित्तं श्राद्धं करिष्ये। संक्रमणनिमित्तं श्राद्धं करिष्ये। व्यतीपातनिमित्तं श्राद्धं करिष्ये। वैधृतिनिमित्तं श्राद्धं करिष्य इति यथायथं संकल्पं कृत्वा युगादिश्राद्धवत्सर्वं कुर्यात्[4]।

एवमर्धोदयगजच्छायाकपिला[5]षष्ठीष्वपि[6]—अर्धोदयनिमित्तं श्राद्धं करिष्ये। गजच्छायानिमित्तं श्राद्धं करिष्ये। कपिला[7]षष्ठीनिमित्तं श्राद्धं करिष्य इति यथायथं संकल्पं कृत्वा सांकल्पविधिना श्राद्धं कृत्वा[8] तर्पणं कृत्वा भुञ्जीत।

[ इति युगाद्यादिश्राद्धप्रयोगः। ]

## अथ वृद्धिश्राद्धप्रयोगः।

तत्रायं विशेषः—सर्वं पितृकर्मापि यज्ञोपवीतिनैव। यवैस्तिलकार्यम्। प्रदक्षिणमुपचारः। अमूला एव दर्भाः। अत्र प्राङ्मुखतोदङ्मुखते एव। देवतीर्थमेव। प्रागग्रा एवाऽऽसनादिषु दर्भाः। रेखा अपि प्रागग्राः[9]। न तिलोदकं न सव्यजानुनिपातनं न नामग्रहणं नास्मद्गोत्रवसुरूपादिशब्दाः[10]। स्वधाशब्दस्थाने स्वाहाशब्दः। संस्कारकर्माङ्गनान्दीश्राद्धे दर्भस्थाने दूर्वाः। आधानसोमाद्यङ्गभूते नान्दीश्राद्धे तु दर्भा एव। नात्र रक्तगन्धपुष्पमालानिषेधः। आदौ मातृवर्गो[11] मध्ये पितृवर्गोऽन्ते मातामहवर्गः सपत्नीकः। पूर्वाह्ण एव श्राद्धारम्भः। 'निहन्मि सर्वं०[12]' 'यवा रक्षन्त्वसु०' 'ये राक्षसाः०[13]' इति यवानेव विकिरेत्।

ततः—'अपवित्रः पवित्रो वा०' इति पुण्डरीकाक्षं ध्यात्वा देशकालौ संकीर्त्य सत्यवसुसंज्ञका विश्वे देवा नान्दीमुखाः। मातृपितामहीप्रपितामह्यो नान्दीमुखाः। नान्दीमुख्य इति केचित्। पितृपितामहप्रपितामहा नान्दीमुखाः। मातामहमातुःपितामहमातुःप्रपितामहाः सपत्नीका नान्दीमुखाः श्वोऽद्य वा करिष्यमाणामुककर्माङ्गत्वेन विहितं नान्दीश्राद्ध[14]मद्य करिष्य इति संकल्पं कुर्यात्*। जीवत्पितृकस्य तु पितुर्मातृपितामहीप्रपितामह्यो नान्दी-

---

* अत्र क. पुस्तकटिप्पण्याम्—"विधवाकर्तृकनान्दीश्राद्धे तु पूर्वं भर्त्रादित्रयमुच्चार्य पश्चान्मात्रादित्रयीप्रभृतित्रिकमिति त्रयीचतुष्टयमुच्चार्यमिति विशेषः शास्त्रान्तरे द्रष्टव्यः" इति वर्तते।

---

१ क. च. °द्धं संक°। २ च. °ल्प्य संक°। ३ क. °क्तसंक°। ४ ङ. °त्। अर्धो°। ५ क. °पिलष°। ६ ङ. °ष्ठीषु तु—अ°। ७ क. °पिलष°। ८ क च °त्वा भु°। ९ ङ. प्रागायताः। १० ङ. च. °शब्दः। स्व°। ११ ङ. °वर्गः सप°। १२ ङ. °र्वे०। इति यवाने°। च. °र्वे० इति य। १३ च. °साः'। "यवप्रकि०"। इ°। १४ च. °श्राद्धं मद्यः क°।

मुखाः । पितुः पितृपितामहप्रपितामहा नान्दीमुखाः । पितुर्मातामहमातुःपितामहमातुःप्रपितामहाः सपत्नीका[1] नान्दीमुखा इत्येवमुल्लेखः ।

जीवदुभयादेस्तु पितामहस्य मातृपितामहीप्रपितामह्य इत्यादि यथायथमुल्लेखः । एवं सर्वत्रोल्लेखो द्रष्टव्यः ।

अस्मिन्नान्दीश्राद्धे सत्यसंज्ञकानां विश्वेषां देवानां नान्दीमुखानां स्थाने[2] त्वां निमन्त्रय इति निमन्त्र्य त्वया क्षणः करणीय इति[3] ब्रूयात्, इति प्रथमदेवार्थं ब्राह्मणद्वयं निमन्त्र्य वसुसंज्ञकानां विश्वेषां देवानां नान्दीमुखानां स्थाने[4] त्वां निमन्त्रय इति निमन्त्र्य त्वया क्षणः करणीय इति द्वितीयदेवार्थं ब्राह्मणद्वयं निम[5]न्त्रयेत् । सत्यवसुसंज्ञकानां विश्वेषां देवानां स्थान इत्येवंरीत्या वा देवस्थानीयविप्रद्वयनिमन्त्रणं कार्यम् । एवं सर्वत्र द्रष्टव्यम् । अस्मिन्नान्दीश्राद्धे मातृपितामहीप्रपितामहीनां नान्दीमुखानां स्थाने[6] त्वां निमन्त्रय इति निमन्त्र्य त्वया क्षणः करणीय इति ब्राह्मणद्वयं निमन्त्र्य, अस्मिन्नान्दीश्राद्धे पितृपितामहप्रपितामहानां नान्दीमुखानां स्थाने[7] त्वां निमन्त्रय इति निमन्त्र्य त्वया क्षणः करणीय-इति पितृवर्गार्थं ब्राह्मणद्वयम्, अस्मि० मातामहमातुःपि० हानां सपत्नीकानां नान्दीमुखानां स्थाने त्वां० इति मातामहवर्गार्थं च ब्राह्मणद्वयं निमन्त्र्य पाकसिद्धयुत्तरं पाकः सिद्ध आगम्यतां दैवे क्षणः क्रियतामिति यथायथं यज्ञोपवीत्येव निमन्त्र्य प्रातः षड्घटिकानन्तरं स्नात्वाऽऽचम्य प्राणानायम्य समस्तसंपदिति ब्राह्मणान्प्रदक्षिणीकृत्येत्याद्यग्नौकरणान्तं मा[8]सिश्राद्धवत्कुर्यात् । तत्र विशेषः—मासिश्राद्धशब्दस्थाने नान्दीश्राद्धशब्दः । विप्रचरणक्षालनकाले यद्यतिथिः समागतश्चेत्तमपि चतुरश्रदेशे सर्वपितृस्थाने विनियोज्य स्वागतादिविधिना भोजयेत् । मातृपार्वणे विप्राभावे पूजनपूर्वकं स्त्रियो भोज्याः । देवपाद्यदानोत्तरं मात्रादीनामपि चतुरश्रमण्डल एव पाद्यदानम् । प्राप्तुतां भवन्तौ प्राप्नवावेति प्रश्नप्रतिवचनयोरूहः । आसन ऋजव एव दर्भाः । प्रदक्षिणमेव कुशासनम् । यवोऽसि यवयेत्यनेनै[9]व यवप्रक्षेपणम् । तत्तद्युग्माद्यविप्रकराग्रं तत्तद्द्वितीयविप्रकरे संस्थाप्य कराग्रेण पवित्राग्रं तेन तेन धारयित्वा तत्र तत्र तन्त्रेणार्घ्यं देयम् । नान्दीमुखान्पितॄनावाहयिष्य इत्यावाहनानुज्ञावाक्यम् । मध्यमयाऽङ्गुल्यैव गन्धदा[10]नं

१ च. पत्नीसहिता । २ ङ. °ने त्वया । ३ ङ. °ति प्र° । ४ ङ. °ने त्व° । ५ ङ. °मन्त्र्य—अ° ६ ङ. °ने त्व° । ७ ङ. °ने त्व° । ८ ङ. °सिकश्रा° । ९ ङ. च. °व प्र° । १० ङ. °दानम् । पु° ।

द्विर्द्विरेव । पुष्पाणि मालतीशतपत्रीमल्लिकाकुब्जकेतकीपाटलानि । मालाश्चैतेषामेव पुष्पाणामिति ।

ततश्चतुरश्राण्येव सर्वाणि मण्डलानि विधाय तेषु सर्वेष्वपि सौवर्णान्येव सर्वाणि भोजनपात्राणि, अलाभे मधुकपलाशग्राम्यकदल्याद्यन्यतमपात्राणि संस्थाप्य सर्वपात्राणां* परितो बृहत्सामेति प्रदक्षिणमेव भस्ममर्यादां कृत्वा करशुद्धिं च विधायाऽऽसादितेषु पात्रेषूपस्तीर्य होमार्थान्नोद्धरणार्थं पात्रमुपस्तीर्य गृहीत्वा, उद्धरिष्याम्यग्नौ च करिष्यामीति ब्राह्मणानामन्त्रयते । काममुद्ध्रियतां काममग्नौ च क्रियतामिति विप्रा अनुज्ञां दद्युः ।

ततः कर्ता तूष्णीमेवौपा[1] मेध्यमितिमन्त्रेण वाऽमूलमेव[2] महद्बर्हिराच्छिद्य तूष्णीं परिस्तरणार्थानमूलानेव दर्भानाच्छिद्योभयं बद्ध्वाऽनधो निदधाति । ततो[3] दक्षिणाग्निमौपासनाग्निं वा तदभावेऽयाश्चेत्यादिविधिनोत्पादितमग्निं प्रागुदगग्रैर्दर्भैः प्रदक्षिणमेव परिस्तीर्य तूष्णीमेव प्रदक्षिणं परिषिच्य पिण्डदानार्थं पृषदाज्यं निष्पाद्य सुरक्षितं निदध्यात् ।

दधनि तदर्धमाज्यमानीय तदालोडयेत्तत्पृषदाज्यं भवति । अत्रासंस्कृतमेवाऽऽज्यम् ।

तत उत्पूतेन नवनीतेनानुत्पूतेनाऽऽज्येन वाऽभिघार्योद्वास्याग्नेः पश्चान्निधाय दक्षिणं जान्वाच्य मेक्षणेनोद्धृतान्नैकदेशमुपहत्य सोमाय पितृपीताय स्वाहेति प्रथमाहुतिं जुहोति । सोमाय पितृपीतायेदं० । पुनरुपहत्य यमायाङ्गिरस्वते पितृमते स्वाहेति तृतीयाहुत्यर्थं कानिचित्सिक्थान्यवशेष्य द्वितीयामाहुतिं जुहोति । यमायाङ्गिरस्वते पितृमत इदं० । अग्नये कव्यवाहनाय स्विष्टकृते स्वाहेति यानि मेक्षणे द्वितीयाहुत्यवशेषितानि सिक्थानि तैस्तृतीयामाहुतिं जुहोति । अग्नये कव्यवाहनाय स्विष्टकृत इदं० । ततस्तूष्णीं मेक्षणमनुप्रहरति ।

ततः पात्रेषु मधुरद्रव्यसहितमेनम्लद्रव्यव्यञ्जनसहितमन्नं[4] परिविष्य हुतावशिष्टं किंचित्पितृपात्रेषु परिविष्य देवेभ्यो नैवेद्यं समर्प्य[5] सत्यं त्वा० परिषिच्य पृथिवी ते पात्रमित्याद्युक्त्वा सत्यसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्य इदमन्नं सोपस्करं स्वाहा हव्यं न ममेति[6] प्रथमदेवविप्रद्वयहस्तयोरुदकं दत्त्वा

* द्वितीयान्तपाठो युक्तः ।

१ ङ. °णि सं° । २ ङ. °वामू° । ३ ङ. तत औपा° । ४ ङ. °मम्लद्रव्यरहितं सव्यञ्जनम° । ५ ङ. °र्प्य पृ° । ६ क. च. °ति वि° ।

वसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्य इदमन्नं सोपस्करं स्वाहा हव्यं न ममेति द्वितीयदेवविप्रद्वयहस्तयोरुदकं दत्त्वा ये देवा दिवीत्युपतिष्ठते।

ततः[1] सत्यं त्व० परिषिच्य, 'पृथिवी ते पा० म्यक्षि० मातृपितामहीप्रपितामहीनां नान्दीमुखानां क्षेष्ठा अमुत्रामुष्मिँल्लोके' इति मातृवर्गीयविप्रपात्रद्वयस्थमन्नं मन्त्रावृत्त्याऽभिमृश्य, 'इदं विष्णु०' 'विष्णो हव्यं रक्षस्व' इति तयोरङ्गुष्ठमनखं मन्त्रावृत्त्या तत्तदन्ने निवेश्य मातृपितामहीप्रपितामहीभ्यो नान्दीमुखाभ्य इदमन्नं सोपस्करं स्वाहा हव्यं[2] न ममेति मातृवर्गीयविप्रहस्तयोरुदकं दद्यात्। एवमूहेन पितृपार्वणे मातामहपार्वणे[3] च। तत्र मातामहपार्वणे नान्दीमुखशब्दात्पूर्वं सपत्नीकशब्दप्रयोगः। एवमन्नं निवेद्य कुलदेवतां संपूज्य 'यन्तु नद्यः' इति पठित्वा नान्दीमुखाः पितरः प्रीयन्तामिति वाचयित्वा प्रीयन्तां नान्दीमुखाः पितर इति तैरुक्ते तान्नमस्कृत्य ब्रह्मार्पणं कृत्वा परिविष्टान्नेषु सर्पिरासिच्यापोशा(ऽऽपोश)नोदकदानादि यथासुखं जुषध्वमित्युक्त्वा 'अपेक्षितं याचितव्यम्' इति विप्रप्रार्थनान्तं कुर्यात्। विप्राः[4] परिषेकबलिदानवर्जं विधिना भुञ्जीयुः। तेषु भुञ्जानेषु राक्षोघ्नं[5] पवमानानुवाकम् 'आशुः शिशानः' इत्यनुवाकम् 'इन्द्रं वो विश्वतस्परि हवामहे' इत्यादीनैन्द्रमन्त्रांश्चाभिश्रावयेत्। भोजनान्ते '(* मधु वाताः' इत्येतस्य स्थाने 'उपास्मै गायता नरः पवमा० मधु' इति पञ्चर्चः श्रावयेत्। 'अक्षन्नमीमदन्त' इति च।

ततः) सत्यसंज्ञका विश्वे देवा नान्दीमुखा नान्दीश्राद्धं रुचितम्[6]। वसुसंज्ञका विश्वे देवा नान्दीमुखा नान्दीश्राद्धं रुचितम्[7]। सुरुचितमिति देवविप्रौ प्रतिब्रूयाताम्। मातृपितामहीप्रपितामह्यो नान्दीमुखा नान्दीश्राद्धं संपन्नं पितृपितामहप्रपितामहा नान्दीमुखा नान्दीश्राद्धं संपन्नं मातामहमातुःपितामहमातुःप्रपितामहाः सपत्नीका नान्दीमुखा नान्दीश्राद्धं संपन्नमिति तत्तद्विप्रं प्रति वदेत्[8]। सुसंपन्नमिति पितृविप्राः प्रतिब्रूयुः। अयमेवात्र तृप्तिप्रश्नः।

तत उच्छिष्टभाग्भ्योऽन्नं दीयतामित्यादिविप्राचमनान्तं समानम्।

आचान्तेषु विप्रेषु शीघ्रमुच्छिष्टं निष्काश्य भूमिं संमार्ज्य पिण्डदानं कुर्यात्। तत्रायं विशेषः—मार्जयन्तां मातरो नान्दीमुखाः सोम्यासः। मार्ज० पिता-

* धनुश्चिह्नान्तर्गतं नास्ति ङ. पुस्तके।

१ ङ. °तः पृ°। २ ङ. कव्यं। ३ क. च. °णे ना°। ४ ङ. विप्रा ब°। ५ ङ. °क्षोघ्नमैन्द्र°। ६ ङ. संपन्नम्। ७ ङ. सपन्नम्। ८ ङ. च. °म्। मा°। ९ ङ. च. °त्। सुरुचितमिति देवविप्रौ प्रतिब्रूयाताम्। सु°।

मह्यो नान्दी० सो० । मार्जं० प्रपितामह्यो ना० सो० । मार्जं० पितरो ना० सो० । मार्जं० पितामहा ना० सो० । मार्जं० प्रपितामहा ना० सो० । मार्जं० मातामहा * ना० सो० । मार्जं० मातुःपितामहा ना० सो० । मार्जं० मातुःप्रपितामहा ना० सो० । इत्येतैर्यथायथं तत्तद्रेखायां देवतीर्थेनैवोदकाञ्जलिनिनयनम् । प्रतिपिण्डं तूष्णीं[1] द्वितीयः पिण्डः । तत्तत्पिण्डसमीपे तत्तद्द्वितीयपिण्डार्थमुदकाञ्जलिदानमपि कर्तव्यम्[2] । सर्वमन्त्रेषु सपत्नीकत्वाभिध्यानमात्रं न तु तच्छब्दस्योल्लेखः । एतत्ते मातर्नान्दीमुखेऽयं पिण्डः स्वाहा । एतत्ते पितामहि ना० पिण्डः स्वा० । एतत्ते प्रपितामहि ना० पिण्डः स्वा० । एतत्ते पितर्नान्दीमुखायं पिण्डः स्वाहा । एतत्ते पितामह ना० पिण्डः स्वा० । एतत्ते प्रपितामह ना० पिण्डः स्वाहा । एतत्ते मातामह + ना० यं पिण्डः स्वाहा । एतत्ते मातुःपितामह ना० पिण्डः स्वा० । एतत्ते मातुःप्रपितामह ना० पिण्डः स्वा० । इत्येतैर्यथायथं तत्तद्रेखास्थबर्हिषि देवतीर्थेनैव पृषदाज्यदधिबदराक्षतयवैरुद्धृतमन्नं मिश्रयित्वा तेन पिण्डान्दद्यात्[3] । अत्रापि सपत्नीकत्वाभिध्यानमात्रम् । सर्वाभावे पृषदाज्ययवमात्रमिश्रणम् । प्रतिपिण्डं तूष्णीं द्वितीयपिण्डदानम्[4] । आपो देवीः स्वाहया० गच्छन्तु पितरो नान्दीमुखाः स्योनाः० तमे पितॄन्नान्दीमुखान् । अत्र पितरो नान्दीमुखा यथा० अमीमदन्त पितरो नान्दीमुखा अनुस्वाहमा० आङ्क्ष्व मातर्नान्दीमुख इत्याद्यूहेनाञ्जनं दद्यात् । अभ्यङ्क्ष्व मातर्नान्दीमुख इत्याद्यूहेनाभ्यञ्जनं दद्यात् । एतानि वः पितरो नान्दीमुखा वासाꣳसीत्येवमूहितेन दशामूर्णास्तुकां वा छित्त्वा छित्त्वा पिण्डेषु क्षिपति पूर्वे वयसि । उत्तरे वयसि तु दक्षिणप्रकोष्ठस्थं हृदयस्थं वा लोम च्छित्त्वा छित्त्वा तेनैव मन्त्रेण प्रक्षिपति न दशा नोर्णास्तुका ।

ततः पितृभ्यो नान्दीमुखेभ्यो नम इति गन्धादिभिः पूजयेत् । अत्राऽऽरक्तगन्धारक्तपुष्पाक्षतमालाद्यपि देयम् ।

ततो नमो वः पितरो रसायेत्यादिषु पितृशब्दोत्तरं नान्दीमुखशब्दप्रयोगः। ( * नमो वः पितरो नान्दीमुखा रसाय पितरो नान्दीमुखा नमो वो य ए० भूयासं न० रो ना० स्वाः शु० य पि० रो ना० न० रो ना० जी० न० रो ना०

---

* एतदग्रे ङ. पुस्तके सपत्नीका इत्यस्ति । एवमग्रेऽपि । + एतदग्रेऽत्राग्रे च ङ. पुस्तके सपत्नीका इति वर्तते । * धनुश्चिह्नान्तर्गतं नास्ति ङ. पुस्तके ।

---

१ ङ. °ष्णीं द्वितीयपिण्डदानपक्षे त° । २ ङ. °म् । ए° । ३ ङ. °त् । सर्वा° । ४ ङ. °म् । एतच्च कृताकृतम् । आङ्क्ष्व ।

*स्वाहा० न० रो ना० म० न० रो ना० घो० ऊर्जस्वतीः स्वाहया व० मे पितॄन्नान्दीमुखान् । उत्तिष्ठत पितरो नान्दीमुखाः प्रेत० परेत पितरो नान्दीमुखाः सो० अथापितॄन्नान्दीमुखान्त्सु० यन्तु पितरो नान्दीमुखा मनसा० मनोन्वा० स्तोमेन पितॄणां नान्दीमुखानां च मन्मभिः पुनर्नः पितरो नान्दीमुखा मनो द० । ) पात्रोत्सर्गान्तं समानम्[१] । निरग्निकस्यात्र पिण्डदानं कुलधर्मानुसारेण कृताकृतम् । साग्निकस्य तु नियतमेव ।

ततः शिवा आपः सन्त्वित्यादि[२], अस्मिञ्श्राद्धे दत्तैरन्नोदकादिभिर्नान्दीमुखाः पितरः प्रीयन्तामिति भवन्तो ब्रुवन्त्वित्यक्षय्यं दत्त्वा प्रीताः सन्त्विति तैरुक्ते सर्वेभ्यो विप्रेभ्यो द्राक्षामलकमूलयैवाभिष्क्रयं[३] वा दक्षिणाः पान्त्विति दक्षिणां दद्यात्ताम्बूलं च[४] ।

ततो दातारो नोऽभिवर्धन्तामिति विप्रान्प्रार्थयेत् । दातारो वोऽभिवर्धन्तामिति विप्राः प्रतिब्रूयुः ।

ततो नान्दीमुखाः पितरः प्रीयन्तामिति भवन्तो ब्रुवन्त्विति कर्ता वदेत् । प्रीयन्तां नान्दीमुखाः पितर इति विप्राः । मद्गृहे सततं शोभनमस्त्विति भवन्तो ब्रुवन्त्विति कर्ता वदेत् । त्वद्गृहे सततं शोभनमस्त्विति विप्राः प्रतिब्रूयुः । अत्र सर्वान्पिण्डान् ' त्यमू षु वाजिनम् ' इति मन्त्रेणोद्धृत्याप्सु क्षिपति ब्राह्मणं वा भोजयतीत्यादिप्रतिपत्त्यैनन्तरं[५] तु दर्शश्राद्धवत् । नात्र पिण्डप्राशनं पत्न्याः । ततो बर्हिरग्नौ प्रहरति[६] । ये समानाः समनसः पितरो नान्दीमुखा यम० पिण्डस्थाने जलमासिच्य ' वाजे वाजे ' इत्यस्य स्थाने ' त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् । अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहाऽऽहुवेम ' इति मन्त्रमुक्त्वा पितॄन्देवांश्च विसर्जयेत् । ततः कूर्चद्वयं विस्रस्य—' आ मा वाजस्य प्रस० गन्तां पितरा नान्दीमुखा मातरा नान्दीमुखाश्चाऽऽमा सो० स्वादुषꣳसदः पितरो नान्दीमुखा वयोधाः० ब्राह्मणासः पितरो नान्दीमुखाः सोम्यासः शिवे०' इत्यूहेन मन्त्रान्वदेत् । ततो विप्राः ' इहैव स्तं० ' ' आयुः प्रजां० प्रीतास्तुभ्यं पितामहा नान्दीमुखाः ' इत्याशिषो दद्युः ।

ततो यजमानः—" माता पितामही चैव तथैव प्रपितामही ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥

---

* क. पुस्तकेऽत्र स्वधाशब्दो विद्यते ।

---

१ क. °म् । ततः । २ क. °दि कृत्वाऽक्षय्यं सर्वेभ्यो । ३ क. °यवांस्ताम्रि° । ४ क. च । दा° । ५ क. °त्यन्तरे तु । ६ क. °ति । पि° ।

मातामहस्तत्पिता च प्रमातामहकस्तथा ।
एते भवन्तु सुप्रीताः प्रयच्छन्तु च मङ्गलम् ”

इति विप्रान्वदेत् । विप्रा मात्रादयः सुप्रीता मङ्गलं प्रयच्छन्त्विति[1] प्रतिब्रूयुः, तत्तत्पार्वणाद्यजीवनवशेन यस्य कस्यचित्पार्वणस्य लोपे तत्तत्पार्वणविषयकश्लोकैकदेशलोपः । केवलमातृपार्वणकरणे—एता भवन्तु[2] सुप्रीता इत्यूहः । देवा अप्यत्र न कार्याः । तत इडामग्ने० इत्यनेन मन्त्रेणाऽऽचारात्पात्रेण किंचिद्द्रव्यं संघट्टयेत् ।

ततोऽग्र मे सफलमित्यादि यस्य स्मृत्येत्येतदन्तं कृत्वा, अनेन नान्दीश्राद्धाख्येन कर्मणा परमेश्वरः प्रीयतां न ममेति कर्म समर्प्य त्रिष्णुं संस्मृत्य पवित्रे विसृज्याऽऽचम्य मातॄर्विसर्जयेत्[3] । निरग्निकस्य पिण्डदानाकरणकल्पे सांकल्पिकविधिः ।

अत्र वैश्वदेव आदावन्ते वा कार्यः । यदाऽऽदौ तदा पाकान्तरेणैव कार्यः[4] । विवाहोपनयनाङ्गभूते नान्दीश्राद्धे तु सायंवैश्वदेवोऽपि प्रातरेव कर्तव्य इति केचित् । ( * नात्र तर्पणम् । न च ब्रह्मचर्यादिनियमाः । ) इति वृद्धिश्राद्धप्रयोगः ।

# अथ नित्यश्राद्धप्रयोगः ।

आचम्य प्राणानायम्य देशकालौ संकीर्त्य, अस्मत्पितृपितामहप्रपितामहानां शर्मणां गोत्राणां वसु० सपत्नीकानाम्, अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानां शर्मणां गो० व० सपत्नीकानां तृप्त्यर्थं[5] नित्यश्राद्धं करिष्य इति संकल्प्य, आसने तत्तद्वर्गोद्देशेन विप्रद्वयमेकं वोपवेश्य गन्धादिभिः संपूज्य+, इदं परिविष्टं परिवेक्ष्यमाणं सोपस्करमन्नं पितृपितामहप्रपितामहानां सपत्नीकानामा तृप्तेः स्वधा संपद्यतां कव्यं न ममेत्यन्नं निवेदयेत् । एवं मातामहवर्गे । विप्रभोजनोत्तरं यथासंभवं दक्षिणां दत्त्वा नमस्कृत्य विसर्जयेत् । नात्र ब्रह्मचर्यादिनियमाः । न तर्पणं न विश्वे देवाः । दक्षिणादाने विकल्पः । अत्र

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने क. ङ. पुस्तकयोर्विद्यमानो ग्रन्थो यथा—“ न च ब्रह्मचर्यादिनियमाः । अत्र तर्पणे विशेषः । पितरं नान्दीमुखं तर्पयामि पितामहं नान्दीमुखं तर्पयामीत्येवं केवलं तर्पणं न नामग्रहणं न प्राचीनावीतम् । तर्पणाभाव एव वा । + अत्र क. पुस्तकटिप्पण्यां गायत्र्याऽन्नं प्रोक्ष्येति वर्तते ।

१ ङ. °पे तु तत्पा° । २ ङ. °न्तु मे प्री° । ३ ङ. °त् । अ° । ४ ङ. °र्यः । ना° । ५ च. °र्थे श्रा° ।

सर्वथा विप्रालाभे किंचिदन्नमुद्धृत्य पितृभ्य इदमन्नं स्वधा न ममेति पित्रुद्देशेन त्यक्त्वा गोभ्यो दद्यात्। गवामलाभेऽग्नौ प्रक्षिपेत् । (* यस्मिन्दिने पितुरमावास्यानान्दीमुखश्राद्धादिकं पतेत्तदा पित्रादीनां तृप्तत्वात्तत्र नित्यश्राद्धं न कर्तव्यं, पत्न्यादिसांवत्सरिकादिष्वेता ) नेष्टा नित्यश्राद्धदेवतास्तत्र कर्तव्यमिति व्यवस्था ज्ञेया ।

इति संस्काररत्नमालायां मासिश्राद्धम् ॥

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायाः सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालाया उत्तरार्धे नवमं प्रकरणम् ॥ ९ ॥

अथ दशमं प्रकरणम् ।

## अथ माध्यावर्षश्राद्धम् ।

तत्र गृह्यम्—'एतेन माध्यावर्षं व्याख्यातं तत्र मांसं नियतं मांसाभावे शाकम्' इति । मा(म?)ध्यावर्षः प्रो(प्रौ)ष्ठपदो मासः । तत्र यच्छ्राद्धं (* तन्माध्यावर्षश्राद्धमिति मातृदत्तः । अत्र तिथिस्तु महालयपक्षान्तर्गता या काचिद्ग्राह्या । अथवोपस्थितत्वान्महालयप्रतिपदेव । वर्षस्य मध्यं मध्यावर्षं तत्र भवं माध्यावर्षमित्येव व्युत्पत्तिः । तथा च—आश्विनशुक्लप्रतिपदि माध्यावर्षं भवति तस्या वर्षमध्यवर्तित्वात् । यद्यपि—'एतेन माध्यावर्षं व्याख्यातम्' इति सूत्रेणामावास्याया अप्यतिदेशात्तत्रैव कर्तव्यता प्रतीयते तथाऽपि श्राद्धद्वयेनामावास्यापराह्णस्यावरुद्धत्वेन तत्र कर्तुमशक्यत्वान्मासिकश्राद्धदिवस आरम्भमात्रं द्वितीयदिवसे श्राद्धमित्येवानायत्त्या स्वीकार्यम् ।

न च मासिकश्राद्धमाध्यावर्षयोस्तन्त्रेणैवानुष्ठानमस्त्विति वाच्यम् । तथा सति मासिकश्राद्धमाध्यावर्षयोः सर्वदा कालैक्यात्तन्त्रेणैवानुष्ठानापत्तेः । न

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—"यत्रामावास्यानान्दीमुखश्राद्धादिषु नित्यश्राद्धदेवता इष्टा भवन्ति न तत्र नित्यश्राद्धं कर्तव्यम् । यत्र च सांवत्सरिकादिषु" इति । * धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ पुस्तके विद्यमानो ग्रन्थो यथा—"तन्माध्यावर्षं श्राद्धं तन्मासिकश्राद्धवत्कर्तव्यम्" इति ।

---

१ क. माध्यव° । २ च. °श्राद्धादिदि° । ३ च. °द्धमध्या° ।

चेष्टापत्तिः। एतेन माध्यावर्षमित्यत्रत्यातिदेशबोधितपृथग्भावस्योच्छेदापत्तेः। तत्रत्यनैयत्यानैयत्यधर्मयोः परस्परविरोधेन तत्रासंभवाच्च।

केचित्तु प्रोष्ठपदीश्राद्धमेव माध्यावर्षश्राद्धमित्याहुः। तन्न। एतेन माध्यावर्षं व्याख्यातमितिसूत्रान्मासिकश्राद्धदेवतोद्देश्यकश्राद्धस्यैव कर्तव्यताया अवगतत्वेन प्रोष्ठपदीश्राद्धस्य तथात्वाभावेनासंभवात्। नान्दीमुखसंज्ञकत्रयीपरतरपितॄणां हि प्रोष्ठपदीश्राद्धे देवतात्वं न मासिकश्राद्धोद्देश्यानाम्।

न च माध्यावर्षेऽङ्गातिदेशमात्रमेतेन माध्यावर्षमित्यनेन क्रियते न देवतातिदेश इति वाच्यम्। तत्र मांसं नियतं मांसाभावे शाकमित्यनेन देवतातिदेशसत्त्वस्याप्यवगमात्। न च सांवत्सरिकश्राद्धीयैकवर्गोद्देश्यकत्वेन दर्शश्राद्धीयवर्गद्वयोद्देश्यकत्वबाध इवात्रापि नान्दीमुखसंज्ञकत्रयीपरतरपितृवर्गोद्देश्यकत्वेन पितृवर्गमातामहवर्गद्वयोद्देश्यकत्वबाधः, तथा च प्रोष्ठपदीश्राद्धे माध्यावर्षत्वसिद्धिर्निराबाधेति वाच्यम्। प्रकृतिविकृतिभावसत्त्व एव बाध्यबाधकभावस्य सर्वमतसिद्धत्वात्। अन्यथाऽतिप्रसङ्गापत्तेः। न हि प्रोष्ठपदीश्राद्धं मासिकश्राद्धविकृतिभूतं येन तदीयदेवतानिर्बाधो भवेत्।

न च [दर्श?]श्राद्धविकृतित्वं प्रोष्ठपदीश्राद्धस्य सर्वस्मृतिसिद्धम्। दर्शश्राद्धमेव मासिकश्राद्धं तथा च प्रकृतिविकृतिभावोऽस्त्येवेति वाच्यम्। तस्य पूर्वमेव खण्डितत्वात्। तथा च माध्यावर्षश्राद्धं भिन्नमेव। वर्षस्य मध्यं मध्यावर्षं तत्र भवं माध्यावर्षमितिव्युत्पत्तौ माध्यावर्षशब्दस्य पृषोदरादित्वकल्पनया साधुत्वम्।

[तच्च] मासिकश्राद्धवत्कर्तव्यम्। ) अत्र मातामहपार्वणमपि। अपां प्रसेकोदपात्रोपप्रवर्तने न स्त इति मातृदत्तवैजयन्तीकारौ। माध्यावर्ष इमामूर्जमित्यूहितेनाऽऽपो देवीः प्रहिणुतेतिमन्त्रेणापां प्रसेकम्, अथ माध्यावर्षे पुनरायातेत्यूहितेन परा यात पितर इत्यनेन मन्त्रेणोदपात्रोपप्रवर्तनं च कर्तव्यमेवेति युक्तं प्रतिभाति।

अस्मिञ्श्राद्धे मांसं नियतं तदभावे प्रतिनिधित्वेन शाकमावश्यकमिति मासिश्राद्धतो विशेषः। एतेन ज्ञायते मासिकश्राद्धे मांसस्यानियतता। कलौ मांसाशित्वस्य निषिद्धत्वाच्छाकदानमेव। अत्र मासिकश्राद्धवत्पूर्वमेव तर्पणम्।

इति माध्यावर्षश्राद्धम्।

## अथाष्टकाश्राद्धाङ्गभूतं पूर्वेद्युःश्राद्धम्।

तस्य कालो गृह्ये—'ततः पूर्वेद्युरनूराधेष्वपराह्णे' इति। तत एकाष्टकातः।

---

१ च. °मू। तस्य। २ ङ. अत्रान्त एव त°। ३ च. °श्राद्धात्पू°।

*तस्या एव पूर्वसूत्र उपक्रान्तत्वात् । एकाष्टकायाः पूर्वेद्युः पूर्वस्मिन्नहन्यपराह्णे पूर्वेद्युःश्राद्धं कर्तव्यमित्यर्थः। अनूराधेष्विति वचनं माससंदेहनिवृत्त्यर्थमेव न तु* नक्षत्रान्तरनिवृत्त्यर्थं, तेन विशाखयोर्ज्येष्ठायामपि पूर्वेद्युःश्राद्धं भवत्येव । एकाष्टकास्वरूपं चाष्टकाश्राद्धनिरूपणे वक्ष्यते ।

कर्ता प्राणानायम्य श्वोऽष्टकाश्राद्धं करिष्यमाणः पूर्वेद्युःश्राद्धं करिष्य इति संकल्पं[1] कुर्यात् । मातामहपार्वणमप्यत्रे[2] । यथा मासिक इत्यनेन तल्लाभात् । 'पितरो यत्र पूज्यन्ते' इतिवचनात् ।

"महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च ।
नवदैवतमत्रेष्टं शेषं षाट्पौरुषं विदुः" इति विष्णुधर्मोक्तेश्च ।

निमन्त्रणादि मा[3]सिकश्राद्धवत् ।

अन्वाधाने पूर्वेद्युःश्राद्धहोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तमुक्त्वा प्रधानहोमे प्राचीनावीती—पितॄं[4]स्तिसृभिरपूपैकदेशाहुतिभिर्यक्ष्ये पितॄंस्तिसृभिरन्नाहुतिभिर्यक्ष्य इत्युक्त्वा सोमं पितृमन्तमाज्याहुत्या यक्ष्य इत्यादि मातुःप्रपितामहानन्नाहुत्या यक्ष्य इत्यन्तं मातामहपार्वणार्थमुक्त्वाऽग्निं कव्यवाहनं स्विष्टकृतं सर्पिर्मिश्रितापूपान्नाहुत्या यक्ष्य इत्युक्त्वा यज्ञोपवीती प्रायश्चित्तदेवता[5] इत्यादि । न च होममन्त्रे सामान्यतः पितृशब्दसत्त्वात्तेनैव मातामहादीनामपि होमसिद्धिः । न तु प्राकृतस्तदर्थं होम इति वाच्यम्[6] । पितृपितामहप्रपितामहोद्देशेनैव निर्वापस्य विहितत्वेन तदनुरोधेन होमेऽपि पितृशब्दस्य पित्रादित्रयार्थपरत्वस्यैव क्लृप्तत्वेन मातामहादीनां होमासिद्धेस्तदर्थं प्राकृतस्य पृथग्घोमस्याऽऽवश्यकत्वात् । स च ब्राह्मणभोजनार्थात्पाकादुद्धृतेनान्नेन ।

पात्रासादने—औदुम्बरीं दर्वीमौदुम्बरं स्रुवमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं चत्वारि कपालानि शरावं शूर्पं कृष्णाजिनं शम्यामुलूखलं मुसलं दृषदमुपलां पात्रीं[7] मदन्तीपात्रं वेदं[8] तैजसं मृन्मयं वाऽर्घ्यपात्रद्वयं[9] मेक्षणं तिलान्यवान्ब्राह्मणभोजनपात्राण्यौदुम्बरमिध्मं बर्हिः संमार्गदर्भानवज्वलनद-

१ ङ. °कल्पः । मा° । २ ङ. °त्र । पि° । ३ ङ. °सिश्रा° । ४ ङ. °तॄंस्त्रिरपूपावदानेन पितॄंस्त्रिरन्नेन यक्ष्य इत्युक्त्वा सोमं पितृमन्तमाज्येन यक्ष्य इत्यादि मातुःप्रपितामहानन्नेन यक्ष्य इत्यादि मातामहपार्वणार्थमुक्त्वाऽग्निं कव्यवाहनं स्विष्टकृतं सर्पिर्मिश्रेणापूपान्नेनान्नेन च यक्ष्य इत्युक्त्वा यज्ञो° । ५ ङ. °त्त इ° । ६ ङ. °म् । निर्वापे पि° । ७ ङ. °त्रीं मेक्षणं म° । ८ ङ. °दं ब्राह्मणभोजनपात्राणि तिलान्यवांस्तैज° । ९ ङ. °द्वयमौदु° ।

र्भेनाज्यं चेत्यासाद्य देवार्घ्यपात्रार्थं दर्भद्वयात्मकं[१] पवित्रं कृत्वा पित्र्यर्घ्यपात्रार्थमेकदर्भमयं पवित्रं कृत्वा द्वयं प्रज्ञातं निधायान्यदेकदर्भमयं पवित्रं कृत्वा तेनैव पवित्रेण प्रणीताः संस्कृत्योत्तरेणाग्निं प्रणीतापात्रं संस्थाप्य दर्भेषु सादयित्वा दर्भैरपिधाय प्रणीतापात्रस्थं पवित्रं शरावे निधाय तेन सह शरावमादाय व्रीहिभिस्तं पूरयित्वा 'इममपूपं चतुःशरावं निर्वपामि क्लेशावहं पितॄणा[२]सांपराये देवेन सवित्रा प्रसूतो देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो वो जुष्टं निर्वपामि' इति शूर्पे निर्वपति त्रिर्मन्त्रेण तूष्णीं चतुर्थम्।

केचित्तु चतुःशरावपरिमितानां व्रीहीणामनेन मन्त्रेण सकृन्निर्वपणमिच्छन्ति।

ततः शरावस्थं पवित्रं प्रोक्षणीपात्रे निधाय तत्रोदकमानीय तेन पवित्रेणोत्पूय व्रीहीन्प्रोक्ष्य पात्राणि प्रोक्षति।

ततः कृष्णाजिनमादायोर्ध्वग्रीवं बर्हि[३]र्विशसनमुत्तरतस्त्रिरवधूनोति।

ततस्तत्प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य पुरस्तात्प्रतीचीं तस्य भसदमुपसमस्य कृष्णाजिन उलूखलमधिवर्त्यानुत्सृजन्नुलूखले व्रीहीनावपति।

ततो मुसलमादायावहत्य शम्यया द्विर्दृषदं सकृदुपलां समाहन्ति। एवं पुनर्द्विर्दृषदुपलयोः समाहननम्।

तत उलूखलस्य पुरस्ताच्छूर्पमुपोह्य व्रीहीनभिमृश्य शूर्पे उद्वपति। ततस्त्रिर्निष्पूय तुषान्प्रध्वं*सयित्वाऽऽसादितकपालेभ्य एकं कपालमादाय तुषैः पूरयित्वोत्तरापरमधस्तात्कृष्णाजिनस्योपवपति नान्वीक्षते।

तत उप्तांस्तुषानवबाधतेऽप उपस्पृश्याभ्युक्ष्य कपालं प्रज्ञातं निधाय तण्डुलान्विविच्य पात्र्यां तण्डुलान्प्रस्कन्दयित्वा+ प्रस्कन्नांस्तण्डुलानादाय पुनरुलूखले निक्षिप्य त्रिष्फलीकृत्य तण्डुलान्प्रक्षाल्य क्षालनोदकमपरेणाग्निं निनीय पूर्ववत्कृष्णाजिनमास्तीर्य तस्मिञ्शम्यामुदीचीनकुम्बां निधाय तस्यां दृषदं निधाय दृषद्युपलां संस्थाप्य तण्डुलानवेक्ष्य दृषदि चतुर्वारमधिवपति।

ततः प्राचीं प्रतीचीं[४] वोपलां प्रोह्य मध्यदेशे व्यवधार्य प्राचीं नीत्वा यथासुखमत ऊर्ध्वं संततं पिनष्टि।

---

* ध्वंसयित्वेत्येतावदेव पठितुं युक्तम्। + प्रस्कन्द्येति युक्तः पाठः।

---

१ ङ. °कं पि°। २ च. °णु श°। ३ ङ. बार्हवि°। ४ ङ. °चीं चोप°।

ततः कृष्णाजिने पिष्टानि *प्रस्कन्दयित्वाऽवेक्ष्य स्वयमेवाणूनि पिष्टानि कृत्वा मदन्तीरग्नावधिश्रित्यापरेणाग्निमुपवि[1]श्योपवेषमादाय तेन प्रत्यञ्चावङ्गारौ निर्वर्त्य तयोरेकमुत्तरापरमवान्तरदेशं निरस्याप उपस्पृश्य द्वितीयमग्न्यायतने पश्चार्धेऽवस्थाप्य तस्मिन्नन्येन कपालेन तुषोपवापः कृतस्तदुपधाय तस्मिन्महान्तमेकमङ्गारमधिवर्त्य तस्य पुरतो द्वे कपाले दक्षिणतश्चतुर्थं चोपदध्यात् ।

ततः कपालेष्वङ्गारान्वेदेनाध्यू(ध्यु)ह्य पात्रीं निष्टप्योपवातायां तस्यां तिरःपवित्रं कृष्णाजिनात्पिष्टानि चतुर्वारं समोप्य तानि त्रिरुत्पूय पवित्रं प्रज्ञातं निदध्यात् । अत्र प्रायोगिकाः पिष्टभर्जनं कुर्वन्ति ।

ततः स्रुवेण प्रणीताना[मुदक(?)]मादाय वेदेनोपयम्य पिष्टेष्वानीय मदन्तीरानीय प्रदक्षिणमनुपरिप्लाव्य मेक्षणेन पिष्टानि सं[2]युत्य कूर्माकारं पिण्डं कृत्वा वेदेन कपालयोगादङ्गारानपोह्य पिण्डं कपालेष्वधिश्रित्य प्रथयित्वा पात्रीगतलेपोदकेन परिमृज्य पर्यग्नि कृत्वा दर्भैरभिज्व+लयित्वोल्मुकैः परित(ता)प्य वेदेन साङ्गारं भस्माध्यू(ध्यु)ह्य विदाहमकुर्वञ्श्रपयति ।

ततः पात्रीनिर्णेजनोदकमपरेणाग्निं निनीय स्रुवं दर्वीं च संमृज्याऽऽज्यं विलाप्येत्यादि पवित्रेण पुनराहारमाज्यं त्रिरुत्पूयेत्यन्तं कृत्वा पवित्रमग्नावाधाय वेदेन पुरोडाशादङ्गारानपोह्यावेक्ष्य पात्र्यामुपस्तीर्य पुरोडाशमभिघार्याभिन्दन्नपर्यावर्तयन्पुरोडाशं दक्षिणहस्तेनाऽऽदाय सव्यहस्ते गृहीत्वाऽभिन्दन्नपर्यावर्तयन्वेदेन भस्म प्रमृज्य पात्र्यामुपस्तीर्णे देशे निधाय कपालान्यभिघार्य संख्यायोद्वास्य पुरोडाशं स्रुवेणोपरिष्टादभ्यज्य दक्षिणेन हस्तेनाधस्तादुपाभ्यज्यापरेणाग्निं बर्हिषि सादयति । एतदन्तं सर्वं तूष्णीमेव ।

ततो ब्राह्मणोपवेशनादि उद्धरिष्यामीत्यन्तं मासिकवत् ।

ततः परिधिपरिधानाद्याज्यभागान्तं, मासिकवत्पित्राद्यावाहनम् । नास्त्यपां प्रसेक इति मातृदत्तवैजयन्तीकारौ । पूर्वेद्युःश्राद्ध इमामूर्जमित्यूहेन कर्तव्य एवेति युक्तं प्रतिभाति ।

ततो यज्ञोपवीती युक्तो वहेत्यादि व्याहृतिहोमान्तं कृत्वा प्राचीनावीती दर्व्यामुपस्तीर्य मध्यादारभ्यापूपस्य दक्षिणाप्रागपवर्गाण्यवदानानि यथा भवेयुस्तथा पूर्वेण पूर्वेणावदानद्वयेन संततं परं परमवदानद्वयमवदायाभिघार्याग्नौ प्रत्यगुदगारभ्य दक्षिणाप्रागपवर्गाणि यथा भवन्ति तथा पूर्वेण पूर्वेण संततं जुहोति—

---

* अत्रापि पूर्ववत्प्रस्कन्द्येति युक्तः पाठः । + अभिज्वल्येति पठितुं युक्तम् ।

१ ङ. 'पवेश्यो' । २ च. संयुज्य ।

" उलूखला ग्रावाणो घोषमक्रत हविः कृण्वन्तः परिवत्सरीणाम् । एकाष्टके सुप्रजा वीरवन्तो वयꣳ स्याम पतयो रयीणाꣳ स्वधा नमः " पितृभ्य इदं न मम ।

पुनरवदाय—" अपूपं देव घृतवन्तमग्ने स्वधावन्तं पितृणां तर्पणाय । यथातथं वह हव्यमग्ने पुत्रः पितृभ्य आहुतिं जुहोमि स्वधा नमः " पितृभ्य इदं न मम ।

पुनरवदाय—" अयं चतुःशरावो घृतवानपूपः पयस्वानग्ने रयिमान्पुष्टिमाꣳश्च । प्रतिनन्दन्तु पितरः संविदानाः स्विष्टोऽयꣳ सुहुतो ममास्तु स्वधा नमः " पितृभ्य इदं न मम ।

अथान्नात्पूर्ववदवदाय—" इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा । वधूर्जजान नवगज्जनित्री त्रय एनां महिमानः सचन्ते स्वधा नमः " पितृभ्य इदं न मम ।

पुनस्तथैवावदाय—" एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन दस्यून्व्यसहन्त देवा हन्तासुराणामभवच्छचीभिः स्वधा नमः " पितृभ्य इदं० ।

पुनस्तथैवावदाय—" या प्रथमा व्यौच्छत्सा धेनुरभवद्यमे । सा नः पयस्वती धुक्ष्वोत्तरामुत्तराꣳ समाꣳ स्वधा नमः" पितृभ्य इदं० ।

इति प्रधानाहुतीर्जुहोति । अत्र यद्यपि सूत्र इयमेवेत्यादिषु स्वधाकारस्यापठितत्वान्मन्त्रान्ते नित्यः स्वाहाकार इतिपरिभाषाप्राप्तिस्तथाऽप्यथान्नस्य जुहोतीयमेव सा येत्यत्रत्येनाथशब्देनावदानादिधर्माणामिव स्वधा नमस्कारप्रदानरूपधर्मस्यापि प्रापणात् ।

( * ततः—' सोमाय पितृमते स्वधा नमः ' इत्याद्याः षोडशाऽऽज्याहुतीः षोडश तिस्रो वाऽन्नाहुतीरन्वाधानोत्कीर्तनानुसारेण मातामहपार्वणार्थं जुहुयात् । न वा प्राकृताहुतयः । ) ततोऽपूपमन्नं च लौकिकेनाऽऽज्येन संयुत्य[1] दर्व्यामुपस्तीर्य तस्मादपूपादन्नाच्च सकृत्सकृत्समवदायाभिघार्य—' अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः ' इतीशान्यां प्राचीनावीत्येव जुहोति । अग्नये कव्यवाहनाय स्विष्टकृत इदं० ।

अत्राथशब्दानुवर्तनाद्वारुण्यादीनामभावः । समवदायेतिशब्दात्पूर्ववत्सहैव दर्व्यां निधानम् ।

* धनुश्चिह्नान्तर्गतं त्रुटितं ङ. पुस्तके ।

१ च. संयुज्य ।

ततो यज्ञोपवीती शुल्बप्रहरणादिपूर्णपात्रदानान्तं समाप्य हुतशिष्टमपूपमन्नमाज्यं च मधुना मिश्रयित्वा पृथिवी ते पात्रमित्येतैस्तदभिमृश्य पिण्डार्थमवच्छिद्योदकुम्भं दर्भमुष्टिं चाऽऽदायेत्याद्युपस्थानान्तं पिण्डदानं मासिकवत्कुर्यात् ।

ततः परिविष्टेषु चान्नेषु हुतशिष्टं परिवेष्य[1] पृथिवी त इत्याद्यन्नाभिमर्शनादि मासिकवत् । दक्षिणाकाले—अन्नमामं पक्कं वा ददाति यथासंभवं हिरण्यादि च ।

ततः शेषमनुज्ञाप्योदकदेशं गत्वोदकाञ्जलीन्निनीय प्रत्येत्योदपात्रं प्रवर्तयति ।

अथ पूर्वेद्युःश्राद्धे पुनरायातेति मन्त्र ऊहः । नोदपात्रोपप्रवर्तनमिति मातृदत्तवैजयन्तीकारौ । पिण्डप्रतिपत्तिर्मासिकवत् । सर्वतः समवदायाशनमन्ते तर्पणम् । इति पूर्वेद्युःश्राद्धम् ।

## अथैतदुपयोगिप्रायश्चित्तानि ।

तत्र कपालभेदनप्रायश्चित्तम् । उपधानात्प्राग्यदि कपालं भिद्यते 'गायत्र्या त्वा शताक्षरया संदधामि' इति तत्संधाय 'अभिन्नो घर्मो जीर० संचरन्ति' [इति] तदभिमन्त्र्य 'भूमिर्भूमिमगात्' इति[2] ब्रह्मणाऽभिमन्त्रणे कृते ब्रह्माभावे स्वयमेवाभिमन्त्र्य तूष्णीमप्सु प्रक्षिप्यान्यत्कपालमानीय तस्य सादनप्रोक्षणे कृत्वा 'घर्मो देवा५ अप्येतु' इति कपालेष्वपिसृजति ।

यद्युपधानोत्तरं भिद्येत संधानाद्यप्सु प्रक्षेपान्तं कृत्वाऽन्यदाहृत्य तस्य प्रोक्षणं कृत्वा 'घर्मो देवा५ अप्येतु' इति मन्त्रेण स्वस्थान उपदध्यात् ।

उपधानादूर्ध्वं पुरोडाशाधिश्रयणात्पूर्वं यदि कपालं नश्येत्तदाऽऽश्विनद्यावापृथिव्यचरू[3] कर्तव्यौ । अशक्तौ पूर्णाहुती वा तदैव जुहुयात् । तत एकहायनं वत्सं ब्राह्मणाय दक्षिणां दद्यात् । चरुपूर्णाहुतिकरणाशक्तौ[4] 'या वां कशाम० मिक्षत५ स्वाहा' अश्विभ्यामिदं० । 'मही द्यौः पृथि० मभिः स्वाहा' द्यावापृथिवीभ्यामिदं० । इति द्वे स्रुवाहुती मही द्यौरित्येकामाहुतिं वा स्रुवेण दर्व्या वा हुत्वाऽन्यत्कपालमुपधाय कर्म समापयेत् । पुरोडाशाधिश्रयणानन्तरं[5] भेदने नाशे वा सर्वप्रायश्चित्तमेव न स्थालीपाकादि[6] । नाशशब्देनापहारोऽदर्शनं च । इति कपालभेदनप्रायश्चित्तम् ।

---

१ ङ. 'विष्याम्ना' । २ क. च. 'ति ब्राह्म' । ३ ङ. 'श्विनं चरुं पूर्णाहुतिं वा तदैव कुर्यात् । त' । ४ ङ. 'क्तौ मही द्यौरित्येकामा' । ५ ङ. 'डाशोद्वासनान' । ६ ङ. 'दि । इ' ।

## अथ पुरोडाशभेदनपतनप्रायश्चित्तम् ।

" किमुत्पतसि किमुत्प्रोष्ठाः शान्तः शान्तेरिहाऽऽगहि ।
अघोरो यज्ञियो भूत्वाऽऽसीद सदनꣳ स्वमासीद सदनꣳ स्वम् " ॥

इति तमन्तर्वेदि बर्हिषि निधाय—

" मा हिꣳसीर्देवप्रेरित आज्येन तेजसाऽज्यस्व मा नः किंचन रीरिषः ।
योगक्षेमस्य शान्त्या अस्मिन्नासीद बर्हिषि "

इति तमभिमन्त्रयतेऽभिघारयेद्वा । ततस्तं स्वस्थाने निधाय सर्वप्रायश्चित्तं जुहुयात् । इति पुरोडाशभेदनप्रायश्चित्तम् ।

( * कम्पनखण्डनसर्पणोद्वर्तनेष्वप्येतदेव प्रायश्चित्तम् । भेदनसर्पणयोरायुष्मतीष्टिः । वेपने सुरभिमतीतन्तुमत्यौ । उद्वर्तने सुरभिमत्येवेति बोधायनोक्तमपि शक्तौ सत्यां समुच्चेतव्यम् । गृह्ये तु इष्टिस्थाने तत्तद्दैवतश्चरुः कार्यः । प्रधानहोमोत्तरं हविष्पतनादौ प्रणवेन व्याहृतिभिश्च स्रुवेण जुहुयादिति प्रायश्चित्तग्रन्थे । )

पुरोडाशाधिश्रयणात्पूर्वं कपालाङ्गारनाशे मनस्वती सर्वप्रायश्चित्तं च । वेदविनाशे सर्वप्रायश्चित्तं हुत्वाऽन्यं कुर्यात् । इति प्रायश्चित्तानि ।

## अथाष्टकाश्राद्धम् ।

तत्राष्टकास्वरूपं गृह्य उक्तम्—" अष्टकां व्याख्यास्यामो माघ्याः पौर्णमास्या
योऽपरपक्षस्तस्याष्टमीमेकाष्टकेत्याचक्षते " इति ।

अष्टका नाम नित्यः पितृकर्मसमुदायः । मघाभिः प्रायेण युक्ता भवति या पौर्णमासी सा माघी माघपौर्णमासीत्यर्थः । तस्या योऽपरपक्षस्तस्याष्टमीमेकाष्टकेत्याचक्षतेऽभियुक्ता इत्यर्थः । एका प्रधाना मुख्या, [ अष्टका, ] एकाष्टका । यथैकपुरुष इति प्रधानपुरुष उच्यते । किमपेक्षं प्राधान्यम् । हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणां याश्चतस्रोऽष्टम्यस्ताः सर्वा अष्टकास्ता अपेक्ष्य । किमर्थमेतद्वचनम् । तस्याः पूर्वेद्युरुत्तरेद्युश्च कर्मविधानार्थम् । यद्येवं, तस्य सप्तम्यामनुराधैरित्येव वक्तव्यम् । एवं तर्हि कालसंयोगादष्टकाशब्दः कर्मणीदं चाष्टकादीनां प्राधान्यमितिज्ञापनार्थम् । किमेतस्य ज्ञापने प्रयोजनं समाख्यासामर्थ्यात्सर्वासामष्टकानामिच्छातः क्रिया स्यात् । अस्यास्तु प्राधान्यान्नियततेति । एकाष्टकायां दीक्षेरन् । एकाष्टकायां क्रयः संपद्यत इत्यत्राप्यस्याः संप्रत्ययश्च ।

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके ।

१ ङ. °नप्रा° । २ ङ. कुर्यात् । ३ क. गृह्ये—" अ° ।

माघ्याः पौर्णमास्या उभावपि पक्षौ तयोर्मध्ये कस्यात्र ग्रहणमिति संदेहे प्राप्ते ततः पूर्वेद्युरनूराधेष्वपराह्ण इत्यनन्तरोदाहृतसूत्रगतानूराधशब्दादनन्तरस्यैव ग्रहणम् । अस्मिञ्श्राद्धे गोपशुराम्नातः, स चास्मिन्युगे निषिद्धः, तन्निषेधादेव तदाश्रितमनुष्ठानमपि लुप्यते । न च सूत्रकृता मांसाभावे शाकमितिवत्प्रतिनिधिरत्राऽऽम्नातोऽतस्तद्व्यतिरिक्त एव प्रयोग उच्यते । कर्ताऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मासिकवद्देवता उत्कीर्त्य नित्यविधिरूपमष्टकाश्राद्धं करिष्य इति संकल्प्य निमन्त्रणादि मासिकवत्कुर्यात् । अन्वाधाने—अष्टकाश्राद्धहोमे या यक्ष्यमाणा देवता इत्यादि व्याहृत्यन्तमुक्त्वा प्राचीनावीती पितॄंस्त्रिभिरन्नाहुतिभिर्यक्ष्य इत्युक्त्वा सोमं पितृमन्तमाज्याहुत्येत्यादि मातुः-प्रपितामहान्[२]न्नाहुत्येत्यन्तं वदेत् । न वा प्राकृताहुतयः ।

ततोऽग्निं कव्यवाहनं स्विष्टकृतं सर्पिर्मि[३]श्राऽन्नाहुत्या यक्ष्य इत्युक्त्वा यज्ञोपवीती प्रायश्चित्तहोमेऽ[४]ग्निं तिसृभिरित्याद्याज्यभागान्तं मासिकवत्कृत्वा प्राचीनावीती पितॄनावाहयेत् 'आयात पितरः' इति । 'आपो देवीः० अष्टकायामिमामूर्जमूतये' इत्यपां प्रसेकं कुर्यात् । नास्त्यपां प्रसेक इति मातृदत्तवैजयन्तीकारौ ।

ततो यज्ञोपवीती 'युक्तो वह' इत्यादि व्याहृतिहोमान्तं कृत्वा प्राचीनावीती देवपवित्रसंस्कृतादन्नादवदानधर्मेणावदायावदाय जुहोति—

"एकाष्टकां पश्यति दोहमानामन्नं मांसवद्घृतवत्स्वधावत् । तद्ब्राह्मणैरतिपूतमन्नं तमक्षितं तन्मे अस्तु स्वधा नमः" पितृभ्य इदं० ।

कलौ मांसवदित्येतस्य पदस्य लोपः ।

"एकाष्टका तपसा तप्यमाना संवत्सरस्य पत्नी दुदुहे प्रपीना । तं दोहमुपजीवाथ पितरः संविदानाः स्विष्टोऽयं सुहुतो ममास्तु स्वधा नमः" पितृभ्य इदं० ।

"संवत्सरस्य प्रतिमां० व्यश्नवत्स्वधा नमः" पितृभ्य इदं० ।

इत्याहुतीर्जुहुयात्[६] । मातामहपार्वणार्थं सोमाय पितृमत इत्याद्याः षोडशाऽऽज्याहुतीः षोडश तिस्रो वाऽन्नाहुतीश्च जुहुयात् । अथवा मन्त्रगतपितृशब्दस्य सपिण्डीकरणश्राद्धजन्यपितृत्वपरतया मातामहादिसाधारण्येन पित्रादित्रयस्य होमदेवतात्ववचनेनैव पितृशब्देन मातामहत्रयस्यापि होमदेवतात्वसिद्धेर्न मातामहपार्वणार्थं पृथग्घोमः ।

---

१ क. 'माज्येनेत्या॰' । २ क. च. 'नन्नेन यक्ष्य इत्य॰' । ३ क 'मिश्रेणान्नेन य॰' । ४ क. 'ग्नि द्विरित्या॰' । ५ क. 'हुतित्रयं जुहु॰' । ६ क. 'त् । अथ॰' । ७ क. 'द्रतुल्यापि' ।

ततः—“ अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः ” इति सर्पिर्मिश्रेणान्नेन स्विष्टकृद्धर्मेण जुहोति । अग्नये कव्यवाहनाय स्विष्टकृत इदं० ।

ततो यज्ञोपवीती शुल्बप्रहरणादि पूर्णपात्रदानान्तं कृत्वा हुतशेषं परिविष्यान्नाभिमर्शनादि कुर्यात् ।

दक्षिणाकालेऽन्नं धनं वा दद्यात् । अन्नधनदाने त्वत्रानियते इति वचनान्मात्रान्नधनदानयोरेव दानमिति नियमः । तेन वस्त्रादिदानमप्यत्रानुमतं भवति । अष्टकायां पुनरायात नो गृहानित्यूहेनोदपात्रोपप्रवर्तनं नेति मातृदत्तवैजयन्तीकारौ । शेषं मासिकश्राद्धवत् । अन्ते तर्पणम् । अत्र कामकालौ विश्वे देवाः । ‘इष्टिश्राद्धे क्रतुर्द(द?)क्षावष्टम्यां कामकालकौ’ इति प्रयोगपारिजातेशङ्खोक्तेः ।

द्वितीयादिषु तिसृष्वष्टकासु द्रव्यविधिर्हेमाद्रौ वायुपुराणे—

“ आद्याऽपूपैः सदा कार्या मांसैरन्या भवेत्सदा ।
शाकैरन्या तृतीया स्यादेष द्रव्यगतो विधिः ” इति ॥

तत्रैव ब्राह्मे तु—शाकमांसापूपात्मकानि द्रव्याणि तिसृष्वेतासु विधाय भाद्रगतायामष्टकायां शाकविधिरुक्तः ।

अत्र हेमाद्रिः—“शाकादिशब्दाः सर्वस्यापि भोज्यस्य तत्तद्द्रव्यप्रधानत्वप्रतिपादनपराः, न तु द्रव्यान्तरनिवृत्तिपराः” इति ॥

अतश्च तीर्थयात्राङ्गश्राद्ध इदं घृतं सोपस्करमितिवदिमेऽपूपाः सोपस्करा इदं शाकं सोपस्करमित्येवं त्यागवच ऊह्यम् । श्राद्धे मांसस्य कलिवर्ज्यत्वात्तत्स्थाने माषान्नं देयम् । इदं माषान्नं सोपस्करमित्येवं संकल्प इति द्रष्टव्यम् । ‘ पितरो यत्र पूज्यन्ते ’ इति वचनात् ‘ शेषं षाट्पौरुषं विदुः ’ इतिविष्णुधर्माच्च मातामहपार्वणप्राप्तिः । न चैवं सांवत्सरिकादावपि मातामहपार्वणप्राप्तिरास्तामिति वाच्यम् ।

“ कर्षूसमन्वितं मुक्त्वा तथा श्राद्धानि षोडश ।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः ”

इति वचनेन तन्निवारणात् । इत्यष्टकाश्राद्धम् ।

## अथान्वष्टकाश्राद्धम् ।

“ महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च ।
नवदैवतमत्रेष्टम् ”

---

१ इ. च. ‘कव’ ।

इतिवचनान्मातृपार्वणमप्यत्र । कर्ता पितृपितामहप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणाम्, मातृपितामहीप्रपितामहीनाममुकदानाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणाम्, मातामहमातुःपितामहमातुःप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानां तृप्त्यर्थमन्नेन हविषाऽन्वष्टकाश्राद्धं करिष्य इति संकल्पः । निमन्त्रणादि सर्वं मासिकवत् । अन्वाधानेऽन्वष्टकाश्राद्धहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा प्राचीनावीती प्रधानहोमे—पितॄन्द्वाभ्यामन्नाहुतिभ्यां यक्ष्ये । अग्निं कव्यवाहनं स्विष्टकृतमन्नाहुत्या यक्ष्य इत्युक्त्वा यज्ञोपवीती प्रायश्चित्तहोमे—अग्निं तिसृभिराज्याहुतिभिरित्याद्याज्यभागान्तं कुर्यात् ।

ततः पित्रादीनावाह्यान्वष्टकायामिमामूर्जमित्यूहेनापां प्रसेकः कार्य एव । नेति मातृदत्तवैजयन्तीकारौ ।

व्याहृतिहोमान्ते प्राचीनावीती देवपवित्रसंस्कृतादन्नादवदानधर्मेणावदाँयावदाय जुहोति 'त्वमग्ने अया० भेषजᳪ स्वधा नमः' पितृभ्य इदं० । 'प्रजापते न त्वदेता० रयीणाᳪ स्वधा नमः' पितृभ्य इदं० । इत्याहुतिद्वयं जुहुयात् ।

अत्रैन्द्राग्न्यायेन पितॄणां देवतात्वं द्रष्टव्यम् ।

स्वाहाकारेण दानपक्षे न प्राचीनावीतं नापि च पितॄणां देवतात्वमिति ज्ञेयम् । आन्वष्टक्ये स्वधानमस्कारप्रदानतान्नधनदानयोरनियतत्वं सिद्धं भवतीति भाष्यग्रन्थादिदं लभ्यते ।

प्राकृताहुतीनां पूर्ववद्विकल्पः । करणपक्ष आवृत्तिद्वयम् । यन्मे मातेत्यादिमन्त्रत्रयस्य मातृपार्वणपरत्वासंभवान्नैतन्मन्त्रत्रयेण होमः किंतु नामभिरेव । 'अमन्त्रास्वमुष्मै स्वाहा' इतिवचनात् । यन्मे मातेत्यादिमन्त्रत्रयस्यात्रासंभवेनामन्त्रत्व आहुतित्रयस्य सिद्धे 'अमन्त्रास्वमुष्मै स्वाहा' इति परिभाषायाः प्रवृत्तिः ।

ततः 'अग्नये क० कृते स्वधा नमः' इत्यन्नेनैव स्विष्टकृद्धर्मेण स्विष्टकृतं जुहोति । अग्नये कव्यवाहनाय स्विष्टकृत इदं० ।

प्रधानहोमे स्वाहाकारपक्षे यज्ञोपवीती—'अग्नये स्विष्टकृते स्वाहा' इत्येवं स्विष्टकृद्धोमः कार्यः ।

१ ङ. °तॄन्द्विरन्नेन य° । च. °तॄनन्नाहु° । २ ङ. °मन्नेन य° । ३ ङ. °भि त्रिरि° । ४ ङ. °दाय । ५ च. °म् । तन्मे । ६ च. °यस्याभासंभवेन ।

ततो यज्ञोपवीती—शुल्बप्रहरणादि पूर्णपात्रदानान्तं कुर्यात् ।

ततो हुतशेषं परिविष्याज्ञाभिमर्शनादि । मातृपार्वणे मातॄणां क्षेष्ठाः पितामहीनां क्षेष्ठाः प्रपितामहीनां क्षेष्ठा इति यथायथमूहः । अञ्जलिदाने 'एष ते मातर्मधुमाꣳ ऊ० तावत्यस्या मात्रा तावानस्या महिमा तावतीमेनां भूतां ददामि॰ मह्यं मात्रेऽक्षितोऽनुपदस्तः स्वधा भवतां ताꣳ स्वधामक्षितां तैः सहोपजीवामुकद ऋचस्ते महिमा ' 'एष ते पितामहि म० तावत्यस्या मात्रा तावानस्या महिमा तावतीमेनां भूतां दद्मा० मह्यं पितामह्या अक्षि० भवतां ताꣳ स्वधामक्षितां० जीवामुकदे यजूꣳषि ते महिमा ' 'एष ते प्रपितामहि म० तावत्यस्या मात्रा तावानस्या महिमा तावतीमेनां भूतां दद्मा० मह्यं प्रपितामह्या अक्षि० भवतां ताꣳ स्वधामक्षिता० वामुकदे सामानि ते महिमा ' इत्यूहेनाञ्जलिदानम् । 'परा यात पितरः०' 'अथान्वष्टकायां(?) पुनरायात० सुवीराः' इत्युदपात्रमुपप्रवर्तयति । नैतदिति मातृदत्तवैजयन्तीकारौ । अन्यत्सर्वं मासिकवत् । अत्रान्त एव तर्पणं पार्वणत्रयस्य । अत्राष्टम्यनुरोधेन नवमी ग्राह्या । जीवन्मातृकस्य मातृपार्वणलोपः । जीवन्मातामहस्य मातामहपार्वणलोपः । जीवत्पितृकस्य त्वनारम्भ एव । इत्यन्वष्टकाश्राद्धम् ।

श्राद्धत्रयाशक्तावष्टम्यामेव कार्यम् । अस्याप्यसंभव उदकुम्भदानं हिरण्यदानं च । अस्याप्यसंभवेऽनडुहे यवसं देयम्, लौकिकाग्निना कक्षं दहेद्वा । प्रत्याम्नायान्तरमप्याश्वलायनसूत्रवृत्तिकृतोपन्यस्तम्—"अपि वा श्राद्धमन्त्रानधीयीत" इति । बुद्ध्यैतस्याप्यकरणे प्राजापत्यम्, अमत्या तूपवासः प्रायश्चित्तम् । दशवारं गायत्र्या जलमभिमन्त्र्य तज्जलं गायत्रीमन्त्रेण दशवारं पिबेत् । अन्ते सर्वस्य पानम् । प्रतिपानं गायत्र्या आवृत्तिः, इति पूर्वेद्युरष्टकान्वष्टकाश्राद्धभोक्तुः प्रायश्चित्तम् । इति सूत्रोक्तानि श्राद्धानि ।

## अथ श्रवणाकर्म ।

तच्च श्रावण्यां पौर्णमास्यां कर्तव्यम् । सर्वाधानी सायमग्निहोत्रानन्तरं दक्षिणाग्निं कर्मार्थमुपसमादधाति । अर्धाधानी सायमग्निहो[3]त्रमौपासनहोमकर्तव्यतापक्षे सायमौपासनहोममपि कृत्वा दक्षिणाग्निमुपसमादधाति । अनाहिताग्निः सायमौपासनहोमानन्तरमौपासनाग्निमुपसमादधाति । तत्र पौर्णमास्यस्तमयप्रभृति प्रकृतकर्मकालव्यापिनी पूर्वेत्र चेत्सैव ग्राह्या । "कर्मणो यस्य यः

---

१ ङ. ददाति । २ ङ. च. कर्तव्यम् । ३ ङ. °होत्रं सायमौपासनं च हुत्वा दक्षि° । ४ च. °स्तसम° ।

कालस्तत्कालव्यापिनी तिथिः " इति वचनात् । दिनद्वयेऽपि तत्संबन्धे सत्यसति वा परैव । " श्रवणाकर्मणि ग्राह्या पौर्णमासी परैव तु " इति निगमोक्तेः ।

कर्ता[१] श्रावण्यां पौर्णमास्यां प्रातः कृतनित्यक्रियो देशकालौ संकीर्त्य नित्यविधिरूपं श्रवणाकर्म करिष्य इति संकल्प्य गणपतिं संपूज्य, प्रथमप्रयोगश्चेत्प्रातः स्वस्तिवाचनं मातृकापूजनं वृद्धिश्राद्धं च विदध्यात्[२] । बहिर्भूतं वा गणपतिपूजनस्वस्तिवाचनादि । अस्मिन्पक्षे रात्रावेव मुख्यसंकल्पः । प्रथमप्रयोगे गुरुशुक्रास्तादि वर्जयेत् ।

ततो यथाविहितमग्निमुपसमाधाय[३]—अक्षता *धाना अक्षताल्लाँजान्सक्तून्किंशुकान्याञ्जनाभ्यञ्जने आज्यमिति सिद्धान्यादद्यात् । भर्जिता यवा धानाः, लाजा व्रीहिमय्यः, भर्जितयवपिष्टानि सक्तवः । किंशुकानि पलाशपुष्पाणि । आञ्जनाभ्यञ्जने प्रसिद्धे । एतान्युपकल्पयति । ततो दक्षिणाग्निं परिस्तृणाति । अनाहिताग्निरौपासनम् । यदि पूर्वेद्युरन्वाधानं कृतं भवति तदौपासनाग्नेः परिस्तृतत्वान्न परिस्तरणम्[४] । सायंहोमात्प्राक्परिस्तरणाक्रियायां कर्मार्थं परिस्तरणं कर्तव्यमेव । दक्षिणाग्नेस्तु सायमग्निहोत्रहोमानन्तरमेवैतस्य[५] कर्तव्यत्वविधानेनैतत्कर्मोत्तरमेवेष्ट्यर्थपरिस्तरणप्राप्तेरपरिस्तृतत्वात्परिस्तरणं[६] भवत्येवं[७] । पार्वणस्थालीपाके सायमौपासनहोमोत्तरं परिस्तरणक्रियापक्षे औपासनाग्नेरप्यनेनैव न्यायेन परिस्तरणं कार्यमेव । तत औपासनाग्नौ होमे तं समन्त्रं परिषिञ्चेत् । दक्षिणाग्नौ होमे तं तूष्णीम् । तत उत्तरतोऽग्नेर्दर्भानास्तीर्य तेषु स्रुवं दर्वीमाज्यस्थालीं प्रोक्षणीपात्रमाज्यासादनार्थं दर्भान्[८]धानादिद्रव्याणि समिधं संमार्गदर्भानवज्वलनदर्भानाज्यं चाऽऽसाद्य पवित्रकरणाद्याज्यसंस्कारान्तं कुर्यात् । तत्र पर्यग्निकरणमाज्यस्य धानादिभिः सहैवेति विशेषः ।

ततः पात्रान्तरे धाना लाजान्सक्तूंश्च प्रक्षिप्यासंस्कृतेनाऽऽज्येन मिश्रयित्वा तूष्णीं समिधमभ्याधाय[९] संस्कृतेनाऽऽज्येन[१०] स्रुवेण दर्व्यामुपस्तीर्य द्विरवदायाभिघार्य—' नमोऽग्नये पार्थिवाय पार्थिवानामधिपतये स्वाहा ' अग्नये पार्थिवाय पार्थि-

* अत्राक्षताशब्दरहितः " धाना लाजान्सक्तून् " इत्यादिरेव पाठो युक्त इति भाति, उत्तरग्रन्थानुरोधात् ।

१ ङ. °र्ता दे° । २ च विधाय । ३ क. च. °मादधाति । अक्षता धाना लाजा व्रीहि° । ४ ङ. °म् । द° । ५ च. °मेव त° । ६ च. °नेन त° । ७ ङ. °व । तत । ८ क. च. °र्भानुपवेषमक्षता धाना लाजाः सक्तवः पलाशपुष्पाण्याञ्जनाभ्यञ्जने समि° । ९ ङ. °धमाधा° । १० ङ. °ज्येनोप° ।

वानामधिपतय इदं०। पूर्ववदुपस्तीर्यावदायाभिघार्य—'नमो वायवे विभूमत[1] आन्तरिक्ष्याणामधिपतये[2] स्वाहा' वायवे विभूमत आन्तरिक्ष्याणामधिपतय[3] इदं०। पूर्ववदुपस्तीर्यावदायाभिघार्य—'नमः सूर्याय रोहिताय दिव्यानामधिपतये स्वाहा' सूर्याय रोहिताय दिव्यानामधिपतय इदं०। पूर्ववदुपस्तीर्यावदायाभिघार्य—'नमो विष्णवे गौराय दिश्यानामधिपतये स्वाहा' विष्णवे गौराय दिश्यानामधिपतय इदं०। इत्याहुतिचतुष्टयं हुत्वा पलाशपुष्पाण्यसंस्कृताज्येन संयुत्य[4]—'जग्धो मशको जग्धा विचष्टिर्जग्धो व्यध्वरः स्वाहा' अग्नय इदं०। 'जग्धो व्यध्वरो जग्धा विचष्टिर्जग्धो मशकः स्वाहा' अग्नय इदं०। 'जग्धा विचष्टिर्जग्धो मशको जग्धो व्यध्वरः स्वाहा' अग्नय इदं०। इत्याहुतित्रयं जुहुयात्। सर्पा अत्र देवतेति केचित्। इन्द्र इत्यन्ये। प्रजापतिरित्यपरे। अग्नय इदमित्येव युक्तम्।

ततः परिस्तरणानि विसृजेत्। यद्येतदर्थमेव परिस्तरणं भवेत्। तत उत्तरपरिषेकं कृत्वा हुतशेषं धानादिकमुदकुम्भं दर्भमुष्टिं चाऽऽदाय होमदेशात्प्राचीं दिशमुपनिष्क्रम्य गृह एव शुद्धे देशे बलिदानपर्याप्तं स्थलं संमृज्याभ्युक्ष्य[5] प्रागग्रान्दर्भांस्तत्राऽऽस्तीर्य तेषु धानाद्यन्नत्रयं लौकिकाज्यमिश्रितं कृत्वा तेन सर्पेभ्यश्चतुरो बलीन्हरति। 'ये पार्थिवाः सर्पास्तेभ्य इमं बलिं हरामि' इति प्रथमः। 'य आन्तरिक्ष्याः[6] सर्पास्तेभ्य इमं बलिं हरामि' इति द्वितीयः। 'ये दिव्याः सर्पास्तेभ्य इमं बलिं हरामि' इति तृतीयः। 'ये दिश्याः सर्पास्तेभ्य इमं बलिं हरामि' इति चतुर्थः। इति बलीन्दत्त्वा सकृदन्ते परिषेकं कुर्यात्।

ततो बलिष्वाञ्जनाभ्यञ्जने दत्त्वा—नमो अस्तु सर्पेभ्य इति त्रयाणामग्निः सर्पा अनुष्टुप्, बल्युपस्थाने विनियोगः। 'नमो अस्तु सर्पेभ्यो० येऽदो रोचने० या इषवो०' इति सर्वान्बलीनुपतिष्ठते। तत उदकुम्भमादाय—'अपश्वेतपदा जहि[7] पूर्वेण चापरेण च सप्त च मानुषीरिमास्तिस्रश्च राजबान्धवैर्न[8] वै श्वेतस्याभ्याचारेणाहिर्जघान कंचन श्वेताय वै दर्वाय[9] नमो नमः श्वेताय वै दर्वाय[10]' इति सकृन्मन्त्रमुक्त्वा त्रिः प्रदक्षिणं स्वगृहं परिषिञ्चन्परिक्रामेत्।

स्वसमीप एतावन्तं देशं सर्पा नोपक्रामेयुरिति[11] यः कामयेत स तावन्तं देशमपि परिक्रामेत्।

---

१ ङ. विभुम°। २ ङ. °रिक्षाणा°। ३ ङ. च. °रिक्षाणा°। ४ च. संयुज्य। ५ च. तेभ्यः। ६ ङ. च. °रिक्षाः स°। ७ क. जहिः पू°। ८ ङ. °जबन्धनैर्न। ९ च. दर्भाय। १० च. दर्भाय। ११ ङ. °नाऽऽक्रा°।

अथ दिश उपतिष्ठते । सर्पबलिस्थानस्य पुरस्तात्प्रत्यङ्मुखः स्थित्वा समीचीं नामासीत्यादिषण्मन्त्राणामग्निर्दिशो यजुः । दिगुपस्थाने विनियोगः । ‘ समीची नामासि० तं वां जम्भे दधामि ’ इति प्राचीं[1] दिशमुपतिष्ठते ।

ततो दक्षिणत उदङ्मुखः स्थित्वा—‘ ओजस्विनी नामासि० दाकू र० ’ इति दक्षिणां दिशमुपतिष्ठते ।

ततः पश्चात्प्राङ्मुखः स्थित्वा—‘प्राची नामा० स्वजो र०’ इति प्रतीचीं दिशमुपतिष्ठते ।

तत उत्तरतो दक्षिणामुखः स्थित्वा—‘ अवस्थावा ना० श्व राजी र० ’ इत्युत्तरां दिशमुपतिष्ठते ।

ततः प्रतिनिवृत्य पश्चादूर्ध्वमुखः स्थित्वा—‘ अधिपत्नी ना० श्वित्रो र० ’ इत्यूर्ध्वां दिशमुपतिष्ठते । तत्रैवाधोमुखः स्थित्वा—‘ वशिनी ना० ’ इत्यधरां दिशमुपतिष्ठते ।

अत ऊर्ध्वं प्रत्यहमेतेनैव विधिनैतान्बलीन्हरति । अस्मिन्द्वितीयादिबलिहरणे नाऽऽज्यहोमकिंशुकहोमौ, न च परिषेचनम् । मार्गशीर्ष्यां चतुर्दश्यामन्तिमं बलिहरणम् ।

अथवा यस्मिन्नह्नि प्रत्यवरोहणं तस्मादर्वाचीनानि दिनानि वारगणनया गणयित्वा तावतस्तन्त्रेण श्रवणाकर्मदिन एव बलीन्हरेत् ।

उभयकल्पेऽप्यन्तिमे बलिहरणे ‘ ये पार्थिवाः ’ इत्यादिषु चतुर्षु मन्त्रेषु हरामीत्येतस्य स्थाने निरवदास्यन्नित्यूहः ।

निरवदास्यन्नित्येतावानेव मन्त्र इति केचित् । अस्मिन्मते चतुर्वारं मन्त्रस्याऽऽवृत्तिर्द्रष्टव्या ।

बलेर्बलिदातुश्चान्तरा केनापि व्यवधानं न कार्यमोपस्थानात् ।

ततः प्रत्येत्य हस्तपादप्रक्षालनं कृत्वाऽऽचम्य ब्राह्मणान्संभोज्य विष्णुं स्मरेत् ।

अत्र प्रमादादिनैकस्मिन्दिने बलिदानाकरणे प्रातर्होमोत्तरं बलिदानाकरणजन्यदोषपरिहारार्थं सर्वप्रायश्चित्तहोमपूर्वकं *पादकृच्छ्रप्रत्याम्नायभूतं यथाशक्ति द्रव्यदानं करिष्य इति संकल्प्य लौकिकाग्नावापूर्विकतन्त्रेण ‘त्वं नः’ ‘स त्वं नः’

---

* पादकृच्छ्रं करिष्य इत्येवात्र पठितुं युक्तम् । उत्तरत्र ततः पादकृच्छ्रमित्यादिग्रन्थानुरोधात् । ङ. पुस्तकस्थपाठानुरोधेन तु यथाश्रुतमेव युक्तम् ।

---

१ ङ. प्राचीं ।

इत्याद्याः सप्ताऽऽहुतीः समस्तव्याहृतिभिरेकां[1]माज्याहुतिं च जुहुयात्[2] । ततः पादकृच्छ्रं चरेत् । अशक्तौ तत्प्रत्याम्नायत्वेन यथाशक्ति द्रव्यं दद्यात्[3] । तत आतमितोः प्राणायामं कृत्वा प्राप्त[4]कालबलिदानं कुर्यात् । एतच्चोपोषितेनैव कार्यम् । श्रवणाकर्मणो मुख्यकाले दैवादकरणे लोपः ।

मुख्यकाले[5]ऽपि सकृदेव करणं न प्रतिवर्षमिति केचित् । यथोक्तमेतत्तुल्यन्यायाष्टकाप्रकरणे कर्केण—" सकृत्करणं चाभ्यासाश्रवणात् " इति ।

अन्ये त्वीदृशपाकयज्ञानां प्रत्यब्दमावृत्तिमाहुः ।

उक्तं हि रेणुकारिकायाम्—

" अथातः श्रवणाकर्म शास्त्रदृष्ट्या मयोच्यते ।
श्रावण्यामेव तत्कार्यमभावाद्गौणकालतः ॥
वचनात्सूत्रकारस्य सकृदस्य क्रिया भवेत् ।
एवमेवेतरेषां स्यादावृत्तिर्वा स्मृतेर्बलात् ॥
सकृत्करणमिच्छन्ति पाकयज्ञेषु केचन ।
आवृत्तिं केचिदिच्छन्ति तत्राऽऽवृत्तिः सतां मता " इति ॥

प्रतिसंवत्सरं[6] श्रवणाकर्मावृत्तिपक्ष एकस्मिन्वत्सरे तल्लोपे प्रायश्चित्तमात्रमनुष्ठेयम् । तत्र प्रयोगः—

मार्गशीर्षपौर्णमास्यां प्रातरौपासनहोमोत्तरं देशकालौ संकीर्त्य[7] श्रवणाकर्मलोपजनितप्रत्यवायपरिहारार्थं प्रायश्चित्तहोमपूर्वकं प्राजापत्यमेकमहमाचरिष्य इति संकल्प्य लौकिकाग्नावाघारवत्तन्त्रेणाऽऽपूर्विकतन्त्रेण वा ' त्वं नः ' ' स त्वं नः ' इत्याद्याः पूर्ववत्सप्ताऽऽहुतीः समस्तव्याहृतिभिरेकाज्याहुतिं च हुत्वा प्राजापत्यं चरेत् ।

इति संस्काररत्नमालायां पद्धतौ श्रवणाकर्मप्रयोगः ॥

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायाः सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालाया उत्तरार्धे दशमं प्रकरणम् ॥ १० ॥

१ क. ङ. °काहु° । २ ङ. °त् । पादकृच्छ्रप्रत्या° । ३ ङ. दत्त्वा—आतमि° । ४ च. प्राप्ते काले ब° । ५ च. °काले स° । ६ ङ. °रं सर्पबल्यावृ° । ७ ङ. °र्त्य सर्पबलिलो° ।

अथैकादशं प्रकरणम् ।

# अथाऽऽग्रहायणीकर्म ।

कर्ता मार्गशीर्ष्यां पौर्णमास्यां देशकालौ संकीर्त्य नित्यविधिरूपमाग्रहायणाख्यं कर्म[1] करिष्य इति संकल्प्य गणपतिं संपूज्य प्रथमप्रयोगश्चेत्प्रातः स्वस्तिवाचनं मातृकापूजनं नान्दीश्राद्धं च विदध्यात् । बहिर्भूतं वा गणपतिपूजनस्वस्तिवाचनादि । अस्मिन्पक्षे रात्रावेव मुख्यः संकल्पः । ततो रात्रौ होमान्तेऽग्निमुपसमाधाय स्थालीपाकं कुर्यात् । स यथा—समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वाऽऽग्रहायणस्थालीपाकहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा प्रधानहोमे—जातवेदसं पायसाहुत्या[3] रात्रिं द्वाभ्यां पायसाहुतिभ्यां यक्ष्ये, पौर्णमासीं पायसाहुत्या यक्ष्ये, अग्निं ज्योतिष्मन्तं हुतशेषाहुत्या[6] यक्ष्ये । प्रायश्चित्तहोमे—अग्निं तिसृभिरित्यादि । पात्रासादनकाले स्रुवं दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रं चरुस्थालीं[8] शूर्पं कृष्णाजिनमुलूखलं मुसलमुपवेषं[9] मेक्षणमिध्मं बर्हिः संमार्गदर्भान[10]वज्वलनदर्भानाज्यं तृणमिति पात्राण्यासादयति[11] ।

अत्र तृणं द्वंद्वतासिद्ध्यर्थमेव ।

ततो ब्रह्मोपवेशनादि, स्थालीपाकविधिना चरुश्रपणं कृत्वा स्रुवदर्व्यौ संमृज्याऽऽज्यं संस्कृत्य चर्वभिघारणादि व्याहृतिहोमान्तं कृत्वा सर्वानमात्यान्संनिधावुपवेश्यावदानधर्मेण जुहोति—

" इडायै सृप्तं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व ।
ये ग्राम्याः पशवो विश्वरूपास्तेषाꣳ सप्तानामिह रन्तिरस्तु पुष्टिः स्वाहा "

जातवेदस इदं० ।

" यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवाऽऽयतीम् ।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा " रात्र्या इदं० ।

" शिवा पशुभ्यो दारेभ्यः शिवा नक्तं शिवा दिवा ।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा " रात्र्या इदं० ।

१ च. °मं ना° । २ क. च. °यणीस्था° । ३ ङ. °यसेन रात्रिं द्विवारं पायसेन यक्ष्ये । ४ च. °त्या यक्ष्ये द्वा° । ५ ङ. °यसेन य° । ६ ङ. °शेषेण य° । ७ ङ. °ग्निं द्विरित्या° । ८ ङ. °लीं मेक्षणं शू° । ९ ङ. °षं संमा° । १० ङ. °र्भानिध्मं बर्हिरवज्व° । ११ ङ. °साद्य ब्र° ।

" पौर्णमासी पूरयन्त्यायान्त्यपरापरान् ।
मासार्धमासान्विभजन्ती सा नः पूर्णाऽभिरक्षतु स्वाहा " पौर्णमास्या इदं०।

नात्र वारुण्यादिहोमः ।

स्विष्टमग्न इत्यस्याग्निर्ज्योतिष्मांस्त्रिष्टुप् । स्विष्टकृद्धोमे विनियोगः—' स्विष्टमग्ने अभि० जरं न आयुः स्वाहा ' इति स्विष्टकृद्धर्मेण जुहोति । अग्नये ज्योतिष्मत इदं० ।

ततः शुल्बप्रहरणादिपूर्णपात्रदानान्तं कुर्यात् ।

ततः पाणी प्रक्षाल्य प्रतिक्षत्र इत्यस्य विश्वे देवा भूमिर्यजुः । भूम्यालम्भने विनियोगः । ' प्रतिक्षत्रे प्रतितिष्ठा० प्रत्यङ्गेषु प्र० देवैरवन्तु मा ' इति भूमिमालभते ।

ततोऽपरेणाग्निं दक्षिणा गृहपतिरुपविशति । तदुत्तरतो भार्या तदुत्तरतो ज्येष्ठक्रमेण पुत्रपौत्रादयस्तद्भार्या अप्रत्तदुहितरश्च । स्योना पृथिवीत्यस्य[1] स्वयंभूर्भूमिर्गायत्री । बडित्थेत्यस्य विश्वे देवा भूमिरनुष्टुप् । संवेशने विनियोगः । ' स्योना पृथि० सप्रथाः ' ' बडित्था पर्वतानां० महिनि ' इति द्वाभ्यां तत्र स्थिता एव गृहपतिप्रमुखाः सर्वे दक्षिणपार्श्वे[2][3] प्राक्शिरस उदङ्मुखाः *संविशन्ति । उदायुषेत्यस्य सोमः सोमोऽनुष्टुप् । उत्थाने विनियोगः । ' उदायुषा० ममृतां॥ अनु ' इत्युत्तिष्ठेयुः । उदस्थाममृता अभूमेत्युत्थाय जपेयुः ।

तत आचम्य पुनःसंवेशनादि द्विवारं कुर्युः । अनुपनीतानां स्त्रीणां च तूष्णीमेव संवेशनादि । तेषां ये मन्त्रविद इति वचनात् । ततो भोजनार्थेनान्नेन त्रिवृदन्नहोमं कृत्वा ब्राह्मणानन्नेन परिविष्य पुण्याहादि वाचयित्वा तस्मिन्नेव प्रदेश एतां रात्रिं वसन्ति ।

ततो ब्राह्मणान्संभोज्य कर्मसाद्गुण्याय विष्णुं स्मरेत् । इत्याग्रहायणीकर्म ।

श्रवणाकर्माग्रहायणीकर्मणोरकरणे प्रायश्चित्तमाह प्रजापतिः—

" हविर्यज्ञेष्वशक्तस्य लुप्तमप्येकमादितः ।
प्राजापत्येन शुध्येत पाकसंस्थासु चैव हि " इदं च मत्या लोपे ।

अमत्या तु—" अकृत्वाऽन्यतमं यज्ञं यज्ञानामधिकारतः ।
उपवासेन शुध्येत पाकसंस्थासु चैव हि " इतिवचनादुपवासः ।

---

* एतदुपरि क. पुस्तकटिप्पण्याम्—" शयनं कुर्युरित्यर्थः " इत्यस्ति ।

---

१ क. च. °स्य याज्ञिक्यो देवता(?) उपनिषदो भूमि° । २ च. °क्षिणा पा° । ३ ङ. °पार्श्वैः प्रा° ।

(*श्रवणाकर्मादीनामभ्यासपक्षे द्वितीयादिप्रयोगः पत्न्यामृतुमत्यामपि भवत्येवेति प्रायश्चित्तप्रकाशे।)

इति संस्काररत्नमालायां पद्धतावाग्रहायणीप्रयोगः ॥

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायाः सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालाया उत्तरार्धे एकादशं प्रकरणम् ॥ ११ ॥

अथ द्वादशं प्रकरणम्

## अथोपाकरणम्।

तत्र गृह्यम्—"अथात उपाकरणोत्सर्जने व्याख्यास्यामः श्रवणापक्ष ओषधीषु जातासु हस्तेन पौर्णमास्यां वाऽध्यायोपाकर्म" इति।

अत्राथशब्दः पूर्वेण कर्मणा तुल्यत्वज्ञापनार्थः। यथाऽऽग्रहायणी नित्या तथैते नित्ये इति। तेन कदाचिद्वर्षर्तौ सर्वथौषधिजननाभावस्तदाऽपि कर्तव्यमिति सिद्धं भवति। 'एतद्वार्षिकमित्याचक्षते' इत्याश्वलायनसूत्रसंवादात्।

"ओषधीनां प्रादुर्भावे श्रावणस्य पौर्णमास्यां हस्तेन वाऽध्यायमुपाकुर्याद्यदि प्रादुर्भावः प्रोष्ठपदे तदा प्रौष्ठपद्यां तत्राप्रादुर्भावे प्रौष्ठपदीं नैवातीयाद्वर्षाकर्म ह्येतदित्याचक्षते"

इति खादिरादिसूत्रसंवादाच्चायमर्थो लभ्यते। खादिरसूत्रसंवादादाश्वलायनसूत्रे वर्षासु भवं वार्षिकमित्येव वार्षिकशब्दार्थो द्रष्टव्यः।

अथशब्दस्याऽऽनन्तर्यार्थत्वे—आनन्तर्यस्य पाठादेव सिद्धत्वाद्वैयर्थ्यापत्तिरतोऽत्र सोऽर्थो न विवक्षितः।

अतःशब्दो हेत्वर्थे, यत उपाकरणोत्सर्जने वेदशुद्धिसंपादके अकरणे दोषश्रवणान्नित्ये चात इत्यर्थः। अत्र प्रमाणमग्रे वक्ष्यते। अभ्यर्हितत्वादुपाकरणशब्दस्य पूर्वनिपातः। युगपत्प्रतिज्ञानमुभयोः संयुक्तत्वख्यापनार्थं, तेनासंभवादकृत उपाकरण उत्सर्गस्याप्यभावः। पारायण उत्सर्गस्य भावादुपाकरण-

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके

मपि स्यादिति । केचिदपूर्वाध्ययनार्थे उपाकरणोत्सर्जने मन्यन्ते तेषां गृहीतस्यापि स्मरणार्थेऽभ्यासे न स्यातामिति । ओषधीषु जातास्विति वचनमोषधिप्रादुर्भाव एव श्रावणपक्ष उपाकर्मानुष्ठानं प्रोष्ठपद ओषधिप्रादुर्भावे प्रोष्ठपद्यां पौर्णमास्यां प्रोष्ठपदान्तर्गते हस्ते वेतिकालान्तरसंग्रहार्थम् । उक्तौ च प्रोष्ठपदीहस्तौ बौधायनेन—

" श्रावण्यां पौर्णमास्यां हस्ते वाऽध्यायोपाकर्म
प्रोष्ठपद्यां हस्ते वा " इति ।

अत्र हस्तस्य द्विर्वचनं श्रावणप्रोष्ठपदहस्तग्रहणार्थम् । ओषधीषु जातासु श्रावणस्य हस्तेन पौर्णमास्यां वेत्यन्वयः । यथाश्रुतान्वये तु श्रावणपक्ष ओषधिजनने सत्येव श्रावणपक्षान्तर्गतयोर्हस्तपौर्णमास्योरुपाकर्म, आषाढ ओषधिजनन आषाढशुक्लपक्षान्तर्गतयोर्हस्तपौर्णमास्योरिति स्यात् , तच्छ्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीतेतिधर्मसूत्रे श्रावण्याः पौर्णमास्या एवानुवादान्मुख्यत्वप्रतीतेः सूत्रविहितकालपूर्वतनकालग्रहणस्यायुक्तत्वाच्चानिष्टम् । ओषधीषु जातासु प्ररूढासु। श्रावण्या पौर्णमास्या युक्तः पक्षः श्रवणापक्षः श्रावणपूर्वपक्ष इति यावत्[१] । " विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः " इति निपातनाच्छ्रवणाशब्दः साधुः । तदन्तर्गते हस्ते तदन्तर्गतायां पौर्णमास्यां वा, अधीयन्त इत्यध्याया वेदास्तेषामुपाकरणमारम्भः कर्तव्य इत्यर्थः । ओषधीषु जातास्विति हस्ते पौर्णमास्यां च संबध्यते । हस्तेनेति तृतीयाऽधिकरणे[२] मूलेनाऽऽवाहयेद्देवीमितिवत्[३] । श्रावण ओषधिप्रादुर्भावाभावे प्रोष्ठपद्याम् । यथौषधिप्रादुर्भावाभावः श्रावणातिक्रमनिमित्तं तथाऽऽशौचादीन्यपि, तेन येन केनचिन्निमित्तेन श्रावणातिक्रमेऽपि, अपेक्षितविधिलाभादेवात्रापि प्रोष्ठपदीकालः । तत्राप्याशौचादिसत्त्व आशौचान्ते कर्तव्यमिति केचित् । लोप एवेत्यन्ये । प्रथमोपाकरणोत्सर्जनयोस्तु लोप एव। (*प्रथमोपाकरणं तु मुख्यकाल एव कार्यम् । एवमुत्सर्जनमपि । उत्सर्जन उपाकर्मदिनेऽथवेतिविशेषकालान्तरस्य विहितत्वात्तत्रापि प्रथमोत्सर्जनं भवत्येवेति केचित् ।) सूत्रे यद्यपि कालद्वयस्य साम्यं हस्तस्य प्रथमोपादानान्मुख्यत्वं वा प्रतीयते तथाऽपि—

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके ।

---

१ क. 'स्योरेव सिद्धवदनुवादान्मुख्यत्वप्रतीतेः, एतद्वार्षिकमित्याचक्षत इति वर्षाकर्म ह्येतदाचक्षत इत्याश्वलायनखादिरादिसूत्रविरोधात्सूत्र' । २ ङ. 'तृ । त' । ३ ङ. 'णे मैत्रेणाऽऽवा' ।

"धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रर्क्षेण समन्वितम् ।
श्रावणं कर्म कुर्वीरन्नृग्यजुःसामपाठकाः"

इति स्मृतितः श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीतेति धर्मसूत्राच्च पौर्णमास्या एव मुख्यत्वप्रतीतेः सैव मुख्यः कालः । तस्याः सदोषत्वे हस्त इति ज्ञेयम् । तत्र तैत्तिरीयैरियमौदयिकी ग्राह्या ।

"पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते" इति गर्गोक्तेः ।

धनिष्ठाप्रतिपद्युक्तमित्यनन्तरोदाहृतस्मृतितः,

"संप्राप्तवाङ्श्रुतीर्ब्रह्मा पर्वण्यौदयिके यतः ।
अतो भूतयुते तस्मिन्नोपाकरणमिष्यते"

इति कालिकापुराणाच्च ।

तत्रोपाकरणकालः पूर्वाह्ण एव दैवत्वात् ।

"भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु ।
ब्राह्मणान्भोजयेत्तत्र पितॄनुद्दिश्य देवताः"

इति बार्हत्प्रचेतसाच्च ।

यत्तु—"अध्यायानामुपाकर्म कुर्यात्कालेऽपराह्णके ।
पूर्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुः"

इति हेमाद्रौ गोभिलवचनं तत्सामगविषयं तेषामपराह्ण एवोक्तेः, (*इति नवीनाः । उत्सर्जनं तु सर्वेषामपि पूर्वाह्ण एव । श्रौताग्निमता स्मार्ताग्निमता वोपाकर्मोत्सर्जने वा कृत्वैवान्वाधानं कार्यं न तु पूर्वम् । अन्यथोपाकर्मोत्सर्जनयोः पौर्णमासेष्टिस्थालीपाकतन्त्रमध्येऽनुष्ठानापत्तेः । न चेष्टापत्तिः, न हि कर्मणि कर्मारम्भ इतिन्यायबाधापत्तेः । संध्यावन्दनादौ त्वनायत्या बाधः । न च प्रातरग्निहोत्रं हुत्वोदित आदित्ये गार्हपत्यादाहवनीयमुद्धृत्य ममाग्ने वर्च इत्यन्वादधातीत्यग्निहोमान्वाधानयोरव्यवहितानन्तर्यस्य क्त्वाप्रत्ययेन बोधितत्वाद्वैपरीत्यमेवास्तु । तेन न हि कर्मणि कर्मारम्भ इति न्यायस्य संध्यावन्दनादिष्विवानायत्या बाध इति वाच्यम् । हुत्वेति क्त्वाप्रत्ययस्यैव केवलमानन्तर्यमात्रार्थकत्वस्य कल्पनेन बाधापत्त्यभावात् ।

एवं सद्यस्कालेष्टिरप्युपाकर्मोत्सर्जने कृत्वैव, प्रतिपद्येव तस्याः समापनीय-

* धनुश्चिह्नान्तर्गतग्रन्थो नास्ति ङ. पुस्तके ।

१ क. 'चस्तत्सा' । २ च. 'र्जनं कृ' ।

त्वेन पूर्वाह्णकालस्यावरुद्धत्वेन तन्मध्यपातस्य तादवस्थ्यापाते प्रतिपत्सापेक्षेष्टेः पूर्वमेव पर्वमात्रसापेक्षोपाकरणोत्सर्जनानुष्ठानस्य युक्तत्वात्।) तत्र यदा सूर्योदयमारभ्य पौर्णमासी प्रवृत्ता तदा संदेह एव नास्ति। यदा तु पूर्वदिने मुहूर्तत्रयानन्तरं प्रवृत्ता द्वितीयदिने संगवात्परतो न भवति तदा—

"श्रावणी पौर्णमासी तु संगवात्परतो यदि।
तदैवोदयीकी ग्राह्या नान्या त्वौदयिकी भवेत्"

इति वचनेन संगवात्परतो विद्यमानाया एवौदयिक्या ग्राह्यत्वोक्तेः प्रकृते तादृश्या अभावात्पूर्वैव। संप्राप्तवाङ्श्रुतीर्ब्रह्मेति निषेधस्तु परादिने संगवात्परतः सत्त्व एवेति द्रष्टव्यम्।

यदा तु पूर्वदिने मुहूर्तत्रयानन्तरं[1] प्रवृत्ता द्वितीयदिने संगवात्परतो[2] यदि भवति तदा 'पर्वण्यौदयिके कुर्युः' 'धनिष्ठाप्रतिपद्युक्तं' 'संप्राप्तवाङ्श्रुतीर्ब्रह्म' इतिवाक्येभ्यः 'श्रावणी पौर्णमासी तु' इतिवाक्याच्च परैव।

*यत्तु—"श्रवणः श्रावणं पर्व संगवस्पृग्यदा भवेत्।
तदैवौदयिकं ग्राह्यं नान्यदौदयिकं भवेत्"

इति सिद्धभट्टीयं वचनं तदपि संगवं संगवकालं सर्वं स्पृशतीति संगवस्पृक्, संगवमभिव्याप्याग्रे विद्यमानमित्यनायत्या[3] लक्षणाध्याहारनिष्पन्नमर्थं स्वीकृत्य 'श्रावणी पौर्णमासी तु' इत्येतत्समानार्थकं कार्यम्।

पर्वनिर्णयवदेव हस्तनिर्णयोऽपि द्रष्टव्यः।

पौर्णमास्यां संक्रान्तिग्रहणादिसत्त्वे तु—

"उपाकर्म प्रकुर्वन्ति क्रमात्सामर्ग्यजुर्विदः।
ग्रहसंक्रान्त्ययुक्तेषु हस्तश्रवणपर्वसु" इति स्मृत्यन्तरवचनेन,

"संक्रान्तौ ग्रहणे चैव सूतके मृतके तथा।
गणस्नानं न कुर्वीत नारदस्य वचो यथा॥
अथ चेद्दोषसंयुक्ते पर्वणि स्यादुपाक्रिया।
दुःखशोका[4]मयग्रस्ता राष्ट्रे तस्मिन्द्विजातयः"

* एतदुपरि क. पुस्तकटिप्पण्याम्—"पूर्वसूर्योदयानन्तरं मुहूर्तादूर्ध्वं प्रवृत्ता पौर्णमासी द्वितीयोदयानन्तरं मुहूर्तद्वयादिपरिमिता भवति तत्र तैत्तिरीयैरुत्तरा, तैत्तिरीयान्ययाजुषैः पूर्वा ग्राह्येति सिद्धमिति पुरुषार्थचिन्तामणौ निर्गलितार्थः" इति ग्रन्थो वर्तते।

१ ङ. °र्तद्वया°। २ च. °तो भ°। ३ ङ. °मानेलेतादृशार्थकरणेन श्रा°। ४ क. °शोकभय°।

इति मदनपारिजातोदाहृतवचनेन च निषेधाद्धस्ते कार्यम् । तत्रापि दोषसत्त्वे प्रौष्ठपद्यां, तत्रापि प्रतिबन्धसद्भावे भाद्रपदान्तर्गतहस्ते कार्यम् ।

अत्र विशेषो गार्ग्येणोक्तः—

" यद्यर्धरात्रादर्वाक्तु ग्रहः संक्रम एव वा ।
नोपाकर्म तदा कुर्याच्छ्रावण्यां श्रवणेऽपि वा " इति ॥

अत्र श्रावणीग्रहणं हस्तप्रोष्ठपद्युपलक्षणम् ।

कात्यायनवृद्धमनू अपि—

" अर्धरात्रादधस्ताच्चेत्संक्रान्तिर्ग्रहणं तदा ।
उपाकर्म न कुर्वीत परतश्चेन्न दोषभाक् " इति ॥

अर्धरात्रादधः प्रतिपदि संक्रान्तिसत्त्वे तु नैवोपाकर्मनिषेधः ।

" ग्रहसंक्रान्त्ययुक्तेषु हस्तश्रवणपर्वसु " इतिवचनात् ।

यदा तु श्रावणोऽधिको भवति तदा शुद्धे श्रावणमास एव कर्तव्यम् ।

तथा च कात्यायनः—

" उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि ।
अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिषु " इति ॥

ज्योतिष्पराशरोऽपि—" उपाकर्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः ।
मासवृद्धौ परे कार्या वर्जयित्वा तु पैतृकम् " इति ॥

यत्तु ऋष्यशृङ्गवचनम् " दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।
उपाकर्मणि चोत्सर्गे " इति, तच्छन्दोगविषयं,

तेषां सिंहार्क एवोक्तेः ।

" वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ ।
उपाकर्म न कर्तव्यं कर्तव्यं सिंहयुक्तके " इति,

(* बृहस्पतिरपि—" नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके ।
कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे "

इति, सामगविषय एव व्यवस्थापके एते वचने । वार्त्रघ्नी पूर्णमासेऽनू-

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—" एतच्च वचनं देशान्तरविषयम् । नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके । कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे । इति बृहस्पतिवचनादि प्रयोगपारिजाते पराशरमाधवीये च । सामगानां सिंहस्थरवावुक्तेस्तद्विषयमिदमिति केचित् " इति ।

---

१ ङ. ंति । यदा ।

च्ये(च्य)ते वृधन्वत्यमावास्यायामितिवत्। अन्यथा वाक्यभेदो दुष्परिहरः स्यात्। अतो नर्मदोत्तरभागे सामगैः सिंहस्थे रवौ कर्तव्यं नर्मदादक्षिणभागे सामगैः कर्कटस्थे रवौ कर्तव्यमितिव्यवस्थापरत्वमेवैतयोर्वचनयोर्युक्तमिति द्रष्टव्यम्।) अत्र गुरुशुक्रास्तादि निषिद्धम्।

तथा च मनुः—"शुक्रे मूढेऽप्युपाकृत्य विद्यावित्तविनाशनम्।
आयुष्क्षयमवाप्नोति तस्मात्तत्कर्म वर्जयेत्" इति।

कश्यपोऽपि—"गुरुशुक्रतिरोधाने वर्जयेच्छ्रुतिचोदनात्।
इत्याह भगवानत्रिः श्रावणं तु विशेषतः" इति॥

तिरोधानमस्तम्। एतच्च मलमासाद्युपलक्षणम्।

(* महेशभट्टो—भद्राव्यतीपातावपि प्रथमे प्रयोगे निषेधति मलमासादिषु द्विजेत्यादिशब्देन भद्राव्यतीपातयोरपि ग्रहणात्।

"अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाऽऽचरेत्"

इतिवचनेन सामान्यतस्तन्निषेधात्।

"भद्रायां द्वे न कर्तव्ये श्रावणी चैव फाल्गुनी।
श्रावणी हन्ति राजानं ग्रामं दहति फाल्गुनी"

इति विशेषतोऽपि श्रावणीविषये भद्रानिषेधाच्च।

विष्ट्यादावित्यत्रत्यादिपदेन व्यतीपातस्य ग्रहणम्। श्रावणीशब्देन श्रावण्यां पौर्णमास्यां यद्यत्तद्दिवसविहितं कर्म तत्सर्वं न कर्तव्यमिति तदाशयः।

श्रावणीशब्दस्य रक्षाबन्धनमात्रविषयत्वादुपाकर्मश्रवणाकर्मणोरसंग्रहस्यार्थतः प्रदर्शनादुपाकर्मश्रवणाकर्मणोर्भद्रानिषेधो नास्तीति धर्मशास्त्रनिबन्धकाराशयो गम्यते। दिनक्षयस्यापि ग्रहणमत्रेति केचित्।)

अयं च निषेधः प्रथमोपाकरणविषयः—

"गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेऽपि वा।
तथाऽधिमाससंसर्पमलमासादिषु द्विज॥
प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृत्"

इति कश्यपोक्तेः। आदिशब्देन सिंहस्थगुरुवक्रातिचारग्रहणम्।

"उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि" इति,
"उपाकर्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः"

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके।

---

१ क. 'स्मात्कर्म विव'।

इति वचनाभ्यां प्रथमोपाकरणादावपि निषेधे सिद्धे पुनः प्रथमोपाकरणनिषेधादिदं ज्ञायते। मले प्रोष्ठपदे मास ओषधिप्रादुर्भावः, अथ च शुद्धप्रोष्ठपद्यामर्धरात्रादर्वाग्ग्रहणादिसत्त्वं तदा मलमासेऽपि द्वितीयाद्युपाकर्मकर्तव्यताऽस्तीति। एवमुत्सर्जनेऽपि। ( * गुरुभार्गवयोर्मौढ्य इति वचनं संग्रहनाम्ना पठित्वा, एतद्वचनप्रतिपाद्यप्रथमोपाकरणविषयनिषेधरूपार्थस्याऽऽर्षवचनानुपलम्भहेतुना निर्मूलत्वं परिकल्प्य शुद्धकाललाभे द्वितीयादिप्रयोगेऽपि गुरुशुक्रास्तवक्रातिचारादिदोषान्वर्जयन्ति।)

सिंहकर्कटयोर्मध्ये नद्यां स्नाने दोषमाहात्रिः—

" सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः।
( + न स्नानादीनि कर्माणि तासु कुर्वीत मानवः " इति।

महानदीषु भविष्य उक्तम्—

" आदौ तु कर्कटे देवि महानद्यो रजस्वलाः। )
त्रिदिनं तु चतुर्थेऽह्नि शुद्धाः स्युर्जाह्नवी सदा " इति॥

जाह्नवी सर्वदा शुद्धेत्यर्थः।

महानद्यस्तु ब्राह्मे—" गोदावरी भीमरथी तुङ्गभद्रा च वेणिका।
तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः॥
भागीरथी नर्मदा च यमुना च सरस्वती।
विशोका च विपाशा च विन्ध्यस्योत्तरतः स्थिताः॥
द्वादशैता महानद्यो देवर्षिक्षेत्रसंभवाः " इति।

मदनरत्ने पुराणान्तरे—" महानद्यो देविका च कावेरी वञ्जुला तथा।
रजसा तु प्रदुष्टाः स्युः कर्कटादौ त्र्यहं नृप " इति॥

कात्यायनः—कर्कटादौ रजोदुष्टा गोमती वासरत्रयम्।
चन्द्रभागा सती सिन्धुः शरयूर्नर्मदा तथा॥
गङ्गा च यमुना चैव प्लक्षजाता सरस्वती।
रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञिताः॥
शोणसिन्धुहिरण्याख्याः कोकलोहितघर्घराः।
शतद्रूश्चेति वै सप्त पावनाः परिकीर्तिताः " इति॥

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—" एतच्च संग्रहवचनमनाकरम्। अतद्गुणसंविज्ञानो बहुव्रीहिर्वाऽत्र द्रष्टव्यः। तेन द्वितीयाद्युपाकर्मण्यपि सति संभवे निषेधोऽस्त्येवेति केचित् " इति। + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. घ. पुस्तकयोः।

---

१ च. 'त्र्यता नास्ती'।

(+चन्द्रभागेति बहुपुस्तकेषु दृश्यते पीयूषाभिधायाममरव्याख्यायां तु चान्द्र-भागेति दीर्घादिशब्दः, चान्द्रभागीतीबन्तोऽपीत्येतद्द्वयमुक्तं तच्चिन्त्यम् । )

यत्तु—" प्रथमं कर्कटे देवि त्र्यहं गङ्गा रजस्वला "

इत्यादिवचनं [ तत्तु ] जाह्नवीभिन्नगोदावर्यादिगङ्गान्तरविषयमिति मद-नरत्ने ।

सर्वथा वापीकूपतडागाद्यभावे सर्वनदीष्वपि रजोदोषो नास्ति ।

तदुक्तं व्याघ्रपादेन—" अभावे कूपवापीनां तडागसरसां तथा ।
रजोदुष्टेऽपि पयसि ग्रामभोगो न रुध्यते " इति ॥

उपाकर्मादिष्वपि निषेधो नास्ति । तथा च कात्यायनः—

" उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते " इति ॥

अत्राऽऽदौ ब्रह्मकूर्चविधिना पञ्चगव्याशनमपि कार्यम् । तदुक्तं विधानमा-लायाम्—

" ब्रह्मशुद्धौ गृहारम्भे सूतके मृतके तथा ।
यज्ञारम्भे धनप्राप्तौ प्रायश्चित्ते विशेषतः ॥
रोगमुक्तौ च संपर्के क्षुद्रपापापनुत्तिषु ।
विदध्याद्ब्रह्मकूर्चं च मासि मास्यथवा द्विजः " इति ॥

ब्रह्मशुद्धावित्यत्रोपाकर्मोत्सर्जनाभ्यां क्रियमाणायामिति शेषः ।

उपाकर्मोत्सर्जनाभ्यां ब्रह्मशब्दवाच्यस्य वेदस्य शुद्धिः कात्यायनेनोक्ता—

" अस्थानोच्छ्वासविच्छेदो[1] घोषणाध्यापनादिषु ।
प्रमादिकः श्रुतौ यः स्याद्यातयामत्वकारि सः[2] ॥ ह्रस्वत्वमार्षम् ॥
प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ॥
अयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः ।
क्रीडमानैरपि सदा तत्तेषां सिद्धिकारकम् " इति ॥

गृहारम्भ[3]निमित्तमादावधिकारार्थत्वात् । (*सूतके मृतके च सूतकमृतकनि-मित्तं, तदपगमे, प्रातःसंध्योपासनानन्तरम् । यद्यप्यत्र संध्योपासनं पूर्वं पञ्च-

---

+ धनुश्चिह्नान्तर्गतं ङ. पुस्तके नास्ति । * धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—" सूतकमृतकयोरन्ते, शुद्ध्यर्थत्वात् " इति ।

---

१ च. 'च्छेदौ घो' । २ ङ. सः । प्र' । ३ ङ. 'रम्भ आदा' ।

गव्याशनमनन्तरं पञ्चगव्याशनं पूर्वं संध्योपासनमनन्तरं वेत्यत्र विनिगमनाविरहादुभयमपि संभाव्यते तथाऽपि—

'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु' इति वचनेन संध्योपासनस्य सर्वाधिकारार्थत्वप्रतिपादनात्, संध्याया नित्यत्वाच्च, पूर्वं संध्योपासनमेव।) यज्ञारम्भ इत्यत्राप्यादावधिकारार्थत्वात्। एवं धनप्राप्तावित्यत्रापि। प्रायश्चित्ते विशेषत इतिश्रवणात्तत्रैव ब्रह्मकूर्चस्याऽऽवश्यकत्वं नेतरत्र। रोगमुक्तौ सत्यां तदनन्तरम्। संपर्कोऽस्पृश्यस्पर्शस्तंन्निमित्तं स्नानोत्तरम्। क्षुद्रपापपनुत्तिः क्षुद्रपापनाशस्तदर्थम्।

स च विधिर्बौधायनसूत्रे—

"ब्रह्मकूर्चं प्रवक्ष्यामि कायशोधनमुत्तमम्।
शूद्राणां भाजने भुक्त्वा वेदानां विक्रये तथा॥
होमातिक्रमकाले तु पर्वहीनमसंस्कृतम्।
एतेषां चैव शुद्ध्यर्थं पञ्चगव्यं प्रशस्यते॥
कपिला ताम्रवर्णी श्वेता नीला तथा कृष्णा।
कपिलाया घृतं ग्राह्यं ताम्रवर्ण्याः पयः स्मृतम्॥
श्वेतायास्तु दधि ग्राह्यं नीलाया गोमूत्रं कृष्णाया गोमयमुद्धरेत्।
गोमूत्रं तु पलं दद्यादङ्गुष्ठार्धं तु गोमयम्॥
क्षीरं सप्तपलं दद्याद्दधि त्रिपलमुच्यते।
पलमेकं घृतं ग्राह्यं पलमेकं कुशोदकम्॥
गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम्।
आप्यायस्वेति च क्षीरं दधिक्राव्णोऽथ वै दधि॥
शुक्रमसि ज्योतिरसि तेजोऽसीत्याज्यं देवस्य त्वेति कुशोदकमापो हि ष्ठेति मन्थेत्।
नदीप्रस्रवणे तीर्थे रहस्ये निर्जने देशे॥
यज्ञागारे गवां गोष्ठे देवतायतनेषु वा।
तत्र स्नात्वा शुचिर्भूत्वा शुक्लवासा जितेन्द्रियः॥
पालाशं पद्मपत्रं वा ताम्रभाजनमेव वा।
उदुम्बरमयं पात्रं श्रीवृक्षस्य तथैव च॥
सप्तपत्राः शुभा दर्भा अक्षताश्चैव संयुताः।

१ ङ. °स्तदनन्तरम्। २ ङ. °द्भ्राज्य°।

तैरेवोद्धृत्य होतव्यमग्नये स्वाहा सोमाय स्वाहा । इरावती इदं विष्णुर्विष्णोर्नुकं मा नस्तोके च गायत्री ब्रह्म जज्ञानमिति तस्य चतुर्भागं हुत्वा प्रणवेनाऽऽलोड्य प्रणवेनाभिमन्त्र्य प्रणवेन पिबेत्प्रणवेन तु—

ब्रह्मणा निर्मितो ह्येष सत्यशौचात्मको विधिः ।
ऋषिभिर्वालखिल्यानां शौचार्थं समुद्राहृतः ॥

मासि मासि प्रयुञ्जानो विरजा भवत्यर्धमासेऽर्धमासे प्रयुञ्जान ऋषिलोकमवाप्नोति षड्रात्रे षड्रात्रे स्वर्गलोकमवाप्नोति संवत्सरमहरहः परं ब्रह्माधिगच्छति ।

त्वगस्थिगतैर्मलिनैर्देहेस्तिष्ठति मानवः ।
ब्रह्मकूर्चो दहेत्तस्य यथा अग्निरिवेन्धनम् " इति ॥

( + आपो हि ष्ठेतिमन्थेदित्यन्तं पालाशं पद्मपत्रं वेत्येतत्पूर्वं ज्ञेयं, पाठक्रमादर्थक्रमस्य बलीयस्त्वात् । प्रकरणात्प्राशनार्थपञ्चगव्य एव गायत्र्या गृह्य गोमूत्रमित्यादिविधिः स्यात्, प्रोक्षणार्थे पञ्चगव्ये न स्यात्तन्मा भूत् । तत्रापि मन्थेदित्यन्तो विधिर्यथा स्यादित्येतदर्थं क्रमपरित्याग इति द्रष्टव्यम् ।)

यद्यप्यमरेण—

" कृष्णे नीलासितश्यामकालश्यामलमेचकाः " इति कृष्णनीलयोरभेद उक्तस्तथाऽपि नीलशब्देन हरिद्वर्णमिश्रितः कृष्णवर्णो ग्राह्यः । सूत्रकृद्वचनलब्धभेदबलात् ।

" दशार्धगुञ्जं प्रवदन्ति माषं माषैस्तथा षोडशभिश्च कर्षम् ।
कर्षैश्चतुर्भिश्च पलं तुलाज्ञाः कर्षं सुवर्णस्य सुवर्णसंज्ञम् "

इति लीलावतीवाक्याच्चतुःषष्टिमाषात्मकं पलं ज्ञेयम् ।

कपिलास्वरूपं हेमाद्रौ—

" सुवर्णकपिला पूर्वा द्वितीया गौरपिङ्गला ।
तृतीया चैव रक्ताक्षी चतुर्थी गुडपिङ्गला ।
पञ्चमी बहुवर्णा स्यात्षष्ठी च श्वेतपिङ्गला ।
सप्तमी श्वेतपिङ्गाक्षी अष्टमी कृष्णपिङ्गला ।
नवमी पाटला ज्ञेया दशमी पुच्छपाटला " इति ।

सुवर्णा सुवर्णवर्णा ।

स्मृत्यन्तरे—" एकवर्णा तु कपिला " इत्यपि कपिलालक्षणमुक्तम् ।

---

+ धनुश्चिह्नान्तर्गतो ग्रन्थो ङ. पुस्तके नास्ति ।

---

१ ग. सत्यः शौं ।

' कांस्यपात्रस्थितविलीनघृतसमानवर्णा कपिला[1] " इत्यपि कुत्रचित् । *अक्षता अखण्डिताः संयुताः सम्यगेकीभूता मिलिता इति यावत् । त्वगस्थिगतैर्मलिनैर्देहैर्मलयुक्तैरिति शेषः(?)। उपाकर्म यदि सशिष्यः करोति तदा लौकिकाग्नौ। यद्यशिष्यस्तदौपासने। यद्यपि सूत्रेऽन्वारम्भविधानं स्पष्टं नास्ति तथाऽपि ज्ञापकसिद्धं विधानमस्त्येव । तच्च हुत्वेति वचनम्। तथा च मातृदत्तः— " होमाधिकारे पुनर्हुत्वेति वचनमध्येतृणां[2] सर्वेषां होमेऽस्त्यधिकार इतिज्ञापनार्थं तेनोक्तमन्वारम्भणं सर्वेषां शिष्याणामिति । गृह्यसूत्रे—अग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा[3] काण्डर्षीञ्जुहोति काण्डनामानि वा सावित्रीमृग्वेदं यजुर्वेदꣳ सामवेदमथर्ववेदꣳ सदसस्पतिमिति हुत्वा त्रीनादितोऽनुवाकानधीयन्ते(ते) काण्डादीन्वा सर्वाञ्जयादि प्रतिपद्यते स्विष्टकृदन्तं कृत्वा त्र्यहमेकाहं वा क्षम्य यथाध्यायमध्येतव्यमिति वदन्ति " इति ।

अग्निमुपसमाधाय शिष्यैरन्वारब्धो व्याहृतिपर्यन्तं कृत्वा नव षट्पञ्च चतुरो वा काण्डर्षीञ्जुहोति । व्याख्याताः काण्डर्षयः प्रजापतये काण्डर्षये स्वाहेत्यादि स्वयंभुवे काण्डर्षये स्वाहेति काण्डर्षय इत्यन्तं सूत्रं क्षेपकं ज्ञेयमसंगतत्वाद्भाष्यकृताऽधृतत्वाच्च । काण्डनामान्यपि नव षट्पञ्च चत्वारि वा प्राजापत्यं सौम्यमाग्नेयं वैश्वदेवमिति चत्वारि । पञ्चपक्षे स्वायंभुवं पञ्चमम् । षट्पक्ष आरुणं षष्ठम् । नवपक्षे सांहितीदेवतोपनिषदादित्रयं च । सावित्र्यादिपदैः सर्वैश्चतुर्थ्यन्तैर्होमः । सदसस्पतिमित्यत्रेतिकरणात्काण्डोपाकरणविसर्गयोश्च दर्शनात् । सदसस्पतिमद्भुतमित्येतस्य प्रतीकग्रहणं वा । सावित्रीमित्यत्राप्येकामृचं केचिन्मन्यन्ते । अधीयन्त(त) इति बहुवचनात्सर्वेषामध्ययनम् । आदित इत्यत्र वेदस्येति शेषः। काण्डानि नव षट्पञ्च चत्वारि वा काण्डानुक्रमणिकोक्तानि । तेषामादिभूताननुवाकान्मन्त्रान्वाऽधीयन्त(त) इत्यर्थः। जयादि प्रतिपद्यत इति वचनं जयाद्युपहोमा[4] अत्र नित्या इतिबोधनार्थम् । जयो[5] जयोपहोम आदिर्यस्य तज्जयादि। एतादृशं होमसंबन्धि यदुत्तरं तन्त्रं तत्प्रतिपद्यत इत्यर्थः। अस्मिन्व्याख्याने सन्त्येव वारुण्यादयः। जयादीन्प्रतिपद्यत इतिपाठे तु वारुण्यादिसत्त्वं सुगममेव। प्रतिपद्यत इत्युभयत्र संबध्यते। तथा च जयादि प्रतिपद्यते स्विष्ट-

* इदं पदद्वयं नास्ति ङ. पुस्तके ।

१ क. ङ. मीलिता । २ ङ. °त् । उ° । ३ च. °त्वा पञ्च का° । ४ ङ. °होमप्रापणार्थ° । ५ ङ. च. °योप° ।

कृत्प्रतिपद्यत इत्येवमर्थः संपन्नो भवति । अन्तं कृत्वेति भिन्नमेव सूत्रम् । अन्तं कर्मणोऽन्तं कृत्वा कर्मशेषं समाप्येत्यर्थः । स्विष्टकृदन्तं कृत्वेत्येकसूत्रकरण उत्तरकर्मलोपापत्तिः । यदि स्विष्टकृदुत्तरभाविकर्मानुष्ठानमावश्यकत्वात्प्रतिपत्तिरूपत्वाच्च कर्तव्यमित्युच्यते तदा स्विष्टकृदन्तं कृत्वेत्यस्यावधिप्रदर्शकसूत्रस्य वैयर्थ्यापत्तिः । न च भवतु स्विष्टकृदुत्तरभाविकर्मलोप इति वाच्यम् । अलोपानुगुण्येनैव सूत्रार्थनिर्वाहेऽन्यथावर्णनस्यानुचितत्वात् । जयादि प्रतिपद्यत इत्यनेनैव कृत्स्नोत्तरतन्त्रप्राप्तौ स्विष्टकृद्ग्रहणमाघारवत्तन्त्रे वारुण्यादिहोमाभावेऽपि स्विष्टकृद्धोमो भवत्येवेतिज्ञापनार्थम् । अन्तं कृत्वेति वचनमसति विशेषविधौ स्विष्टकृदनन्तरमेव कर्मसमाप्तिर्यथा स्यात्, न तु कृत्स्नसमाप्त्यनन्तरमितिज्ञापनार्थम् । उपनयने समिदभ्याधानानन्तरमुत्तरपरिषेकस्य विहितत्वाद्विशेषविधिसत्त्वमेवेति तत्रैवं न भवति । काण्डव्रतोपाकरणविसर्गादिषु तु विशेषविध्यभावात्स्विष्टकृदनन्तरमेव कर्मसमाप्तिरिति । क्षम्य, अध्ययनादिरम्येत्यर्थः । यथाध्यायमितिवचनं कृतान्तादारभ्यैवाध्येतव्यं न पुनरादितस्त्रीननुवाकानधीत्याध्येतव्यमित्येतदर्थम् । वदन्तीतिवचनं केषांचिदाचार्याणां मते त्रीननुवाकानधीत्यैवाध्ययनमस्तीतिपक्षान्तरसूचनार्थम् ।

ब्रह्मचारिविषये विशेष उक्तः कालादर्शे कार्ष्णाजिनिना[२]—

" मौञ्जीं यज्ञोपवीतं च नवं दण्डं च धारयेत् ।
कटिसूत्रं चैव नवं नवं वस्त्रं तथैव च " इति ॥

स्मृत्यन्तरेऽपि—" दण्डाजिनोपवीतानि मेखलां कटिसूत्रकम् ।
धृत्वोपाकरणं कृत्वा ततः स्वाध्यायमारभेत् ॥
पुराणानि विसृज्याथ पुनः पुनरुपक्रमेत् " इति ॥

स्मृतिभामत्यां व्यासोऽपि—

" उपवीतं नवं वस्त्रं कटिसूत्रं च मेखलाम् ।
धारयेदजिनं दण्डं पुराणान्यप्सु निक्षिपेत् " इति ॥

यज्ञोपवीतस्य होमदानधारणान्याह गालवः—

" कृत्वा यज्ञोपवीतानि नवानि वसुधाधिप ।
हुत्वाऽग्नौ गुरवे दत्त्वा पितृभ्यो धारयेत्स्वयम् " इति ॥

सत्यव्रतोऽपि—" नूतनान्युपवीतानि हुत्वा दत्त्वा च धारयेत् " इति ।

---

१ ङ. 'तन्त्रेऽविहितत्वेन वा' । २ ङ. 'ना ब्रह्मचारिणं प्रकृत्य—मौ' ।

एतच्च गृहस्थवानप्रस्थयोरपि—

" गृहस्थो ब्रह्मचारी वा वनस्थो वाऽपि सूत्रकम् ।
हुत्वाऽग्नौ गुरवे दत्त्वा पितृभ्यो धारयेत्स्वयम् "

इति स्मृतिदर्पणे बैजवापोक्तेः ।

स्मृतौ—" यज्ञोपवीतमन्त्रेण हुत्वाऽग्नावुपवीतकम् ।
दत्त्वा तु गुरवे नूत्नं धृत्वा स्वाध्यायमारभेत् " इति ॥

नूत्नं नूतनम् । (* हुत्वा दत्त्वा च धारयेदितिशास्त्रान्तराद्यज्ञोपवीतहोमस्यापि प्रधानत्वेन कर्तव्यत्वं केश्चिदुक्तं तत्तुच्छं, हुत्वा दत्त्वा च धारयेदितिक्त्वाप्रत्ययाद्धोमदानयोरुपाकरणोत्सर्जनाङ्गभूतयज्ञोपवीतधारणाङ्ग[त्व]स्यैव प्रतीतेः प्रधानत्वाभावात् । होमदानधारणानि शास्त्रान्तरप्रोक्तत्वात्कृताकृतानि । करणेऽभ्युदयः, अकरणे प्रत्यवायाभाव इति द्रष्टव्यम् । हुत्वेति क्त्वाप्रत्ययः पूर्वकालतामात्रं बोधयति न त्वङ्गत्वं तेन यज्ञोपवीतहोमस्य प्रधानत्वमेवेति यद्युच्यते तदा यज्ञोपवीतहोमाननुष्ठानमेव प्रधानोपसंहारस्यानिष्टत्वात् । अन्यथोपनयनादिष्वपि शास्त्रान्तरोक्तप्रधानहोमकरणापत्तेः । न चैवं हुत्वा दत्त्वा च धारयेदिति शास्त्रान्तरोक्तस्य यज्ञोपवीतहोमस्य निरवकाशत्वापत्तिरिति वाच्यम् । यस्मिन्सूत्रे कारिकासु वा यज्ञोपवीतहोमो विहितो भवेत्तत्रैतस्य सावकाशत्वसंभवात् । अस्ति चायं होमो विहित आश्वलायनगृह्यकारिकासु । दानधारणयोस्तु प्रधानत्वाभावादुपसंहारः शक्तौ सत्यां न विरुद्धः । )

दानफलमुक्तं वायुपुराणे—

" उपाकर्मणि चोत्सर्गे यो दद्यादुपवीतकम् ।
आयुष्माञ्जायते तेन कर्मणा मानवो भुवि " इति ॥

स्मृतिभामत्यां गोभिलः—

" उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते ।
धारणाध्ययनाङ्गत्वाद्गृहिणां ब्रह्मचारिणाम् ॥
उत्सर्जनं च वेदानामुपाकरणकर्म च ।
अकृत्वा वेदजाप्येन फलं नाऽऽप्नोति मानवः " इति ।

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति इ. पुस्तके ।

१ क. च. नूनं । २ क. च. नूनं । ३ च. °होमाक°

एतत्किंचिदध्ययनव्रतोऽप्यावश्यकम्—

" अकृतोपाकृतिर्विप्रो दानहोमजपादिकम्।
यद्यत्करोति तत्सर्वं निष्फलं तस्य वै भवेत् "

इति संस्कारमञ्जर्यां संग्रहवचनात्। आदिशब्देनार्चनादि ज्ञेयम्।
विश्वप्रकाशे—" उपाकर्मोत्सर्जनयोः श्रौतानां कर्मणां तथा।
प्रथमानुष्ठितावेव स्वस्तिवाचनमिष्यते " इति।

स्वस्तिवाचनग्रहणं मातृकापूजनवृद्धिश्राद्धयोरुपलक्षणम्।
( * श्रावण्यामभ्यङ्गोऽप्युक्तो मानवसूत्रानुसारिपद्धतौ—

" श्रावण्यां बलिराज्ये च वसन्तदर्शने तथा।
तैलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते " इति ॥ )

## अथ ब्रह्मकूर्चहोमप्रयोगः।

कर्ता नदीप्रस्रावो यस्मिन्देशे तत्र तीर्थे यज्ञागारे गवां गोष्ठे देवतायतने निर्ज[१][२]नेऽरण्ये देशे रहस्ये ग्रामेऽप्येकान्ते[३] देशे वा स्नातः शुक्लवासा जितेन्द्रियः शुचिराचम्य प्राणानायम्य देशकालौ संकीर्त्योपाकर्म कर्तुमादौ शरीरशुद्ध्यर्थं ब्रह्मकूर्चहोमं पञ्चगव्याशनं च करिष्य इति संकल्पं कुर्यात्। उत्सर्जनस्याप्यस्मिन्दिने क्रियायाम्—उत्सर्जनोपाकर्मणी कर्तुमादाविति संकल्पवाक्य ऊहः कार्यः।

ततः स्थण्डिलं कृत्वा तद्गोमयेनोपलिप्योद्धननादिसंस्कारं विधाय तत्र विण्नामानं श्रोत्रियागारादाहृतं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा ब्रह्मकूर्चहोमकर्मणि या यक्ष्यमाणा इत्यादि प्रसाधनीदेव्यन्तं व्याहृत्यन्तं वोक्त्वा, प्रधानहोमे—अग्निं पञ्चगव्याहुत्या + यक्ष्ये। सोमं पञ्चगव्याहुत्या यक्ष्ये। विष्णुं तिसृभिः[४] पञ्चगव्याहुतिभिर्यक्ष्ये। रुद्रं पञ्चगव्याहुत्या यक्ष्ये। अत्रोदकस्पर्शः। सवितारं पञ्च०। ब्रह्म पञ्च०। परमात्मानमग्निं वा प्रणवेन पञ्चगव्यचतुर्थभागेन[५] यावत्य आहुतयो भवन्ति तावतीभिः पञ्चगव्याहुतिभिर्यक्ष्ये। अङ्गहोमे वरुणं[६] द्वाभ्यामाज्याहुतिभ्यामित्यादि, अग्निं

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके। + ङ. पुस्तके आहुतिशब्दरहितः पञ्चगव्येनेतिपाठः। एवमग्रेऽपि।

१ ङ. निजने देशे रहस्ये दे°। २ च. °र्जन आर°। ३ च. °कान्तदे°। ४ ङ. त्रिवारं। च. त्रिः। ५ ङ. °न यक्ष्ये। ६ ङ. °णं द्विरित्यादि।

स्विष्टकृतं हुतशेषाज्याहुत्या यक्ष्य इत्यादि वा, समिदभ्याधानान्तं कृत्वा, पात्रासादने दर्वीं सप्तपत्रात्मकान्हरितानक्षतान्केनचिद्दर्भेण बद्धान्दर्भानाज्यस्थालीं पञ्चगव्यार्थं पात्रं पालाशमुदुम्बरवृक्षनिर्मितं बिल्ववृक्षनिर्मितं वा ताम्रमयं वा पात्रं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानिध्मं बर्हिरवज्वलनदर्भानाज्यं पञ्चगव्यानि चाऽऽसाद्य ब्रह्मवरणादि, तत्र दर्वीसंमार्गानन्तरं होमार्थदर्भाणामपि दर्वीवत्संमार्गः। तत आज्यविलापात्पूर्वमेवापरेणाग्निं दर्भेषु पञ्चगव्यार्थमासादितं पात्रं निधाय तस्मिन्पवित्रे निधाय तत्सवितुरित्यस्य विश्वामित्र ऋषिः सविता देवता गायत्री छन्दः। पञ्चगव्यार्थं गोमूत्रादाने विनियोगः—'तत्सवितुर्व० यात्' इति नीलवर्णाया गोः पलपरिमितं मूत्रं पञ्चगव्यार्थं आसादिते पात्रे गृहीत्वा, गन्धद्वारामित्यस्य याज्ञिक्यो देवता उपनिषद ऋषिः श्रीर्देवता। अनुष्टुप्छन्दः। गोमयादाने विनियोगः—'गन्धद्वारां० श्रियम्' इति तस्मिन्गोमूत्रे कृष्णाया गोरङ्गुष्ठार्धपरिमितं शकृद्गृहीत्वा, आप्यायस्वेत्यस्य सोमोऽग्निर्वा ऋषिः सोमो देवता गायत्रीछन्दः क्षीरादाने विनियोगः—'आप्यायस्व स० संगथे' इति ताम्रवर्णाया गोः सप्तपलपरिमितं क्षीरं तस्मिन्नेव गृहीत्वा, दधिक्राव्ण इत्यस्य विश्वे देवा ऋषयः। दधिक्रावा देवताऽनुष्टुप्छन्दः, दध्यादाने विनियोगः—दधिक्राव्णो अ० तारिषत्" इति श्वेताया गोः पलत्रयपरिमितं दधि तस्मिन्नेव गृहीत्वा, शुक्रमसीत्यस्य प्रजापतिर्ऋषिः, आज्यं देवता, यजुः, आज्यादाने विनियोगः—'शुक्रमसि ज्योतिरसि तेजोऽसि' इति कपिलाया गोरेकपलमितमाज्यं तस्मिन्नेव गृहीत्वा, देवस्य त्वेत्यस्य प्रजापतिरग्निः सोमो वा ऋषिः। उदकं देवता, यजुः। कुशोदकादाने विनियोगः—'देवस्य त्वा सवितुः० हस्ताभ्यां गृह्णामि' इत्येकपलपरिमितं सप्तभिः कुशैः स्रावितमुदकं तस्मिन्नेव गृह्णीयात्। देवस्य त्वेत्यस्मिन्मन्त्रेऽभिषिञ्चामीति वाक्यशेषं केचिदाहुः।

तत आपो हि ष्ठेतिमन्त्रत्रयस्याग्निर्विश्वे देवा वा ऋषयः। आपो देवता, गायत्रीछन्दः। पञ्चगव्यमन्थने विनियोगः—'आपो हि ष्ठा० था च नः' इति तैरेव सप्तभिः कुशैरन्यैर्वा मन्थेत्।

तत आज्यं विलाप्येत्यादि पर्यग्निकरणकाले पञ्चगव्यस्यापि पर्यग्निकरणं,

---

१ ङ. °कृतमाज्येन यक्ष्य। २ ङ. कुर्यात्। ३ क. °द्वाना°। ४ क. च. तत्राऽऽज्य°। ५ ङ. °स्य स्वयंभूर्ऋषिः श्रीर्दे°। ६ क. च. °तं तद्गृ°। ७ क. °पतिः सो°। ८ क. °वा ऋ°। ९ ङ. °ति सप्तभिर्दर्भैर्मन्थे°।

बर्हिष्याज्यासादनानन्तरमाज्यस्योत्तरतो बर्हिषि पञ्चगव्यपात्रासादनम्। आज्योत्पवनानन्तरं पञ्चगव्यस्याप्युत्पवनमिति केचित्।

ततः पवित्रप्रहरणादि, अन्वाधानोत्कीर्तितपक्षानुसारेण प्रसाधनीदेवीहोमान्तं व्याहृतिहोमान्तं वा कृत्वा पञ्चगव्यहोमं कुर्यात्।

स यथा—आसादितान्सप्त दर्भान्गृहीत्वा तैरुद्धृत्योद्धृत्य जुहोति। (* अशक्यत्वाद्दर्भेषु दर्वी सहायार्थं ग्राह्या। अग्नये स्वाहा सोमाय स्वाहेत्यनयोर्वामदेवो विश्वे देवा ऋषयः। अग्नीषोमौ क्रमेण देवते यजुः पञ्चगव्यहोमे विनियोगः।) 'अग्नये स्वाहा' अग्नय इदं०। 'सोमाय स्वाहा' सोमायेदं०। इरावतीमितिमन्त्रस्य सोमो विष्णुस्त्रिष्टुप्। पञ्चगव्यहोमे विनियोगः—'इरावती धेनु० मयूखैः स्वाहा' विष्णव इदं०। इदं विष्णुरित्यस्य सोमो विष्णुर्गायत्री। पञ्चगव्यहोमे विनियोगः—'इदं विष्णुर्विचक्रमे० पांसुरे स्वाहा' विष्णव इदं०। विष्णोर्नुकमित्यस्य सोमो विष्णुस्त्रिष्टुप्। पञ्चगव्यहोमे विनियोगः—'विष्णोर्नुकं० गायः स्वाहा' विष्णव इदं०। मा नस्तोक इत्यस्याग्नी रुद्रो[1] जगती। पञ्चगव्यहोमे विनियोगः—'मा नस्तोके तनये० विधेम ते स्वाहा' रुद्रायेदं०। अप उपस्पृश्य, तत्सवितुरिति गायत्र्या विश्वामित्र ऋषिः। सविता देवता गायत्री छन्दः। पञ्चगव्यहोमे विनियोगः—'तत्सवितुर्वरेण्यं भर्गो० यात्स्वाहा' सवित्र इदं०। ब्रह्म जज्ञानमित्यस्याग्निर्ब्रह्मा[2] त्रिष्टुप्। पञ्चगव्यहोमे विनियोगः—'ब्रह्म जज्ञानं० विवः स्वाहा' ब्रह्मण इदं[3]०। अवशिष्टपञ्चगव्यस्य चतुर्थभागं पालाशपत्र उद्धृत्य, प्रणवस्य परब्रह्मर्षिः परमात्मा देवता गायत्री छन्दः। पञ्चगव्यचतुर्थभागहोमे विनियोगः। 'ॐ स्वाहा' इत्यावृत्तेन प्रणवमन्त्रेण यावतीभिराहुतीभिश्चतुर्थभागहोमो भवति तावतीराहुतीर्दर्भैरेव जुहुयात्। परमात्मन इदं०। अन्वाधाने यद्यग्नेरुत्कीर्तनं कृतं भवति तदा प्रणवस्य देवतोत्कीर्तनेऽग्निरुत्कीर्तनीयः। अस्मिन्कल्पेऽग्नय इदमिति त्यागः।

ततोऽवशिष्टं पञ्चगव्यं प्रणवेनाऽऽलोड्य तेनैवाभिमन्त्र्याऽऽसनाद्बहिरुपविश्य प्रणवेनै[4] हस्तेनाऽऽदौ किंचित्पीत्वाऽवशिष्टं सर्वं हस्तेन पात्रान्तरेण वा तूष्णीमेव पिबेद्। अत्रापि पूर्ववदृष्यादिस्मरणम्। पञ्चगव्यालोडने विनि-

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके।

१ ङ. रुद्रस्त्रिष्टुप्। प°। २ ङ. °ब्रह्म त्रि°। ३ ङ. °दं०। प्र°। ४ ङ. °न सर्वं पिबेत्।

योगः। पञ्चगव्याभिमन्त्रणे विनियोगः। पञ्चगव्यपाने विनियोगः। इति विनियोगवाक्येषु विशेषः।

ततो हस्तपादमुखप्रक्षालनं[1] कृत्वा पवित्रे त्यक्त्वा द्विराचम्यान्ये पवित्रे धृत्वा स्वासन उपविश्य स्विष्टकृदाद्यङ्गहोमादि[2] वा पूर्वान्तानुसारेण होमशेषं समापयेत्। अयं च सर्वैरपि पृथक्पृथगेव कार्यः। एतच्च कृताकृतम्।

## अथाऽऽपूर्विकतन्त्रेण प्रयोगः।

कर्ताऽऽचमनाद्यन्वाधानाङ्गभूतप्राणायामान्तं कृत्वा ब्रह्मकूर्चहोमकर्मणि या यक्ष्यमाणा[3] इत्यादि प्रसाधनीदेव्यन्तं व्याहृत्यन्तं वोक्त्वा, प्रधानहोमे, अग्निं पञ्चगव्येन यक्ष्य इत्यादि पञ्चगव्यचतुर्थभागेन[4] यावत्य आहुतयो भवन्ति तावतीभिः पञ्चगव्याहुतिभिर्यक्ष्य इत्यन्तमुक्त्वा समिधोऽग्नावाधायाग्निं परिस्तीर्य दर्वीं सप्तपत्रात्मकान्हरितानक्षतान्केनचिद्दर्भेण बद्धान्दर्भानाज्यस्थालीं पञ्चगव्यार्थं पात्राद्यन्यतमं पात्रमुपवेषं[5] संमार्गदर्भानिध्मं बर्हिरवज्वलनदर्भा[6]-नाज्यं पञ्च गव्यानि समिधं चाऽऽसाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्य दर्वीं दर्भाग्रैः संमृज्य पञ्चगव्यं निष्पाद्याऽऽज्यविलापनादिपवि-त्राभ्याधानान्तं कुर्यात्। पर्यग्निकरणकाले पञ्चगव्यस्यापि पर्यग्निकरणम्।

ततः—"अदितेऽनुमन्यस्व" इति परिषेकं कृत्वाऽऽसादितां समिधमाधाय पूर्ववत्प्रधानाहुतीर्हुत्वाऽवशिष्टं पञ्चगव्यं प्रणवेनाऽऽलोड्य प्रणवेनाभिमन्त्र्य प्रणवेन सर्वं पूर्ववत्पिबेत्[7]।

ततो हस्तपादमुखप्रक्षालनं[8] कृत्वा पवित्रे त्यक्त्वा द्विराचम्यान्ये पवित्रे धृत्वा व्यस्तसमस्तव्याहृतिभिश्चतस्र आहुतीर्जुहुयात्। एतद्धोमाकरणे नाऽऽज्यसंस्कारः। पञ्चगव्यस्य पर्यग्निकरणं भवत्येव। ततः परिस्तरणानि विसृज्योत्तरपरिषेकं कुर्यात्। इति ब्रह्मकूर्चहोमप्रयोगः।

## अथोपाकरणप्रयोगः।

कर्ता कृतनित्यक्रियः पवित्रपाणिराचम्य प्राणानायम्य देशकालौ संकीर्त्य, अध्येष्यमाणानां छन्दसामस्थानोच्छ्वासादिजनितयातयामतानिरासपूर्वकाप्या-यनसिद्धिद्वारा[9] श्रीपरमेश्वरप्रीत्यर्थं वेदोपाकरणाख्यं कर्म करिष्य इति संकल्पं

१ ङ. हस्तं मुखं च प्रक्षाल्य पवि°। २ ङ. °विश्याङ्गहोमादि स्विष्टकृदादि वा होमशेषं। ३ ङ. °णा देवतास्ताः सर्वाः परिग्रहीष्यामि। अग्निं। ४ ङ. °न यक्ष्य। ५ ङ. पात्रं प्रोक्षणीपात्रमु°। ६ ङ. °र्भानवज्व°। ७ ङ. °वं पिबे°। ८ ङ. हस्तं मुखं च प्रक्षाल्य पवि°। ९ ङ. °रासेनाऽऽप्या°।

कुर्यात्। (* अयं संकल्पः प्रथमोपाकरणोत्तरं वेदारम्भ इति पक्षे। तत्पूर्वं वेदाध्ययनारम्भ इति पक्षे तु—अधीतानां छन्दसामध्येष्यमाणानां चास्थानोच्छ्वासादिजनितयातयामतानिरासपूर्वकाप्यायनसिद्धिपुनर्वेदग्रहणाधिकारसिद्धिद्वारेत्येवं संकल्पः। द्वितीयाद्युपाकर्मणि तु—अध्येष्यमाणानां छन्दसामस्थानोच्छ्वासादिजनितयातयामतानिरासपूर्वकाप्यायनसिद्धिपुनर्वेदग्रहणाधिकारसिद्धिद्वारेत्येवं संकल्पः।) यदा तु स्वस्यान्तेवासिनः शिष्याः स्युस्तदा[३] श्रीपरमेश्वरप्रीत्यर्थमित्यनन्तरमेभिः शिष्यैः सह वेदोपाकरणाख्यं कर्म करिष्य इत्येवमूहेन संकल्पः कार्यः। उपाकरणकर्मसंकल्पः सर्वैरपि कार्य इति[४] संप्रदायः। कृतविवाहैः शिष्यैस्तु केनचिन्निमित्तेन गुरुसांनिध्येऽपि पृथगेवोपाकर्म कार्यम्[५]। उपाकर्मप्रथमप्रयोगाङ्गभूतं गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च प्रधानसंकल्पोत्तरं तत्पूर्वं वा तत्पित्रा तदभावे तत्पितामहादिभिः कारयेत्। सर्वेषामप्यभावे[६] आचार्य एव कुर्यात्। तत्र संस्कार्यस्य पितृणामुत्कीर्तनम्[७]। यदि पितैवाऽऽचार्यस्तदा प्रथमोपाकर्मप्रयुक्तं गणपतिपूजनादि स्वयमेव कुर्यात्। प्रथमोपाकर्म भद्राव्यतीपाताधिमासास्तादिषु न भवति। अत्रोक्तं संभवद्दिनं ग्राह्यम्। द्वितीयादिष्वपि[८] शुद्धकालान्तरसंभवे भद्राव्यतीपाताधिमासास्तादिनिषेधोऽस्त्येवेति केचित्। तत आचार्य उपाकर्माङ्गभूतहोमार्थस्य[९] स्थण्डिलस्य गोमयोपलेपनोद्धननादिसंस्कारं विधाय बलवर्धननामानमग्निं प्रतिष्ठापयामीति लौकिकाग्निं तत्र प्रतिष्ठाप्य प्रज्वाल्य ध्यायेत्। यदि शिष्या न स्युस्तदौपासनाग्निमेव बलवर्धननामाऽयमग्निरिति ध्यायन्प्रज्वाल्य ध्यायेत्। नोद्धननादिप्रतिष्ठापनान्तमत्र। ततोऽन्वाधानम्। समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वोपाकरणहोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तमुक्त्वा प्रधानहोमे प्रजापतिं काण्डर्षिं सोमं काण्डर्षिमग्निं काण्डर्षिं विश्वान्देवान्काण्डर्षीन्सावित्रीमृग्वेदं यजुर्वेदं सामवेदमथर्ववेदं सदसस्पतिं चाऽऽज्येन यक्ष्ये। यज्ञोपवीतधारणाङ्गभूतयज्ञोपवीतहोमे परमात्मानं यज्ञोपवीतेन यक्ष्ये। जयोपहोमे चित्तं चित्तिमित्यादि। स्वायंभुवकाण्डस्य वैश्वदेवकाण्डानन्तर्भावपक्षे विश्वान्देवान्काण्डर्षीनित्येतदनन्तरं स्वयंभुवं काण्डर्षिमित्युक्त्वा सावित्रीमित्यादि वदेत्। आरुणकाण्डस्याप्यनन्तर्भावपक्षे स्वयं-

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके।

१ च. 'यं च सं'। २ च. 'दार'। ३ ङ. 'दा, एभिः। ४ ङ. 'ति शिष्टाः। तत्रैभिः शिष्यैः सहेत्यस्य लोपः। कृ'। ५ ङ. 'म्। कस्यचिच्छिष्यस्य यदि प्रथमोपा'। ६ ङ. 'भावे स्वयमेव कु'। ७ ङ. 'म्। पुत्रस्य चेत्प्रथममुपा'। ८ ङ. 'पि सं'। ९ क. 'मार्थ स्थ'।

भुवं काण्डर्षिमित्यनन्तरमरुणान्काण्डर्षीनित्युक्त्वा सावित्रीमित्यादि वदेत् । सांहितीदेवतोपनिषदादीनामप्यनन्तर्भावपक्षेऽरुणान्काण्डर्षीनित्यनन्तरं सांहितीर्देवता उपनिषदो वारुणीर्देवता उपनिषदो याज्ञिकीर्देवता उपनिषद इत्युक्त्वा सावित्रीमित्यादि वदेत् । तत्सवितुरित्यनेन होमपक्षे सावित्रीमित्येतस्य स्थाने सवितारमित्युत्कीर्तयेत् । काण्डनामभिर्होमपक्षे प्रधानहोमे प्राजापत्यं काण्डं सौम्यं काण्डमाग्नेयं काण्डं वैश्वदेवं काण्डं सावित्रीमृग्वेदमित्यादि । स्वायंभुवकाण्डस्यानन्तर्भावपक्षे वैश्वदेवं काण्डमित्येतदनन्तरं स्वायंभुवं काण्डमित्युक्त्वा सावित्रीमित्यादि समानम् । आरुणकाण्डस्याप्यनन्तर्भावपक्षे स्वायंभुवं काण्डमित्येतदनन्तरमरुणं काण्डमित्युक्त्वा सावित्रीमित्यादि । सांहितीदेवतोपनिषदादीनामप्यनन्तर्भावपक्ष आरुणं काण्डमित्येतदनन्तरं सांहितीदेवतोपनिषत्काण्डं वारुणीदेवतोपनिषत्काण्डं याज्ञिकीदेवतोपनिषत्काण्डमित्युक्त्वा सावित्रीमित्यादि समानम् । पात्रासादन आज्यासादनोत्तरमुपवीतासादनम् । व्याहृतिहोमान्ते 'प्रजापतये काण्डर्षये स्वाहा' प्रजापतये काण्डर्षय इदं न मम । 'सोमाय काण्डर्षये स्वाहा' सोमाय काण्डर्षय इदं न मम । 'अग्नये काण्डर्षये स्वाहा' अग्नये काण्डर्षय इदं न मम । 'विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः स्वाहा' विश्वेभ्यो देवेभ्यः काण्डर्षिभ्य इदं न मम । 'स्वयंभुवे काण्डर्षये स्वाहा' स्वयंभुवे काण्डर्षय इदं न मम इत्यन्वाधानोत्कीर्तनानुसारेण चतुरः पञ्च वा काण्डर्षीञ्जुहुयात् । अन्वाधाने षण्णामुत्कीर्तने—अरुणेभ्यः काण्डर्षिभ्यः स्वाहेति षष्ठीं जुहुयात् । नवानामुत्कीर्तने सांहितीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहेति सप्तमीम्, वारुणीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहेत्यष्टमीं, याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहेति नवमीं जुहुयात् । यथालिङ्गं त्यागः । अन्वाधाने काण्डनामोत्कीर्तने 'प्राजापत्याय काण्डाय स्वाहा, प्राजापत्याय काण्डायेदं न मम । सौम्याय काण्डाय स्वाहा, सौम्याय काण्डायेदं न मम । आग्नेयाय काण्डाय स्वाहा । आग्नेयाय काण्डायेदं न मम । वैश्वदेवाय काण्डाय स्वाहा । वैश्वदेवाय काण्डायेदं न मम । स्वायंभुवाय काण्डाय स्वाहा । स्वायंभुवाय काण्डायेदं न मम' इत्यन्वाधानोत्कीर्तितपक्षानुसारेण चतुर्भिः पञ्चभिर्वा काण्डनामभिर्होमः । अन्वाधाने षण्णामुत्कीर्तने—आरुणाय काण्डाय स्वाहेति षष्ठ्याहुतिः । नवानामुत्कीर्तने सांहितीदेवतोपनिषत्काण्डाय स्वाहा । वारुणीदे० त्काण्डाय स्वाहा । याज्ञिकीदे० त्काण्डाय स्वाहेत्यारुणकाण्डाहुतेरनन्तरमेतास्तिस्रो होतव्याः । यथालिङ्गं त्यागः । ततः सावित्र्यै स्वाहा । सावित्र्या इदं० । अन्वाधाने सवितुरुत्कीर्तने तत्सवितुरिति गायत्र्या स्वाहान्तया होमः । एतस्या ऋष्यादि

पूर्ववत् । उपाकर्मप्रधानाज्यहोमे विनियोग इति विनियोगे विशेषः । सवित्र इदमिति त्यागः । तत ऋग्वेदाय स्वाहा । ऋग्वेदायेदं न मम । यजुर्वेदाय स्वाहा । यजुर्वेदायेदं न मम । सामवेदाय स्वाहा । सामवेदायेदं न मम । अथर्ववेदाय स्वाहा । अथर्ववेदायेदं न मम । सदसस्पतये स्वाहा । सदसस्पतय इदं न मम । अथवा 'सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिष९ स्वाहा' इति मन्त्रेण होमः । एतस्यर्ष्यादिकाण्डव्रतप्रकरण उक्तम् । उपाकर्मप्रधानाज्यहोमे विनियोग इति विनियोगे विशेषः । त्यागस्तु स एव । ततो दर्व्या यज्ञोपवीतं गृहीत्वा यज्ञोपवीतं परममित्यस्य परब्रह्म परमात्मा देवता त्रिष्टुप् । यज्ञोपवीतधारणाङ्गभूतहोमे विनियोगः । 'यज्ञोपवीतं० तेजः स्वाहा' इत्यग्नौ जुहोति । परमात्मन इदमिति त्यागः । अत्राऽऽचाराद्ब्रह्मचारिणे यज्ञोपवीतं मेखलामजिनं दण्डं च तत्तन्मन्त्रेण दत्त्वा जीर्णान्यप्सु प्रक्षिपेदिति शिष्टाः । सर्वैर्यथाचारं यज्ञोपवीतानि ब्राह्मणेभ्यो दत्त्वा विधिना धार्याणि । (* दानधारणे शास्त्रान्तरोक्तत्वात्कृताकृते । एवं तदङ्गभूतहोमोऽपि । ) ततः सर्वे 'इषे त्वा यज्ञस्य शुन्धध्वम्' इति त्रीननुवाकानधीयते । अथवा—इषे त्वेत्यनुवाकः । आप उन्दन्त्वित्यनुवाकः । घर्मः शिरस्तदयमग्निरित्यनुवाकः । अनुमत्यै पुरोडाशमष्टाकपालं निर्वपतीति संहिताप्रथमकाण्डस्याष्टमप्रश्नाद्यानुवाकः । सह वै देवानामिति खण्डद्वयम् । भद्रं कर्णेभिरित्यनुवाको मन्त्रद्वयं वा । शीक्षां व्याख्यास्याम इत्यनुवाकः[1] । भृगुर्वै वारुणिरित्यनुवाकः[2] । अम्भस्य पारे भुवनस्य मध्य इत्यनुवाक एकर्वा[3] । इत्येते काण्डादयस्तानधीयीरन् । खण्डद्वयाध्ययने पूर्वमुत्तरं च नमो ब्रह्मण इति

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यो ग्रन्थः स यथा—"हुत्वा दत्त्वा च धारयेदिति शास्त्रान्तराद्यज्ञोपवीतहोमस्यापि प्रधानत्वेन कर्तव्यत्वं कैश्चिदुक्तं तत्तुच्छम् । हुत्वा दत्त्वा च धारयेदिति क्त्वाप्रत्ययाद्धोमदानयोरुपाकरणोत्सर्जनाङ्गभूतयज्ञोपवीतधारणाङ्गत्वस्यैव प्रतीतेः प्रधानत्वाभावात् । होमदानधारणानि शास्त्रान्तरप्रोक्तत्वात्कृताकृतानि । करणेऽभ्युदयेऽकरणे प्रत्यवायाभाव इति द्रष्टव्यम् । हुत्वेति क्त्वाप्रत्ययः पूर्वकालत्वमात्रं बोधयति न त्वङ्गत्वं, तेन यज्ञोपवीतहोमस्य प्रधानत्वमेवेति यद्युच्यते तदाऽपि यज्ञोपवीतहोमा[न]नुष्ठानमेव । प्रधानोपसंहारस्यानिष्टत्वात् । अन्यथोपनयनादिष्वपि शास्त्रान्तरोक्तप्रधानहोमानिप्रसङ्गापत्तेः । न चैव हुत्वा दत्त्वा च धारयेदितिशास्त्रान्तरोक्तस्य यज्ञोपवीतहोमस्य निरवकाशत्वापत्तिरिति वाच्यम् । यस्मिन्सूत्रे कारिकासु वा यज्ञोपवीतहोमो विहितो भवेत्तत्रैतस्य सावकाशत्वसंभवात् । अस्ति चायं होमो विहित आश्वलायनगृह्यकारिकासु । दानधारणयोस्तु प्रधानत्वाभावादुपसंहारः शक्तौ सत्यां न विरुद्धः" इति ।

1 च. °रमा° । 2 ङ. °कः । ब्रह्मविदित्यनुवाकः । भृ° । 3 क. इर्काम्बरा । च एकार्वरा ।

शान्तिं पठेत् । भद्रप्रश्नाद्यध्ययने भद्रं कर्णेभिरिति पूर्वमुत्तरं च शान्तिः । शीक्षाप्रपाठकाद्यध्ययने शं नो मित्र इति यथायथं पूर्वोत्तरे शान्ती । इतरप्रपाठकाद्यध्ययने प्रतिप्रपाठकादि सह नाववत्विति पूर्वमुत्तरं च शान्तिः । होमानुसारेण काण्डाद्यध्ययनं कर्तव्यम् । एतदनुसारेणैव काण्डत्रैतवेदपारायणोपाकरणोत्सर्जनयोरपि द्रष्टव्यम् । सर्वे आरण्यकमन्त्रा उपांश्वेव वक्तव्याः । यद्यनारब्धवेदाः शिष्याः स्युस्तदाऽऽचार्यो वाचयेत् । उपाकरणात्पूर्वमेवैषे त्वेत्यनुवाकत्रयं काण्डादीन्वाऽध्यापयेदिति केचित् । नात्र ब्रह्मयज्ञविधिः । तत आचार्य *उपाकृता वै वेदाः । त्र्यहमेकाहं वाऽनध्यायः कार्य इति शिष्यान्वदेत् । ततश्चित्तं च स्वाहेत्यादिपूर्णपात्रदानान्तं कृत्वाऽग्निं संपूज्य विभूतिं धृत्वा विष्णुं संस्मरेत् । नात्र त्रिवृदन्नहोमः । ततस्त्र्यहमेकाहं वा स्वाध्यायदिनेषु विरम्य कृतान्तादध्येतव्यम् । न वाऽनध्यायः । उपाकर्मदिनमारभ्य मासपर्यन्तं प्रदोषे नाध्येतव्यम् । 'श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत' इति धर्मसूत्रात् । व्याख्यातमेतदुज्ज्वलाकृता—

"मेषादिस्थे सवितरि यो यो दर्शः प्रवर्तते ।
चान्द्रमासास्तदन्ताः स्युश्चैत्राद्या द्वादश स्मृताः ॥
तेषु या या पौर्णमासी सा सा चैत्र्यादिका स्मृता ।
कादाचित्केन योगेन नक्षत्रस्येति निर्णयः"

तदेवं सिंहस्थे सवितरि याँ याऽमावास्या तदन्तचान्द्रमासे या मध्यवर्तिनी पौर्णमासी सा श्रावणी । श्रवणयोगस्तु भवतु वा न वा । तस्यां श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य गृह्योक्तेन विधिनोपाकर्म कृत्वा स्वाध्यायमधीयीत । अधीयानश्च मासमेकं प्रदोषे नाधीयीत प्रथमे रात्रिभागे नाधीयीत ग्रहणाध्ययनं धारणाध्ययनं च न कुर्यात् । प्रदोषग्रहणाद्रात्रावप्यूर्ध्वं न दोष इति । प्रदोषशब्देन पूर्वरात्रिर्विवक्षितेति माधवः ।

अस्मिन्दिने पतिमत्यो नार्यः सभादीपदानं कुर्वन्ति । एतच्चाऽऽचारप्राप्तम् । देशकालौ संकीर्त्य मम सौभाग्याद्यभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं सभादीपदानं करिष्य इति संकल्प्य गणपतिपूजनं दीपपूजनं विप्रपूजनं च कृत्वा

* क. पुस्तकटिप्पण्याम्—'अत्र उपाकृतानि काण्डानीत्येव वक्तव्यमिति युक्तं प्रतिभाति' इति वर्तते ।

१ ङ. पूर्वोत्तरे शान्ती । शी° । २ क. °काध्य° । ३ क. °काध्य° । ४ ङ. पूर्वोत्तरे शान्ती । हो° । ५ क. °ण्डाध्य° । ६ क. °त्रत वे° । ७ क. ङ. याऽमा° ।

"भो दीप ब्रह्मरूपस्त्वं ज्योतिषां प्रभुरव्ययः।
सौभाग्यं देहि मे पुत्रानवैधव्यं च देहि मे।
श्रावणे मास्युपाकर्मप्रारम्भे विप्रसंनिधौ।
व्रीहितण्डुलपिष्टानां पलाशीत्या विनिर्मितम्।
घृतवर्तिसमायुक्तं विमले कांस्यभाजने।
स्थापितं तण्डुलप्रस्थयुक्पूगीफलसंयुतम्।
मातुलिङ्गश्रीफलादिपञ्चसंख्यफलैर्युतम्।
अवैधव्यसुपुत्रत्वदीर्घायुःश्रीसुखाप्तये।
अभीष्टस्यास्तु मे प्राप्तिर्भवेऽस्मिंश्च भवान्तरे।
श्रावण्यां श्रवणर्क्षे च सभायामग्निसंनिधौ।
सभादीपं प्रदास्यामि तुभ्यं विप्र सदक्षिणम्"।

इति सदक्षिणं विप्राय दद्यात्। प्रतिगृह्णामीति विप्रः। एवं पञ्चवर्षपर्यन्तं श्रावण्यां पौर्णमास्यां दीपदानं कृत्वोद्यापनं कुर्यात्। पञ्चवर्षपर्यन्तं कृतस्य सभादीपप्रदानकर्मणः संपूर्णताया उद्यापनं करिष्य इति संकल्प्य गणपतिं संपूज्य पञ्चप्रस्थसंमितानि पञ्च धान्यानि पञ्चसु पात्रेषु भूमौ वा निधाय मध्यस्थधान्यराशौ प्रस्थपरिमिततण्डुलपूरितं पात्रं निधाय तत्र दीपं संस्थाप्य तत्समीपे यथासंभवसुवर्णनिर्मिते रजतनिर्मिते वा दीपपात्रे यथासंभवसुवर्णनिर्मितां वर्तिकां निधाय तत्समीपे कार्पासवर्तिकां घृताभ्यक्तां निधाय दीपद्वयं प्रज्वाल्य दीपपात्रद्वयं यज्ञोपवीतेन वेष्टयित्वा वस्त्रद्वयं समीपे संस्थाप्य दीपं विप्रं च संपूज्य सभादीपदानसंपूर्णताया इमं सोपस्करं सदक्षिणं सभादीपं संप्रददे न ममेति दद्यात्। इत्याचारप्राप्तं सभादीपप्रदानम्।

## अथोत्सर्जनम्।

तत्रेदं सूत्रम्—'तैषीपक्षस्य रोहिण्यां पौर्णमास्यां वोत्सर्गः' इति। तिष्येण युक्ता संनिहिता वा पौर्णमासी तैषी तया युक्तः पक्षस्तैषीपक्षः। तैषमासशुक्लपक्ष इति यावत्। पुष्यस्यैव तिष्य इति नामान्तरम्। तैषशुक्लपक्षस्य रोहिण्यां पौर्णमास्यां वोत्सर्गः। उत्सर्जनं कर्तव्यमित्यर्थः। अध्यायस्येति शेषः। धर्मसूत्रेऽपि—'तैषीपक्षस्य रोहिण्यां विरमेत्' इति। पुनरिदं वचनं रोहिण्या मुख्यत्वं द्योतयितुम्। पर्वनक्षत्रनिर्णयः पूर्ववदेवात्रापि द्रष्टव्यः। रोहिणीपौर्णमास्योरर्धरात्रात्पूर्वं संक्रान्तिग्रहणसत्त्वे माघ्यां पौर्णमास्यां हस्ते वा कार्यं बौधायनसूत्रात्। अर्धरात्रोत्तरं संक्रान्तिग्रहणसत्त्वे तु तस्मिन्नेव दिने कार्यम्। अस्तादिनिर्णयोऽपि पूर्ववदेव।

# अथोत्सर्जनविधिः ।

तत्र सूत्रम्—" सगणः प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य यत्राऽऽपः सुखाः सुखावगाहास्तत्रावगाह्याऽऽघमर्षणेन त्रीन्प्राणायामान्कृत्वा सपवित्रैः पाणिभिरापो हि ष्ठेति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इति चैतेनानुवाकेन स्नात्वा " इति ।

सगणः सशिष्यगणः । सशिष्य इत्येव वक्तव्ये सगण इतिवचनं स्वसंनिधौ स्थितानामकृतविवाहानामेवात्र ग्रहणं नेतरेषामितिद्योतनार्थम् । तेन कस्यचित्कृतविवाहस्य गृहस्थाश्रमिणः शिष्यस्य पुनर्गुरुसंनिधानेऽपि पृथगेवोत्सर्जनं भवति । एवमुपाकर्मापि । प्राचीमित्यतः पूर्वं ग्रामादिति शेषः । गत्वेति परित्यज्योपनिष्क्रम्येति वचनादेवं ज्ञायते ग्रामान्निर्गमन एव प्राच्या उदीच्या वा दिशो नियमो न गमन इति । यत्र यस्मिन्देशे सुखा निर्मलाः सुखस्पर्शाश्च सुखावगाहा ग्राहादिरहितत्वेन सुखेनावगाह्यास्तत्रावगाह्य निमज्ज्य स्नात्वेतियावत् । अत्र पूर्वं भस्मगोमयमृत्तिकास्नानाख्यं कर्म, हिरण्यशृङ्गमिति तीर्थेशप्रार्थनं, नमोऽग्नयेऽप्सुमत इति देवतानमनं, सुमित्रा न इति मार्जनं, दुर्मित्रा इत्यादिभिस्त्रिभिर्मन्त्रैर्द्वेष्यदिशि जलक्षेपणं, यदपां क्रूरमिति जलदोषदूरीकरणम्, अत्याशनादित्येतन्मन्त्रपठनम्, इमं मे गङ्ग इति नदीप्रार्थनं च कार्यम् । ऋतं च सत्यं चेत्येतत्तृचात्मकं सूक्तमाघमर्षणं तेन त्रीन्प्राणायामान्कुर्यात् । निमज्ज्येत्यत्रल्यक्त्वाप्रत्ययेन निमग्नः सन्नेव प्राणायामान्कुर्यादिति बोध्यते । आघमर्षणसूक्तपाठप्राणायामयोः समानकालिकत्वमेवात्र न तु सूक्तान्ते प्राणायामः । निमग्नस्य प्राणयमनं[1] विना तत्पाठासंभवात् । अयं च सूक्तपाठो मनसैव न तूपांशु यजुर्वेदेन क्रियत इतिपरिभाषाप्राप्तमुपांशुत्वं संभवति । तत्राप्युच्चारणस्य सत्त्वेन तदसंभवात् । करणवदशब्दममनःप्रयोगमुपांश्विति ह्युपांशुलक्षणम् । अवगाह्याऽऽघमर्षणेन त्रीन्प्राणायामान्कृत्वेत्येतत्सूत्रम् ।

" अवगाह्य जले मग्न ऋतं चेति तृचं पठन् ।
मनसा प्राणमायच्छेत्त्रिवारमिदमीरितम् " ॥

इति स्मृतिवचनानुरोधादित्थं व्याख्यातम् । अथवाऽऽघमर्षणं सूक्तं जले घ्राणं नियोज्य पठित्वा तदन्ते प्राणायाम इति यथाश्रुत एवार्थः ।

१ च. प्राणायामं ।

तथा च स्मृतिः—" संयोज्य वारिणि घ्राणमृतं चेति तृचेन तु।
त्रिरावृत्तेन त्रीन्कुर्यात्प्राणायामान्सदा बुधः" इति।

अस्मिन्कल्प उपांशुधर्मेण ऋतमिति तृचं पठित्वा तदन्ते प्राणायामः कार्यः। एवमन्यौ द्वौ प्राणायामौ, इति प्रयोगः। पूर्वकल्पे तु निमग्नः सन्नेव मनसा ऋतमिति तृचं पठन्प्राणायामं कुर्यात्। एवमन्यौ द्वौ, इति प्रयोगः। उभयकल्पेऽपि अत्राऽऽतमितोरितिवचनाभावान्न यावद्बलत्वनियमः। त्रिः प्राणमायच्छेदित्येव वक्तव्ये त्रीन्प्राणायामानित्येवं वचनं त्रिष्वपि मन्त्रवत्ता, न तु सकृन्मन्त्रेण द्विस्तूष्णीमितिज्ञापनार्थम्। त्रीनितिवचनं चतुरादिसंख्यानिवृत्त्यर्थम्। स्मृतित एव सपवित्रपाणित्वे सिद्धेऽत्र वचनं पूर्वधृतपवित्रत्यागं द्योतयति। चकारः शास्त्रान्तरोक्तद्रुपदामन्त्रसमुच्चयार्थः। यत्पृथिव्या रजस्वे(जः स्वमि)त्यादिमन्त्रसाध्यानां मार्जनोत्तरकर्मणामप्यत्र संग्रहः। सपवित्रपाणय इत्येवं वक्तव्ये सपवित्रैः पाणिभिरित्येवं वचनं केवलं सोदकैः पाणिभिरेव मार्जनं न तु दर्भैरित्येवमर्थम्। स्नात्वेत्यस्य मार्जयित्वेत्यर्थः। तथा च स्मृतिः—" स्नात्वा त्रिः प्राणमायच्छेदब्लिङ्गैर्मार्जनं ततः" इति।

एवं स्नानं कृत्वा देवर्षिपितृपूजनं कुर्यात्। तत्र सूत्रम्—' दर्भानन्योन्यस्मै संप्रयच्छन्तोऽदित्सन्त इवान्योन्यम्' इत्यादि ' अमुष्मै नमोऽमुष्मै नमः' इत्यन्तम्। दर्भानन्योन्यस्मै संप्रयच्छन्त इत्यस्याऽऽसनानि कल्पयन्तीत्यत्रान्वयः। तेनाऽऽसनार्थमिदं दर्भदानम्। संप्रयच्छन्त इति शतृप्रत्ययाद्दानासनकल्पनयोः समकालिकता। अन्योन्यस्मै परस्परमित्यर्थः। अदित्सन्त इवान्योन्यमिति दाने विशेषोऽयमदृष्टार्थं विधीयते। अन्योन्यं परस्परमदित्सन्त इव दातुमनिच्छन्त इव दर्भान्संप्रयच्छन्त इत्यर्थः। अथवा संप्रयच्छन्त आदित्सन्त इवान्योन्यमिति पाठः। अन्योन्यं प्रत्यादित्सन्तो मुष्णन्त इव दर्भान्संप्रयच्छन्त इत्यर्थः। दर्भदानासनकल्पनयोर्मध्ये दर्भदानं सव्यहस्तेन तस्यामुख्यत्वात्। आसनकल्पनं तु मुख्यं कार्यं मुख्येन दक्षिणहस्तेन। एवं चोभयोर्न समानकालिकत्वासंभवः। दर्भदानस्य प्रयोजनाकाङ्क्षायामनन्तरविहितासनकल्पनार्थत्वे सामर्थ्यादवगते सति अर्थादासनकल्पनस्य मुख्यत्वं सिध्यति। दक्षिणहस्तस्य मुख्यत्वं तु—

" यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः"

इति च्छन्दोगपरिशिष्टात्, ' एकाङ्गवचने दक्षिणं प्रतीयादनादेशे' इत्याश्वलायनसूत्राच्च ज्ञेयम्। तत इत्यस्य तस्मिन्नित्यर्थः। समीपसप्तमीयम्। तच्च

सामीप्यं पूर्वं स्नानोपक्रमाज्जलस्य ज्ञेयम् । स्मृतित एव शुचिदेशस्य प्राप्तावत्र विधानं शुद्धस्यापि देशस्य गोमयोपलेपनेनापि शुद्धिरस्मिन्नवसरेऽवश्यं कार्येतिज्ञापनार्थम् । प्राचीनप्रवण इतिवचनं समत्वोदक्प्रवणत्वप्रागुदक्प्रवणत्वबाधनार्थम् । प्राचीनप्रवणः प्राच्यां दिशि निम्न इत्यर्थः । उदगग्रताया अपि पक्षे प्राप्तत्वात्तद्बाधनार्थं प्रागग्रैरिति दर्भविशेषणम् । दर्भैरितिबहुवचनात्त्रयस्त्रयो दर्भा ज्ञेयाः ।

" ऋषीणामासनं दर्भैः सप्तभिः सप्तभिः स्मृतम् "

इति स्मृतितः सप्त सप्त वाऽऽसने दर्भाः । एतस्यां स्मृतावृषिग्रहणं देवपित्रुपलक्षणम् । तेन देवपित्रासनदर्भाणामपि सप्तसंख्या ज्ञेया । उदगपवर्गाणीतिवचनं पक्षे प्राप्तायाः प्रागपवर्गताया बाधनार्थम् । कल्पयन्तीतिबहुवचनाच्छिष्यैरपि पृथक्पृथगासनकल्पनं कार्यं न त्वन्वारम्भमात्रेण सिद्धिः । एवमितरोपचारसमर्पणमपि । तत्र बहुवचनान्तस्यैव क्रियापदस्यानुषङ्गात् । न चाऽऽसनकल्पनमात्रं पृथक्पृथगस्तु, इतरोपचारसमर्पणं त्वाचार्येणैव कार्यमिति वाच्यम् । पूज्यै(जै)कदेशस्याऽऽसनकल्पनस्य बहुवचनेन सर्वकर्तृकत्वे सिद्ध इतरोपचारसमर्पणेऽपि सर्वकर्तृ[क]त्वस्यैव युक्तत्वात् । ब्रह्मादिभ्योऽङ्गिरोन्तेभ्यः । ब्रह्मण आसनं कल्पयामि, प्रजापतय आसनं कल्पयामीत्येवं ब्रह्मणे कल्पयामि, प्रजापतये कल्पयामीत्येवं वा तत्तन्नामभिस्तस्मै तस्मा आसनं कल्पयेयुरित्यर्थः । देवगणानामितिवचनं दैवेन तीर्थेन तर्पणार्थम् । देवानामित्येव सिद्धे गणानामिति ग्रहणं त्रयोविंशतिसंख्याकेषु देवेषु मध्ये ब्रह्मादिनक्षत्रान्त एको गणः, इन्द्रराजादिवैश्रवणराजान्तो द्वितीयः पञ्चानां गणः, वस्वाद्यङ्गिरोन्तस्तृतीयो गण इति गणत्रित्वं ज्ञापयितुम् । ब्रह्मादिनक्षत्रान्तानां संलग्नान्यासनानि किंचिद्व्यवधानेन द्वितीयगणस्य तथैवाऽऽसनानि तथैव तृतीयस्येत्येवमनुष्ठानं गणत्रित्वस्य फलम् । इन्द्रराजादिवैश्रवणराजान्तानां राजत्वादिसमानधर्मत्वादेकगणत्वे सिद्धे ब्रह्मादिनक्षत्रान्तानामेको गणः, वस्वाद्यङ्गिरोन्तानामेको गण इत्यर्थात्सिध्यति । पञ्चसु राजत्वं तु " इन्द्रो राजा जगतश्चर्षणीनाम् । इन्द्रो राजा जगतो य ईशे । यमो राजा प्रमृणाभिः पुनातु मा । यमाय मधुमत्तमं२ राज्ञे हव्यं जुहोतन । आपो दीक्षा, तया वरुणो राजा दीक्षया दीक्षितः । ओषधयो दीक्षा, तया सोमो राजा दीक्षया दीक्षितः । राजाधिराजाय प्रसह्यसाहिने । नमो वयं वैश्रवणाय कुर्महे " इत्यादिमन्त्रसिद्धमपि । विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः । अत्रिर्वसिष्ठः कश्यप इत्येते सप्तर्षय इत्येतत्सूत्रं यत्र यत्र

१ ख. गणम् । २ क. च. 'धु म'

सप्तर्षिग्रहणं सप्तर्षीनुपस्थायेत्यादौ तत्रैतेषामेव संप्रत्यय इत्येतदर्थम् । अत्र निवीतिवचनात्पूर्वत्र यज्ञोपवीतिता गम्यते । उत्तरत इत्यत्र देवानामिति शेषः । तेषामेव पूर्वं क्लृप्तत्वात् । उदीचीनप्रवण इति वचनं पक्षे प्राप्तानां समत्वप्राक्प्रवणत्वप्रागुदक्प्रवणत्वानां बाधनार्थम् । अत्रापि शुचौ देश इत्यनुवर्तते । उदगग्रैरितिवचनं पक्षे प्राप्तायाः प्रागग्रताया बाधनार्थम् । प्रागपवर्गाणीतिवचनं पक्षे प्राप्ताया उदगपवर्गताया बाधनार्थम् । एतयोरन्तरालेऽरुन्धत्या इत्येतावतैव सिद्धे वसिष्ठकश्यपयोरन्तरालेऽरुन्धत्या इति गुरुसूत्रकरणमन्यत्रापि सप्तर्षयोऽरुन्धतीसहिता एव प्रत्येतव्या इत्येतदर्थम्, वसिष्ठकश्यपान्तराल एवारुन्धतीत्येवंभावनार्थं वा । यथोपस्थानादौ । अरुन्धत्या इत्यनन्तरं पुनः कल्पयन्तीतिवचनं विश्वामित्राद्यरुन्धत्यन्तानामेकगणत्वज्ञापनार्थम् । तेनैतेषां संलग्नान्यासनानि[3] । दक्षिणत इत्यत्र देवानामिति शेषः । प्राचीनप्रवणपदसाहचर्यात् । प्राचीनप्रवण इति वचनं समत्वोदक्प्रवणत्वप्रागुदक्प्रवणत्वबाधनार्थम् । ततोऽगस्त्यासनात्परिभाषयोत्तरतः[4] पुरतो वा । एकेतिवचनं कृष्णद्वैपायनादीनामेकैव वेदिः, देवानां वेदिरेका, सप्तर्षीणामरुन्धत्याश्चैका, अगस्त्यस्यैका, पितृणामेकेति, सर्वेषामेतेषां पृथक्पृथगेव वेद्य इत्येतदर्थम् । अथवा—एकवेद्याम्, एका केवला या वेदिस्तस्यामित्यर्थः । एकेतिवचनं तत एकवेद्यां तेभ्य इत्यत्र प्राचीनप्रवणे[5] देश इत्यस्याप्यनुवृत्तिः स्यात्, अनुवृत्तौ च सत्यां प्राचीनप्रवणरूप एव देशे वेदिः कर्तव्येति नियमः स्यात्स मा भूदित्येतदर्थम् । अस्मिन्कल्प इतरेषां वेदिरेव नास्ति । तेभ्य इतिवचनमेकगणत्वज्ञापनार्थम् । तेन संलग्नान्येवैतेषामासनानि । तेभ्यो वक्ष्यमाणेभ्यः प्रसिद्धेभ्यः कृष्णद्वैपायनादीतिहासपुराणान्तेभ्यः । वरूथिन इत्यनन्तरं वाजिन इति केषुचित्सूत्रपुस्तकेषु पाठः । वसिष्ठायेन्द्रायेति नामद्वयमेव प्रयोगवैजयन्तीकारोक्तेः । दक्षिणतः प्राचीनावीतिन इत्यत्र कृष्णद्वैपायनादीनामेव ग्रहणं संनिहितत्वात् । प्राचीनावीतविधानं यज्ञोपवीतनिवीतयोर्बाधनार्थम् । दक्षिणाप्रवणवचनं समत्वप्राक्प्रवणत्वोदक्प्रवणत्वप्रागुदक्प्रवणत्वबाधनार्थम् । दक्षिणाग्रैरितिवचनमुदगग्रत्वप्रागग्रत्वयोर्बाधनार्थम् । प्रत्यगपवर्गाणीतिवचनं प्रागपवर्गत्वोदगपवर्गत्वयोर्बाधनार्थम् । आत्रेयाय पदकारायेत्येकमेव नाम । एवं कौण्डिन्याय वृत्तिकारायेतीदमपि । यथास्वं यथायथं यथाधिकारमिति यावत् । पितृभ्य

१ क. नियम्यते । २ च. पूर्वक्लृ° । ३ ङ. च. °ग्नान्येवाऽऽस° । ४ क. च. °योत्त° । ५ क. च. °वणदे° ।

इत्यत्र पितरश्च मातरश्चेत्येकशेषः । एवं मातामहाश्च मातामह्यश्चेति । अत्र पितृमातृमातामहमातामहीशब्दैस्तत्तद्वर्गा उच्यन्ते । अत्र मातृशब्देन सपत्नमाताऽपि संग्राह्या । चकारेण रुयादिसमस्तपितृसमुच्चयः । अन्यथा नित्यतर्पणे पार्वणचतुष्टयस्यैवातिदेशः स्यात्, अन्येषां न स्यात्, अतः समुच्चय आवश्यकः । ( * अथवाऽद्भिर्देवानृषीन्पितृंश्च तर्पयन्तीत्यत्रैवमित्यतिदेशात्तत्तद्धर्मे तत्रत्यदेवर्षिपितृप्राप्तिः, अनुक्तानां रुयादीनां त्वत्रत्यचकारेणेति । अस्मिन्कल्पे नात्र रुयादिसमुच्चयः । इदानीमाचार एवमेवास्ति । ) अमुष्मै कल्पयामीत्यादिसूत्रं तत्तन्मन्त्रपाठप्रदर्शनार्थं न तूपचारान्तरनिवृत्त्यर्थम् ।

तेन—" ऋषीणामर्चनं सर्वं कर्तव्यं च निवीतिना ।
आसनं पाद्यमर्घ्यं च स्नानं पञ्चामृतैः पृथक् ॥
वस्त्रोपवीतगन्धांश्च पुष्पाण्याभरणानि च ।
धूपदीपबलीन्दत्त्वा तर्पयेच्च यथाविधि "

इतिव्याससमृत्युक्ता अप्युपचाराः शक्तौ सत्यां देयाः । अस्यां स्मृतावृषिग्रहणं देवपित्रुपलक्षणम् । पितृभ्योऽपि स्वाहाशब्देनैवान्नसमर्पणं न स्वधाशब्देन । वीप्सास्वरसात् । केवलपितृकर्मत्वात्स्वधाशब्दप्राप्तिर्न भवति किंतु स्पष्टवचनेनैव स(वे)त्येतादृशार्थस्य मासिश्राद्धस्थेन 'अमुष्मै स्वधा नमोऽमुष्मै स्वधा नमः' इति मन्त्रग्रहणेन ज्ञापितत्वाच्च । फलोदकेनेत्यत्र फलयुक्तमुदकं फलस्योदकमिति वाऽर्थः । अपरेण वेदिं वेद्या अदूर एव, अग्निमुपसमाधाय प्रज्वलयित्वे(ज्वाल्ये)त्यर्थः । सदसस्पतिमित्यनन्तरमुक्तस्य हुत्वेतिवचनस्य शिष्याणामन्वारम्भसिद्ध्यर्थ(र्थत्वम्) । प्रथमोऽनुवाक इषे त्वेत्यनुवाकः । अत्र तृतीया द्वितीयार्थे । तेन प्रथममनुवाकमधीयन्त(त) इत्यर्थः । त्र्यहमेकाहं वा क्षम्य यथाध्यायमध्येतव्यमिति वदन्तीति सूत्रे ब्राह्मणांस्तर्पयन्तीत्यनन्तरं कर्तव्ये मध्ये वचनमुत्सर्जन एवानध्याय आवश्यको नोपाकर्मणीतिज्ञापनार्थम् । तेनोपाकर्मण्यनध्यायाभावोऽपि पक्षे सिद्धो भवति । काण्डात्काडाद्या शतेनेतिमन्त्रद्वयान्त उदकान्त उदकमध्य उदकप्रान्ते वा दूर्वा रोपयन्ति । रोपयन्तीतिबहुवचनात्सर्वेषां कर्तृत्वम् । दूर्वा इति बहुवचनं बहुकर्त्रभिप्रायेण । तेनैकैकैव दूर्वा बह्व्यो वा दूर्वाः । उदधिं जलाशयं विलोडनादूर्मिमन्तं कृत्वा प्राचीमुदीचीं वा दिशं बहिर्जलाशयादातमितोर्यावद्बलमाजि शीघ्रं धावन्ति । अत्रापि बहु-

* धनुश्चिह्नान्तर्गतं ङ. पुस्तके नास्ति

१ च. ह्मणाःश्च तर्प ।

वचनात्सर्वेषां कर्तृत्वम् । प्रत्येत्यापूपैः सक्तुभिरोदनेनेति ब्राह्मणाꣳस्तर्पयन्ति । उत्सर्गदेशात्प्रत्येत्याकृत्वैवान्नहोमं ग्रामं प्रविश्यापूपादिभिर्ब्राह्मणांस्तर्पयन्तीत्यर्थः । अपूपैः सक्तुभिरोदनेनेति ब्राह्मणाꣳस्तर्पयन्तीतिगुरुसूत्रकरणादेवं ज्ञायते नास्त्यत्रान्नहोम इति । यद्यत्रान्नहोम इष्टः स्याद्ब्राह्मणानन्नेन परिविष्येत्येव लाघवाद्ब्रूयात् । वृत्तिकृताऽपि तत आजिसरणात्प्रत्येत्यान्नहोमान्हुत्वाऽपूपादिभिर्ब्राह्मणांस्तर्पयन्तीत्येतस्मिन्व्याख्याने गुरुसूत्रकरणवैयर्थ्यापरिहाररूपापरितोषादेव ' अथवोत्सर्गदेशात्प्रत्येत्याकृत्वैवान्नहोमं ग्रामं प्रविश्यापूपादिभिर्ब्राह्मणांस्तर्पयन्ति ' इत्येवं द्वितीयं व्याख्यानं कृतम् । ब्राह्मणाꣳश्च तर्पयन्तीतिपाठे तु चकारः पूजनसमुच्चयार्थो ज्ञेयः । अत्रापूपादिग्रहणं परिवेषणक्रमार्थम् । अत्र भस्मगोमयमृत्तिकास्नानान्यपि सति संभवे कार्याणि ।

" संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये ।
स्नानं कुर्वीत मतिमाञ्छ्रुतिस्मृतिविधानतः "

इति भविष्यवचनस्य श्रुतिस्मृतिविधानत इति भस्मगोमयमृत्तिकास्नानप्राप्त्यर्थमिति पृथ्वीचन्द्रोदयेन व्याख्यानादाचाराच्च । यद्यप्येतस्माद्वचनादुपाकर्मार्थत्वमेतेषां प्रतीयते तथाऽपि सूत्र उत्सर्जन एव स्नानविधानात्तदर्थकत्वमेव । श्रावणस्यान्त इति तु, उपाकर्मदिनानुष्ठानाभिप्रायेण। आचारश्चैवमेव। उपाकर्मदिन उत्सर्जनक्रिया तु हेमाद्रौ खादिरगृह्य उक्ता—

" पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथ वा " इति ।

कलौ पुरुषान्दुर्मेधसः पौष उत्सर्जनं कर्तुमशक्तांश्च मन्यमाना उपाकर्मदिनानुष्ठानमेवाऽऽश्रयन्तीदानीं शिष्टाः । (+उत्सर्जनस्यानावश्यकतोक्ता स्मृत्यर्थसारे । तत्र मूलं चिन्त्यम् । ) एतानि स्नानान्युत्सर्जनाङ्गभूतानीति केचित् । बहिर्भूतान्युत्सर्जनकर्माधिकारार्थानीत्यन्ये । आद्यपक्षे—उत्सर्जनसंकल्पोत्तरं कार्याणि । नात्र संकल्पः । क[रो]तिधातुसमभिव्याहाराभावात् । अन्त्यपक्षे तूत्सर्जनकर्माधिकारार्थं भस्मगोमयमृत्तिकास्नानानि करिष्य' इतिसंकल्पपूर्वकं कर्मसंकल्पात्पूर्वमेव कार्याणि । नात्रापि नदीरजोदोषः । उपाकर्मणि चोत्सर्गे इत्युपाकर्मप्रकरणोदाहृतवचनात् । एतदुत्सर्जनाख्यं कर्म किंचिदध्ययनवतोऽप्यावश्यकम् । अकृतोपाकृतिर्विप्र इत्युपाकरणप्रकरणोदाहृतसंग्रहवचनात् । उपाकरणग्रहणमुत्सर्जनस्याप्युपलक्षणम् ।

+ धनुश्चिह्नान्तर्गतं नास्ति ङ. पुस्तके ।

## अथ प्रयोगः ।

कर्ता कृतनित्यक्रियः पूर्ववद्धोमपूर्वकं पञ्चगव्याशनं कृत्वाऽकृत्वा वा ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य यस्मिन्देशे निर्मलाः सुखस्पर्शा ग्राहादिरहिताश्चाऽऽपो भवन्ति तासां समीप आसन उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्याधीतानां छन्दसामस्थानोच्छ्वासादिजनितयातयामतानिरासेनाऽऽप्यायनेवेदोत्सर्गसिद्धिद्वारा[1] श्रीपरमेश्वरप्रीत्यर्थं वेदोत्सर्जनाख्यं कर्म करिष्य इति संकल्पं कुर्यात् । यदा तु स्वस्य ब्रह्मचारिणः शिष्याः स्युस्तदा तैः सहापां समीपं गत्वा, एभिः शिष्यैः सह वेदोत्सर्जनाख्यं कर्म करिष्य इत्येवमूहेन संकल्पः कार्यः । होमपूर्वकपञ्चगव्याशनानुष्ठानपक्षे शिष्यैरपि तत्कार्यं शुद्ध्यर्थत्वात् । उत्सर्जनसंकल्पोऽपि तैः कार्य इति शिष्टाः । तत्रैभिः शिष्यैः सहेत्येनस्य लोपः । कृतविवाहैः शिष्यैस्तु केनचिन्निमित्तेन गुरुसांनिध्येऽपि पृथगेवोत्सर्जनं कार्यम्[2] । उत्सर्जनप्रथमप्रयोगाङ्गभूतं गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च प्रधानसंकल्पोत्तरं तत्पूर्वं वा तत्पिता[3] तदभावे तत्पितामहादिर्वा कुर्यात् । सर्वेषामप्यभाव आचार्य एव कुर्यात् । तत्र संस्कार्यस्य पितॄणामुत्कीर्तनम्[4] । यदि पितैवाऽऽचार्यस्तदा प्रथमोत्सर्जनप्रयुक्तं गणपतिपूजनादि स एव कुर्यात् । प्रथमोत्सर्जनं भद्राव्यतीपाताधिमासास्तादिषु न भवति । अत्रोक्तं संभवद्दिनं ग्राह्यम् । द्वितीयादिष्वपि शुद्धकालसंभवे भद्राव्यतीपाताधिमासास्तादिनिषेधोऽस्त्येवेति केचित् । ततो जलप्रान्त उपविश्य तीरे स्थापितं भस्माऽऽदाय, ईशान इत्यस्य याज्ञिक्यो देवता उपनिषदः स्वयंभूर्वेशानो यजुः । तत्पुरुषायेत्यस्या याज्ञिक्यो देवता उपनिषदः स्वयंभूर्वा तत्पुरुषो गायत्री । अघोरेभ्य इत्यस्य याज्ञिक्यो देवता उपनिषदः स्वयंभूर्वाऽघोरोऽनुष्टुप् । वामदेवायेत्यस्य याज्ञिक्यो देवता उपनिषदः स्वयंभूर्वा वामदेवो यजुः । सद्योजातमित्यस्य याज्ञिक्यो देवता उपनिषदः स्वयंभूर्वा सद्योजातो बृहती । क्रमेण शिरोमुखहृदयगुह्यपादेषु भस्मलिम्पने(लेपने) विनियोगः । 'ईशानः सर्व० सदाशिवोम्' इति शिरसि भस्म विलिप्य, 'तत्पुरुषाय० प्रचोदयात्' इति मुखे । 'अघोरेभ्योऽथ घोरेभ्यो० रुद्ररूपेभ्यः' इति हृदये । 'वामदेवाय नमो० मनोन्मनाय नमः' इति गुह्ये । 'सद्योजातं प्रप० भवोद्भवाय नमः' इति पादयोः । अथवा—ईशानाय नम इति

१ ङ. °नसि° । २ ङ. °म् । यदि तु कस्यचिच्छिष्यस्य प्रथमोत्सर्जनमस्ति तदोत्स° । ३ ङ. °त्पित्रा कारयेत् । तदभावे तत्पितामहादिभिस्तेषामप्यभावे स्वयमेव कुर्यात् । तत्र । ४ ङ. °म् । पुत्रस्य चेत्प्रथमोत्सर्जनं तदा स्वयमेव गणपतिपूजनादि कर्तव्यम् । प्रथमोत्सर्जनं ।

शिरसि । तत्पुरुषाय नम इति मुखे । अघोराय नम इति हृदये । वामदेवाय नम इति गुह्ये । सद्योजाताय नम इति पादयोः, इत्येवंप्रकारेण भस्मलेपनम् । ततोऽग्निरिति भस्म । वायुरिति भस्म । जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्वꣳ ह वा इदं भस्म । मा नस्तोक इत्यस्याग्नी रुद्रो जगती । सर्वाङ्गे भस्मलेपने विनियोगः । 'मा नस्तोके तनये० विधेम ते' इति शिरःप्रभृत्यङ्गानि भस्मना विलिप्य स्नात्वाऽऽचामेत् । पुनर्जलप्रान्त उपविश्य, गायत्र्या विश्वामित्र ऋषिः सविता देवता गायत्री छन्दः । गोमयादाने विनियोगः । 'तत्सवितु० यात्' इति तीरे स्थापितं गोमयमादाय, गन्धद्वारामित्यस्य याज्ञिक्यो देवता उपनिषदः स्वयंभूर्वा श्रीरनुष्टुप् । अङ्गेषु गोमयलिम्प(लेप)ने विनियोगः । 'गन्धद्वारां दुराधर्षां० श्रियम्' इति शिरःप्रभृत्यङ्गानि विलिप्य, 'अग्रमग्रं च० सर्वदा' इति पुनस्तथैव विलिप्य स्नात्वाऽऽचामेत् । पुनर्जलप्रान्त उपविश्य, अश्वक्रान्त इत्यस्य याज्ञि० भूर्वा भूमिरनुष्टुप् । भूमिर्धेनुरित्यस्य याज्ञि० भूर्वा भूमिरेकपदा जगती । भूम्यभिमन्त्रणे विनियोगः । 'अश्वक्रान्ते० लोकधारिणी' इति द्वाभ्यां भूमिमभिमन्त्र्य, सहस्रपरमेत्यस्य याज्ञि० भूर्वा दूर्वाऽनुष्टुप् । दूर्वाभिमन्त्रणे विनियोगः । 'सहस्रपर० शिनी' इति दूर्वामभिमन्त्र्य, उद्धृताऽसीत्यस्य याज्ञि० भूर्वा मृत्तिकाऽनुष्टुप् । मृत्तिकाग्रहणे विनियोगः । 'उद्धृताऽसि० हुना' [इति] अभिमन्त्रितप्रदेशान्मृत्तिकां गृहीत्वा, काण्डात्काण्डादिति द्वयोर्याज्ञि० भूर्वा दूर्वाऽनुष्टुप् । दूर्वादाने विनियोगः । 'काण्डात्काण्डात्प्ररोहन्ती० पा वयम्' इति द्वाभ्यां दूर्वामादाय, मृत्तिके हनेत्यस्य याज्ञि० भूर्वा मृत्तिकाऽनुष्टुप् । मृत्तिकायां दूर्वाप्रतिष्ठापने विनियोगः । 'मृत्तिके हन मे० परमां गतिम्' इति दूर्वां मृत्तिकायां प्रतिष्ठाप्य, यत इन्द्रेत्यस्य याज्ञि० भूर्वेन्द्रो बृहती । स्वस्तिदेत्यस्य याज्ञिक्यो० भूर्वेन्द्रोऽनुष्टुप् । स्वस्ति न इत्यस्य याज्ञिक्यो० भूर्वेन्द्रस्त्रिष्टुप् । त्रातारमिन्द्रमित्यस्य विश्वे देवा इन्द्रस्त्रिष्टुप् । परं मृत्यो, इत्यस्य विश्वे देवा मृत्युस्त्रिष्टुप् । स्योना पृथिवीत्यस्य याज्ञिक्यो० भूर्वा पृथिवी गायत्री । प्राच्यादिचतुर्दिक्षूर्ध्वमधश्च क्रमेण मृत्तिकाप्रक्षेपणे विनियोगः । यत इन्द्र० इति प्राच्यां मृत्तिकां प्रक्षिपति । स्वस्तिदा इति दक्षिणस्याम् । स्वस्ति न इन्द्रो० इति प्रतीच्याम् । त्रातारमि० इत्युत्तरस्याम् । परं मृत्यो० इत्यूर्ध्वम् । स्योना पृथि० इत्यधः । गन्धद्वारामित्यस्य याज्ञिक्यो० भूर्वा श्रीरनुष्टुप् । मृत्तिकाग्रहणे विनियोगः । 'गन्धद्वारां० श्रियम्' इत्यभिमन्त्रितप्रदेशादन्यां मृत्तिकां गृहीत्वा, उदु त्यमित्यस्य सोमः सूर्यो गायत्री । सूर्याय मृत्तिकाप्रदर्शने विनियोगः । 'उदु त्यं जा० सूर्यम्' इति सूर्याय गृहीतां मृत्तिकां प्रदर्शयित्वा(दर्श्य), श्रीर्मे भजत्वित्यस्य याज्ञिक्यो० भूर्वा

श्रीर्यजुः। शिरसि प्रदक्षिणं मृत्तिकालेपने विनियोगः। 'श्रीर्मे भजतु। अलक्ष्मीर्मे नश्यतु' इति शिरसि प्रदक्षिणं मृत्तिकां विलिप्य, सहस्रशीर्षेत्यस्य प्रजापतिः स्वयंभूर्वा पुरुषो नारायणोऽनुष्टुप्। विष्णुमुखा इत्यस्य याज्ञिक्यो० भूर्वा देवा यजुः। महाँ२ इन्द्र इत्यस्य याज्ञिक्यो० भूर्वेन्द्रो बृहती। सोमानमित्यस्य याज्ञिक्यो० भूर्वा ब्रह्मणस्पतिर्गायत्री। शरीरमित्यस्य याज्ञिक्यो० भूर्वाऽऽत्मा यजुः। नाभिर्मे इत्यस्य विश्वे देवा नाभिर्द्विपदा गायत्री। क्रमेण शिरोमुखबाहुकुक्षिहृदयनाभिषु मृत्तिकालेपने विनियोगः। आपान्तमन्युरित्यस्य याज्ञिक्यो० भूर्वा सोमस्त्रिष्टुप्। ब्रह्म जज्ञानमित्यस्य याज्ञिक्यो० भूर्वा ब्रह्म त्रिष्टुप्। कट्योर्मृत्तिकालेपने विनियोगः। विष्णो रराटमित्यस्य सोमो रराटी यजुः। वरुणस्य स्कम्भनमसीत्यस्य सोमो वरुणो यजुः। आनन्दनन्दावित्यस्य विश्वे देवा आत्मा द्विपदा गायत्री। ऊरुवोराज इत्यस्याग्निरात्मा यजुः। जङ्घाभ्यामित्यस्य विश्वे देवा आत्मा द्विपदा गायत्री। चरणं पवित्रमित्यस्य याज्ञिक्यो० भूर्वा चरणात्मा त्रिष्टुप्। क्रमेण पृष्ठमेढ्राण्डोरुजङ्घाचरणेषु मृत्तिकालेपने विनियोगः। इदं विष्णुरित्यस्य सोमो विष्णुर्गायत्री। त्रीणि पदेत्यस्य विश्वे देवा विष्णुर्गायत्री। पादतलयोर्मृत्तिकालेपने विनियोगः। सहस्रशीर्षा० [इति] शिरसि। विष्णुमुखा० [इति] मुखे। महाँ२ इन्द्रो० इति बाह्वोर्मन्त्रावृत्त्या। सोमानं० इति कुक्ष्योर्मन्त्रावृत्त्या। शरीरं य० इति शरीरे, हृदय इत्यर्थः। नाभिर्मे० सत्, इति नाभ्याम्। आपान्तमन्यु० ब्रह्म जज्ञानं० इति द्वाभ्यां कट्योः। द्वयोरावृत्तिः। विष्णो रराटमसीति पृष्ठे। वरुणस्य स्कम्भनमसीति मेढ्रे। आनन्दनन्दावा० पस इत्याण्डयोः। ऊरुवोराज इत्यूर्वोः। 'जङ्घाभ्यां प० छितः' [इति] जङ्घयोः। एतेषु सकृदेव मन्त्रः। द्विवचनलिङ्गात्। चरणं पवित्रमिति चरणयोर्मन्त्रावृत्त्या। इदं विष्णुस्त्रीणि पदेति द्वाभ्यां पादतलयोः। द्वयोरावृत्तिः। सजोषा इत्यस्य स्वयंभूरिन्द्रस्त्रिष्टुप्। दूर्वासहितस्य शेषस्य शिरसि निधाने विनियोगः। सजोषा इन्द्र० इति दूर्वासहितं शेषं शिरसि निदध्यात्। ( + बौधायनोक्तरीत्या कर्तुमसंभवे— अश्वक्रान्त इति भूमिमभिमन्त्र्य भूमिर्धेनुरिति लोष्टमादाय सहस्रपरमेति दूर्वामभिमन्त्र्य काण्डात्काण्डादिति दूर्वामादाय या शतेनेति दूर्वां मृदि प्रतिष्ठाप्य मृत्तिके हन मे पापमिति मृदमभिमन्त्र्य यत इन्द्र भयामहे०१ स्वस्तिदा वि०२ स्वस्ति न इन्द्रो० ३ आपान्तमन्यु० ४ ब्रह्म जज्ञानं० ५ स्योना पृथिवि

+ धनुश्चिह्नान्तर्गतं नास्ति ङ. पुस्तके।

१ क. °ति क°।

भवा० ६ इति प्राच्यादिदिक्चतुष्टय ऊर्ध्वमधश्चेति तत्तन्मन्त्रेण लोष्टमुत्क्षिप्य गन्धद्वारामित्यादित्याय दर्शयित्वा श्रीर्मे भजत्विति ललाटमालिप्यालक्ष्मीर्मे नश्यत्विति प्रदक्षिणं शिरो विलिप्य विष्णुमुखा इति मुखं महा४ इन्द्र इति बाहू सोमानमिति कुक्षी शरीरं यज्ञशमलमिति शरीरं चरणं पवित्रमिति चरणौ विलिप्य सजोषा इन्द्रेति मृच्छेषं शिरसि निधाय सुमित्रा न इत्यद्भिरात्मानमासिच्य दुर्मित्रा इत्यादिभिर्द्वेष्यं ध्यायन्भूमौ[१] क्षिपेदिति प्रयोगो द्रष्टव्यः ।) भस्मगोमयमृत्तिकास्नानानि कृताकृतानि । ततः—हिरण्यशृङ्गमिति मन्त्रस्य याज्ञिक्यो० भूर्वा तीर्थाधिपतिर्वरुणो बृहती । तीर्थाधिपतिप्रार्थने विनियोगः । हिरण्यशृङ्गं वरु० इति तीर्थाधिपतिं वरुणं संप्रार्थ्य, यन्मे मनसेत्यस्य याज्ञिक्यो० भूर्वा, इन्द्रो वरुणो बृहस्पतिः सविता च स्वराड्बृहती । इन्द्रादिप्रार्थने विनियोगः । 'यन्मे मनसा० पुनः पुनः' इतीन्द्रादिदेवताः स्वस्य पावित्र्यार्थं संप्रार्थ्य, नमोऽग्नयेऽप्सुमत इत्यस्य याज्ञिक्यो० उपनिषदोऽग्निरप्सुमानिन्द्रो वरुणो वारुण्यापश्च यजुः । नमस्कारे विनियोगः । 'नमोऽग्नयेऽप्सुमते० नमोऽद्भ्यः' इति मन्त्रोक्तदेवता नमस्कृत्य, सुमित्रा न इत्यस्य याज्ञिक्यो० भूर्वाऽऽपो यजुः । मार्जने विनियोगः । 'सुमित्रा० सन्तु' इत्यात्मानमद्भिर्मार्जयित्वा तूष्णीमञ्जलिनोदकमादाय, दुर्मित्रा योऽस्मान्द्वेष्टि यं चेति मन्त्रत्रयस्य याज्ञिक्यो० भूर्वाऽऽपो यजुः । द्वेष्यनाशार्थं जलक्षेपणे विनियोगः । 'दुर्मित्रास्त० भूयासुः' [इति] यस्यां दिशि द्वेष्यो भवति तस्यां दिशि क्षिपति । 'योऽस्मान्द्वेष्टि' इति द्वितीयम् । 'यं च वयं द्विष्मः' इति तृतीयम् । द्वेष्याभावे पाप्मानं मनसा ध्यायन्प्राच्यामेव दिशि क्षिपेत् । अथवा सुमित्रा न इत्यारभ्य वयं द्विष्म इत्यन्त एक एव मन्त्रस्तेन जलाभिमन्त्रणं कार्यम् । अस्मिन्पक्षे जलाभिमन्त्रणे विनियोग इति विनियोगवाक्ये विशेषः । ततः—यदपां क्रूरमित्यस्य याज्ञिक्यो० भूर्वाऽऽपो द्विपदा त्रिष्टुप् । निमज्जनार्थं जलदोषदूरीकरणे विनियोगः । 'यदपां क्रूरं य० तात्' इति निमज्जनं यत्र कर्तव्यं भवति तत्रत्यजलदोषं हस्ताभ्यामवलोडनेन दूरीकृत्य, 'सागरस्य तु निश्वासो० रेश्वर' इति नमस्कृत्य, अत्याशनादितिमन्त्रद्वयस्य याज्ञिक्यो० भूर्वा वरुणोऽनुष्टुप् । पठने विनियोगः। 'अत्याशनाद० लोकताम्' इति मन्त्रद्वयं पठित्वा शिखां विस्रस्य पुरतः कृत्वा प्रवहज्जले प्रवाहाभिमुखः स्नानं

१ च. °मौ निक्षि° । २ ङ. °न्त्रद्वयस्य । ३ ङ. °र्थ्य, नमोऽ° । ४ ङ. °स्य स्वयंभूरग्न्यप्सुमदादयो यजुः । मन्त्रोक्ता देवताः । न° । ५ ङ. °स्य स्वयंभूरापो । ६ ङ. °स्य स्वयंभूरापो । ७ ङ. °म् । त° । ८ ङ. °स्य स्वयंभूरापो । ९ ङ. °स्य वरुणः स्वयंभूरनु° । १० ङ. °स्य केशान्पुर° ।

कुर्यात् । नद्यभावेन जलाशयादौ स्नाने तु अर्काभिमुखः स्नायात् । सर्वत्राप्यर्काभिमुखमेव वा स्नानम् । एतन्निरिति स्मृतिकाराः । यदि तु क्षुद्रनदीजलाशयादौ स्नानं तदा 'गङ्गे च यमुने चैव० संनिधिं कुरु । पुष्कराद्यानि० सदा मम' इति तीर्थान्यावाह्यानन्तरमत्याशनादिति मन्त्रद्वयं पठित्वा स्नानं कार्यमिति विशेषः । तत इमं मे गङ्ग इत्यस्य[1] याज्ञिक्यो० भूर्वा गङ्गादिनद्यो जगती । गङ्गादिनदीप्रार्थने विनियोगः । 'इमं मे गङ्गे य० सुषोमया' इति गङ्गादिनदीः संप्रार्थ्य, ऋतं चेति तृचस्य[2] याज्ञिक्यो० भूर्वाऽघमर्षणो वरुणोऽनुष्टुप् । प्राणायामे विनियोगः । 'ऋतं च स० सुवः' इत्युपांशु पठित्वा तदन्ते प्राणमायच्छेत् । एवमन्यौ द्वौ प्राणायामौ । अथवा निमग्नः सन्नेव मनसा सूक्तं पठन्प्राणायामं कुर्यात् । एवमन्यौ द्वौ प्राणायामौ । इत्यन्यतरकल्पेन प्राणायामं विधाय द्विराचम्य कर्मारम्भधृते पवित्रे त्यक्त्वाऽन्ये पवित्रे धृत्वाऽऽपो हि ष्ठेति मन्त्रत्रयस्य[3] याज्ञिक्यो० भूर्वाऽऽपो गायत्री । हिरण्यवर्णा इति मन्त्रचतुष्टयस्याग्निरापस्त्रिष्टुप् । पवमानानुवाकमन्त्राणां प्रजापतिर्ऋषिः । पवमानः(न)सुवर्जनादयो देवताः । गायत्र्यनुष्टुप्त्रिष्टुबिति च्छन्दांसि । मार्जने विनियोगः । 'आपो हि ष्ठा० च नः । हिरण्यवर्णाः शुच० धत्त । पवमानः सुवर्ज० पुनातु' इति जलस्थः सपवित्रेण पाणिनैव तत्तन्मन्त्रसमुदायान्ते सर्वान्ते वा मार्जनं कुर्यात् । प्रतिमन्त्रं मार्जनमिति केचित् । ततो द्विराचम्य, यत्पृथिव्यामिति मन्त्रचतुष्टयस्य[4] याज्ञिक्यो० भूर्वा, ऋषिः । वरुणो देवता प्रथमस्यानुष्टुप् । द्वितीयस्य यजुः । तृतीयस्य द्विपदा गायत्री । चतुर्थस्य गायत्री । स्नाने विनियोगः । 'यत्पृथिव्या५० मर्षणः १ पुनन्तु वसवो० गोप्ता २ एष पुण्य० रणमयम् ३ द्यावापृथिव्यो० शिशाधि ४ इतिसर्वमन्त्रान्ते स्नात्वा पुनर्द्विवारं तूष्णीं स्नात्वा, आर्द्रं ज्वलतीत्यस्य[5] याज्ञिक्यो० भूर्वा ज्योतिर्यजुः । आचमने विनियोगः । 'आर्द्रं ज्वलति० होमि स्वाहा' इतिमन्त्रावृत्त्या द्विराचम्य, अकार्यकारीत्यस्य[6] याज्ञिक्यो० भूर्वा वरुणोऽनुष्टुप् । रजो भूमिरित्यस्य[7] याज्ञिक्यो० भूर्वा वरुणो यजुः । स्नाने विनियोगः । 'अकार्यका० रजो भूमि०' इति द्वाभ्यां स्नानं कृत्वा तूष्णीं द्विराचामेत् । द्वाभ्यां मन्त्राभ्यां स्नानद्वयं वा । आक्रानित्यस्य[8] याज्ञिक्यो० भूर्वा परमात्मा त्रिष्टुप् । जपे विनियोगः । 'आक्रान्समुद्रः० इन्दुः' इति जपेत् । एतावत्कर्तुमशक्तौ तीर्थे-

१ ङ. 'स्य स्वयंभूर्गङ्गा' । २ ङ. 'स्य स्वयंभूरघ' । ३ ङ. 'स्य स्वयंभूरापो । ४ ङ. 'स्य स्वयंभूर्ऋषिः । ५ ङ. 'स्य ज्यो' । ६ ङ. 'स्य स्वयभूर्वरु' । ७ ङ. 'स्य स्वयंभूर्वरु' । ८ ङ. 'स्य स्वयंभूः प' ।

शप्रार्थनदेवताप्रार्थनमार्जनजलावलोडनपूर्वकं स्नानं कृत्वाऽघमर्षणेन प्राणायामानापो हि ष्ठादिभिर्मार्जनं च कृत्वा यत्पृथिव्यामित्यादीन्मन्त्रान्पठेत् । ततः शिखां बद्ध्वा (*द्विराचम्य 'ब्रह्माणं तर्पयामि । प्रजापतिं तर्पयामि । अङ्गिरसस्तर्पयामि ' इति देवतीर्थेन प्राङ्मुखो यज्ञोपवीती—एकैकाञ्जलिना देवान्संतर्पयेत् । अशक्तौ ) 'ब्रह्मादयो ये देवास्तान्देवांस्तर्पयामि । भूर्देवांस्तर्पयामि । भुवो देवांस्तर्पयामि । सुवर्देवांस्तर्पयामि । भूर्भुवः सुवर्देवांस्तर्पयामि । ईत्येवं तर्पयेत् । ततः—'विश्वामित्रं तर्पयामि । जमदग्निं तर्पयामि । इतिहासपुराणं तर्पयामि ' इति प्राजापत्यतीर्थेनोदङ्मुखो निवीती द्वाभ्यां द्वाभ्यामञ्जलिभ्यामृषींस्तर्पयेत् । अशक्तौ 'विश्वामित्रादयो य ऋषयस्तानृषींस्तर्पयामि । भूर्ऋषींस्तर्पयामि । भुवर्ऋषींस्तर्पयामि । सुवर्ऋषींस्तर्पयामि । भूर्भुवः सुवर्ऋषींस्तर्पयामि ' ईत्येवं तर्पयेत् । ततः 'वैशम्पायनं तर्पयामि । पलिङ्गुं तर्पयामि । एकपत्नींस्तर्पयामि ' इति पितृतीर्थेन दक्षिणामुखः प्राचीनावीती त्रिभिस्त्रिभिरञ्जलिभिः पितॄंस्तर्पयेत् । अशक्तौ 'वैशम्पायनादयो ये पितरस्तान्पितॄंस्तर्पयामि । भूः पितॄंस्तर्पयामि । भुवः पितॄंस्तर्पयामि । सुवः पितॄंस्तर्पयामि । भूर्भुवः सुवः पितॄंस्तर्पयामि ' ईत्येवं तर्पयेत् । ततः 'ये के चास्मत्कुले० ऽनोदकम् ' इति परिधानीयं वस्त्रं निष्पीड्य, यज्ञोपवीती—'यन्मया दूषितं० तर्पयाम्यहम् ' इति यक्ष्मतर्पणं कृत्वा,

" ज्ञानतोऽज्ञानतो वाऽपि यन्मया दुष्कृतं कृतम् ।
तत्क्षमस्वाखिलं देवि जगन्मातर्नमोऽस्तु ते "

इति नदीं क्षमाप्य स्वयमेव देहे शुष्के सति केशजले च स्रुते शुष्कं वस्त्रं त्रिरवधूयोदक्प्राग्वा विस्तार्य परिदध्यात् । परिहितमार्द्रं वस्त्रं नाभेरूर्ध्वमेवोत्तारयेत् । दक्षिणतः प्रत्यग्वा विस्तारणे तद्वस्त्रं न परिधेयम् । यदि परिधेयं प्रक्षाल्यैव परिधेयम् । ततस्तादृगेवोत्तरीयं शुष्काभाव आर्द्रमेव सप्तवारमवधूय परिधेयम् । ( + उत्तरीयवस्त्रालाभे तृतीयमुपवीतं धार्यम् । तस्यापि

* धनुश्चिह्नान्तर्गतं नास्ति ङ. पुस्तके । + धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तके 'आर्द्रवस्त्रं चतुर्गुणमुपरिदशं स्थले निष्पीड्य द्विराचम्य तिलकं कुर्यात् । अयं च स्नानविधिः सर्वेषाम् ' इति वर्तते ।

१ ङ. °नज° । २ च. भुवर्देवा° । ३ ङ. इति देवतीर्थेन प्राङ्मुखो यज्ञोपवीती—एकैकाञ्जलिना देवान्संतर्प्य, विश्वामित्रा° । ४ ङ. °व ऋषीं° । ५ ङ. इति प्राजापत्यतीर्थेनोदङ्मुखो निवीती द्वाभ्यां द्वाभ्यामञ्जलिभ्यामृषीन्संतर्प्य, वैशम्पायनादयो । ६ ङ. इति पितृतीर्थेन दक्षिणामुखः प्राचीनावीती त्रिभिस्त्रिभिरञ्जलिभिः पितॄंस्तर्प° । ७ ङ. च. °यं नि° । ८ ङ. °त्वा, स्व° । ९ ङ. शाद्रं शुष्कं ।

सर्वथाऽभावेऽधरीयवस्त्रोत्तरवर्ग एवोत्तरीयं वस्त्रं भवति । स्नानोत्तरं यावन्नो-जनं शूर्पशय्यामार्जन्यादिस्पर्शे पुनः स्नानम् । पूजान्तर्गतोपचारभूतदीपप्रज्वा-लनव्यतिरिक्तकाले दीपस्पर्शेऽपि पुनः स्नानम् । ततो भस्मधारणम् । तद्वि-धिर्यथा—कपिलाया गोमयं गगने पतद्गृहीत्वा धरामसंस्पृशन्नेव सद्योजात-मित्यानीय वामदेवाय नमो ज्येष्ठायेति मन्त्रेण धरायामसंस्थापयन्नेव पात्रे संशोष्याघोरेभ्योऽथ घोरेभ्य इति विनिर्दह्य तत्पुरुषायेति तद्भस्म समुद्धृत्य, ईशानः सर्वविद्यानामिति विशोध्य त्र्यम्बकं यजामह इत्यादायाऽऽपो हि ष्ठेतित्रिभिर्जलं तत्राऽऽनीय 'अग्निरिति भस्म, वायुरिति भस्म, जलमिति भस्म, स्थल-मिति भस्म, व्योमेति भस्म, सर्वꣳह वा इदं भस्म, तस्माद्ब्रह्म, तदेतत्पाशुपतं पशुपाश-विमोक्षायोम्' इत्येतैरेकादशवारमभिमन्त्र्य, 'ॐ सद्योजाताय नमः, नम्' इति भाले तर्जनीमध्यमानामाभिर्मध्यमानामाकनिष्ठाभिर्वा भाले भ्रूप्रान्तपर्यन्तं विलिप्य, 'ॐ वामदेवाय नमः, मम्' इति दक्षिणांसे विलिप्य 'ॐ अघो-राय नमः, शिम्' इति वामस्कन्धे । 'ॐ तत्पुरुषाय नमः, वाम्' इत्युदरे । 'ॐ ईशानाय नमः, यम्' इति हृदये । 'ॐ नमः शिवाय' इति मन्त्रेण मूर्ध्नि विलिप्य हस्तौ प्रक्षालयेत् । पञ्चाक्षरेण मन्त्रेणैव वा सर्वत्र ललाटहृदयनाभि-कण्ठांसद्वयबाहुद्वयकूर्परद्वयप्रकोष्ठद्वयपृष्ठशिरःसु भस्म लेपयेत् । कपिलाया गोमयं यदि तेन प्रकारेण ग्रहीतुं तस्य च समन्त्रकप्रकारेणाऽऽनयनादि च कर्तुं न शक्यते तदा सद्योजातादिपञ्चभिर्मन्त्रैरभिमन्त्रणमात्रं कार्यम् । श्रौता-ग्निमानौपासनाग्निमांश्च वा भवति चेत्तदा तदग्निजमेव भस्म गृहीत्वा सद्योजा-ताभिमन्त्रणादिविधिना धार्यम् ।) ततो देवर्षिपितृपूजनं कुर्युः । तद्यथा—जल-समीप एव यज्ञोपवीतिनः प्राचीनप्रवणं देशं गोमयेनोपलिप्य परस्परं दातुमि-(मनि)च्छन्त इव दर्भान्सव्यहस्तेन संप्रयच्छन्त उपलिप्ते प्राक्प्रवणे देशे दक्षिण-हस्तेन सप्तभिः सप्तभिस्त्रिभिस्त्रिभिर्वा दर्भैरुदगपवर्गाण्यासनानि कल्पयन्ति । ब्रह्मण आसनं कल्पयामि । प्र० नक्षत्रेभ्य आसनं कल्पयामि । एतदन्तेभ्यः संलग्नान्येवाऽऽसनानि कल्पयेयुः । सर्वत्राऽऽसनशब्दस्याप्रयोगो वा । ततः किंचिद्व्यवधानेनेन्द्राय राज्ञ आसनं कल्पयामि० वैश्रवणाय राज्ञ आसनं कल्प-यामि, इत्यन्तेभ्यः संलग्नान्येवाऽऽसनानि कल्पयेयुः । अयं द्वितीयो गणः । ततः किंचिद्व्यवधानेन वसुभ्य आसनं कल्पयामि, रुद्रेभ्य आसनं कल्पयामीति द्वयोः संलग्ने एवाऽऽसने कल्पयित्वाऽप उपस्पृश्य, आदित्येभ्य आसनं कल्पयामीत्यादित्येभ्यो रुद्रासनसंलग्नमेवाऽऽसनं कल्पयित्वा विश्वेभ्यो देवेभ्य

---

१ च. 'त्तरीयव' । २ ङ. ततः सर्वे दे' ।

आसनं कल्पयामि० अङ्गिरोभ्य आसनं कल्पयामीत्यन्तेभ्यः परस्परसंलग्नान्येवाऽऽसनानि कल्पयेयुः । विश्वे(श्व)देवासनमादित्यासनसंलग्नमेव । ततो निवीतिनो देवानामुत्तरत उदीचीनप्रवणं देशं गोमयेनोपलिप्योदगग्रैः सप्तभिः सप्तभिस्त्रिभिस्त्रिभिर्वा दर्भैः प्रागपवर्गाण्यासनानि कल्पयन्ति 'विश्वामित्रायाऽऽसनं कल्पयामि० वसिष्ठायाऽऽसनं कल्पयामि' इति । ततोऽरुन्धत्यर्थं स्थलमवशि(शे)ष्य कश्यपायाऽऽसनं कल्पयामीति—कश्यपायाऽऽसनं कल्पयित्वाऽवशेषिते स्थलेऽरुन्धत्या आसनं कल्पयामीत्यरुन्धत्यै वसिष्ठकश्यपासनसंलग्नमेवाऽऽसनं कल्पयित्वा देवेभ्यो दक्षिणत उपलिप्ते प्राचीनप्रवणे देशेऽगस्त्यायाऽऽसनं कल्पयामीति प्रागग्रमासनं कल्पयेयुः । ततोऽगस्त्यस्य दक्षिणतः प्राचीनप्रवणाद्यन्यतमे देशे चतुरश्रायामर्थपरिमाणायां वेद्यां प्रागग्रैः सप्तभिः सप्तभिस्त्रिभिस्त्रिभिर्वा दर्भैरुदगपवर्गाण्यासनानि कल्पयन्ति । कृष्णद्वैपायनायाऽऽसनं कल्पयामि० इतिहासपुराणायाऽऽसनं कल्पयामीति संलग्नान्येवाऽऽसनानि कल्पयन्ति । केषुचित्सूत्रपुस्तकेषु वरूथिन इत्यनन्तरं वाजिन इत्यपि पाठः । अस्मिन्पाठे द्विपश्चाशदृषयो ज्ञेयाः । रुद्रासनकल्पनोत्तरमुदकस्पर्शः । ततः प्राचीनावीतिनः कृष्णद्वैपायनादीनां दक्षिणतो दक्षिणाप्रवणं देशं गोमयेनोपलिप्य तत्र दक्षिणाग्रैः सप्तभिः सप्तभिस्त्रिभिस्त्रिभिर्वा दर्भैः प्रत्यगपवर्गाण्यासनानि कल्पयन्ति । वैशम्पायनायाऽऽसनं कल्पयामि० एकपत्नीभ्य आसनं कल्पयामीति संलग्नान्येवाऽऽसनानि कल्पयन्ति । अथाजीवत्पितृकाः— अमुकशर्मणे पित्र आसनं कल्पयामि । अमुकशर्मणे पितामहायाऽऽसनं कल्पयामि । अमुकशर्मणे प्रपितामहायाऽऽसनं कल्पयामि । अमुकदायै मात्र आसनं कल्पयामि । अमुकदायै पितामह्या आसनं कल्पयामि । अमुकदायै प्रपितामह्या आसनं कल्पयामि । अमुकदायै सापत्नमात्र आसनं कल्पयामि । अमुकशर्मणे मातामहायाऽऽसनं कल्पयामि । अमुकशर्मणे मातुःपितामहायाऽऽसनं कल्पयामि । अमुकशर्मणे मातुःप्रपितामहायाऽऽसनं कल्पयामि । अमुकदायै मातामह्या आसनं कल्पयामि । अमुकदायै मातुःपितामह्या आसनं कल्पयामि । अमुकदायै मातुःप्रपितामह्या आसनं कल्पयामि । अमुकदायै स्त्रिया आसनं कल्पयामि । सापत्यत्वेऽमुकदायै सापत्यायै स्त्रिया आसनं कल्पयामि, इत्यूहः । अमुकशर्मणे पुत्रायाऽऽसनं कल्पयामि । अमुकशर्मणे पौत्रायाऽऽसनं कल्पयामि । अमुकशर्मणे पितृव्यायाऽऽसनं कल्पयामि । अमुकदायै पितृव्यपत्न्या आसनं कल्पयामि । अमुकशर्मणे पितृव्याय सपत्नीकायाऽऽसनं कल्पयामीत्येवं वा । अस्मिन्कल्पे पृथक्पितृव्यपत्न्या आसनकल्पनं न । सापत्यत्वे सापत्यायेत्यपि । एवमग्रेऽपि । अमुकशर्मणे मातुलायाऽऽसनं कल्पयामि । अमुकदायै मातुलपत्न्या

आसनं कल्पयामि। अमुकशर्मणे मातुलाय सपत्नीकायाऽऽसनं कल्पयामीत्येवं वा। अमुकशर्मणे भ्रात्र आसनं कल्पयामि। अमुकदायै भ्रातृपत्न्या आसनं कल्पयामि। अमुकशर्मणे भ्रात्रे सपत्नीकायाऽऽसनं कल्पयामीत्येवं वा। अमुकदायै पितृष्वस्रे सभर्तृकायै सापत्याया आसनं कल्पयामि। अमुकदायै मातृष्वस्रे सभर्तृकायै सापत्याया आसनं कल्पयामि। अमुकदाया आत्मभगिन्यै सभर्तृकायै सापत्याया आसनं कल्पयामि। अमुकशर्मणे श्वशुराय सपत्नीकाय सापत्यायाऽऽसनं कल्पयामि। अमुकशर्मणे गुरवे सपत्नीकाय सापत्यायाऽऽसनं कल्पयामि, इति यथाधिकारं किंचिद्व्यवधानेन संलग्नान्येवाऽऽसनानि कल्पयेयुः। शिष्याप्रसक्त्वेऽमुकशर्मणे शिष्यायाऽऽसनं कल्पयामि। अमुकशर्मण आप्तायाऽऽसनं कल्पयामीत्येवमेतयोरप्यासने कल्पयेयुः। न वा ह्यादयोऽत्र। ततः सर्वे—ब्रह्मणे नमः, ब्रह्माणमावाहयामीत्येवं तत्तन्नाममन्त्रैर्देवर्षिपितॄनावाहयेयुः। आसनकल्पनाद्युपस्थानान्तेषु पदार्थेषूपवीतं देवानां निवीतमृषीणां प्राचीनावीतं पितॄणां ज्ञेयम्। ततो ब्रह्माणं तर्पयामीत्येवमूहितैस्तत्तन्नाममन्त्रैरासनं समर्पयामीत्येवं कल्पितान्यासनानि समर्पयेयुः। अथ वाऽऽसनकल्पनमेव * वा समर्पणम्। अस्मिन्कल्प आसनकल्पनात्पूर्वमेवाऽऽवाहनं ज्ञेयम्। ततो ब्रह्मणे स्वाहेत्याद्यूहेनान्नेनार्चनम्। पितृष्वपि स्वाहाशब्द एव न स्वधाशब्दः। ततः पूर्वतर्पणवत्फलोदकेन तर्पणं कृत्वा ब्रह्मणे नमः प्रजापतये नम इत्याद्यूहेन ब्रह्मादीनेकपत्न्यन्तानुपस्थाय, अमुकशर्मणे पित्रे नम इत्याद्यूहेन तत्तन्नाम्ना सर्वान्पितॄनुपस्थाय सर्वान्विसर्जयेयुः। सर्वत्र रुद्रशब्द उदकस्पर्शः। सर्वोपचारसमर्पणाशक्तौ केवलसूत्रोक्ता एवोपचाराः समर्पणीयाः। ततोऽपरेण वेदिमुत्सर्जनाङ्गभूतहोमार्थं स्थण्डिलं कृत्वा गोमयेनोपलिप्योद्धननादिना संस्कृत्य सशिष्यत्वे श्रोत्रियागारादाहृतमग्निं बलवर्धननामानमग्निं प्रतिष्ठापयामीत्युक्तरीत्या प्रतिष्ठाप्य प्रज्वाल्य ध्यायेत्। अशिष्यत्वे गृह्याग्निं गमनवेलायामेवारण्योः समारोपितं मथित्वा स्थण्डिले निधाय प्रज्वाल्य ध्यायेत्। समित्समारोपे तु श्रोत्रियागारादाहृतं लौकिकाग्निं स्थण्डिले निधाय प्रज्वाल्य ध्यायेत्। आजुह्वान उद्बुध्यस्वेतिमन्त्रद्वयान्ते तूष्णीमेव वा तां समिधमभ्याधाय ध्यायेत्। उत्सर्जनसंकल्पात्पूर्वमेव वोपावरोहः। उपस्थानोत्तरं पुनः प्रज्वालनादि। ग्रामसीमातिक्रमणे संभावितेऽन्वारब्धया

---

* अयं वाशब्दोऽधिकः।

---

१ क. °युः। न। २ ङ. °युः। त°। ३ ङ. च. °वपि°। ४ ङ. च. °मन्त्रान्त आस°। ५ क. °शब्देनोद°। ६ ङ. वाऽवरोपः।

पत्न्या सहैव गच्छेत्। ततः समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वोत्सर्जनहोमकर्मणि या यक्ष्यमाणा इत्यादियज्ञोपवीतधारणान्तमुपाकरणवत्सर्वं कुर्यात्। तत्रोत्सर्जनप्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये विशेषः। ततः सर्वे इषे त्वेत्यनुवाकमधीयन्ते(ते) काण्डादीन्वा पूर्ववत्। यद्यनारब्धवेदाः शिष्याः स्युस्तदा तान्वाचयेत्। उत्सर्जनात्पूर्वमेवेषे त्वेत्यनुवाकं काण्डादीन्वाऽध्यापयेदिति केचित्। नात्र ब्रह्मयज्ञविधिः। तत आचार्य *उत्सृष्टा वै वेदाः। त्र्यहमेकाहं वाऽनध्यायः कार्य इति शिष्यान्वदेत्। ततश्चित्तं च स्वाहेत्यादिपूर्णपात्रदानान्तं कृत्वाऽग्निं संपूज्य विभूतिं धारयेत्। ततः सर्वे जलसमीपं गत्वा, काण्डात्काण्डादितिद्वयोरग्निर्याज्ञिक्यो॰ यंभूर्वा दूर्वाऽनुष्टुप्। दूर्वारोपणे विनियोगः। 'काण्डात्काण्डात्प्र॰ वयम्' इति मन्त्रद्वयान्त एकैकां दूर्वां बह्व्यो वा(ह्वीर्वा) दूर्वा रोपयन्ति। ततो जलाशयं विलोडनेनोर्मिमन्तं कृत्वा जलाशयाद्बहिः प्राचीमुदीचीं वा दिशं यावद्बलं शीघ्रं धावनं कृत्वा गृहमागच्छेयुः। ततः सर्वेऽपूपैः सक्तुभिरोदनेनान्यैश्च व्यञ्जनैः पूजनपूर्वकं ब्राह्मणान्भोजयेयुः। तत्रापूपाः प्रथमं परिवेषणीयाः। ततः सक्तवः। तत ओदनः। ततोऽन्यानि व्यञ्जनानि, इति परिवेषणे क्रमः। नैवात्र त्रिवृदन्नहोमः। ततः शिष्या आचार्याय हिरण्यं गां वा दक्षिणां दत्त्वा प्रमादादिति विष्णुं स्मरेयुः। आचार्योऽपि यस्मै कस्मैचिद्ब्राह्मणाय हिरण्यं गां वा दक्षिणां दत्त्वा प्रमादादिति विष्णुं स्मरेत्। आचारात्सर्वे सुवृष्ट्यर्थं पर्जन्यसूक्तानि पठेयुः। उत्सर्जनोत्तरं यावदुपाकर्म शुक्लपक्षेषु धारणाध्ययनं कृष्णपक्षेषु व्याकरणाद्यङ्गाध्ययनं च कुर्यान्न त्वपूर्ववेदाध्ययनम्। अथवा त्र्यहमेकाहं वा स्वाध्यायदिनेषु विरम्य कृतान्तादपूर्ववेदाध्ययनं कर्तव्यम्। उत्सर्जनस्योपाकरणदिवसेऽनुष्ठानेऽपि तन्त्रं नैव भवति। तयोर्ग्रहणत्यागरूपयोः स्वरूपविरोधात्। इत्युत्सर्जनप्रयोगः।

## अथ वेदपारायणोपाकरणोत्सर्जने।

तत्र सूत्रम्—"एवं पारायणसमाप्तौ दूर्वारोपणोदधिधावनवर्जम्" इति।

एवमित्यतिदेशादविकृता वेदोपाकरणोत्सर्जनोक्ता धर्मा वेदपारायणोपाकरणे तत्समाप्तौ च कर्तव्याः। यद्यप्युत्सर्जनमेव संनिहितं तथाऽपि ग्रहणं विना त्यागायोगात् 'उपाकरणोत्सर्जने व्याख्यास्यामः' इति सूत्रेणैतयोः संयुक्तत्व-

* क. पुस्तकटिप्पण्याम् 'अत्राप्युत्सृष्टानि काण्डानीति युक्तम्' इति वर्तते।

१ ङ. °रग्निः स्वयं°। २ ङ. °रणप्रयोगः। त°। ३ ङ. °पि संप्र°।

ख्यापनाच्चोपाकरणमप्यतिदिश्यते। तथा सति वेदोपाकरणरीत्या वेदपारायणोपाकरणं वेदोत्सर्जनरीत्या वेदपारायणसमाप्तिरिति। *नन्वेवं पारायण इति वक्तव्ये समाप्तावितिवचनं प्रक्रान्तपारायणस्य जननमरणकृताशौचेन प्रतिबन्धेऽनध्यायदिवसे च प्राप्तेऽप्यन्वहं पाठेन समाप्तेरावश्यकत्वबोधनार्थम्। तथा च बौधायनो वेदपारायणं प्रकृत्य 'नास्यान्तराऽनध्यायो नास्यान्तरा जननमरणे अशुची' इति।

अस्य पारायणकर्मणो मध्येऽनध्यायो न। न चास्य मध्ये जन्ममरणे अशुचित्वहेतुभूते भवत इत्यर्थः। हस्तरोहिणीपौर्णमास्यात्मकः कालो नात्रातिदिश्यते। पारायणस्य काम्यत्वात्। त्र्यहमेकाहं वा क्षम्येत्येतदप्यत्र न प्रवर्तते। तस्य[1] क्षम्येत्यत्रत्यसमानकर्तृकक्रियार्थकक्त्वाप्रत्ययेन[2] यथाध्यायमध्येतव्यमित्युत्तरवाक्यविहिताङ्गत्वमेवावगम्यते। न तूपाकरणोत्सर्जनाङ्गत्वम्। उत्सर्जने तु दूर्वारोपणमुदधावूर्मिनिष्पादनं[3] च साक्षान्निषेधादेवात्र न भवति[4]। उदधावूर्मिनिष्पादनसंबन्धधावनमपि न। स च संबन्धः क्त्वाप्रत्ययात्। इदं पारायणं काम्यम्। पापक्षयपुत्रधनधान्यस्वर्गाद्यैहिकामुष्मिकफलार्थतया बौधायनेन विहितत्वादकरणे प्रत्यवायाश्रवणाच्च। पारायणं नामाध्ययनधर्मपूर्वकं मन्त्रब्राह्मणयोरन्वहमविच्छिन्नपाठेन पारगमनम्। आरण्यकं तु ब्राह्मणमेव। आरण्यकसंज्ञा तु अरण्येऽध्येतव्यत्वाद्द्रष्टव्या। अत्र पुराणे कलशस्थापनं तत्र सविशेषं ब्रह्मपूजनं चोक्तम्—

"तीर्थे देवालये गेहे प्रशस्ते सुपरिष्कृते।
कलशं सुदृढं तत्र सुनिर्णिक्तं विभूषितम्॥
पुष्पपल्लवमालाभिश्चन्दनैः कुङ्कुमादिभिः।
मृत्तिकां यवसंमिश्रां वेदिमध्ये क्षिपेत्ततः॥
पञ्चाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखः स्थितः।
वाग्युतः स्थापितः कुम्भे चतुर्बाहुश्चतुर्मुखः॥
वत्सजान्वाकृतिं वेदमुत्तराग्रैः कुशैः कृतम्।
ब्रह्मोपधाने दत्त्वा तं ततः स्वस्त्ययनं पठेत्॥
प्रतिष्ठां कारयेत्पश्चात्पूजाद्रव्याण्य(व्यम)थोच्यते।
यज्ञोपवीतनैवेद्यवस्त्रचन्दनकुङ्कुमैः॥

* नन्वित्यसंबद्धम्।

१ ङ. °स्य यथाध्यायमध्येतव्यमित्युत्तरवाक्ये कर्तव्यत्वेन विहितस्य ग्रहणधारणात्मकाध्ययनस्य क्ष°। २ ङ. °येनाङ्ग°। ३ ङ. °दनमाज्जिधावनं। ४ ङ. °ति। इ°।

स्रग्धूपदीपताम्बूलैरक्षतैश्च पितामहम् ।
ब्रह्म जज्ञानमिति वा गायत्र्या वा प्रपूजयेत् ॥
ततो गुरुं च संपूज्य यथापाठं पठेत्ततः " इति ।

सुनिर्णिक्तः सुप्रक्षालितः । वाग्युतो वाचा सरस्वत्या युतः । ब्रह्मोपधाने ब्रह्मणः शिरस उपधानार्थं दत्त्वोपधानस्थाने स्थापयित्वेति यावत् । स्वस्त्ययनं ततः पठेत् । स्वस्तिशब्दमयतीतिव्युत्पत्त्या[1] स्वस्तिशब्दघटितो मन्त्रः स्वस्त्ययनशब्देनोच्यते । तं मन्त्रं पठेदित्यर्थः । अन्यत्स्पष्टम् । बौधायनसूत्रे दक्षिणादानश्रवणादृत्विग्द्वाराऽपि पारायणं भवति । पारायणस्य केनचिदन्येन कर्मणा वाग्जल्पेन वा पाठविच्छेदश्चेत्तदा प्राणायामाचमने कृत्वा प्रणवेन प्रतिसंधाय पठनीयम् । अनुवाकान्ते विरमणम् । पुनर्दिनान्तरे कृतनित्यक्रियः प्रणवेन प्रतिसंधाय पठेत् । तदुक्तं बौधायनेन—' नान्तरा व्याहरेन्नान्तरा विरमेद्यावदन्तमधीयीत यदन्तरा विरमेत्रीन्प्राणायामान्कृत्वाऽऽचम्य प्रणवेन प्रतिसंधाय यावत्कालमधीयीत ' इति ।

उपक्रान्तवेदपारायणमध्ये न व्याहरेत् । नाध्यापयेत्तथा लौकिकवचनमपि न ब्रूयात् । विहितनित्यनैमित्तिककर्मानुपयुक्तामुक्तिं न कुर्यात् । नान्तरा प्रश्नमध्येऽनुवाकमध्ये वा विरमणं कुर्यात् । यद्यन्तरा कुर्यात्तदा त्रीन्प्राणायामान्कृत्वाऽऽचम्य प्रणवमुच्चार्य यत्र विरमणं कृतं तत आरभ्य पठेदिति सूत्रार्थः । अत्र पदच्छेदं कृत्वैव पठेत् ।

' माधुर्यमक्षरव्यक्तिः परच्छेदस्तु सुस्वरः ।
धैर्यं लयसमर्थं च षडेते पाठका गुणाः "

इति पाणिनीयशिक्षावचनात् ।

अथ संहितायामेकप्राणभाव इतिप्रातिशाख्यसूत्रे[2]—एकप्राणेन भाव्यत उच्चार्यत इत्येकप्राणभावः । एकेनोच्छ्वासेन[3] यावानुच्चार्यते वेदभागस्तावानेकप्राणभाव इत्यर्थः । अत एवावसाने पदविधिरिति तद्भाष्यकृतोक्तत्वाच्च । एतच्च ग्रहणाध्ययनधारणाध्ययनब्रह्मयज्ञेष्वपि ज्ञेयम् । संकल्पमारभ्योत्सर्जनसमाप्त्यन्तं पारायणम् । तत्र संकल्पोत्तरं कर्तुर्वरणोत्तरमृत्विजश्चास्मिन्कर्मण्याशौचादि नास्तीत्युक्तमेव । ऋत्विक्कर्तृके पारायणे सुवर्णं गां वा दक्षिणां दद्यात् । स्वकर्तृकेऽपि यथाशक्ति ब्राह्मणेभ्यो दक्षिणा देयैव । ऋत्विक्कर्तृके पारायणे होमोऽपि तत्कर्तृक एव । तस्य पारायणाङ्गत्वात् । भिन्नकर्तृकेषु बहुषु

१ क. 'थैः । बौ' । २ क. 'त्रे संहिताग्रहणमवसा' । ३ क. 'भिर्भवतीत्येतदर्थमिति त' ।

पारायणेषु होमास्तत्कर्तृका भिन्ना एव । बहूनामेकं पारायणं न भवति । कृत्स्नपारायणस्य पुरुषं प्रत्युपदेशात् । एक एव यदा फलार्थतया बहूनि करोति तदा तानि मनसाऽवधार्य पारायणोपाकरणानि तन्त्रेण करिष्य इति संकल्पं कुर्यात् । एवं वेदपारायणोत्सर्जनानि तन्त्रेण करिष्य इत्युत्सर्जनसंकल्पोऽपि । उभयोर्होमोऽपि सकृदेव नाऽऽवृत्तिः । संप्रतिपन्नदेवताकत्वात् । कामनाभेदे सत्येककर्तृकाणामपि तन्त्रं न भवति । तत्फलार्थं साङ्गस्यैव विधानात् ।

## अथ प्रयोगः ।

कर्ता कृतनित्यक्रियः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मम सकलपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं स्वशाखात्मकवेदं[१]पाराय[णोपाकर]णं करिष्य इति संकल्पं कुर्यात् । पुत्रादिकामनायां तु पुत्रकामनासिद्धिद्वारा धनकामनासिद्धिद्वारा धान्यकामनासिद्धिद्वारा स्वर्गकामनासिद्धिद्वारेत्यादि यथायथमूहः । वेदान्तरपारायणेऽपि स्वीयमेव तन्त्रम् । वेदान्तरपारायणं तु स्ववेदपारायणं विना न भवति । ततस्तदङ्गं गणेशपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च कुर्यात् । ततोऽमुकप्रवरान्वितामुकगोत्रोत्पन्नोऽमुकशर्माऽहममुकप्रवरान्वितामुकगोत्रोत्पन्नममुकशाखाध्यायिनममुकशर्माणं वेदपाराय[णोपाकर]णार्थमृत्विजं त्वां वृण इत्यृत्विग्वरणं मधुपर्कं च कुर्यात् । ततः पारायणकर्ताऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यामुकशर्मणा वृतोऽहमृत्विक्कर्म करिष्य इति संकल्प्य स्थण्डिलकरणादि बलवर्धननामानमग्निं प्रतिष्ठापयामीति लौकिकाग्निस्थापनं कुर्यात् । यजमानकर्तृके पारायणे तु गृह्याग्निमेव बलवर्धननामाऽयमग्निरिति ध्यायन्प्रज्वालयेत् । ततोऽग्निं ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा वेदपारायणोपाकरणहोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तमुक्त्वा प्रधानहोमे प्रजापतिं काण्डर्षिमित्यादि सदसस्पतिं चाऽऽज्येन यक्ष्य इत्यन्तमुक्त्वा जयोपहोमे चित्तं चित्तिमित्यादि व्याहृतिहोमान्तं कृत्वा प्रजापतये काण्डर्षये स्वाहेत्यादिप्रधानाहुतीर्हुत्वा जयोपहोमादि सर्वं होमशेषं समापयेत् । नात्र त्रिवृदन्नहोमः । ततो मही द्यौरित्यादिविधिना सुदृढं कलशं सुप्रक्षालितं पुष्पपल्लवमालाचन्दनकुङ्कुमादिभूषितं चतुरश्रायां हस्तायामविस्तारायां हस्तोच्छ्रायायां मध्यस्थितयवसंमिश्रमृत्तिकायां वेद्यां संस्थाप्योत्तराग्रकुशकृतं वत्सजान्वाकृतिवेदं ब्रह्मणः शिरउपधानत्वेन कलशे

१ क. च. 'त्रं भ'। २ क. 'दस्य पा'।

परिकल्प्य, स्वस्ति न इन्द्र इत्यस्य[1] याज्ञिक्यो देवता उपनिषदः स्वयंभूर्वेन्द्राद्यस्त्रिष्टुप् । पठने विनियोगः । 'स्वस्ति न इन्द्रो० तिर्दधातु' इति पठेत् । तत ऊर्ध्वाग्रपश्चाशत्कुशनिर्मितं कूर्चं प्रत्यगग्रं निधाय तत्र ब्रह्म जज्ञानमित्यस्याग्निर्ब्रह्मा त्रिष्टुप् । ब्रह्मावाहने विनियोगः 'ब्रह्म जज्ञानं प्रथ० विवः' इति सरस्वतीयुतब्रह्मावाहनं कुर्यात् । वेदात्मनायेति ब्रह्मगायत्र्या वा । अस्या[2] याज्ञिक्यो देवता उपनिषदः स्वयंभूर्वा ऋषिः । ब्रह्मा देवता । गायत्री छन्दः । इत्यृष्यादिविनियोगवाक्यं प्राग्वत् । ततो नयं प्रजामिति प्रतिष्ठाप्याऽऽसनपाद्यार्घ्याचमनीयस्नानवस्त्रद्वययज्ञोपवीतद्वयचन्दनकुङ्कुमाक्षतालंकारपुष्पपुष्पमालाधूपदीपनैवेद्य[3]फलताम्बूलदक्षिणाप्रदक्षिणानमस्कारात्मकैरुपचारैः समभ्यर्च्य गुरुं संपूज्य ब्राह्मणान्संपूज्य विष्णुं स्मरेत् । अत्र वा ब्रह्मपूजनम् । गुरोरसांनिध्ये तमुद्दिश्य प्रणामः कार्यः । ततो दर्भासनोपविष्टो दर्भपाणिः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य प्रणवमुच्चार्य वाग्यत इषे त्वेत्यादिकं यथापाठं साङ्गं वेदपारायणमारभेत्(त) । प्रश्नान्तेऽनुवाकान्ते वा विरमेत् । प्रत्यहं प्रहरद्वयपर्यन्तं यावत्पारायणं भवति तावत्कर्तव्यम् । अतित्वरायां सार्धप्रहरद्वयपर्यन्तम् । आरण्यकप्रपाठकेषु मध्ये विरामेऽपि तत्तत्प्रपाठकस्योत्तरां शान्तिं कुर्यात् । द्वितीयदिने पूर्वां शान्तिं कृत्वा कृतान्तादारभेत्(त) । कर्मसमाप्त्यन्तं ब्रह्मचर्यमधःशयनं स्वल्पं हविष्याशनं च कार्यम् । शक्तौ सत्यामुपोषणं ब्रह्मपूजनं च प्रत्यहम् । कर्मसमाप्त्यन्तं पतितरजस्वलादिसंभाषणं तत्समक्षमध्ययनं च न कुर्यात् । 'आ समाप्तेर्नाश्नीयाद्यथाशक्ति वाऽपः[4] पयः फलान्योदनं हविष्यमात्रमल्पं भुञ्जीत नोपरि शयीत न मैथुनं चरेत्पतिताद्यैर्न संभाषेत नैतत्समीपेऽधीयीत' इतिबौधायनोक्तेः[5] । ऋत्विक्कर्तृके पारायणे पारायणकारयित्राऽपि नियमाः कार्या एव । इति वेदपारायणोपाकरणप्रयोगः ।

## अथ वेदपारायणोत्सर्जनप्रयोगः ।

पारायणकर्ता समाप्ते पारायणे प्राचीमुदीचीं वा दिशमुपनिष्क्रम्यापां समीपे शुचौ देश उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मया कृतस्य वेदपारायणस्य साङ्गतासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं वेदपारायणोत्सर्जनाख्यं कर्म करिष्य इति संकल्पं कुर्यात् । यदा तु स्वकर्तृकमेव पारायणं तदा गृह्याग्नौ होमस्य कर्तव्यत्वात्तदर्थं गमनवेलायामेव पूर्ववदग्निं समारोप्य तेन सहैव गच्छेत् । ततस्तदङ्गं गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं

१ ङ. °स्य स्वयभूरिन्द्रा° । २ ङ. अस्याः स्वयंभूरृषिः । ३ क. च. °द्यता° । ४ क. च. पः फ° । ५ ङ. °क्तेः । इ° ।

नान्दीश्राद्धं च कुर्यात् । तत ऋत्विक्पूर्वोक्तरीत्या स्नानविधिं देवर्षिपितृपूजनं च कुर्यात् । अत्र परस्परं दर्भप्रदानं नास्त्यन्यस्यैवाभावात् । बहुषु पारायणेषु यदि बहवः कर्तारस्तदाऽपि न दर्भदानम् । भिन्नकर्मसंबद्धेष्वृत्विक्षु संप्रदानत्वायोगात् । ततोऽपरेण वेदिमग्निमुपसमाधायेत्यादि प्राणायामान्तं कृत्वा वेदपारायणोत्सर्जनहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा प्रधानहोमे प्रजापतिं काण्डर्षिमित्यादि सदसस्पतिं चाऽऽज्येन यक्ष्य इत्यन्तमुक्त्वा जयोपहोमे चित्तं चित्तिमित्यादि व्याहृतिहोमान्तं कृत्वा प्रजापतये काण्डर्षये स्वाहेत्यादिप्रधानाहुतीर्हुत्वा जयोपहोमादि सर्वं होमशेषं समापयेत् । नैवात्र त्रिवृदन्नहोमः । दूर्वारोपणमुदधावूर्मिनिष्पादनमाजिधावनं च नास्ति । ततो ब्रह्माणं संपूज्य विसर्जयेत् । ततो यजमान ऋत्विग्द्वारा पारायण ऋत्विजे सुवर्णगोदानवस्त्ररथाद्यन्यतमां यथाविभवं दक्षिणां दत्त्वाऽपूपैः सक्तुभिरोदनेनान्यैश्च व्यञ्जनैर्ब्राह्मणान्पूजनपूर्वकं भोजयित्वा भूयसीं दक्षिणां दत्त्वाऽग्निं संपूज्य विभूतिं धृत्वा लौकिकाग्नौ होमश्चेत्तमग्निं गच्छ गच्छेति विसृज्य प्रमादादिति विष्णुं स्मरेत् । इति वेदपारायणोत्सर्जनप्रयोगः ।

## अथ नित्यस्नानतर्पणे ।

तत्र सूत्रम्—" नित्यमेवं स्नात्वाऽद्भिर्देवानृषीन्पितॄंश्च तर्पयन्ति तर्पयन्ति " इति ।

नित्यं सदा, एवमुत्सर्जनोक्तस्नानविधिना स्नात्वाऽद्भिस्तत्तत्तीर्थैर्यज्ञोपवीतित्वादिभिस्तत्तद्धर्मैर्देवानृषीन्पितॄंश्च प्रातःस्नानोत्तरं मध्याह्नस्नानोत्तरं च तर्पयन्तीत्यर्थः । एवं ब्रह्मयज्ञादनन्तरं तत्राकृतं चेन्मध्याह्नसंध्योत्तरं वा । तर्पयन्तीतिद्विरुक्तिः प्रश्नसमाप्तिद्योतनाय ।

## अथ तर्पणीयपितरः ।

" ताताम्बात्रितयं सपत्नजननी मातामहादित्रयं
सस्त्रि स्त्री तनयादि तातजननीस्वभ्रातरः सस्त्रि(रस्तत्स्त्रि)यः ॥
ताताम्बात्मभगिन्यपत्यधवयुग्जायापिता सद्गुरुः
शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे " इति ॥

तातत्रितयं कर्तुः पितृपितामहप्रपितामहाः । अम्बात्रितयं मातृपितामहीप्रपितामह्यः । सपत्नजननी सपत्नमाता । मातामहादित्रयं स्पष्टम् । सस्त्रि मातामहीमातुःपितामहीमातुःप्रपितामहीसहितम् । तेनात्र मातामहं सपत्नीकं स्वधा नमस्तर्पयामीत्यादिप्रयोगो द्रष्टव्यः । तत्स्त्रीतिपाठे पृथगेव मातामह्या-

१ ङ. 'द्धं यजमान एव कु' । २ क. च. 'ह्यः । माताम' ।

दीनां तर्पणम्। स्त्री भार्या। तनयादीत्यादिपदेन पौत्रादिग्रहणम्। भ्रातृशब्दस्य तातजननीशब्दयोरप्यन्वयः। तेन तातभ्रातरो जननीभ्रातरः स्वभ्रातर इत्यर्थो भवति। तत्स्त्रियस्तेषां तातभ्रातृजननीभ्रातृस्वभ्रातॄणां स्त्रिय इत्यर्थः। सस्त्रिय इतिपाठे स्त्रीसहिता इत्यर्थः। स्त्रीति स्त्र्यपत्ययोरुपलक्षणम्[1]। तेन पितृव्यं सपत्नीकं सापत्यं स्वधा नमस्तर्पयामीति प्रयोगः। एवं मातुलभ्रात्रोरपि। तातामबात्मभगिनी(नि) तातभगिनी, अम्बाभगिनी, आत्मभगिनी, तद्भर्तारस्तदपत्यानि च। तातभगिनीं सभर्तृकां सापत्यां स्वधा नमस्तर्पयामीति प्रयोगः। एवं मातृभगिन्यात्मभगिन्योरपि। जायापिता श्वशुरः। अन्यत्स्पष्टम्।

## अथ तर्पणविधिः।

तत्र वसिष्ठः—"ऋक्सामाथर्ववेदोक्ताञ्जप्यान्मन्त्रान्यजूंषि च।
जप्त्वा चैवं ततः कुर्याद्देवर्षिपितृतर्पणम्" इति॥

बृहस्पतिरपि—"ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्यां चाऽऽध्यात्मिकीं जपेत्।
जप्त्वाऽथ प्रणवं चापि ततस्तर्पणमाचरेत्" इति॥

विष्णुपुराणेऽपि—"शुचिवस्त्रधरः स्नातो देवर्षिपितृतर्पणम्।
तेषामेव हि तीर्थेन कुर्वीत सुसमाहितः" इति॥

स्नातः शुचिवस्त्रधर इत्यन्वयः।

व्यासः—"एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः।
अर्हन्ति पितरस्त्रींस्त्रीन्स्त्रियश्चैकैकमञ्जलिम्" इति॥

सनकादय इति स्वस्वशाखोक्तर्ष्युपलक्षणम्। स्त्रीष्वपि विशेषः स्मृत्यन्तरे—

"मातृमुख्याश्च यास्तिस्रस्तासामप्यञ्जलित्रयम्।
दद्यादेकैकमन्यासां स्त्रीणां चैवाञ्जलिं बुधः" इति।

मातामह्यादीनामप्यञ्जलित्रयं देयम्। तथा च स्मृतिः—

"मातृमुख्याश्च यास्तिस्रो मातामह्यादयश्च याः।
अञ्जलित्रयमेतासामन्यत्रैकैकमञ्जलिम्" इति।

आग्नेयपुराणे—"प्रागग्रेषु सुरांस्तर्पेन्मनुष्यांश्चैव मध्यतः।
पितॄंस्तु दक्षिणाग्रेषु दद्याद्द्वित्रिजलाञ्जलीन्" इति।

अत्राञ्जलिसंख्या यथाशाखं व्यवतिष्ठते। यत्र संख्यानियमो न श्रूयते तत्र विकल्पः।

1 इ. स्त्र्यपत्योः।

उशना—" द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम् ।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् " इति ।

ब्रह्मपुराणे—" कुशाग्रेषु सुरांस्तर्पेन्मनुष्यांश्चैव मध्यतः ।
पितॄंस्तु कुशमूलेषु तर्पयेच्च यथाविधि " इति ।

आग्नेयपुराणे—" सव्येन देवकार्याणि वामेन पितृतर्पणम् ।
निवीतेन मनुष्याणां तर्पणं संविधीयते " इति ।

सव्येनोपवीतेन । वामेन प्राचीनावीतेन । तथा च शङ्खलिखितौ—

" उभाभ्यामपि हस्ताभ्यां प्राङ्मुखो यज्ञोपवीती
प्रागग्रैः कुशैर्देवतातर्पणं देवतीर्थेन कुर्यात् " इति ।

विष्णुरपि—" ततः कृत्वा निवीतं तु यज्ञमन्त्रमुदङ्मुखः ।
प्राजापत्येन तीर्थेन मनुष्यांस्तर्पयेत्पृथक् " इति ।

मनुष्यानृषीन् । (*कनिष्ठाङ्गुलेर्मूलप्रदेशः प्राजापत्यं तीर्थम् । अञ्जलेस्तर्पणकरणत्वकल्पे कनिष्ठाद्वयमूलप्रदेशः प्राजापत्यं तीर्थम् । स्वल्पाङ्गुल्योर्मूले कायमिति कोशे द्विवचननिर्देशात् ।

पुलस्त्यः—" अन्वाच्य दक्षिणं जानुं प्रागग्रैस्तु कुशैर्द्विजः ।
देवान्संतर्पयेद्भक्त्या ध्यायंस्तद्गतमानसः " इति ।

गोभिलः—" देवान्संतर्पयन्प्राज्ञो दक्षिणं जानु भूतले ।
निदध्यादथ वामं तु पितॄनपि विचक्षणः ।
मनुष्यतर्पणं कुर्वन्न किंचिज्जानु पातयेत् " ) [इति] ।

बौधायनः—" अथ दक्षिणामुखः प्राचीनावीती
पितॄन्स्वधा नमस्तर्पयामि " इत्यादि ।

यस्तु[1]—" उभाभ्यामपि हस्ताभ्यामुदकं यः प्रयच्छति ।
स मूढो नरकं याति कालसूत्रमवाक्शिराः " ।

इति व्याघ्रपादुक्तो निषेधः [स] श्राद्धसमयार्घ्यादिविषयः[2] ।

अत एव कार्ष्णाजिनिः—

" श्राद्धे विवाहकाले च पाणिनैकेन दीयते ।
तर्पणे तूभयेनैव विधिरेष पुरातनः " इति ।

---

* धनुश्चिह्नान्तर्गतं नास्ति ङ. पुस्तके ।

१ ङ. यत्तु । २ ङ. °प्रवचनं तच्छ्राद्धादिविषयम् । अ° ।

( * कौर्मे तु—" अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।
देवर्षींस्तर्पयेद्विद्वानुदकाञ्जलिभिः पितॄन् "

इति सव्यपाण्यन्वारब्धदक्षिणपाणिना तर्पणमुक्तम् । तेन विकल्पः ।

तथा च वसिष्ठः—" एकेन वाऽथ हस्तेन देवर्षिपितृतर्पणम् ।
सव्यान्वारब्धेनोभाभ्यां वाऽपि कुर्यात्सदैव तु " इति ।

'न क्रुद्धो नैकपाणिना' इति गोभिलोक्तनिषेधस्त्वनन्वारब्धपाणिविषयः । एकहस्तेन तर्पणमाश्वलायनविषयम् । 'अनादेशे दक्षिणं प्रतीयात्' इति परिभाषासूत्रात् । अञ्जलिस्त्वन्यविषय इति केचित् । अन्ये तु—अनादेशे दक्षिणं प्रतीयादिति सूत्रोक्तकर्मसु हस्तकरणेषु हस्तानादेशे दक्षिणहस्तः करणत्वेन ज्ञेयः । तेन तर्पणे फलार्थविहितसुवर्णखड्गपात्रादिकरणत्वे हस्तस्याकरणा(णत्वा)न्न दक्षिणहस्तनियम इति तद्विषयकोऽप्यञ्जलिविधिः । एवं स्नानाङ्गश्राद्धाङ्गतर्पणविषयोऽपि । हस्तकरणकः(कं) ब्रह्मयज्ञोत्तरतर्पणं तु सव्यान्वारब्धदक्षिणहस्तेनैवेत्याहुः । ) एतच्च तर्पणं स्थलस्थो न जले कुर्यात् ।

तथा च गोभिलः—" नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना ।
नोपतिष्ठति तत्तोयं यन्न भूमौ प्रदीयते " इति ।

अतः स्थलस्थो भूमावेव तर्पणं कुर्यान्न जलादौ ।

तथा च विष्णुः—" स्थले स्थितो जले यस्तु प्रयच्छेदुदकं नरः ।
नोपतिष्ठति तद्वारि पितॄणां तन्निरर्थकम् " इति ।

स्मृत्यन्तरे—" आर्द्रवासा देवर्पिपितृतर्पणमम्भस्येव
कुर्यात्परिहितवासाश्चेत्तीर्थमुत्तीर्य " इति ।

अत्र विशेषमाह हारीतः—

" वसित्वा वसनं शुष्कं स्थले विस्तीर्णबर्हिषि ।
केशभस्मतुषाङ्गारकण्टकास्थिसमाकुलम् ।
भवेन्महीतलं यस्माद्बर्हिषाऽऽस्तरणं ततः ।
पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत् ।
जलपूर्णेऽपि वा गर्ते न स्थले तु विबर्हिषि " इति ।

यत्तु कार्ष्णाजिनिनोक्तम् ' देवतानां पितॄणां च जले दद्याज्जलाञ्जलिम् ' इति, तदशुचिस्थलविषयम् ।

---

धनुश्चिह्नान्तर्गतं ङ. पुस्तके नास्ति ।

---

१ ङ. ॰ति । अ॰ ।

तदाह विष्णुः—"यत्राशुचि स्थलं चेत्स्यादुदके देवताः पितॄन्।
तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम्" इति।

पात्रे विशेषमाह पितामहः—

"हेमरूप्यमयं पात्रं ताम्रकांस्यसमुद्भवम्।
पितॄणां तर्पणे पात्रं मृन्मयं तु परित्यजेत्" इति।

मरीचिः—"सौवर्णेन च पात्रेण ताम्ररौप्यमयेन(ण) वा।
औदुम्बरेण खड्गेन पितॄणां दत्तमक्षयम्" इति।

( + अत्र तृतीयानिर्देशात्करणपात्राणि, पितामहवाक्ये त्वधिकरणपात्राणीति जीर्णाः। पितामहवाक्यस्य मरीचिवाक्येनोपसंहारादेतेषां करणत्वमेव। अधिकरणपात्रस्य निषेधः। अत्र स्वर्णादिपात्राणां निरपेक्षकरणत्वात्। इति नवीनाः। ब्राह्मादितीर्थबाध इति मैथिलाः। समुच्चय इति केचित्।)

रिक्तहस्तेन न कुर्यादित्याह स एव—

"विना रौप्यसुवर्णेन विना ताम्रतिलैस्तथा।
विना मन्त्रैश्च दर्भैश्च पितॄणां नोपतिष्ठते" इति।

अन्यच्च स एव हेमाद्रौ—

"हिमेन सह यद्दत्तं क्षीरेण मधुनाऽथवा।
तदप्यक्षय्यतां याति पितॄणां तु तिलोदकम्" इति।

निहितं(हिमं) कर्पूरं चन्दनं वेति हेमाद्रिः।

स्मृत्यन्तरे—"खड्गमौक्तिकहस्तेन कर्तव्यं पितृतर्पणम्।
मणिकाञ्चनदर्भैर्वा न शुद्धेन कदाचन" इति।

( *मणिः सौवर्णो न तु नीलादिः।

"नीलगोमेदवज्रादिहस्तो नैव तु तर्पणम्।
प्रकुर्वीत द्विजो धीमानन्यथा पापभाग्भवेत्" इति प्रयोगसारेऽप्युक्तेः।

+ धनुश्चिह्नान्तर्गतं नास्ति ङ. पुस्तके। * धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तके—'अत्र मणिः सौवर्ण एव ग्राह्यः। वज्रादिमणीनां तर्पणे निषिद्धत्वात्। तथा च स्मृतिमञ्जर्यां सत्यव्रतः-खड्गमौक्तिकसौवर्णमणिकाञ्चनदर्भकाः। हस्ते धार्यास्तर्पणे तु हीरकादि न धारयेत्। हीरकादियुतो यस्तु कुर्वीत यदि तर्पणम्। क्रुद्धाः स्युः पितरस्तस्य शापं दत्त्वा व्रजन्ति हि' इति। तर्पणे कण्ठे मालाधारणनिषेध उक्तो भरद्वाजेन 'कण्ठे माला यस्तु धृत्वा कुर्वीत यदि तर्पणम्। निराशाः पितरो यान्ति शापदास्तस्य सर्वदा' इति' इति ग्रन्थो वर्तते।

१ ङ. °ति। स्म°।

दर्भेषु विशेषमाह नारदः—

" तर्पणादीनि कार्याणि पितॄणां यानि कानिचित् ।
तानि स्युर्द्विगुणैर्दर्भैः सप्तपत्रैर्विशेषतः " इति ।

अत्र तर्पणाङ्गत्वेन विधानाद्धारणदर्भापेक्षात एतेषां भेदः । तेन खड्गपात्रादिभिस्तर्पणे तन्मध्ये प्रागग्रादिदर्भान्तरनिधानं तिलप्रक्षेपश्चेति संप्रदायविदः । नवीनास्तु मरीचिवाक्ये दर्भादिपदोत्तरतृतीयाया उपपदविभक्तितया कारकविभक्तित्वाभावान्न दर्भाणां तर्पणाङ्गत्वं किंतु सामान्यतःप्राप्तसर्वाङ्गत्वानामशुद्धस्थलसंस्कारकत्वेन वा प्राप्तानां दर्भाणां विन्यासविशेषविधानार्थोऽयमनुवादः । तेन धारणदर्भापेक्षया दर्भान्तरग्रहणमित्याहुः । ) न चात्र समुच्चयः, नापि समविकल्प इत्यभिप्रेत्याऽऽह मरीचिः—

" तिलानामप्यभावे तु सुवर्णरजतान्वितम् ।
तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः " इति ।

( + अनेन मन्त्रावश्यकत्वमुक्तं भवति । अत एव जाबालिः—

" सुवर्णं रजतं दर्भान्यथालाभं प्रयोजयेत् ।
न मन्त्रेण विना कार्यं कदाऽपि तर्पणं बुधैः " इति ।

गौतमः— " कुशानामप्यलाभे तु काशा दूर्वा अथापि वा ।
संयोज्य तर्पणं कुर्यान्न तु शून्यकरः क्वचित् " इति ।

अत्र विशेषमाह प्रजापतिः—

" तर्पणादीनि कार्याणि पितॄणां यानि कानिचित् ।
तानि स्युर्द्विगुणैर्दर्भैः सपवित्रैर्विशेषतः " इति ।

भृगुः—" प्रागग्रैस्तर्पयेद्देवानुदगग्रैस्तु मानुषान् ।
तानेव द्विगुणीकृत्य तर्पयेत्प्रयतः पितॄन् " इति ।

तानेवेति देवतर्पणविनियुक्तानामपि तेषां पितृतर्पणयोग्यतेत्युक्तमिति हेमाद्रिः । ) तिलग्रहणे विशेषमाह योगयाज्ञवल्क्यः—

" यद्युद्धृतं निषिञ्चेत्तु तिलान्संमिश्रयेज्जले ।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः " इति ।

अन्यथाऽनुद्धृतेन तर्पणे । सव्येन तिला ग्राह्या इत्येतदलोमकप्रदेशाभिप्रायम् । तथा च देवलः—

" रोमसंस्थं तिलान्कृत्वा यस्तु तर्पयते पितॄन् ।
पितरस्तर्पितास्तेन रुधिरेण मलेन वा " इति ।

+ धनुश्चिह्नान्तर्गतं नास्ति इ. पुस्तके ।

वर्णभेदेन तिलानां विनियोगविशेषं दर्शयति स एव—

" शुक्लैस्तु तर्पयेद्देवान्मनुष्याञ्छबलैस्तिलैः ।
पितॄन्संतर्पयेत्कृष्णैस्तर्पयन्सर्वदा द्विजः " इति ।

शबलः कर्बुरवर्णश्चित्रवर्ण इति यावत् । 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरात् । तेन शुक्लान्कृष्णान्धूसरांश्च तिलान्मिश्रयित्वा तैर्मनुष्यांस्तर्पयेदित्यर्थः । कूर्मपुराणे—

" देवान्ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ।
पितॄन्भक्त्या तिलैः कृष्णैः स्वसूत्रोक्तविधानतः " इति ॥

स्मृत्यन्तरे—" अद्भिस्तण्डुलमिश्राभिर्देवानां तर्पणं चरेत् ।
सयवाभिर्ऋषीणां स्यात्पितॄणां सतिलोदकैः " इति ॥

पितृतर्पणप्रकारमाह पैठीनसिः—

" स्वनामगोत्रग्रहणं पुरुषं पुरुषं प्रति ।
तिलोदकाञ्जलींस्त्रींस्त्रीनुच्चैरुच्चैर्विनिक्षिपेत् " इति ॥

(+ब्रह्माण्डपुराणे—" अञ्जलिद्वितयं दद्याद्देवान्संतर्पयन्बुधः ।
ऋषीणां च मनुष्याणां सकृदेव प्रदापयेत् ॥
त्रिस्त्रिः पितृभ्यो दद्यात्तु स्त्रीणां तु सकृदेव हि ।
द्वौ द्वौ मातामहानां च मातुलानां सकृत्तथा ॥
गुर्वाचार्यश्वशुराणां सुहृत्संबन्धिनां सकृत् " इति ।

बौधायनः—" जलाञ्जलित्रयं दद्याये चान्ये संस्कृता भुवि ।
असंस्कृतप्रमीतानामेकमेवावरे क्षिपेत् " इति ॥

अत्र यथास्वशाखं व्यवस्था वेदितव्या । येषां तु शाखिनामेवाऽऽम्नानं तेषां विकल्प इति हेमाद्रिः । ) योगयाज्ञवल्क्योऽपि—

" सवर्णेभ्यो जलं देयं नासवर्णेभ्य एव च ।
गोत्रनामस्वधाकारैस्तर्पयेदनुपूर्वशः " इति ॥

अनुपूर्वशः पित्रादिक्रमेण । अत्र मदनपारिजातः—यद्यप्यसवर्णेभ्य इत्यविशेषेणोपादानं कृतं तथाऽप्युत्तमवर्णेन हीनवर्णोद्देशेन न कार्यम् । हीनवर्णेनोत्तमवर्णोद्देशेन कृते न दोषः । यतस्तद्वर्णतापत्तिर्दोषत्वेनाभिहिता स्मृतिषु । हीनस्योत्कृष्टत्वं न दुष्टम् । उत्कृष्टस्य हीनत्वं तु दुष्टमेव । सवर्णशब्दो मूर्धा-

\+ धनुश्चिह्नान्तर्गतं नास्ति ङ. पुस्तके ।

भिषिक्तादिजातीनामुपलक्षणार्थः। यद्यप्यसवर्णसापत्नमातृभ्रात्रादयोऽप्यसवर्णास्तथाऽपि तर्पणं कार्यमेव।

"पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि" इति सुमन्तुवचनात्।

यत्र च समत्वापादनं तत्र मुख्यापेक्षया किंचिन्न्यूनता भवतीति नात्र तत्प्राधान्यम्। अपि तु स्वमंनिहितसवर्णतर्पणानन्तरमेव तत्तर्पणमिति विवेकः। ननु सुमन्तुवचनेऽपि सवर्णानामेव मात्रादिसाम्यं भवतु मा नाम भूदसवर्णानामिति चेन्न। तथा सति पितृपत्न्यः सर्वा मातर इति न ब्रूयात्। उपात्तश्च सर्वशब्दो न तु पितृपत्न्य एव। अतः सर्वशब्दासंकोचाय पूर्वोक्त एव युक्तः पक्षः। एतेन भीष्मतर्पणमपि ब्राह्मणस्य निषिद्धमित्युक्तं भवतीत्याह। (+एतस्मादेव मदनपारिजातग्रन्थात्सपत्नभ्रातृमातुलमातृस्वसॄणामपि तर्पणोद्देश्यतायामवगतायामुपलक्षणतया सपत्नीपितृव्यादीनामप्युद्देश्यता द्रष्टव्येति केचित्। सापत्नपितामह्यादीनां पितामहीत्वादिना न तर्पणम्। बन्धुत्वेन तर्पणे न दोष इति गागाभट्टाः।) नामग्रहणे विशेषमाह बौधायनः—

"शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु।
गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः" इति॥

गोत्रे विशेषमाह स एव—

"चतुर्णामपि वर्णानां पितॄणां पितृगोत्रतः।
पितृगोत्रं कुमारीणामूढानां भर्तृगोत्रतः" इति॥

जीवत्पितृकस्य नित्यतर्पणनिषेधमाह कार्ष्णाजिनिः—

"न जीवत्पितृकः कुर्यान्मात्रादीनां तु तर्पणम्।
एतेषामपि कर्तव्यं श्राद्धाङ्गं तर्पणं यदि" इति॥

जीवत्पितृककर्तृकतर्पणे विशेषमाह योगयाज्ञवल्क्यः—

"कव्यवाडनलः सोमो यमश्चैवार्यमा तथा।
अग्निष्वात्ताः सोमपाश्च तथा बर्हिषदोऽपि च॥
यदि स्याज्जीवत्पितृकस्तान्विन्द्याच्च तथा पितॄन्।
येभ्यो वाऽपि पिता दद्यात्तेभ्यो वाऽपि प्रदीयते॥
एतांश्चैव प्रमीतांश्च प्रमीतपितृको द्विजः" इति॥

+ धनुश्चिह्नान्तर्गतं नास्ति ङ. पुस्तके।

१ च. °न्विद्याच्च।

तर्पयेदिति शेषः । कव्यवाडित्यादि तत्तच्छास्त्रोक्तपितॄणामुपलक्षणम् ।

( + जीवत्पितृकस्यापसव्ये विशेषः स्मृतिसारे—

"अपसव्यं द्विजाग्र्याणां पित्र्ये सर्वत्र कीर्तितम् ।
आप्रकोष्ठात्प्रकर्तव्यं मातापित्रोस्तु जीवतोः" इति ॥ )

तिथ्यादिविशेषेण तिलतर्पणं निषेधति मरीचिः—

"सप्तम्यां रविवारे च गृहे जन्मदिने तथा ।
भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम्" इति ॥

अत्राधिकारिविशेषश्रवणाद्भृत्यपुत्रकलत्रकामस्यैवायं निषेधः, न तु विधुरापुत्रादेरिति नवीनाः ।

ब्रह्मपुराणेऽपि—"संध्ययोर्निशि सप्तम्यां न कुर्यात्तिलतर्पणम्" इति ॥

बौधायनोऽपि—"सप्तम्यां रविवारे च जन्मर्क्षदिवसेषु च ।
गृहे निषिद्धं सतिलं तर्पणं तद्बहिर्भवेत् ॥
विवाहे चोपनयने चौले चैव यथाक्रमम् ।
वर्षमर्धं तदर्धं च न कुर्यात्तिलतर्पणम् ॥
संस्कारेषु तथाऽन्येषु जातपुंसवनादिषु ।
यावन्मासः समाप्येत तावत्पिण्डान्विवर्जयेत्[2] ॥
वृद्धावनन्तरं प्राज्ञस्तथैव तिलतर्पणम्" इति[3] ।

तथैव मासपर्यन्तमित्यर्थः ।

स्मृत्यन्तरे[1]—"नन्दायां भार्गवदिने कृत्तिकासु मघासु च ।
भरण्यां भानुवारे च गजच्छायाह्वये तथा ॥
अयनद्वितये चैव मन्वादिषु युगादिषु ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम्" इति ॥

भविष्ये—"भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च ।
जन्मर्क्षदिवसे चैव न कुर्यात्तिलतर्पणम्" इति ॥

स्मृत्यन्तरे[4]—"सप्तम्यां रविवारे च मातापित्रोः क्षयेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः" इति[5] ॥

---

+ धनुश्चिह्नान्तर्गतं नास्ति ङ. पुस्तके ।

१ च. स्मृत्यन्तरे । २ ङ. च. °न्विसर्जे° । ३ ङ. °ति । स्मृ° । ४ ङ. °त्यर्थसारे । ५ ङ. °ति । सर्वे° ।

हलायुधीये—“ द्वादश्यां निशि सप्तम्यां रविशुक्रदिने तथा ।
श्राद्धे जन्मदिने चैव न कुर्यात्तिलतर्पणम् ” इति ॥

सर्वेऽपि निषेधास्तिलमात्रपरा न तु नित्यतर्पणपरा अन्यथा तिलपदवैयर्थ्यापत्तेः । (* अत्र होम(महे)शादयः—सर्वे तिलतर्पणनिषेधा गृहविषयाः ।
“ सप्तम्यां रविवारे च जन्मर्क्षदिवसोत्सवे ।
गृहे निषिद्धं सतिलं तर्पणं तद्बहिर्भवेत् ” ॥

इति सत्यव्रतेन निषिद्धदिनेषु बहिस्तिलतर्पणविधानादित्याहुः । अन्ये तु—गृहस्य पृथगेव तिलतर्पणनिषेधनिमित्ततेति सर्वदैव सतिलं तर्पणं गृहे निषिद्धमिति व्याचक्षते । अपरे तु गृहेऽपि तिलोदकेन शिष्टानां तर्पणाचारदर्शनात्सत्यव्रतोक्तः सप्तम्यादिकालत्रय एव गृहे सतिलतर्पणनिषेधः स्वारसिको नतु सर्वदा नापि निषिद्धकालान्तरे । उपलक्ष[ण]त्वे प्रमाणाभावात् । अन्यथा प्रतिप्रसववाक्यानां गृह एव तर्पणविधानेना(ता)त्पर्यं वक्तव्यमिति महदनिष्टम् ।

तथा हि—“ अयने विषुवे चैव संक्रान्तौ ग्रहणेषु च ।
उपाकर्मवृषोत्सर्गयुगादौ मृतवासरे ॥
सूर्यशुक्रादिवारेऽपि न दोषास्तिलतर्पणे ” इति ।

तथा—“ उपरागे पितुः श्राद्धे पातेऽमायां च संक्रमे ।
निषेधेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत् ” ॥

इत्यादिवचनैर्भवन्मते गृहे निषिद्धतर्पणस्य पुनः प्रापणेन संनिहितेऽपि महातीर्थे गृह एव तर्पणं स्यात् । किंच जाह्नव्यादौ निषेधस्याप्राप्तत्वात्
“ विशेषतस्तु जाह्नव्यां सर्वदा तर्पयेत्पितॄन् ।
न कालनियमस्तत्र क्रियते सर्वकर्मसु ॥
तिथितीर्थविशेषे च गयायां पितृपक्षके ।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् ” ॥

इति स्कान्दाद्युक्ता(क्त)प्रतिप्रसवोऽप्यनुपपन्नः स्यादित्याहुः । )

तर्पणनिषेधप्रतिप्रसवमाह गोभिलः—
“ संक्रान्त्यादिनिमित्तेषु स्नानाङ्गे तर्पणे तथा ।
तिथिवारनिषेधेऽपि तिलैस्तर्पणमाचरेत् ” इति ॥

* धनुश्चिह्नान्तर्गतं नास्ति ङ. पुस्तके ।

१ च. °त्र लोमशा° । २ च. °न्यादिनि° ।

संक्रान्तिरयनाभिप्रेति प्रयोगपारिजाते।

मरीचिः—" तिथितीर्थविशेषेषु गङ्गायां प्रेतपक्षके।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् " इति॥

बौधायनोऽपि—" तिथितीर्थविशेषेषु कार्यं प्रेते च सर्वदा " इति।

तिथिविशेषोऽष्टकाकपिलषष्ठ्यादिः। तीर्थविशेषशब्देन यस्य तीर्थस्य समीपे निवसति तद्व्यतिरिक्तं तीर्थं ग्राह्यम्। अन्यथा तीर्थ इत्येतावतैव सिद्धौ विशेषपदवैयर्थ्यापत्तेः। एतच्च गङ्गातिरिक्तपरम्। तस्याः पुनर्ग्रहणात्। गयायामितिपाठाङ्गीकारे तु गङ्गासमीपवासिनामपि निषेधोऽस्त्येव।

जीवत्पितृकस्य कृष्णतिलतर्पणं निषेधति व्यासः—

" मुण्डनं पिण्डदानं च प्रेतकर्म च नित्यशः।
न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् " इति।

पिण्डदाने प्रेतकर्मविषये च प्रतिप्रसवः श्राद्धप्रकरणे द्रष्टव्यः। सति संभवे काण्डर्षितर्पणमपि कार्यम्। उक्तं च काण्डानुक्रमणिकायाम्—

" अथ काण्डऋषीनेतानुदकाञ्जलिभिः शुचिः।
अव्यग्रस्तर्पयेन्नित्यमन्त्रैः पर्वाष्टमीषु च " इति।

अवसानाञ्जलिमाह कात्यायनः[3]—

" ये पितृवंश्या मातृवंश्या ये चान्येऽस्मत्त
उदकमर्हन्ति तांस्तर्पयामीत्यवसानाञ्जलिः " इति।

आदित्यपुराणेऽपि[4]—

" यत्र क्वचन संस्थानां क्षुत्तृषोपहतात्मनाम्।
तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम्॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः।
तेषां तु दत्तमक्षय्यमिदमस्तु तिलोदकम् " इति।

मत्स्यपुराणेऽपि—येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः।
ते तृप्तिमखिला[5] यान्तु यश्चास्मत्तोऽम्बु वाञ्छति " इति।

विस्तरेण कर्तुमसमर्थस्य संक्षेपेण तर्पणमुक्तं स्मृत्यन्तरे—

" आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः।

१ क. ङ. 'यनभि'। २ च. गयायां। ३ ङ. च. 'नः—' पि'। ४ च. 'णे—'य'। ५ क. 'खिलां या'।

अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ।
एकं जलाञ्जलिं दद्यात्कुर्यात्संक्षिप्ततर्पणम् " इति ।

प्रकारान्तरमुक्तं विष्णुपुराणे—

" आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विति ब्रुवन् ।
क्षिपेत्पयोञ्जलींस्त्रींस्तु कुर्यात्संक्षिप्ततर्पणम् " इति ।

यमतर्पणं तु[1] वृद्धमनुनोक्तम्—

" दीपोत्सवचतुर्दश्यां कार्यं तु यमतर्पणम् ।
कृष्णाङ्गारचतुर्दश्यामपि कार्यं सदैव तु ।
यमाय धर्मराजाय मृत्यवे चान्तकाय च
वैवस्वताय कालाय सर्वभूतक्षयाय च ।
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै[2] नमः " इति ।

एतत्प्रकारस्तु स्कन्दपुराणे निरूपितः—

" दीपोत्सवचतुर्दश्यां सव्येन यमतर्पणम् ।
अपसव्येन वा कुर्याद्यमस्यास्ति द्विरूपता " इति ।

सव्यपक्षे प्राङ्मुखता देवतीर्थं तण्डुला यवा वा । अपसव्यपक्षे दक्षिणाभिमुखता पितृतीर्थं तिला इति द्रष्टव्यम् । एवं कुर्वतः फलमाह यमः—

" यत्र क्वचन नद्यां हि स्नात्वा कृष्णचतुर्दशीम् ।
संतर्प्य धर्मराजानं मुच्यते सर्वकिल्बिषैः " इति ।

कृष्णचतुर्दशीमित्यनन्तरं प्राप्येति शेषः । माघशुक्लाष्टम्यां भीष्मतर्पणम् । तदुक्तं व्यासेन—

" शुक्लाष्टम्यां तु माघस्य दद्याद्भीष्माय यो जलम् ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति " इति ।

मन्त्रस्तु प्रयोगे वक्ष्यते । एतच्च ब्राह्मणस्य न भवतीति मदनपारिजाते । तर्पणप्रशंसा पुराणे दर्शिता—

" एवं यः सर्वभूतानि तर्पयेदन्वहं द्विजः ।
स गच्छेत्परमं स्थानं तेजोमूर्तिमनामयम् " इति ।

१ च. तु म । २ क. च. ते ।

अकरणे प्रत्यवायः पुराणे दर्शितः—

" देवताश्च पितॄंश्चैव मुनीन्वा यो न तर्पयेत् ।
देवादीनामृणी भूत्वा नरकं प्रतिपद्यते " इति ।

योगयाज्ञवल्क्योऽपि—

" नास्तिक्याद्यो नरस्तांस्तु न तर्पयति वै पितॄन् ।
पिबन्ति देहनिस्रावं पितरोऽस्य जलार्थिनः " इति ।

हारीतोऽपि—" देवाश्च पितरश्चैव काङ्क्षन्ति सरितां जलम् ।
अदत्ते तु निराशास्ते प्रतियान्ति यथागतम् " इति ।

कात्यायनोऽपि—"छायां यथेच्छेच्छरदातपार्तः पयः पिपासुः क्षुधितोऽलमन्नम् ।
बालो जनित्रीं जननी च बालं योषित्पुमांसं पुरुषश्च योषाम् ।
तथा सर्वाणि भूतानि स्थावराणि चराणि च ।
पितरो जलमिच्छन्ति सर्वे ह्युदककाङ्क्षिणः ।
तस्मात्सदैव कर्तव्यमकुर्वन्महदेनसा ।
युज्यते ब्राह्मणः कुर्वन्विश्वमेतद्बिभर्ति हि " इति ।

अत्र पितृगाथा—" अपि नः स कुले भूयाद्यो नो दद्याज्जलाञ्जलिम् ।
नदीषु बहुतोयासु शीतलासु विशेषतः " इति ।

यद्यप्येतस्माद्वचनादुदके तर्पणं प्रतीयते तथाऽपि पूर्वोदाहृतगोभिलादिवचनानुरोधादशुचिस्थलविषयं द्रष्टव्यम् । यत्तु वृत्तिकृता जले तर्पणमुक्तं तदप्येतद्विषयमेव । तर्पणानन्तरं वस्त्रनिष्पीडनं कर्तव्यम् । तदाह योगयाज्ञवल्क्यः—

" यावद्देवानृषींश्चैव पितॄंश्चापि न तर्पयेत् ।
तावन्न पीडयेद्वस्त्रं यो हि स्नातो भवेद्द्विजः ।
निष्पीडयति यो वस्त्रं स्नानवस्त्रमतर्पिते ।
निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम् " इति ।

बृहत्पराशरोऽपि—" निष्पीडयेत्स्नानवस्त्रं तिलदर्भसमन्वितम् ।
न पूर्वं तर्पणाद्वस्त्रं नैवाम्भसि न पादयोः " इति ।

निष्पीडनं स्थले कार्यम् । तदुक्तं स्मृत्यन्तरे—

" वस्त्रनिष्पीडितं तोयं श्राद्धे चोच्छिष्टभोजिनाम् ।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत्स्थले " इति ।

स्मृतिमञ्जर्याम्—" जलमध्ये यदा कश्चिद्ब्राह्मणो ज्ञानदुर्बलः ।
निष्पीडयति वस्त्राणि स्नानं तस्य वृथा भवेत् " इति ।

स्मृतिसंग्रहे—" द्वादश्यां पञ्चदश्यां च संक्रान्तौ श्राद्धवासरे ।
वस्त्रं निष्पीडयेन्नैव न च क्षारेण योजयेत् " इति ।

भृगुः—" एकादश्याममायां च मातापित्रोः क्षयेऽहनि ।
न पीडयेत्स्नानवस्त्रं न च क्षारेण योजयेत् " इति ।

तथा—" धौतवस्त्रं प्रपीड्येत ऊर्ध्वपल्लवसंयुतम् ।
पल्लवाधो न पीड्येत पीडिते त्वशुचिर्भवेत् " इति ।

विष्णुपुराणे—" आचम्य च ततो दद्यात्सूर्याय सलिलाञ्जलिम् " इति ।

एतन्मन्त्रस्तु प्रयोगे वक्ष्यते ।

## अथ प्रयोगः ।

कर्ता प्रातरुत्थानादिदन्तधावनान्तं नित्यविधिं कृत्वा स्नानसामग्रीं गृहीत्वा जलसमीपं गत्वोद्धृतजलेन मुखं पाणी पादौ च प्रक्षाल्योदकं स्पृष्ट्वा मलापकर्षस्नानं कृत्वा बद्धशिखो दर्भपाणिः प्राङ्मुख आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम सकलपापक्षयपूर्वककर्माधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःस्नानमहं करिष्य इति संकल्प्योत्सर्जनोक्तरीत्या तीर्थप्रार्थनादिवस्त्रपरिधानान्तं कृत्वा संध्यावन्दनं विधाय ब्रह्मयज्ञं कुर्यात् । ततो निष्पीडितं वस्त्रं स्कन्धेऽनभिप्रक्षिपन्नेत्र गृहमागच्छेत् । गृहे स्नानं तु गृहद्वाराभिमुखम् । गृहे स्नान आदावेव संकल्पं कृत्वा शीतासूष्णा आनीय मलापकर्षस्नानादि । मंत्रोच्चारवर्जं संकल्पोऽत्रेति केचित् । नाघमर्षणम् । मार्जने विकल्पः । न तर्पणम् । स्नानान्त एवाऽऽचमनम् । ( * नाभेरूर्ध्वमार्द्रवस्त्रं न । रात्रौ स्नाने तु समीपेऽग्निं प्रज्वाल्य स्नायादिति स्मृत्यर्थसारे । रात्रिस्नाने संकल्पाघमर्षणमार्जनसूक्तजपजलतर्पणगोपीचन्दनधारणानि वर्जयेदित्युक्तं स्मृतिमञ्जर्याम् । ) पुत्रजननिमित्तकस्नानमप्येवम् । आद्यान्त्ययामयोस्तु नद्यादावेव[2] ।

## अथ ब्रह्मयज्ञप्रयोगः ।

कर्तोदिते सूर्ये प्रातर्होमोत्तरमकृतप्रातराशो ग्रामात्प्राच्यामुदीच्यामैशान्यां वा

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तके ' नाभेरूर्ध्वमार्द्रवस्त्रमुत्तारयेदिति विशेषः । रात्रेर्द्वितीयतृतीययामयोर्मरणव्यतिरिक्तनिमित्तस्नान चेत्पतेत्तदा गृह एव सुवर्णाङ्गुलिकरो वह्निं पश्यञ्शीतोदकेनैव कुर्यात् । वह्न्यभावे तेन विनाऽपि ' इति ग्रन्थो वर्तते ।

१ क. 'कल्पमन्त्रे' । २ ङ. च. 'व । तस्य प्र' ।

दिशि यावति देशे स्वग्रामच्छर्दींषि स्वगृहच्छर्दींपि वा न दृश्यन्ते तावति दूरे नदीतीरे देवखातादितीर्थेऽन्यस्मिन्नपि शुद्धे जलदेशे वा गत्वा हस्तौ पादौ च प्रक्षाल्याऽऽचम्य प्रदक्षिणमावृत्त्योपवीती भूत्वा जलं नमस्कृत्य प्रयतः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्यापः स्पृष्ट्वा देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं ब्रह्मयज्ञेन यक्ष्य इति संकल्प्य हस्तौ जलेन प्रक्षाल्य त्रिराचम्य सोदकेनाङ्गुष्ठमूलेन द्विरोष्ठौ संमृज्याऽऽर्द्राङ्गुलिभिरोष्ठौ सकृदुपस्पृश्य दक्षिणहस्तेन सव्यं पाणिं पादौ च प्रोक्ष्याऽऽर्द्राङ्गुलिभिः शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य प्रत्यालम्भमपः संस्पृश्येत्येतत्कर्माङ्गमाचमनं कृत्वा प्रभूतान्प्रागग्रान्दर्भानास्तीर्य पाण्योः पवित्रे धृत्वा दक्षिणोत्तरौ पाणी पादौ च कृत्वैवंभूतस्तेषु दर्भेषु प्राङ्मुख एवाऽऽसीनः प्रणवमुच्चार्य भूर्भुवः स्व(सुव(?))रिति तिस्रो व्याहृतीः पठित्वा 'भूस्तत्सवितुर्वरेण्यम् । भुवो भर्गो देवस्य धीमहि । सुवर्धियो यो नः प्रचोदयात् । भूर्भुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । सुवर्धियो यो नः प्रचोदयात् । भूर्भुवः सुवस्तत्सवि० महि धियो० यात्' इत्येवं व्याहृतिवर्जितां वा पच्छोऽर्धर्चशोऽनवानं गायत्रीमधीत्य द्यावापृथिव्योः संधिमीक्षमाणः संमील्य वा यथा युक्तमात्मानं मन्येत तथा युक्त इषे त्वेति काण्डं प्रपाठकमात्रमनुवाकमात्रं वा मनसा यथाशक्त्यधीत्य प्रज्ञातं निधाय नमो ब्रह्मण इति परिधानीयामृचं त्रिः पठित्वा प्रणवमुच्चारयेत् । अत्र ब्रह्म भूर्भुवः सुवः, ॐ शान्तिः शान्तिः शान्तिरिति पठन्ति केचित् ।

ततोऽप उपस्पृश्य पूर्वोक्तं कर्माङ्गमाचमनं कृत्वा प्रमादादिति विष्णुं स्मरेत् । ततो गृहमागत्य मुष्टिमात्रमन्नमपि कस्मैचिद्ब्राह्मणाय दक्षिणां दद्यात् । एवमेव दिनान्तरे विरामोत्तरवेदमारभ्य पठेत् । एवं रीत्या संहितां ब्राह्मणमारण्यकं च पठेत् । शिक्षा कल्पो व्याकरणं ज्योतिषं छन्दो निरुक्तमित्यङ्गानि तत्तद्दिने वेदाध्ययनोत्तरमेव क्रमेण प्रज्ञातदेशादारभ्याध्येतव्यानि । पुराणेतिहासादीनां वेदार्थोपबृंहकत्वादङ्गेष्वेवान्तर्भावादेतत्पाठोऽपि प्रज्ञातप्रदेशादारभ्यैव दिनान्तरे कार्यः । आरण्यकप्रपाठकेषु मध्ये विरामेऽपि तत्तत्प्रपाठकस्योत्तरां शान्तिं कृत्वाऽनन्तरं नमो ब्रह्मण इति परिदध्यात् । द्वितीयदिने गायत्रीपाठानन्तरं तत्तत्प्रपाठकस्य पूर्वां शान्तिं कृत्वा कृतान्तादारभेत्(त) । इत्यारण्यकाध्ययने विशेषः । अनध्याये स्वल्पो ब्रह्मयज्ञः कार्यः । वेदान्तराध्ययनसत्त्वे तमपि वेदं साङ्गस्ववेदसमाप्तौ पठेत् । तत्तदङ्गानि च । व्याकरणादिकमपि तत्तद्वेदसमाप्त्युत्तरं पुनः पठेत् । एकस्मिन्नेव

१ ङ. वा य° ।

दिने वा स्ववेदक्रमेण प्रज्ञातप्रदेशमारभ्य पठेत् । सर्वा विकृतीरपि ब्रह्मयज्ञे पठितव्या इति केचित् । नात्र पठितव्या इत्यन्ये । पूर्वं संहितां पठित्वा तस्मिन्नेव दिनेऽधीतसंहिताविकृतिं[1] पठेदिति परे । (* मध्यंदिन उच्चैरध्ययनं ग्रामे मनसा स्वाध्यायमधीयीतेतिविधिबलाद्ग्रामेऽप्यध्ययनमसंभवे, तच्च मनसेति । ) इति ब्रह्मयज्ञप्रयोगः ।

एवं रीत्या ब्रह्मयज्ञं विधाय देवर्षिपितृतर्पणं कुर्यात् । मध्याह्नसंध्योत्तरं वा तर्पणम् । अकृतब्रह्मयज्ञस्तु मध्याह्नसंध्योत्तरं ब्रह्मयज्ञं कृत्वा तर्पणं कुर्यात् । तद्यथा—शुचौ देशे प्राङ्मुख उपविश्य देशकालौ संकीर्त्य देवर्षिपितृतृप्त्यर्थं तर्पणं करिष्य इति संकल्प्य शुद्धदेशे प्रागग्रान्दर्भानास्तीर्य ताम्रपात्रमक्षतसंयुक्तं जलेन पूरयित्वाऽञ्जलौ प्रागग्रान्दर्भान्गृहीत्वा यज्ञोपवीती देवतीर्थेनाऽऽस्तृतेषु प्रागग्रेषु कुशेष्वग्रभागे[2] व्रीहितण्डुलसंयुक्तेन जलेनैकैकाञ्जलिं ब्रह्माद्यङ्गिरोन्तेभ्यो देवेभ्यो दद्यात् । ताम्रादिभाजनान्तरे जले वा तर्पयेत् ।

ततं उदङ्मुखो निवीती[3] कनिष्ठाङ्गुलिद्वयमूलप्रदेशात्मकेन प्राजापत्येन तीर्थेनोदगग्रेष्वास्तृतेषु कुशेषु मध्यभागे यवमिश्रितजलेन विश्वामित्रादीतिहासपुराणान्तेभ्यो द्वौ द्वावञ्जली दद्यात् । प्रत्यञ्जलि नाममन्त्रावृत्तिः । सकृन्नाम्नाऽपरस्तूष्णीमित्येवं वा । अथ[4] काण्डर्षितर्पणमपि सति संभवे कार्यम् । तद्यथा—प्रजापतिं काण्डर्षिं तर्पयामि । सोमं काण्डर्षिं त० । अग्निं काण्डर्षिं त० । विश्वान्देवान्काण्डर्षींस्तर्पयामि । स्वयंभुवं काण्डर्षिं तर्पयामि । अरुणान्काण्डर्षींस्तर्पयामि । सांहितीर्देवता उपनिषदस्तर्पयामि । वारुणीर्देवता उपनिषदस्तर्पयामि । याज्ञिकीर्देवता उपनिषदस्तर्पयामि । सदसस्पतिं तर्पयामीति ।

ततो न्यञ्चितसव्यजानुर्दक्षिणामुखः प्राचीनावीती पितृतीर्थेन दक्षिणाग्रेष्वास्तृतेषु कुशेषु मूलभागे कृष्णतिलमिश्रितं कृष्णतिलाभावे श्वेततिलमिश्रितं जलमादाय तेन वैशम्पायनाद्येकपत्न्यन्तेभ्यस्त्रींस्त्रीनञ्जलीन्दद्यात् । प्रत्यञ्जल्यावृत्तिः । सकृन्नाम्ना द्विस्तूष्णीमित्येवं वा ।

ततः पित्रादीन्सर्वान्पितॄंस्तर्पयेत् । तत्र सापत्नमातृव्यतिरिक्तैकोद्दिष्टस्त्रीभ्य

---

* धनुश्चिह्नान्तर्गतं ङ. पुस्तके नास्ति ।

१ ङ. 'दिवाप' । २ ङ. 'गेऽक्षतव्री' । च. 'गे यवमिश्रितत' । ३ ङ. 'र्वाल्यअलिवामभागोपलक्षितेन । ४ ङ. च. अत्र ।

एकैक उदकाञ्जलिर्देयः । असंभवे सर्वत्र सव्यान्वारब्धदक्षिणहस्तेनैव वा तर्पणम् । शुचिभूमिपात्रालाभे जलतीर उपविश्योक्तप्रकारेण जल एव तर्पयेत् । तत्र दक्षिणहस्तेन प्रतितर्पणमक्षतानां तण्डुलानां यवानां च ग्रहणम् । सव्यहस्तेन तिलानाम् । जीवत्पितृकेण तु एकपत्न्यन्तानामेव तर्पणं कार्यम् । तर्पणे श्वेता एव तिला ग्राह्याः । प्रकोष्ठपर्यन्तमेव तस्य प्राचीनावीतम् । ततो ये पितृवंश्या मातृवंश्या ये चान्येऽस्मत्त उदकमर्हन्ति तांस्तर्पयामीति प्रथममवसानाञ्जलिं दत्त्वा,

" यत्र क्वचन संस्थानां क्षुत्तृषोपहतात्मनाम् ।
तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् " इति द्वितीयमञ्जलिं दत्त्वा,

" येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते तृप्तिमखिला यान्तु यश्चास्मत्तोऽम्बु वाञ्छति " ।

इति तृतीयमञ्जलिं दद्यात् । विस्तरेण तर्पणं कर्तुमसमर्थः प्रपितामहीपर्यन्तं तर्पयित्वा ये पितृवंश्या इत्यनेन यत्र क्वचन संस्थानामित्यनेन येऽबान्धवा इत्यनेन च तर्पयेत् । एतावदपि कर्तुमसमर्थः—

" आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् " इत्यनेनैव तर्पयेत् ॥

अथवा—आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विवत्यञ्जलित्रयं दद्यात् । जीवत्पितृकस्य नैतत् ।

ततो द्विराचम्य सूर्यायोदकाञ्जलिं दद्यात् । तत्र मन्त्रः—

" नमो विवस्वते ब्रह्मन्भास्वते विष्णुतेजसे ।
जगत्सवित्रे शुचये सवित्रे कर्मदायिने " इति ॥

दीपोत्सवचतुर्दश्यां दैवधर्मेण पित्र्यधर्मेण वाऽवसानाञ्जल्यन्ते यमतर्पणं कुर्यात् । तद्यथा—' यमं तर्पयामि । धर्मराजं तर्पयामि । मृत्युं तर्पयामि । अन्तकं तर्पयामि । वैवस्वतं तर्पयामि । कालं तर्पयामि । सर्वभूतक्षयं तर्पयामि । औदुम्बरं तर्पयामि । दध्नं तर्पयामि । नीलं तर्पयामि । परमेष्ठिनं तर्पयामि । वृकोदरं तर्पयामि । चित्रं तर्पयामि । चित्रगुप्तं तर्पयामि ' इति तर्पणं कृत्वा,

---

१ क. सव्या° । २ क. °स्तेन वा । ३ क. °खिलां या° । ४ ङ. °जसा । ज° । ५ ङ. तत्रैतानि नामानि—य° ।

" यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै[1] नमः " इति नमस्कुर्यात् ।

माघशुक्लाष्टम्यां भीष्मतर्पणम् । अवसानाञ्जल्यन्ते प्राचीनावीती—

" वैयाघ्रपादगोत्राय सांकृत्यप्रवराय च ।
गङ्गापुत्राय भीष्माय प्रदास्येऽहं तिलोदकम् ॥
अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे " ॥

इतिमन्त्रेण भीष्मतर्पणं कुर्यात् । एतच्च ब्राह्मणस्य न भवतीति मदनपारिजातः । तिलतर्पणे निषिद्धकालास्तत्प्रतिप्रसवाश्च पूर्वोदाहृतस्मृतिभ्यो द्रष्टव्या इति सर्वं शिवम् ।

इति संस्काररत्नमालायामुपाकर्मोत्सर्जनवेदपारायणनित्यस्नानब्रह्मयज्ञतर्पणप्रयोगः ॥

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायाः
सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालाया
उत्तरार्धे द्वादशं प्रकरणम् ॥ १२ ॥

1 च. ते

## अथ ग्रन्थकर्तृविरचितगणेशस्तोत्रम् ।

जय देव गजानन प्रभो जय सर्वासुरगर्वभेदक ॥
*जय संकटपाशमोचन प्रणवाकार विनायकाव माम् ॥ १ ॥
तव देव जयन्ति मूर्तयः कलितागण्यसुपुण्यकीर्तयः ॥
मनसा भजतां हृतार्तयः कृतशीघ्राधिककामपूर्तयः ॥ २ ॥
तव रम्यकथास्वनादरः स नरो जन्मलयैकमन्दिरम्[1] ॥
न परत्र न चेह सौख्यभाङ्निजदुष्कर्मवशाद्विमोहभाक् ॥ ३ ॥
गजवक्त्र तवाङ्घ्रिपङ्कजे ध्वजवज्राङ्कयुते सदा भजे ॥
तव मूर्तिमहं परिष्वजे त्वयि हृन्मेऽस्तु सुमूषकध्वजे ॥ ४ ॥
त्वदृते हि गजानन प्रभो नहि भक्तौघसुखौघदायकः ॥
सुदृढा मम भक्तिरस्तु ते चरणाब्जे विबुधेश विश्वपाः ॥ ५ ॥
फलपूरगदेक्षुकार्मुकैर्युत रुक्चक्रधराब्जपाशधृक् ॥
अव वारिजशालिमञ्जरीरदधृग्रत्नघटाढ्यशुण्ड माम् ॥ ६ ॥
करयुग्मसुहेमशृङ्खल द्विजराजाढ्यक तुन्दिलोदर ॥
शशिसुप्रभ विग्रया युत स्तनभारानमितेड्य रक्ष माम् ॥ ७ ॥
शशिभास्करवीतिहोत्रदृक्शुभसिन्दूररुचे विनायक ॥
द्विपवक्त्र महाहिभूषण त्रिदिवेशासुरवन्द्य पाहि माम् ॥ ८ ॥
सृणिपाशवरद्विजैर्युत द्विजराजार्धक मूषकध्वज ॥
शुभलोहितचन्दनोक्षित श्रुतिवेद्याभयदायकाव माम् ॥ ९ ॥
स्मरणात्तव शंभुविध्यजेन्द्रिनशक्रादिसुराः कृतार्थताम् ॥
गणपाऽऽपुरघौघभञ्जन द्विपराजास्य सदैव पाहि माम् ॥ १० ॥
शरणं भगवान्विनायकः शरणं मे सततं च सिद्धिका ॥
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥ ११ ॥
गलद्दानगण्डं महाहस्तितुण्डं सुपर्वप्रचण्डं धृतार्धेन्दुखण्डम् ॥
करास्फोटिताण्डं महाहस्तदण्डं हृताढ्यारिमुण्डं भजे वक्रतुण्डम्॥ १२ ॥
गणनाथ निबन्धसंस्तवौ कृपयाऽङ्गीकुरु मत्कृताविमौ ॥
इदमेव सदा प्रदीयतां करुणा मय्यतुलाऽस्तु सर्वदा ॥ १३ ॥

इति गणेशस्तोत्रम् ।

---

* एतदर्धे क. ङ. च. पुस्तके 'जय संकटसर्पदर्पभिद्गरुड श्रीगणनायकाव माम्' इत्यर्धं बहिः पाठान्तररूपेण लिखितं वर्तते ।

---

1 ङ. च. °न्दिरः । न ।

